# काव्यसंग्रहः ।

## तृतीयो भागः ।

---

बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया

समलङ्कृतः ।

तृतीयसंस्करणम् ।

कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितः ।

ई° १८८८ ।

## श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितव्याख्यान-सहितस्य काव्यसंग्रहद्वितीयभागस्य

## सूचीपत्रम् ।



द्वितीयभागस्य सूचीपत्रं समाप्तम् ।

---

## श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितव्याख्यान-सहितस्य काव्यसंग्रहतृतीयभागस्य

## सूचीपत्रम् ।

| विषयः । | ग्रन्थकाराः । | पृष्ठाङ्कः । |
| --- | --- | --- |


तृतीयभागस्य सूचीपत्रं समाप्तम् ।

# काव्यसंग्रहः ।

तृतीयो भागः ।

## आनन्दलहरी ।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥
तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम् ।

शिव इति । शिवः शक्त्या त्वयेति शेषः युक्तः यदि भवति, तदा प्रभवितुं प्रभुर्भवितुं निग्रहानुग्रहौ कर्त्तुं शक्नोतीति यावत्, एवं न चेत् अयुक्तश्चेदित्यर्थः तदा देवः शिवः स्पन्दितुमपि चलितुमपि न खलु कुशलः नैव शक्तः । अतः अकृतपुण्यो जनः हरिहर-विरिञ्चादिभिरपि आराध्यां सेव्यां त्वां प्रणन्तुं प्रकर्षेण वन्दितुं स्तोतुं वा कथं प्रभवति ? न प्रभवतीत्यर्थः । शिखरिणीवृत्तमस्मिन् सन्दर्भे । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ १ ॥

तनीयांसमिति । विरिञ्चिः ब्रह्मा तव चरणपङ्केरुहभवं तनीयांसम् अत्यल्पं पांसुं रजः सञ्चिन्वन् संगृह्णन् लोकान् जगन्ति अविकलं सम्यक् विरचयति सृजति । शौरिर्विष्णुः [illegible]
[illegible] चन्द्रसूर्य्यं [illegible]

वहत्येनं शौरिः कथमपि सहस्रेण शिरसा
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥
अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी
जडानां चैतन्यस्तवकमकरन्दस्रुतिशिरा ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥ ३ ॥
त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये ! लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥

सहस्रेण शिरसा कथमपि दुर्लभत्वादिति भावः वहति धारयति हरः शम्भुः एनं पांशुं संक्षुद्य सम्यक् चूर्णयित्वा पेषयित्वेति यावत् भसितस्य भस्मनः उद्धूलनविधिं विलेपनव्यापारं भजति करोति ॥ २ ॥

अविद्यानामिति । भवती त्वम् अविद्यानाम अविद्याख्यं यत् अन्तस्तिमिरम् आन्तरिकं तमः तस्य मिहिरः सूर्य्यः ज्ञानमिति भावः तस्य उद्दीपनकरी, जडानां मूर्खाणां चैतन्यस्तवकस्य चैतन्यगुच्छस्य यो मकरन्दः रसः तस्य स्रुतौ क्षरणे शिरा, दरिद्राणां निर्धनानां चिन्तामणिगुणनिका चिन्तारत्नमाला, तथा जन्मजलधौ भवसागरे निमग्नानां पतितानां मुररिपुवराहस्य आदिसूकरस्य दंष्ट्रा उद्धारकारिणीति भावः ॥ ३ ॥

त्वदन्य इति । त्वत्तः अन्यः दैवतगणः पाणिभ्यां हस्ताभ्याम् अभयवरदः एकेन पाणिना अभयम् अपरेण पाणिना वरं ददातीत्यर्थः । एका केवला त्वं प्रकटितः प्रकाशितः वराभीत्योः वराभययोः अभिनयः पाणिभ्यां प्रदानव्यापार इति यावत् यया तादृशी — हे शरण्ये पालयित्रि ! हि यतः तव चरणा-

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननी
पुरा नारी भूत्वा स्मररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्वं हिमगिरिसुते ! कामपि कृपां
अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥

ेव भयात् त्रातुं वाञ्छासमधिकं प्रार्थनाधिकं फलमपि दातुं निपुणौ समर्थौ । अन्ये देवाः पाणिभ्यां वराभययोर्दातारः त्वन्तु चरणाभ्यामेव अभयप्रार्थनाधिकवरौ ददासीति व्यतिरेकालङ्कारः ॥४॥

हरिरिति । हरिर्नारायणः त्वाम् आराध्य प्रणतजनानां देवादीनां सौभाग्यजननी सुफलदायिनीति भावः । नारी भूत्वा पुरा पूर्वं सागरमन्थनात् परमसुधावण्टनावसरे इति भावः स्मररिपुं हरमपि क्षोभं विकारम् अनयत् प्रापयामास, स्मरः कामोऽपि त्वां नत्वा रतेः स्वपत्न्या नयनलेह्येन नेत्रहारिणेति भावः वपुषा शरीरेण महतां मुनीनामपि अन्तः मोहाय प्रभवति हि समर्थो भवति [illegible]त्यर्थः ॥ ५ ॥

धनुरिति । हे हिमगिरिसुते ! धनुः पौष्पं पुष्पमयं मौर्वी ज्या मधुकरमयी भ्रमरमालेति भावः विशिखाः शराः पञ्च न ततोऽप्यधिका इति भावः । वसन्तः सामन्तः अनुचरः सहाय इति यावत् मलयमरुत् आयोधनरथः संग्रामरथः तथापि इत्थम् अतिसुकुमारसाधनोऽपीति भावः एकः अद्वितीयः अनङ्गः कामः ते तव अपाङ्गात् कामपि अनिर्वचनीयां कृपां लब्ध्वा इदं [illegible] विजयते पराजयति ॥ ६ ॥

क्वणत्काञ्चीदामा करिकरभकुम्भस्तनभरा
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥
सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्य्यङ्कनिलयां
भजन्ति त्वां धन्याः कति च न चिदानन्दलहरीम् ॥ ८ ॥
महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।

क्वणदिति । क्वणत् स्वनत् काञ्चीदाम रशनाकलापं यस्याः तथोक्ता करिकरभः करिशावकः तस्य कुम्भयोरिव स्तनयोर्भरः यस्याः तादृशी, मध्ये परिक्षीणा कृशमध्येत्यर्थः परिणतः पूर्णः यः शरच्चन्द्रः तद्वत् वदनं यस्यास्तथाभूता करतलैश्चतुर्भिरिति भावः धनुः बाणान् पाशं सृणिमङ्कुशमपि दधाना धारयन्ती पुरमथितुः पुरारेः शम्भोः आहोपुरुषिका अहो अहं पुरुष इत्येवमभिमानस्वरूपिणीति यावत् नः अस्माकं पुरस्तात् अग्रतः आस्ताम् आविर्भवतु ॥ ७ ॥

सुधेति । कति च न धन्याः सुधासिन्धोः अमृतजलधेर्मध्ये सुरविटपिवाटीपरिवृते सुरतरुराजिवेष्टिते नीपोपवनवति कदम्बोद्यानशालिनि मणिद्वीपे चिन्तामणिगृहे चिन्तारत्नमण्डपे शिवाकारे शिवरूपे मञ्चे पर्य्यङ्के परमशिव एव पर्य्यङ्कः निलयः स्थानं यस्याः तथाभूतां चिदानन्दलहरीं ज्ञानानन्दतरङ्गरूपां त्वां भजन्ति सेवन्ते, कति च धन्याः न भजन्ति ? अपि तु सर्वे एव भजन्तीत्यर्थः ॥ ८ ॥

भययोः [illegible]मिति । मूलाधारे नाभिलिङ्गयोर्मध्यदेशे त्रिकोणाकारे [illegible] हे शरण्य [illegible]णिपूरे नाभिदेशस्थे सुषुम्नानाडीमध्यवर्त्तिनि

मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ ९ ॥
सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥
चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरधः
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः ।
त्रयश्चत्वारिंशद्वसुदलकलाश्रिवलय-
त्रिरेखाभिः सार्द्धं तव भवनकोणाः परिणताः ॥ ११ ॥

पद्माकारे चक्रे कमपि हुतवहम् अग्निं स्वाधिष्ठाने स्वस्य आत्मनः अधिष्ठाने स्थाने हृदि हृदये स्थितं मरुतं वायुम् उपरि ऊर्द्ध्वदेशे आकाशं भ्रुवोर्मध्ये स्थितमिति शेषः मनः (किं बहुना) सकलमपि समस्तमपि कुलपथं कुलमार्गं भित्त्वा परित्यज्येति यावत् सहस्रारे शिरःस्थितसुषुम्नानाडीमध्यान्तर्गतसहस्रदलकमले पत्या सह रहसि विजने विहरसि क्रीडसि ॥ ९ ॥

सुधेति । चरणयुगलस्य अन्तः अभ्यन्तरात् विगलितैः सुधाधाराणाम् अमृतप्रवाहाणाम् आसारैः सम्पातैः प्रपञ्चं सृष्टिं सिञ्चन्ती अभिवर्षन्ती पुनरपि रसाम्नायमहसा रसरूपेण तन्त्ररहस्येन स्वां भूमिं स्वस्थानं सहस्रारमिति यावत् अवाप्य प्राप्य आगत्ये-त्यर्थः भुजगनिभं सर्पतुल्यम् अध्युष्टवलयं वेष्टनाकारमिति भावः स्वम् आत्मानं कृत्वा कुहरिणि गर्त्तमये इत्यर्थः कुलकुण्डे तन्त्रशास्त्र-प्रसिद्धे स्थानभेदे स्वपिषि निद्रासि कुलकुण्डलिनीरूपेणेति भावः ॥ १० ॥

चतुर्भिरिति । तव भवनकोणाः [illegible] चतुर्भिः श्रीकण्ठैः रुद्रैः अधः पञ्चभिः शिवयुवतिभिः शि[illegible] नवस्व

त्वदीयं सौन्दर्य्यं तुहिनगिरिकन्ये! तुलयितुं
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः।
यदालोकौत्सुक्यादमरललना यान्ति सहसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम्॥ १२॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया
हठात् त्रुट्यत्काञ्चीविगलितदुकूला युवतयः॥ १३॥

णोभिः भैरवीभिरिति यावत् इतीत्थं नवभिः शम्भोः मूलप्रकृतिभिः त्रिरेखाभिश्च सार्द्धं सह त्रयश्चत्वारिंशत् वसुदलकलाः षोडशकलाः चक्राश्चन्द्राः एव तिस्रः वलयः वेष्टनाकारा रेखा येषां तथाविधाः परिणताः परितो व्याप्ता इत्यर्थः॥ ११॥

त्वदीयमिति। हे तुहिनगिरिकन्ये पार्वति! विरिञ्चिप्रभृतयः ब्रह्मादयः कवीन्द्राः महाकवयः त्वदीयं सौन्दर्य्यं तुलयितुं समीकर्तुं कथमपि अतिकष्टेन कल्पन्ते प्रभवन्ति। यत् सौन्दर्य्यम् आलोक्य अमरललनाः सुरसुन्दर्य्यः औत्सुक्यात् तादृशसौन्दर्य्यदर्शनप्रत्याशयेति भावः, सहसा तपोभिः दुष्प्रापां दुर्लभामपि गिरिशस्य सायुज्यपदवीं सहयोगपदं यान्ति प्राप्नुवन्ति शिवसान्निध्यलाभे सर्वदा तव सौन्दर्य्यदर्शनसम्भव इति धियेति भावः॥ १२॥

नरमिति। शतशः शतं शतं युवतयः गलन् स्खलन् वेणीबन्धः केशबन्धः यस्याः तथोक्ता मुक्तकेश्य इति भावः कुचकलशाभ्यां विस्रस्ताः विगलिताः सिचयः वसनाञ्चलं यासां तथाविधाः अनावृतस्तनमण्डला इति यावत् तथा त्रुट्यन्त्या काञ्च्या रशनया विगलितं नितम्बात् [illegible] दुकूलं वसनं यासां तादृश्यः सत्यः तव [illegible] लोके कृपा-
भयया: [illegible] [illegible]िति। [illegible] वर्षीयांसम् अतिश[illegible]रसं नयना-
[illegible] हे शरण्य [illegible]

क्षितौ षट्पञ्चाशद् द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।
दिवि द्विषट्त्रिंशन्मनसि च चतुःषष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥
शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां
वरत्रासत्राणस्फटिकगुटिकापुस्तककराम् ।
सकृन्नत्वा न त्वां कथमपि सतां संविदधते
मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥ १५ ॥

रञ्जकं कुरुयामीति भावः । नमधु विलासिन्य जडम् अनभिज्ञमपि नरम् हठात् सहसा अनुधावन्ति स्वयं वृण्वन्तीति भावः ॥ १३ ॥

क्षिताविति । क्षितौ पृथिव्यां ये षट्पञ्चाशत्, उदके जले द्विसमधिकपञ्चाशत् द्वापञ्चाशदित्यर्थः, हुताशे अग्नौ द्वाषष्टिः, अनिले वायौ चतुरधिकपञ्चाशत्, दिवि अन्तरीक्षे द्विषट्त्रिंशत् द्विसप्ततिरित्यर्थः, मनसि च चतुःषष्टिः मयूखाः सन्तीति शेषः, तेषामपि उपरि तव पादाम्बुजयुगं चरणकमलद्वयं वर्त्तते इति शेषः त्वं सर्वोपरि वर्त्तसे इति भावः ॥ १४ ॥

शरदिति । शरदि या ज्योत्स्ना चन्द्रिका तद्वत् शुभ्रा श्वेताङ्गी तां, शशियुते चन्द्रसहिते जटाजूटे मुकुटं वा शशियुतं जटाजूटं मुकुटं यस्यास्तथोक्ता तां, वरः त्रासात् त्राणम् अभयमित्यर्थः स्फटिकगुटिका स्फटिकमाला पुस्तकञ्च करेषु चतुर्ष्विति भावः यस्याः ताम्, एकेन हस्तेन वरं द्वितीयेन अभयं तृतीयेन स्फटिकमालां चतुर्थेन पुस्तकञ्च दधतीमित्यर्थः त्वां सकृत् नत्वा सतां साधूनां भणितयः वाचः मधुनः क्षीरस्य द्राक्षायाश्च यो मधुरिमा माधुर्य्यं तस्य धुरीणाः अग्रेसर्य्यः तेभ्योऽप्यधिकमनोरमाः सत्यः कथमपि न संविदधते न विरमन्ति सकृत्त्वा तादृशफलदर्शनेन पुनः पुनस्त्वां नमन्तीति नवस्य भावः ॥ १५ ॥

कवीन्द्राणां चेतःकमलवनमालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरीं
गभीराभिर्वाग्भिर्विदधति सभारञ्जनमयीम् ॥ १६ ॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः
वशिन्याद्याभिस्त्वां सह जननि ! सञ्चिन्तयति यः ।
स कर्त्ता काव्यानां भवति महतां भङ्गिसुभगैः
वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥

तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिः
दिवं सर्वामुर्वीमरुणमणिमग्नां स्मरति यः ।

कवीन्द्राणामिति । ये कतिचित् सन्तः कवीन्द्राणां विदुषां चेतांस्येव कमलवनमाला: तासु आतपस्य सूर्य्यालोकस्येव रुचिः कान्ति-र्यस्याः ताम् अरुणाम् अरुणवर्णामित्यर्थः भवतीं ब्राह्मीरूपामिति भावः भजन्ते सेवन्ते ते विरिञ्चिप्रेयस्याः ब्रह्मवल्लभायाः भवत्याः प्रसादा-दिति शेषः गभीराभिरर्थगुर्वीभिर्वाग्भिः सभारञ्जनमयीं सभारञ्जन-कारिणीमिति यावत् तरुणतरः अभिनवः यः शृङ्गारः शृङ्गाररसः तस्य लहरीं तरङ्गं विदधति कर्त्तुं शक्नुवन्तीत्यर्थः ॥ १६ ॥

सवित्रीभिरिति । हे जननि मातः ! यः वाचां सवित्रीभिः प्रसवित्रीभिः शशिमणिशिलाभङ्गरुचिभिः चन्द्रकान्तमणिभङ्गकान्तिभिः वशिन्याद्याभिः वशिनीप्रभृतिभिः सह सञ्चिन्तयति, स भङ्गिसुभगैः वैचित्र्यमनोरमैः वाग्देव्याः वदनकमलस्य आमोदेन सौरभेण मधुरैः वचोभिः महतां काव्यानां कर्त्ता रचयिता भवति ॥ १७ ॥

तनुच्छायाभिरिति । यः तरुणः अभिनवः यः तरणिः सूर्यः भयर्योः अभिनवः श्रीः शोभा तस्याः सरणयः पद्धतयः ताभिः ते तव तनोः हे शरण्ये कान्तिभिः रक्ताभिरिति भावः सर्वां दिवम्

भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥१८॥

मुखं विन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरस्यार्द्धं ध्यायेद्धरमहिषि! ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरुम्बामृतरसं
हृदि त्वामाधत्ते हिमगिरिशिलामूर्त्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टं दृष्ट्या सुखयति सुधासारसिचया ॥ २० ॥

अन्तरीक्षं स्वर्गं वा उर्वीं पृथ्वीम् अरुणमणिमग्नां पद्मरागमग्नां भजति अस्य तस्य त्रस्यत् बिभ्यत् यो वनहरिणः तद्वत् शालीने चञ्चले नयने यासां कति कति उर्वश्या सह गीर्वाणगणिकाः स्वर्वेश्याः न वश्याः वशवर्त्तिन्यः भवन्ति ? अपि सर्वा एव वश्या भवन्तीत्यर्थः ॥१८॥

मुखमिति । हे हरमहिषि ! मुखं विन्दुं तस्य अधः कुचयुगं स्तनयुगलं तदधः हरस्य अर्द्धं कृत्वा ते तव मन्मथकलां कामक्रीड़ां यः ध्यायेत् चिन्तयेत्, सः सद्यः झटिति वनिताः संक्षोभं नयति वशीकरोति इति अतिलघु अतिसामान्यकथेत्यर्थः । रविश्च इन्दुश्च रवीन्दू सूर्य्याचन्द्रमसौ स्तनयुगं यस्याः तथाभूतां त्रिलोकीमपि भ्रमयति घूर्णयति वशीकरोतीत्यर्थः ॥ १९ ॥

किरन्तीमिति । यः अङ्गेभ्यः शरीरेभ्यः किरणानां निकुरुम्बः समूह एव अमृतरसः तं किरन्तीं वर्षन्तीम् अतएव हिमगिरेः शिला-मूर्त्तिमिव पाषाणमयीमिवेत्यर्थः त्वां हृदि आधत्ते चिन्तयति, स शकुन्ताधिप इव पक्षीन्द्र इव सर्पाणां दर्पं शमयति सर्पभ[illegible] शक्नोतीत्यर्थः तथा सुधाया आसारं सम्पातं [illegible]

तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २१ ॥

भवानि ! त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन् कथयति भवानि ! त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥ २२ ॥

त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्द्धं शम्भोरपरमपि शङ्के हृतमभूत् ।

तया अमृतसारविषयेति यावत् दृष्ट्या दृष्टिपातेन ज्वरप्लुष्टं ज्वरदग्धं जनं सुखयति सुस्थं करोतीत्यर्थः ॥ २० ॥

तडिदिति । महान्तः जनाः मृदिता उद्धृता निर्गतेति यावत् मलस्य पापस्य माया यस्मात् तादृशेन निष्पापेनेति यावत् मनसा षण्णामपि कमलानां मूलाधारादिषट्चक्ररूपाणामिति भावः उपरि शिरोऽवस्थितसहस्रदलकमलकर्णिकायामिति भावः निषण्णां तडिल्लेखातन्वीं विद्युल्लेखावत् सूक्ष्मां तपनशशिवैश्वानरमयीं सूर्य-चन्द्राग्निस्वरूपां तव कलां मूर्त्तिं महापद्माटव्यां महापद्मवने पश्यन्तः सन्तः परमाह्लादलहरीं परमानन्दतरङ्गं दधति धारयन्ति ॥ २१ ॥

भवानीति । हे भवानि ! त्वं दासे किङ्करे मयि सकरुणां दृष्टिं वितर देहि इति इत्थं स्तोतुं वाञ्छन् यः हे भवानि ! त्वमिति कथयति न तु सर्वं वाक्यमिति भावः, त्वं तदैव स्तववाक्यासम्पूर्णतायामेव तस्मै स्तोतुकामायेति शेषः मुकुन्दः नारायणः ब्रह्मा इन्द्रः तेषां स्फुटैः उज्ज्वलैः मुकुटैः नीराजितं निर्मञ्छितं पदं स्थानं यस्यास्तथा-भूतयोः आभ... निजसायुज्यपदवीं स्वात्मपरभावेन स्थितिरूपं पदं दिशसि हे शरण्ये

तथाहि त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूड़ालमुकुटम् ॥ २३ ॥

जगत् सूते धाता हरिरवति रुद्रः क्षपयति
तिरस्कुर्वन्नेतान् स्वमपि वपुरीशस्तिरयति ।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिव-
स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥

त्रयाणां देवानां त्रिगुणजनितानामपि शिवे !
भवेत् पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥ २५ ॥

त्वयेति । त्वया शम्भोः वामं वपुः वपुषः वामार्द्धमित्यर्थः हृत्वा अपरितृप्तेन असन्तुष्टेन मनसा शम्भोरपरमपि शरीरार्द्धं हृतम् अभूत् इति शङ्के सम्भावयामि, तथाहि तमेवार्थं जानीहीत्यर्थः सकलं सम्पूर्णम् अरुणाभं रक्तवर्णं त्रिनयनं कुचाभ्यां स्तनाभ्याम् आनम्रं कुटिलः वक्रः शशी शशी अर्द्धचन्द्र इत्यर्थः तेन चूड़ालं शिखा-बद्धं मुकुटं यस्य तादृशं तव रूपं दृश्यते इति शेषः ॥ २२ ॥

जगदिति । धाता ब्रह्मा जगत् सूते सृजति, हरिर्विष्णुः अवति पालयति, रुद्रः क्षपयति संहरति । किन्तु अपूर्वः अनादिः ईशः ईश्वरः शिवः परमशिव इत्यर्थः तव क्षणचलितयोरीषच्चलितयो-रिति यावत् भ्रुवौ लतिके इव तयोः आज्ञाम् आदेशम् आलम्ब्य गृहीत्वा एतान् धात्रादीन् तिरस्कुर्वन् अवगणयन् स्वं वपुः शरीरं रुद्रमूर्त्तिमिति यावत् तिरयति आच्छादयति सदा सर्वं तदिदं जग-दिति शेषः अनुगृह्णाति च ॥ २४ ॥

त्रयाणामिति । हे शिवे ! तव चरणयोः या पूजा विरचिता कृता, सैव त्रिगुणजनितानां सत्त्वरजस्तमोजनितानां त्रयाणां देवानां विष्णुब्रह्मरुद्राणां पूजा भवेत् । तथाहि तव पादस्य

विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्रा माहेन्द्री विततिरपि सम्मीलति दृशां
महासंहारेऽस्मिन् विहरति सति ! त्वत्पतिरसौ ॥२६॥
जपो जल्पः शिल्पं सकलमपि मुद्रा विरचनं
गतिः प्रादक्षिण्यभ्रमणमदनाद्याहुतविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्य्यापर्य्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥

यत् मणिपीठं तस्य निकटे स्थिता हि स्थिता एव एते विष्णुब्रह्म-रुद्राः यस्मात् सततं मुकुलितः संवृत इत्यर्थः कर एव उत्तंसः अल-ङ्कारो यस्य तादृशं मुकुटं येषां तथाभूताः शिरसि बद्धाञ्जलिपुटा इत्यर्थः तिष्ठन्तीति शेषः ॥ २५ ॥

विरिञ्चिरिति । हे सति ! अस्मिन् महासंहारे विरिञ्चिः ब्रह्मा पञ्चत्वं निधनं व्रजति, हरिः विष्णुः विरतिम् अन्तम् आप्नोति, कीनाशो यमः विनाशं भजति, धनदः कुवेरः निधनं याति, माहेन्द्री महेन्द्रसम्बन्धिनी विगता तन्द्रा निमीलनं यस्याः तादृशी दृशां नेत्राणां विततिरपि विस्तारोऽपि सहस्रं नयनान्यपीति भावः सम्मीलति कालग्रस्तत्वादिति भावः, असौ तव पतिः विहरति अस्य मृत्युञ्जय-त्वादिति भावः ॥ २६ ॥

जप इति । मे मम विलसितं विचेष्टितं जपः, जल्पः आलापः, सकलं समग्रं शिल्पं कर्म, मुद्रा आनन्देन विरचनं व्यापारः, गतिः, प्रादक्षिण्यभ्रमणं प्रदक्षिणीकरणम्, अदनादि भोजनपानादीत्यर्थः, आहुतविधिः होमक्रिया, प्रणामः, संवेशः स्वप्नः, अखिलं समस्तं सुखम्, आत्मार्पणदृशा आत्मसन्तोषकरी पराहुकम्पेत्यर्थः इति यत् असौ [illegible] प्रणामपरम्परा भवतु ॥ २७ ॥

भयवोः अभिनेयः

हे शरण्य [illegible]

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशी-
ममन्दं सौन्दर्य्यस्तवकमकरन्दं विकिरति ।
तवास्मिन् मन्दारस्तवकसुभगे ! यातु चरणे
निमज्जन् मज्जीवः करणचरणैः षट्चरणताम् ॥ २८ ॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत् क्ष्वेडं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननि ! तव ताटङ्कमहिमा ॥ २९ ॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम् ।

ददाने इति । अनिशम् अजस्रं दीनेभ्यः दरिद्रेभ्यः आशानुसदृशीं आशानुरूपां श्रियं सम्पदं ददाने दातरि अमन्दम् अत्यन्त सौन्दर्य्यमेव स्तवकः पुष्पगुच्छः तस्य मकरन्दं रसं विकिरति विस्तारयतीत्यर्थः मन्दारस्तवकसुभगे मन्दारपुष्पगुच्छसदृशे इत्यर्थः अस्मिन् तव चरणे निमज्जन् मम जीवः करणचरणैः करणानि इन्द्रियाणि चक्षुरादीनि षट् एव चरणाः तैः, करणं साधकतमं चेतरगोत्रेन्द्रियेष्वपीत्यमरः । षट्चरणतां भ्रमरतां यातु गच्छतु ॥ २८ ॥

सुधामिति । हे जननि ! विश्वे सर्वे विधिशतमखाद्याः ब्रह्मेन्द्रादयः दिविषदः देवाः प्रतिभयजरामृत्युहरिणीं भयङ्करजरामरणनाशिनीं सुधाम् अमृतमपि आस्वाद्य पीत्वा विपद्यन्ते म्रियन्ते, किन्तु करालं भीषणं क्ष्वेडं गरलं कालकूटमित्यर्थः कवलितवतः भक्षितवतः शम्भोः हरस्य यत् कालकलना कालवशत्वं मृत्युर्न भवतीति शेषः तव ताटङ्कस्य कङ्कणस्य महिमा तस्य मूलं कारणं तव चिरावैधव्येन शम्भोर्मृत्युर्नास्तीति भावः ॥ २९ ॥

किरीटमिति । (हे मातः) त्वं वैरिञ्चं ... युगं चन्द्रसूर्यसमद्वयस्य नवस्य

प्रणम्येष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ ३० ॥

चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटनात्
स्वतन्त्रं ते तन्त्रं चितितलमवातीतरदिदम् ॥ ३१ ॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।

परित्यजसीत्यर्थः अनपायसीति भावः, कैटभभिदः कृष्णस्य पुरः अग्रतः कठोरे कठिने कोटीरे किरीटे स्खलसि पतसि तिष्ठसीत्यर्थः, जम्भारेरिन्द्रस्य मुकुटं जहि नाशयसि इन्द्रं स्वपदात् भ्रंशयसीति भावः। एतेषु ब्रह्मादिषु प्रणम्येषु वन्दनीयेषु तिष्ठत्स्विति भावः प्रसभं सहसा भवनं स्वगृहम् उपयातस्य उपनीतस्य भवस्य अभ्युत्थाने वन्दनार्थमुत्थानविषये तव परिजनोक्तिः अयं भवः तव परिजनः अतः सर्वापि वन्दनीय इति वचनं विजयते सर्वोत्कर्षेण वर्त्तते। सर्वेषु देवेषु तिष्ठत्स्वपि तव परिजन इति कृत्वा भवं सर्वे अग्रतः अभिवन्दितुमुत्तिष्ठन्तीति भावः ॥ ३० ॥

चतुःषष्ट्येति। पशुपतिः शिवः चतुःषष्ट्या चतुःषष्टिसंख्यैः तन्त्रैः निगमैः सकलं भुवनं जगत् अभिसन्धाय पुरुषार्थसिद्धये नियुज्येति भावः तत्तत्सिद्धिप्रसवपरतन्त्रः तत्तत्तन्त्रोक्तक्रियाजनितसिद्धिसाधनाधीनः सन् स्थितः। पुनश्च तव निर्बन्धात् आग्रहात् अखिलाः समग्राः पुरुषार्थाः धर्मार्थकाममोक्षरूपाः तेषाम् एकस्मिन् तन्त्रे इति भावः घटनात् योजनात् स्वतन्त्रं पृथग्भूतं तन्त्रं शक्तितन्त्रमिति यावत् इदं चितितलं अवातीतरत् विस्तारयामास। निजभयवोः आन[illegible] तन्त्रेषु पुरुषार्थानां पृथक् पृथक् निर्देशः कृतः शक्तितन्त्रे तु समग्रा हे शरण्ये [illegible] महिमा इति भावः ॥ ३१ ॥

अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते ते वर्णास्तव जननि! नामावयवताम् ॥ ३२ ॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमाद्ये! तव मनो
निधायैके नित्ये! निरवधिमहाभोगरसिकाः।
जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षरलयाः
शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥

शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति! भवात्मानमनघम्।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः सम्बन्धो वां सरसपरमानन्दपदयोः ॥ ३४ ॥

शिव इति। हे जननि! शिवः, शक्तिः, कामः, क्षितिः, अथवा रविः, शीतकिरणश्चन्द्रः, स्मरः हंसः, शक्रः, तदनु तदनन्तरं परामारः कामः, हरिश्च ते अमी वर्णाः अवसानेषु अन्तेषु तिसृभिः हृल्लेखाभिः मन्त्रविशेषैः घटिताः सन्तः तव नामावयवतां मन्त्रशरीरत्वं भजन्ते प्राप्नुवन्ति ॥ ३२ ॥

स्मरमिति। हे आद्ये हे नित्ये सनातनि! निरवधि चिरकालं महाभोगे रसिकाः महाभोगकामिन इत्यर्थः तव मन्त्रजपस्य फलं निरवधिमहाभोग इति भावः। एके जनाः स्मरं योनिं लक्ष्मीम् इदं त्रितयं त्र्यक्षरात्मकं मन्त्रमिति यावत् मनो निधाय चिन्तामणेः गुणेन निबद्धः ग्रथितः अक्षराणां लयः विरामः यैः तथाभूताः शिवाग्नौ मङ्गलमये अनले सुरभेः कामदोहिन्या धेनोः घृतधारया या आहुतयः तासां शतैः जुह्वन्तः होमं कुर्वन्तः सन्तः त्वां जपन्ति ॥ ३३ ॥

शरीरमिति। त्वं शम्भोः शरीरं मूर्त्तिः, हे भगवति! भवस्य शम्भोः आत्मानं शरीरं शशिमिहिरवक्षोरुहयुगं चन्द्रसूर्य्यस्तनद्वयम्

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम्।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवतिभावेन बिभृषे ॥ ३५ ॥
तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।
यमाराध्य भक्त्या रविशशिशुचीनामविषये
निरालोके लोको निवसति निजालोकभवने ॥ ३६ ॥

अनघं निर्मलं तव आत्मानं शरीरं मन्ये, अतः शेषपरमानन्दपटयोः कोशिकपरमानन्दचरणयोः वां युवयोः अयं सम्बन्धः संयोगः शेषः अवशेषः शेषी अवशेषवान् इतीत्थम् उभयसाधारणतया उभयोः साम्येनेत्यर्थः धर्मधर्मिरूपेणेति भावः स्थितः ॥ ३४ ॥

मन इति। त्वं मनः, त्वं व्योम आकाशं, त्वं मरुत् वायुरसि, त्वं मरुत्सखः अग्निरसि, त्वम् आपः जलानि, त्वं भूमिः, त्वयि परिणतायां प्रलीनायां परम् अन्यत् किमपीति शेषः न तिष्ठतीति शेषः त्वमेव विश्ववपुषा जगच्छरीरेण समनःपञ्चभूतमयेनेति भावः आत्मानं निजस्वरूपं परिणमयितुं पर्यवसाययितुं शिवयुवतिभावेन शिवाणीस्वरूपेण चिदानन्दाकारं ज्ञानानन्दस्वरूपं बिभृषे धारयसि ॥ ३५ ॥

तवेति। परचिता परमेण एकाग्रेणेति यावत् चिता चित्तेन तव आज्ञाचक्रस्थम् आज्ञावत्तमित्यर्थः तपनशशिकोटीनां सूर्यचन्द्रमःकोटीनां द्युतिधरम् अतितेजस्विनम् अतिसौम्यञ्चेति भावः परं परमं सर्वश्रेष्ठमित्यर्थः परिमिलितपार्श्वं तव पार्श्वसङ्गतमिति यावत् हरगौरीरूपे इति भावः शम्भुं वन्दे प्रणमामि। यं शम्भुं भक्त्या आराध्य सेवित्वा लोकः रविशशिशुचीनां सूर्यचन्द्राग्नीनाम् अविषये अप्रवेशे अतएव निरालोके आलोकरहिते सर्वत आहृते इति भावः

विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यवसिताम्।
ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणीं
विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥

समुन्मीलत्संवित्कमलमकरन्दैकरसिकं
भजेऽहं सद्द्वन्द्वं किमपि महतां मानसचरम्।
यदालापादष्टादशगुणितविद्यापरिणतिः
यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥

निजालोकभवने स्वीयनिर्जनस्थले निवसति। सहस्रदलारे निर्जने स्थाने संयतात्मा जनः शम्भुमाराधयतीति भावः ॥ ३६ ॥

विशुद्धाविति। तं शुद्धस्फटिकविशदं निर्मलस्फटिकमणिनिभं व्योमजनकम् आकाशजनकं शिवं शिवसमानव्यवसितां पत्या सह समानव्यापारां देवीमपि विशुद्धौ विशेषेण पापक्षालनायेति यावत् सेवे आराधयामि, शशिकिरणसारूप्यसरणीं चन्द्रकिरणसादृश्यपद्धतिं यान्त्या गच्छन्त्या चन्द्रकरनिभयेत्यर्थः ययोः शिवदेव्योः कान्त्या तेजसा विधूतं विगलितम् अन्तर्ध्वान्तम् आन्तरं तमः यस्याः तादृशी सती जगती विश्वं चकोरीव विलसति राजते। चन्द्रकिरणस्पर्शे चकोरीणां विलासः कविसमयप्रसिद्धः ॥ ३७ ॥

समुन्मीलदिति। समुन्मीलत् समुदयमानं संवित् ज्ञानमेव कमलं तस्य मकरन्देषु रसेषु एकरसिकम् अद्वितीयरसास्वादपरमित्यर्थः महतां जनानां मानसचरं मनोनिलयं किमपि अनिर्वचनीयं सत् सनातनं द्वन्द्वं मिथुनं गौरीहराविति भावः अहं भजे सेवे, यस्य द्वन्द्वस्य आलापात् कीर्त्तनात् अष्टादशभिर्गुणितानां विद्यानां परिणतिः परिपाकः भवेदिति शेषः, यच्च द्वन्द्वं अद्भ्यः जलेभ्यः पय इव दुग्धमिव दोषात् अखिलं समस्तं गुणम् आदत्ते गृह्णाति दोषान् संशोध्य गुणान् गृहीत्वा तद्वरं ददातीति भावः ॥ ३८ ॥

तडित्वन्तं प्रभया तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तमःश्यामं मेघं कमपि मणिपूरैकसरणिं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ३९ ॥
तव स्वाधिष्ठाने हुतवहमधिष्ठाय नियतं
तमीडे संवर्त्तं जननि ! जननीं त्वाञ्च समया ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा ते दृष्टिः शिशिरमुपचारं रचयति ॥ ४० ॥
तवाधारे मूले सह समयया लास्यपरया
भवात्मानं वन्दे नवरसमहाताण्डवनटम् ।

तडित्वन्तमिति । हर एव मिहिरः सूर्य्यः तेन तप्तं त्रिभुवनं वर्षन्तं तडित्वन्तं विद्युत्वन्तम् अतएव तिमिराणां तमसां परिपन्थि प्रतिकूलं नाशकमित्यर्थः स्फुरणं यस्याः तथाभूतया प्रभया स्वतेजसेत्यर्थः तडितः अस्य सन्तीति तथोक्तं विद्युत्वन्तं विद्युत्पुञ्जवन्तमिति यावत् स्फुरद्भिः दीप्यमानैः नानारत्नाभरणैः परिणद्धं युक्तम् इन्द्रधनुः यत्र तादृशं मणिपूराणां रत्ननिवहानाम् एकसरणिं मुख्यपद्धतिं रत्नराजिराजितमिति भावः कमपि अनिर्वचनीयं तमःश्यामं तिमिरनीलं मेघं कालीरूपां त्वामिति निषेवे भजे ॥ ३९ ॥

तवेति । हे जननि ! तव स्वाधिष्ठाने चक्रभेदे हुतवहम् अग्निं ज्ञानाग्निमिति भावः नियतं अधिष्ठाय प्रज्वाल्य तं संवर्त्तं प्रलयमेघमग्निरूपमिति भावः समया मध्ये त्वां जननीञ्च ईडे स्तौमि । क्रोधकलिते कोपपूर्णे इति भावः महति यस्य संवर्त्तस्य आलोके तेजसि लोकान् दहति सति दयार्द्रा ते तव दृष्टिः शिशिरं शीतलम् उपचारं प्रक्रियां रचयति करोति तव कृपादृष्टिः संवर्त्ताग्निं निर्वापयतीति भावः ॥ ४० ॥

तवेति । तव मूले आधारे योनिदेशे इति यावत् लास्यपरया

उभाभ्यामेताभ्यामुभयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥
गतैर्माणिक्यैक्यं गगनमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते ! कीर्त्तयति यः ।
समीपे यच्छाया स्फुरणकिरणं चन्द्रशकलं
धनुः शौनासीरं किमिदमिति बध्नाति धिषणाम् ॥ ४२ ॥
धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरदलं
घनं श्लक्ष्णं स्निग्धं चिकुरनिकुरम्बं तव शिवे ! ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन् मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥

नर्त्तनरतया समयया स्वशक्त्या नवरसेन यत् महत् ताण्डवं नृत्यं तस्मिन् नटः तं भवात्मानं शिवस्वरूपं वन्दे सेवे, उभयविधिम् उभयोर्व्यापारं स्वं स्वं कार्य्यमित्यर्थः उद्दिश्य दयया सनाथाभ्यां युक्ताभ्याम् एताभ्याम् उभाभ्यां युवाभ्यामिति शेषः इदं जगत् जनकजननीमत् मातापितृमत् जज्ञे भूतम् ॥ ४१ ॥

गतैरिति । हे हिमगिरिसुते पार्वति ! यः ते तव हैमं काञ्चननिर्मितं किरीटं मुकुटं माणिक्यैक्यं गतैः माणिक्यरत्नतां प्राप्तैरिति यावत् गगनमणिभिः सूर्य्यैः सान्द्रं घनं यथा तथा घटितं निर्मितं कीर्त्तयति समीपे तस्येति शेषः यस्य किरीटस्य छाया कान्तिः स्फुरितकिरणं किरणोज्ज्वलमित्यर्थः चन्द्रशकलं चन्द्रखण्डं शौनासीरम् ऐन्द्रं धनुश्च किमिदम् इति धिषणां बुद्धिं बध्नाति जनयति चन्द्र इन्द्रधनुश्च तव मुकुटशोभां न धत्ते इति भावः ॥ ४२ ॥

धुनोत्विति । हे शिवे ! तुलिताः समीकृताः दलिताः विकसिताः इन्दीवरदलाः नीलोत्पलपर्णानि येन तथोक्तम् अतिनीलमिति

वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम्।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः॥ ४४॥
अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम्।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः॥ ४५॥

भावः घनं सान्द्रं श्लक्ष्णं चिक्कणं स्निग्धं चिकुरनिकुरम्बं केशनिचयः नः अस्माकं ध्वान्तं तमः धुनोतु अपनयतु, यदीयं यत्सम्बन्धि सहजं स्वाभाविकं सौरभ्यम् उपलब्धुं गच्छन्तु बलमथनस्य इन्द्रस्य वाटीविटपिनां पारिजातानामिति यावत् सुमनसः पुष्पाणि अस्मिन् चिकुरनिकुरम्बे वसन्ति इति मन्ये॥ ४३॥

वहन्तीति। प्रबलाः महान्तः कबरीभाराः केशचया एव तिमिरद्विषः तमोरूपशत्रवः तेषां वृन्दैः संघातैः बन्दीकृतमिव कारानिरुद्धमिव नवीनार्ककिरणं नवसौरमयूखं सिन्दूरं वहन्ती तव वदनस्य यत् सौन्दर्यं तस्य लहरी तरङ्गः तस्याः परीवाहः जलोच्छ्वासः तस्य स्रोतसां प्रवाहाणां सरणिः पद्धतिरिव सीमन्तसरणिः केशमध्यस्थितरेखाविशेषः (सिँथीति भाषा) नः अस्माकं क्षेमं कल्याणं तनोतु विस्तारयतु॥ ४४॥

अरालैरिति। स्वाभाव्यात् स्वभाव एव स्वाभाव्यं तस्मात् अरालैः वक्रैः भङ्गुरभङ्गिरित्यर्थः अलिकलभानां भृङ्गशावकानां समाना श्रीर्येषां तादृशैः अलकैः केशैः परीतं व्याप्तं शोभितमिति भावः ते तव वक्त्रं वदनं पङ्केरुहस्य कमलस्य रुचिं कान्तिं परिहसति,

ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मुकुटशशिखण्डस्य शकलम्।
विपर्यासन्यासादभयमभिसन्धाय मिलितः
सुधालेपस्यन्दी परिणमति राकाहिमकरः॥ ४६ ॥
भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि !
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतिः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमिदम्॥ ४७ ॥

दरस्मेरे मन्दस्मितशोभिनि दशनानां दन्तानां रुचयः कान्तयः एव किञ्जल्काः केशराः तैः रुचिरे मनोज्ञे सुगन्धौ यस्मिन् वक्त्रे स्मरमथनस्य हरस्य चक्षुषी एव नेत्राण्येव मधुलिहः भ्रमराः माद्यन्ति उल्लसन्ति ॥ ४५ ॥

ललाटमिति। तव यत् लावण्यद्युतिविमलं लावण्यप्रभोज्ज्वलम् ललाटम् आभाति तत् द्वितीयं मुकुटशशिखण्डस्य मुकुटस्थितचन्द्रबिम्बस्य शकलं खण्डं विपर्यासन्यासात् वैपरीत्येन विन्यासात् धारणात् अभयं भयाभावम् अभिसन्धाय अभिप्रेत्य उद्दिश्येत्यर्थः मिलितः सुधालेपस्यन्दी सुधारसवर्षी राकाहिमकरः पौर्णमासीशशधरः पूर्णचन्द्र इति यावत् परिणमति पर्य्यवस्यति इति मन्ये सम्भावयामि ॥ ४६ ॥

भ्रुवाविति। हे भुवनभयभङ्गव्यसनिनि भुवनभयविनाशिनि ! मधुकररुचिभ्यां भृङ्गनिभाभ्यां नेत्राभ्यां धृतगुणे गृहीतमौर्व्वीके मधुकरनिभनेत्रद्वयरूपाधिज्ञमौर्व्वीशालिनी इति भावः किञ्चित् ईषत् भुग्ने वक्रे त्वदीये त्वत्सम्बन्धिनी भ्रुवौ रतिपतिः कामः सव्येतरकरगृहीतं दक्षिणहस्तगृहीतं निगूढान्तरं गुप्तान्तरं मुष्टत्वादिति भावः इदं धनुः प्रकोष्ठे मणिबन्धोपरिप्रदेशे मुष्टौ च स्थगयति स्थापयति इति मन्ये सम्भावयामि ॥ ४७ ॥

अहः सूतेऽसव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥
विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपापारावारा किमपि मधुराभोगलतिका ।
अवन्ती ते दृष्टिर्बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥

अहरिति । तव असव्यं दक्षिणं नयनम् अर्कात्मकतया सूर्यात्मकतया अहः दिनं सूते जनयति, ते तव वामं नयनं रजनीनायकतया चन्द्रात्मकतया त्रियामां रात्रिं सृजति, ते तव तृतीया दृष्टिः दरदलितम् ईषद्विकसितं यत् हेमाम्बुजं स्वर्णकमलं तद्वत् रुचिः कान्तिर्यस्य तादृशम् अतएव दिवसनिशयोः दिवारजन्योः अन्तरचरीं मध्यवर्त्तिनीं सन्ध्यां समाधत्ते सञ्जनयति । एकन्ते नयनं सूर्य्यज्योतिः, द्वितीयं नयनं चन्द्रज्योतिः, तृतीयं रक्तोत्पलज्योतिरिति त्रिभिर्दिवा-रजनीसन्ध्यानां समुदय इति भावः ॥ ४८ ॥

विशालेति । ते तव दृष्टिः विशाला आयता अथच उज्जयिनीति भावः कल्याणी शुभदायिनी, स्फुटा उज्ज्वला रुचिः कान्तिर्यस्याः तथाविधा अतएव कुवलयैर्नीलोत्पलैः अयोध्या योधयितुमशक्या अपराजेयेति यावत् अथच अयोध्यानगरीति भावः कृपापारावारा दयाम्बुनिधिः किमपि अनिर्वचनीयस्वरूपा मधुरः मनोहरः आभोगः पूर्णता यस्याः तथाभूता लतिका वल्ली अथच आ सम्यक् भोगो यस्याः तादृशी लतास्वरूपा मधुरा मधुरापुरीति भावः बहुषु नगरेषु विस्तारेण विजयः उत्कर्षः यस्यास्तादृशी अवन्ती रक्षन्ती अथच तदाख्या पुरीति भावः अतएव तत्तन्नामभिर्विशालादिभिः व्यवहरणम्

कवीनां सन्दर्भस्तवकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम्।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-
वसूयासंसर्गादलिकनयनं किञ्चिदरुणम्॥ ५०॥
शिवे शृङ्गारार्द्रा तदितरमुखे कुत्सनपरा
सरोषा गङ्गायां गिरिशनयने विस्मयवती।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि! दृष्टिः सकरुणा॥ ५१॥
गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती

अभिधानं तस्य योग्या सती विजयते उत्कर्षेण वर्त्तते इति ध्रुवं मन्ये, मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः शब्दा इवशब्दश्च तादृशः॥ इति दर्पणः॥ ४९॥

कवीनामिति। सन्दर्भ एव स्तवकः तत्र यो मकरन्दः स एव एको रसः सः अस्यास्तीति तथोक्तं ते तव कर्णयुगलम् अमुञ्चन्तौ कटाक्ष-व्याक्षेपाविव भ्रमरकलभौ भ्रूपार्श्वकौ अतएव नवरसास्वादे तरलौ चपलौ दृष्ट्वा असूयासंसर्गात् ईर्षासङ्गात् अलिकनयनं भालनेत्रम् अरुणं रक्तम् इति मन्ये इति शेषः॥ ५०॥

शिवे इति। हे जननि! शिवे हरे शृङ्गारार्द्रा शृङ्गारो-द्रिक्ता, तस्मात् शिवात् इतरे अशिवे दुरात्मनीति यावत् कुत्सनपरा निर्भर्त्सनतत्परा, गङ्गायां सरोषा सापत्न्यद्वेषादिति भावः, गिरिशस्य नयने विस्मयवती चमत्कारविधायिनी हरस्य अहिभ्यः सर्पेभ्यः भूषणभूतेभ्य इति भावः भीता कातरा, सरसिरुहाणां पद्मानां सौभाग्यजननी सौन्दर्यशालिनीत्यर्थः सखीषु स्मेरा विकस्वरा ते तव दृष्टिः मयि सकरुणा सदया अस्त्विति शेषः॥५१॥

पुरां भेत्तुश्चित्त प्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥
विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ! ।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिदम् ॥ ५३ ॥

गते इति । कर्णाभ्यर्णं कर्णसमीपं गते आकर्णाकृष्टे इति यावत् गरुत इव पक्ष्माणि लोमानि दधती दधाने पुरां भेत्तुः त्रिपुरारेः चित्ते मनसि प्रशमरसस्य शान्तिरसस्य विद्रावणं ताडनं फलं ययोः तादृशे शान्तं हरचित्तं शृङ्गाररसं नयन्ती इत्यर्थः गोत्राधराणां भूधराणां, गोत्रा कुः पृथिवी पृथ्वीत्यमरः । पतिर्हिमवान् तस्य कुलं वंशः तस्य उत्तंसकलिके कर्णभूषणस्तबकोरकावित्यर्थः तव इमे नेत्रे आकर्णाकृष्टस्य स्मरशरस्य मदनशरस्य विलासं विभ्रमं कलयतः धत्तः । अत्रान्यस्य धर्मं कथमपरो धत्ते इति कामशरस्य विलास इव विलास इत्युपमायां पर्यवसानात् निदर्शनालङ्कारः । तदुक्तं दर्पणे । सम्भवद्वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति ॥ ५२ ॥

विभक्तमिति । हे ईशानदयिते हरवल्लभे ! इदं तव नेत्रत्रितयं त्रैवर्ण्येण त्रिविधेन वर्णेन रक्तश्वेतकृष्णेनेति भावः व्यतिकरितं विलेपितं लीलाञ्जनं विलासकज्जलं यस्मिन् तस्य भावः तत्ता तया हेतुना उपरतान् मृतान् द्रुहिणहरिरुद्रान् ब्रह्मविष्णुशङ्करान् पुनः स्रष्टुम् उत्पादयितुं रजः सत्त्वं तम इति गुणानां त्रयं बिभ्रत् विभाति राजते ॥ ५२ ॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये !
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे ! ॥ ५४ ॥

तवापर्णे ! कर्णेजपनयनपैशुन्यचकिता
विलीयन्ते तोये नियतमनिमेषाः सफरिकाः ।
इयञ्च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५५ ॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्यतनये ! ।

पवित्रीकर्त्तुमिति । हे पशुपतेः पराधीनं हृदयं यस्याः तत्-सम्बुद्धौ, हे अनघे ! अरुणधवलश्यामरुचिभिः दयामित्रैः दयार्द्रैः नेत्रैः नः अस्मान् पवित्रीकर्त्तुं शोणो नदः गङ्गा तपनतनया कालिन्दी इति तीर्थानां पुण्यसलिलानां त्रयाणाम् अमुं सम्भेदं सङ्गमम् उपनयसि संघटयसि, इति ध्रुवं मन्ये ॥ ५४ ॥

तवेति । हे अपर्णे ! तव कर्णेजपयोः आकर्णकृष्टयोरिति भावः नयनयोः पैशुन्येन दौर्जन्येन चकिताः शङ्किताः पराजयाद् भीता इति यावत् सफरिकाः मीनाः मत्स्यविशेषा इति भावः अनिमेषाः निमेषशून्याः अतएव तोये प्रलीयन्ते मृतास्तिष्ठन्तीति नियतं ध्रुवं मन्ये इति यावत् इयं श्रीः लक्ष्मीः शोभेत्यर्थः प्रत्यूषे प्रभाते बद्धच्छदपुटकवाटम् बद्धनिमीलनोन्मुखमिति यावत् कुवलयं नीलोत्पलं जहाति त्यजति निशि रात्रौ विघटय्य विकासोन्मुखमिति भावः प्रविशति दिवा तव नेत्रविकासे श्रीर्नान्यत्र गन्तुं शक्ता, रजन्यान्तु तव निद्रया नेत्रनिमीलने अन्यत्र गच्छतीति भावः ॥ ५५ ॥

निमेषेति । हे धरणिधरराजन्यतनये पर्वतराजकन्ये ! जगती

त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५६ ॥
दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ! ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥
अरालं ते पाणियुगलमगराजन्यतनये !
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलसन्
अपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥ ५८ ॥

तव निमेषोन्मेषाभ्यां प्रलयम् उदयञ्च याति गच्छति तव निमेषे जगत्याः प्रलयः उन्मेषे उदयः भवतीत्यर्थः सन्तः विद्वांसः इति आहुः कथयन्ति, तव उन्मेषात् जातम् इदम् अशेषं जगत् प्रलयतः विध्वंसात् परित्रातुं तव दृशः दृष्टयः परिहृतनिमेषाः निर्निमेषाः इति शङ्के मन्ये, देवानां अतो निर्निमेषत्वमिति बोध्यम् ॥ ५६ ॥

दृशेति । हे शिवे ! दरदलितनीलोत्पलरुचा ईषद्विकसित-नीलोत्पलकान्तिना दरेत्यनेन नीलस्य गाढ़त्वं सूच्यते । द्राघीयस्या अतिविशालया दृशा नेत्रेण दवीयांसं दूरवर्त्तिनं दीनं मामपि कृपया स्नपय आर्द्रीकुरु, अयं जनः अनेन दृष्टिदानेन धन्यः कृतार्थः भवति, ते तव इयता अनेन दानेन हानिश्च क्षतिश्च कापीति शेषः न स्यादिति शेषः, हिमकरः चन्द्रः वने वा हर्म्ये वा समकरनिपातः समं किरणवर्षी भवतीति शेषः ॥ ५७ ॥

अरालमिति । हे अगराजन्यतनये पर्वतराजपुत्रि ! ते तव अरालं कुटिलं कौटिल्येनावस्थितमिति भावः पाणियुगलं करद्वयं केषां जनानां कुसुमशरस्य कामस्य कोदण्डं धनुः तस्य कुतुकं तद्वद्वि-

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं शङ्के तव मुखमिदं मन्मथरथम्।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये स्वं जितवते ॥ ५९ ॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलभिदः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविकलम्।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥

मिति भावः न आधत्ते न जनयति ? अपि तु सर्वेषामेव जनयती-त्यर्थः। श्रवणपथम् उल्लङ्घ्य अतिक्रम्य विलसन् स्फुरन् तिरश्चीनः कुटिलः अपाङ्गव्यासङ्गः अपाङ्गविक्षेपः यत्र कोदण्डे शरसन्धान-धिषणा शरसंयोगधैर्यं दिशति जनयति ॥ ५८ ॥

स्फुरदिति। स्फुरतोः राजतोर्गण्डाभोगयोः प्रतिफलितं प्रति-बिम्बितं ताटङ्कयुगलं कर्णकुण्डलद्वयं यस्य तादृशं तवेदं मुखं चतुश्चक्रं कुण्डलयोः प्रतिफलितत्वेन द्वयं स्वतश्च द्वयमिति चतुरवयवत्वादिति भावः मन्मथस्य कामस्य रथं शङ्के मन्ये, यं चतुश्चक्रं रथम् आरुह्य अर्केन्दुचरणं सूर्य्याचन्द्रमश्चक्रम अवनिरथं पृथ्वीरथमारूढमिति शेषः स्वम् आत्मानं जितवते प्रमथपतये हराय महावीरः मारः कामः द्रुह्यति विजेतुं यतते इत्यर्थः ॥ ५९ ॥

सरस्वत्या इति। हे शर्वाणि ! ते तव कुण्डलगणः कर्णभूषण-निचयः श्रवणचुलुकाभ्यां श्रोत्रगण्डूषाभ्याम् अविकलं सम्यक् यथा तथा अमृतलहरीकौशलभिदः अमृततरङ्गविभ्रमहारिणीरित्यर्थः तव सूक्तीः शोभनानि वचनानि पिबन्त्याः अतएव चमत्कारेण विस्मयेन श्लाघया प्रशंसया च चलितं कम्पितं शिरो यस्याः तथाभूतायाः सरस्वत्याः तारैः महद्भिः झणत्कारैः प्रतिवचनम् आचष्ट इव कथय-

असौ नासावंशस्तुहिनगिरिवंशध्वजपटे !<br>
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम्।<br>
वहन्नन्तर्मुक्ताः शिशिरतरनिःश्वासघटिकाः<br>
समृद्ध्या यस्तासां वहिरपि च मुक्तामणिधरः ॥ ६१ ॥

प्रकृत्या रक्तायास्तव सुदति ! दन्तच्छदरुचेः<br>
प्रवक्ष्ये सादृश्यं जनयतु कथं विद्रुमलता।<br>
न विम्बं तद्विम्बप्रतिफलनलाभादरुणितं<br>
तुलामध्यारोढुं कथमपि विलज्जेत कलया ॥ ६२ ॥

तीव त्वया यत् विचितं प्रशंसितञ्च तद्दु युक्तमिति मत्युत्तरं ददा-
तीव ॥ ६० ॥

असाविति। हे तुहिन गिरिवंशध्वजपटे हिमगिरिकुल-वैजयन्ति ! ध्वजपटीति पाठः समीचीनः पटशब्दस्य क्लीवे देवन्तस्यैव विधानादिति बोध्यम्। असौ त्वदीयः नासावंशः अस्माकं नेदीयः निकटवर्त्ति उचितं फलं फलतु जनयतु। यः नासावंशः अन्तरभ्यन्तरदेशात् मुक्ताः त्यक्ताः शिशिरतराणाम् अतिशीतलानां निःश्वासानां घटा एव घटिकाः ताः निःश्वासवायूनित्यर्थः वहन् तासां निःश्वासघटानां समृद्ध्या सह वहिरपि मुक्तामणिधरः मुक्ताहारयुत इत्यर्थः ॥ ६१ ॥

प्रकृत्येति। हे सुदति शोभनदशने ! विद्रुमलता प्रवालवल्ली प्रकृत्या स्वभावेन रक्तायाः तव दन्तच्छदरुचेः अधरकान्तेः सादृश्यं जनयतु। कथं प्रवक्ष्ये कथयिष्यामि ? नैव कथयिष्यामीत्यर्थः। विम्बं विम्बफलं तस्य दन्तच्छदस्य विम्बप्रतिफलनलाभात् प्रतिविम्बपतनलाभात् अरुणितं रक्तम् अतः तुलां सादृश्यम् अध्यारोढुं कथमपि कलया अंशतः न विलज्जेत ? अपितु विलज्जेतैवेत्यर्थः ॥ ६२ ॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजड़िमा ।
अतस्ते शीतांशोरमृतलहरीं रक्तरुचयः
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया ॥६३॥
अविश्रान्तं पत्युर्गुणगणकथाम्रेड़नजड़ा
जवापुष्पच्छाया जननि ! तव जिह्वा विजयते ।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्त्तिः परिणमति माणिक्यवपुषा ॥६४॥
रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः
निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यविमुखैः ।

स्मितेति । तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं स्मितचन्द्रिका-निचयं पिबतां चकोराणाम् अतिरसतया अत्यन्तरस-वत्त्वेन चञ्चूनां जड़िमा जाड्यम् आसीत्, अतः कारणात् रक्तरुचयः मणिकान्तयः ते चकोराः निशि निशि प्रतिरात्रं काञ्जिकधिया काञ्जीबोधेन शीतांशोश्चन्द्रस्य अमृतलहरीः सुधानिचयान् स्वच्छन्दं यथा तथा भृशम् अत्यर्थं पिबन्ति ॥ ६३ ॥

अविश्रान्तमिति । हे जननि ! जवापुष्पवत् छाया कान्ति-र्यस्याः तथाभूता तव जिह्वा रसना अविश्रान्तम् अनवरतं पत्युर्हरस्य गुणगणानां कथायाः आम्रेड़नेन पुनः पुनः कीर्त्तनेन, आम्रेडितं द्विस्त्रिरुक्तमित्यमरः । जड़ा जाड्यवती शिथिलेत्यर्थः विजयते सर्वोत्-कर्षेण वर्त्तते । यत् यतः अग्रासीनायाः अग्रवर्त्तिन्याः सरस्वत्याः स्फटिकदृषदः स्फटिकमणेः या अच्छा निर्मला छविः कान्तिः तन्मयी मूर्त्तिः माणिक्यवपुषा माणिक्यरत्नरूपेण परिणमति पर्य्यवस्यति रक्ता भवतीति भावः । अत्र तद्गुणालङ्कारः । तदुक्तं दर्पणे । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रह इति ॥ ६४ ॥

विरिञ्चीन्द्रोपेन्द्रैः शशिशकलकर्पूररुचिरा
विलुण्ठ्यन्ते मातस्तव वदनताम्बूलकणिकाः ॥६५॥
विपञ्च्या गायन्ती विविधमवदानं पशुपतेः
त्वयारब्धे वक्तुं चलितशिरसा साधुवदने ! ।
त्वदीयैर्माधुर्य्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥६६॥
कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।

रणे इति। हे मातः ! विरिञ्चीन्द्रोपेन्द्रैः ब्रह्मेन्द्रविष्णुभिः रणे संग्रामे दैत्यान् जित्वा निवृत्तैः प्रत्यावृत्तैः अपहृतम् अपनीतं शिरस्त्रम् उष्णीषं यैः तथाभूतैः त्यक्तोष्णीषैरित्यर्थः कवचिभिः वर्म्मिभिः चण्डाः तीक्ष्णाः अंशवो यस्य तथाभूतः यः त्रिपुरहरः शिवः तस्य निर्माल्यात् प्रसाददत्तात् उच्छिष्टादिति यावत् विमुखैः तन्निर्माल्य-मगणयद्भिरिति भावः सद्भिः शशिशकलवत् चन्द्रखण्डवत् यत् कर्पूरं तेन रुचिरा कर्पूरसुवासिता तव वदनस्य ताम्बूलकणिकाः विलुण्ठ्यन्ते आग्रहेण गृहीत्वा भुज्यन्ते इति भावः ॥ ६५ ॥

विपञ्च्येति। हे साधुवदने सुमुखि ! विपञ्च्या वीणया पशुपतेः हरस्य विविधम् अवदानं कृतकार्य्यम्, अवदानं वृत्तकर्म्मेत्यमरः। गायन्ती वाणी सरस्वती चलितशिरसा कम्पितमूर्द्ध्ना त्वया वक्तुं कथयितुम् आरब्धे उपक्रान्ते सति त्वदीयैः माधुर्य्यैः वाचामिति शेषः अपल-पितः निह्नुतः तन्त्र्याः कलरवः मधुरस्वनः यस्याः तथाभूतां निजां वीणां चोलेन आवरणवसनेन निभृतं शनैः शनैः निचुलयति संवृणो-तीत्यर्थः ॥ ६६ ॥

कराग्रेणेति। हे गिरिसुते ! औपम्यरहितं निरुपमं तव चिवुकं तुहिनगिरिणा हिमवता वत्सलतया अपत्यस्नेहेन करा-

करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते ।
कथङ्कारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥ ६७ ॥

भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवाधत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं व्रजति तदधो हारलतिका ॥ ६८ ॥

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवादव्यालब्धस्वगुणगणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाङ्कुरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥

येन स्पृष्टं गिरीशेन हरेण मुहुः पुनः पुनः अधरपाने आकुलतया उदस्तम् उदृक्षिप्तम् उन्नमितमित्यर्थः शम्भोः शिवस्य करग्राह्यं मुखमेव मुकुरः आदर्शः तस्य वृन्तं कथङ्कारं केन प्रकारेण ब्रूमः कीर्त्तयामः ? न कथमपि वक्तुं शक्नुम इति यावत् ॥ ६७ ॥

भुजेति । इयं तव ग्रीवा नित्यं पुरदमयितुः पुरारेः भुजाश्लेषात् करालिङ्गनात् कण्टकवती रोमाञ्चयुता अतः मुखमेव कमलं तस्य नालश्रियं मृणालशोभाम् आधत्ते सम्यक् धारयति । तस्या ग्रीवायाः अधः हारलतिका मुक्ताहारः स्वतः स्वभावेन श्वेता शुभ्रा किन्तु कालागुरुरेव कृष्णागुरुलेप एव बहुलः बहुः जम्बालः कर्दमः तेन मलिना, अतः मृणालीलालित्यं मृणालसौन्दर्यं व्रजति गच्छति प्राप्नोतीत्यर्थः मृणालीनां पङ्कस्थितत्वादिति भावः । उपमालङ्कारः ॥ ६८ ॥

गले इति । गतेः संसारनियमस्य गमकं ज्ञापकं यत् गीतं गानं तन्मैकनिपुणे तन्मैकप्रवणे ते तव गले विवादे कस्यैतद्गुणत्रय-मस्ति हरस्य गौर्य्या वा इति विशिष्टे वादे व्यालब्धानां स्वनिष्ठत्वेन

मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्य्यं सरसिजभवः स्तौति वदनैः ।
नखेभ्यः सन्त्रस्यन् प्रथमदलनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥
नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणान्ते कान्तिं कथय कथयामः कथममी ।
कदाचिद्वा साम्यं व्रजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलम् ॥ ७१ ॥

निरूपितानामिति भावः स्वगुणगणानां सत्त्वरजस्तमसां संख्यायाः प्रतिभवः प्रत्ययस्थानानीत्यर्थः तिस्रः रेखाः नानाविधानां मधुराणां रागाणाम् अङ्कुरभुवाम् अङ्कुरोत्पत्तिकारणानां त्रयाणां ग्रामाणां, तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते इत्युक्तलक्षणानां स्वरविशेषाणां स्थितिनियमस्य सीमान इव विराजन्ते शोभन्ते ॥ ६९ ॥

मृणालीति । सरसिजभवः पद्मजः ब्रह्मा प्रथमस्य आद्यस्य मुखस्येति शेषः दलनात् छेदनात् अन्धकरिपोः हरस्य नखेभ्यः सन्त्रस्यन् बिभ्यत् सन् चतुर्णाम् अवशिष्टानां शीर्षाणां मुण्डानां समं युगपत् अभयहस्तैः चतुर्भिरिति भावः अर्पणं स्थापनं तस्य धीः बुद्धिः तया यदि मातस्त्वं युगपत् अवशिष्टानि चत्वारि शिरांसि मे अभयदैस्तव चतुर्भिर्हस्तैः स्पृशसि तथा मम त्रिपुरारेः नखच्छेदनात् भयं न स्यादित्यभिप्रायेणेति भावः चतुर्भिः वदनैः मृणालीमृद्वीनां मृणालकोमलानां चतसृणाम् तव भुजानां सौन्दर्य्यं स्तौति । पुरा सन्ध्यां नाम कन्यां प्रति जातानुरागतया अभिगच्छतः विधातुरेकं शिरः क्रोधेन हरः स्वनखैश्छिच्छेदेति पुराणवार्त्तात्रानुसन्धेया ॥ ७० ॥

नखानामिति । नखानाम् उद्योतैः कान्तिभिः नवनलिनरागं नवकमललावण्यं विहसतां ते तव कराणां कान्तिं

समं देवि! स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम्।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ७२ ॥
अमू ते वक्षोजावमृतरसमाणिक्यकलसौ
न सन्देहस्पन्दो नगपतिपताके! मनसि नः।

श्रियम् अमी वयं कथं कथयामः? न कथमपि कथयितुं शक्नुम इत्यर्थः। यदि क्रीडन्त्याः अप्सराः चरणतलाख्या पादतलालक्तकरसेन अरुणा रक्ता दला यस्य तथाभूतं कमलं स्यात् तदा कदाचित् वा कलया अंशतः किञ्चिदंशेनेत्यर्थः साम्यं सादृश्यं तव चरणाभ्यामिति शेषः व्रजतु प्राप्नोतु, हन्तेति विस्मयसूचकमव्ययम्। अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्बन्ध इत्यसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणे। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ। पौर्वापर्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः इति ॥ ७१ ॥

सममिति। हे देवि! तवेदं स्कन्दः कार्त्तिकेय एव द्विपः हस्ती तस्य वदनेन पीतम् अतएव समं युगपत् प्रस्नुतमुखं क्षीरस्राविचूचुकं स्तनयुगं नः अस्माकं खेदं दुःखं सततं हरतु नाशयतु। यत् स्तनयुगम् आलोक्य हेरम्बः गजाननः आशङ्कया मम कुम्भौ पास्यतीति बोधेनेति भावः आकुलितहृदयः अतएव हासजनकः लोकानामिति शेषः सन् झटिति हस्तेन शुण्डादण्डेन करेण वा स्वकुम्भौ परिमृशति स्पृशति आच्छादयतीति भावः। एतेन स्तनयोः करिकुम्भसाम्यं द्योत्यते ॥ ७२ ॥

अमू इति। हे नगपतिपताके हिमाद्रिवैजयन्ति! ते तव अमू वक्षोजौ पयोधरौ अमृतरसस्य माणिक्यकलसौ माणिक्यमणि-

पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥

वहत्यम्ब स्तम्बेरमवदनकुम्भप्रभृतिभिः
समाबद्धां मुक्तामणिभिरमलां हारलतिकाम्।
कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां
प्रतापव्यामिश्रां पुरविजयिनः कीर्त्तिमिव ते ॥ ७४ ॥

कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूलं कनककलसाभौ कलयताम्।
भयात् त्रातुं भङ्गादुदरमविलग्नं तनुभुवा
त्रिधा बद्धं देवि! त्रिवलिलवलीवल्लिभिरिव ॥ ७५ ॥

निर्मितौ कुम्भौ, नः अस्माकं मनसि सन्देहस्पन्दः संशयसञ्चारः न अत्र विषये इति भावः, यस्मात् अद्यापि पिबन्तौ तौ द्विरदवदन-क्रौञ्चदलनौ हेरम्बकार्त्तिकेयौ अविदितवधूसङ्गमरसौ वधूसङ्गमरस-मजानन्तौ कुमारौ तिष्ठत इति शेषः वधूसङ्गमरसादपि तव स्तन्य-रसास्वादो नितरामुत्कृष्ट इति भावः ॥ ७३ ॥

वहतीति। हे अम्ब! मातः! ते तव कुचाभोगः स्तनपरिसरः स्तम्बेरमस्य हस्तिनः वदने मुखे यौ कुम्भौ यद्वा स्तम्बेरमवदनस्य गजाननस्य यौ कुम्भौ शिरःस्थितमांसपिण्डौ ताभ्यां प्रभृतिः उद्भवः येषां तादृशैः मुक्तामणिभिः मौक्तिकरत्नैः समाबद्धाम् आरचिताम् अमलां बिम्बाधरस्य रुचिभिः प्रभाभिः अन्तः शबलितां विमिश्रामित्यर्थः हारलतिकां हारयष्टिं प्रतापव्यामिश्रां प्रतापसमन्वितां पुर-विजयिनः हरस्य कीर्त्तिमिव वहति। उत्प्रेक्षालङ्कारः ॥ ७४ ॥

कुचाविति। हे देवि! सद्यः सात्त्विकभावोदयक्षण एव स्विद्यतस्तस्य तटेषु परिसरेषु घटितः अर्पितः यः कूर्पासः कञ्चुलिका तस्य भिदुरौ त्रोटकौ अत्युन्नतत्वादिति भावः दोर्मूलं भुजामूलं

तव स्तन्यं मन्ये धरणिधरकन्ये ! हृदयतः
पयःपारावारः परिहरति सारस्वत इव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयं कवयिता ॥ ७६ ॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये ! धूमलतिका
जनस्तां जानीते जननि ! तव रोमावलिरिति ॥७७॥

कषन्तौ आकर्षन्तौ अतिविस्तृतत्वादिति भावः कनककलसाभौ काञ्चनकुम्भोपमौ तव कुचौ कलयतां पश्यतां जनानां कलमतेति पाठे तनुभुवेत्यस्य विशेषणम् । भङ्गात् भङ्गजनितात् भयात् त्रातुं तनुभुवा कामेन अविलग्नं नास्ति विलग्नं कृशं यस्मात् तादृशम् अतिकृशमित्यर्थः उदरं त्रिवल्या एव लवलीवल्लयः ताभिः त्रिधा बद्धमिव भङ्गनिवारणार्थं कठिनीकृतमिव । उत्प्रेक्षालङ्कारः ॥ ७५ ॥

तवेति । हे धराधरकन्ये पार्वति ! सारस्वतः सरस्वतीसम्बन्धी पयःपारावारः पयोराशिः तव हृदयतः स्तनयुगलादिति भावः स्तन्यं दुग्धं परिहरति मुष्णाति इति मन्ये, द्राविडशिशुः अहमिति भावः द्राविडदेशीयो बालकः दयावत्या त्वया सरस्वत्या वा दत्तं यत् कमनीयं पयः दुग्धं जलं वा आस्वाद्य पीत्वा प्रौढानां प्रगल्भानां कवीनां मध्ये कवयिता महान् कविः अजनि जातः । द्रविडदेशे सरस्वती नदी अस्ति तज्जलपायिनां तत्रत्यानां कवित्वशक्तिर्जायते इति प्रसिद्धिरिति भावः ॥ ७६ ॥

हरेति । हे अचलतनये पार्वति ! हे जननि ! मनसिजः कामः हरस्य क्रोधज्वालावलिभिः क्रोधाग्निशिखासमूहैः अवलीढेन आक्रान्तेन वपुषा शरीरेण उपलक्षितः सन् गभीरे ते तव नाभी-

यदेतत् कालिन्दीतनुतरतरङ्गाकृति शिवे !
कृशे मध्ये किञ्चिज्झटिति तव तद्भाति सुधियाम् ।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७८ ॥
स्थिरो गङ्गावर्त्तः स्तनमुकुलरोमावलिलता-
तलारालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलागारं किमपि तव नाभीति गिरिजे !
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७९ ॥

सरसि लतभ्रमः दृतभ्रमः व्यामोदिति शेषः । तस्मात् या धूम-लतिका धूमराजिः उत्तस्थौ, जनः शोकः तां तव रोमावलिः इति जानीते । अत्र भ्रान्तिमानलङ्कारः । तदुक्तं दर्पणे । साम्यादतस्मि-स्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ ७७ ॥

यदिति । हे शिवे ! तव कृशे मध्ये यदेतत् कालिन्द्याः यमुनायाः तनुतरः अत्यल्पः यस्तरङ्गः तस्येव आकृतिर्यस्य तादृशं किञ्चित् वस्त्विति शेषः रोमावलीरूपमिति भावः तत् सुधियां विदुषां झटिति सहसा कुचकलशयोः अन्योन्यं परस्परं विमर्दात् सङ्घर्षात् अन्तरगतं मध्यस्थितं तनूभूतम् अतिसूक्ष्मं कुहरिणीं गह्वरवतीं नाभिं प्रविशत् व्योमेव अन्तरीक्षमिव भाति प्रतीयमानं भवति व्योम्नः नीलत्वादिति भावः । उत्प्रेक्षालङ्कारः ॥ ७८ ॥

स्थिर इति । हे गिरिजे ! तव नाभीति किमपि वस्त्विति शेषः स्थिरः अचञ्चलः गङ्गावर्त्तः गङ्गाया भ्रमिविशेषः स्तनमुकुलयोः रोमा-वलिरूपा या लता वल्ली तस्याः तलारालं तलस्थितालवालं कुसुमशरस्य तेजोहुतभुजः प्रतापाग्नेः कुण्डम् आधारपात्रं गिरिशनयनानां रतेरनुरागस्य लीलागारं तथा सिद्धेः पुरुषार्थानामिति भावः बिल-द्वारं गर्त्तरूपं द्वारं सत् विजयते सर्वोत्कर्षेण वर्त्तते । रूपकमलङ्कारः ॥ ७९ ॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्त्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थस्थैर्यं भवतु कुशलं शैलतनये ! ॥८०॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति ! निजा-
न्नितम्बादाच्छिद्य त्वयि हरणरूपेण विदधे।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥८१॥

करीन्द्राणां शुण्डां कनककदलीकाण्डपटलीम्
उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती।
सुवृत्ताभ्यां पत्यौ प्रणतिकठिनाभ्यां गिरिसुते !
विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥८२॥

निसर्गेति। हे शैलतनये ! निसर्गक्षीणस्य स्वभावकृशस्य स्तनयोस्तटानां परिसराणां भरेण आतिशय्येन क्लमजुषः क्लान्तस्य नाभौ नमन्ती मूर्त्तिर्यस्य तादृशस्य विनतस्येत्यर्थः वलिषु त्रिवलीषु शनकैः मन्दं यथा तथा त्रुट्यत इव छेदप्रवणस्येत्यर्थः एवं त्रुटितं छिन्नं यत् तटिन्याः नद्याः तीरं तत्र यः तरुः तेन समा अवस्था यस्य तथाभूतस्य ते मध्यस्य चिरं कुशलं भवतु ॥ ८० ॥

गुरुत्वमिति। हे पार्वति ! क्षितिधरपतिः पर्वतराजः निजात् नितम्बात् कटकात्, कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। गुरुत्वं विस्तारञ्च आच्छिद्य त्वयि हरणरूपेण यौतकरूपेण विदधे अर्पितवान्। अतः कारणात् ते तव विस्तीर्णः गुरुः अयं नितम्बप्राग्भारः नितम्बस्य प्रकृष्टो भारः अशेषां समस्तां वसुमतीं पृथ्वीं स्थगयति आच्छादयति विस्तारेणेति भावः, लघुत्वं नयति च गौरवेणेति भावः ॥ ८१ ॥

करीन्द्राणामिति। हे गिरिसुते ! भवती उभाभ्याम् ऊरुभ्यां

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते !
निषङ्गौ ते जङ्घे विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगले
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८३ ॥
श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः ! शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥

करीन्द्राणां शुण्डां शुण्डादण्डं कनककदलीकाण्डपटलीं काण्डं कदली-स्तम्भसमूहञ्च उभयमपि निर्जित्य सुवर्तुलाभ्यां पत्यौ प्रिये हरे प्रणतिकठिनाभ्यां न तु स्वतः कठिनाभ्यामिति भावः जानुभ्यां विबुधानां देवानां यः करी ऐरावतः तस्य कुम्भद्वयमपि विजित्य विजितवती ॥ ८२ ॥

पराजेतुमिति । हे गिरिसुते ! विषमविशिखः पञ्चशरः रुद्रं पराजेतुं ते तव जङ्घे द्विगुणशरगर्भौ निषङ्गौ तूणीरौ अकृत कृतवान् इति बाढं मन्ये, यतोऽग्रे पादयुगले सुराणां देवानां मुकुटा एव शाणाः तैः एकैः केवलैः निशिताः तीक्ष्णीकृताः नखाग्रमेव छद्म कपटं येषां तथाभूताः दशशरफलाः बाणफलकानि दृश्यन्ते ॥८३॥

श्रुतीनामिति । हे मातः ! श्रुतीनां वेदानां मूर्धानः शिरांसि उपनिषद इत्यर्थः तव यौ चरणौ शेखरतया शिरोरत्नतया दधति धारयन्ति, एतौ चरणौ ममापि शिरसि दयया कृपया धेहि अर्पय । पशुपतेः जटाजूटवर्त्तिनी तटिनी नदी गङ्गेत्यर्थः ययोश्चरणयोः पाद्यं पाथः पादप्रक्षालनार्थं जलम् । अरुणा रक्ता हरेरिन्द्रस्य विष्णोर्वा चूडामणिरुचिः मुकुटकान्तिः ययोश्चरणयोः लाक्षालक्ष्मीः अलक्तकशोभा ॥ ८४ ॥

हिमानीहन्तव्यं हिमगिरितटाक्रान्तरुचिरौ
निशायां निद्राणं निशि च परभागेन विशदौ ।
परं लक्ष्मीपात्रं श्रियमभिसृजन्तौ प्रणयिनां
सरोजं त्वत्पादौ जननि ! जयतश्चित्रमिह किम् ॥८५॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकरुचे ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केल्लितरवे ॥ ८६ ॥

हिमानीति । हे जननि ! हिमगिरेस्तटेषु आक्रान्तेन सञ्चरणेन रुचिरौ समुज्ज्वलौ निशि रात्रौ च परभागेन उत्कर्षेण विशदौ निर्मलौ समरागावित्यर्थः प्रणयिनां भक्तानां श्रियं सम्पदम् अभिसृजन्तौ वर्षन्तौ तव पादौ इह जगति हिमानीहन्तव्यं हिमागमवध्यं निशायां निद्राणं मुकुलभावमापन्नं परं केवलं लक्ष्मीपात्रं लक्ष्मीप्रीतिकरमिति यावत् सरोजं पद्मं जयतः, तत् किं चित्रम् ? आश्चर्य्यम् ? गुणाधिक्येनाल्पगुणः पराजीयते इत्यत्र को विस्मय इति भावः । व्यतिरेकालङ्कारः । तदुक्तं दर्पणे । आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति ॥ ८५ ॥

नमोवाकमिति । नयनरमणीयाय नेत्ररञ्जनाय स्फुटा उज्ज्वला रुचिः प्रभा यस्य तादृशं यत् रसायाः लाक्षायाः अलक्तकं लाक्षारसः तद्वत् तेन वा रुक् शोभा यस्य तादृशाय तवास्मै पदयोर्द्वन्द्वाय युगलाय नमोवाकं नम इत्युक्त्वा ब्रूमः स्तुम इत्यर्थः, यदभिहननाय येन पदद्वन्द्वेन अभिहननाय ताडनाय स्पृहयते कामयमानाय प्रमदवनस्य कङ्केल्लितरवे अशोकद्रुमाय, पादाहतः प्रमदया विकसत्यशोक इति कविसमयप्रसिद्धेः । पशूनाम् ईशानः पतिः हरः असूयति ईर्ष्यति अहं भवत्याः पदाभिहननाय यत् कामये तत्रायं स्पृहयालुरिति द्वेषादिवेति भावः ॥ ८६ ॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणयुगले ताडयति ते।
चिरादन्तःशल्यं दहनकृतमुन्मीलितवता
तुलाकोटिक्वाणैः किलकिलितमीशानरिपुणा ॥८७॥

पदं ते कान्तीनां प्रपदमपदं देवि! विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम्।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
तदादाय न्यस्तं दृषदि दयमानेन मनसा ॥८८॥

नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि! चरणौ।

मृषेति। मृषा अलीकं गोत्रस्खलनं परनारीनामकीर्त्तनमिति यावत् कृत्वा पश्चादपि गौरी किमाचरतीति भीतेति भावः, अथ अनन्तरं गोत्रस्खलनात् परमित्यर्थः वैलक्ष्येण लज्जया नमितम् अधोवदनमिति भावः भर्तारं हरं ते तव चरणयुगले ललाटे ताडयति प्रहरति सति दहनकृतं भस्मीकरणजनितं चिरात् अन्तःशल्यं उन्मीलितवता उद्घाटयतेत्यर्थः ईशानरिपुणा मदनेन तुलाकोटिक्वाणैः नूपुरस्वनैः किलकिलितं किलकिलेतिशब्दोच्चारणघटितं हसितमित्यर्थः ॥ ८७ ॥

पदमिति। हे देवि! ते तव पदं कान्तीनां लावण्यानां प्रपदं प्रकृष्टं स्थानं विपदाम् अपदम् अस्थानम् अभावस्थानमित्यर्थः सद्भिः विद्वद्भिः कथं कठिना या कमठी कच्छपी तस्याः कर्परेण पृष्ठास्थ्ना तुलां साम्यं नीतम्? कथं वा पुरभिदा पुरारिणा हरेण उपयमनकाले परिणयनकाले दयमानेन मनसा बाहुभ्यां तत् पदम् आदाय दृषदि शिलायां न्यस्तं स्थापितम्? अनुचितं कृतमिति भावः ॥ ८८ ॥

फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥८९॥
कदा काले मातः! कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।
प्रकृत्या मूकानामपि च कविताकारणतया
यदाधत्ते वाणीमुखकमलताम्बूलरसताम् ॥९०॥
पदन्यासक्रीडापरिचयमिवालब्धुमनसः
चरन्तस्ते खेलां भवनकलहंसा न जहति।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं चारुचरितम् ॥९१॥

नखैरिति। हे चण्डि! कोपने! अनिशं निरन्तरम् अह्नाय झटिति दरिद्रेभ्यः भद्रां शुभां श्रियं ददतौ ते तव चरणौ नाकलोकीनां सुरसुन्दरीणां करकमलेषु सङ्कोचशालिभिः चुकुन्दैः चन्द्रकलाकल्पैरिति यावत् नखैः पादवन्दनार्थं तव चरणतलन्यस्तैरिति भावः स्वःस्थेभ्यः स्वर्गवासिभ्यः किशलयकराग्रेण पल्लवरूपहस्ताग्रेण फलानि ददतां दिव्यानां तरूणां सम्बन्धविवक्षया कर्मणि षष्ठी। हसत इव। उत्प्रेक्षालङ्कारः॥ ८९ ॥

कदेति। हे मातः! कदा कस्मिन् काले विद्यार्थी अहं कलितः युक्तः अलक्तकरसः यत्र तादृशं तव चरणयोर्निर्णेजनजलं चालनजलं पिबेयं कथय। यत् निर्णेजनजलं प्रकृत्या स्वभावेन मूकानामपि वाक्शक्तिहीनानामपि कविताकारणतया कवित्वबीजतया वाण्याः सरस्वत्याः मुखकमले यत् ताम्बूलं तस्य रसताम् आस्वादम् आधत्ते धारयति ॥ ९० ॥

पदन्यासेति। भवनकलहंसाः त्वद्गृहपोषितहंसविशेषाः ते तव पदन्यासः पदविक्षेप एव क्रीडा तस्याः परिचयम् अभ्यासम् आलब्धु-

अराला केशेषु प्रकृतिसरलानन्दहसिते
शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे ।
भृशं तन्वी मध्ये पृथुरपि वरारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥९२॥

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्य्यामर्य्यादा तरुणकरुणा नाम सुलभा ।
तथाह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥९३॥

मनस इव कर्त्तुकामा इव खेलां क्रीडां चरन्तः कुर्वन्तः सन्तः सुभग-मणिमञ्जीररणितच्छलात् सुन्दररत्ननूपुरस्वनमिषात् सविधेऽपि सुष्ठु-विन्यासे शिक्षाम् आचक्षाणं कथयत् चारुचरिते मनोज्ञक्रिये तव चरणकमलं न जहति न त्यजन्ति ॥ ९१ ॥

अरालेति । केशेषु अराला कुटिला, आनन्दहसिते प्रकृति-सरला स्वभावसरला, गात्रे शरीरे शिरीषाभा शिरीषपुष्पवत् कोमला, कुचतटे दृषदिव शिलेव कठोरा कठिना, मध्ये मध्यदेशे भृशम् अत्यर्थं तन्वी क्षीणा, वरः उत्कृष्टः आरोहः नितम्बः स एव विषयः तस्मिन् पृथुरपि विशालापि, शम्भोर्हरस्य कापि अरुणा रक्ता करुणा दयामयी मूर्त्तिरिति यावत् जगत् त्रातुं जयति सर्वोत्-कर्षेण वर्त्तते । रूपकमलङ्कारः ॥ ९२ ॥

पुरारातेरिति । (हे मातः !) त्वं पुरारातेः हरस्य अन्तः-पुरं वल्लभा असि, ततः कारणात् तव चरणयोः सपर्य्या सेवा तस्याः मर्य्यादा सीमा तरुणकरुणा दयार्द्रा सुलभा सुसाध्या चेत्यर्थः आशु-तोषपत्न्यास्तव आशुप्रसन्नत्वादिति भावः, तथाहि एते शतमखमुखाः इन्द्रप्रभृतयः अमराः तव द्वारोपान्ते स्थितिर्यासां तथोक्ताभिः सततसन्निहिताभिरिति यावत् अणिमाद्याभिः अणिमा लघिमा

गतास्ते पञ्चत्वं द्रुहिणहरिरुद्रामरवराः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनलाभारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥९४॥
कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिड़ितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिड़यति नूनं तव कृते ॥९५॥

व्याप्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायितेत्यष्टविधाभिः शक्तिभिरिति शेषः अतुलां महतीं सिद्धिं नीताः प्रापिताः तव सेवयेति भावः ॥ ९३ ॥

गता इति । ते प्रसिद्धाः द्रुहिणहरिरुद्रा एव अमरवराः देवप्रवराः सृष्टिस्थितिप्रलयकारिण इति भावः पञ्चत्वं गताः कालेन लीयन्ते इति भावः, किन्तु शिवः परमशिव इति यावत् स्वच्छया विमलया छायया तेजसा घटितः निर्मितः कपटः व्याजः प्रच्छदपटः उत्तरीयवसनं येन तथाभूतः स्वतेजसा दीप्यमान इति भावः शरीरी मूर्त्तिमान् शृङ्गारो रसः त्वदीयानां त्वत्सम्बन्धिनीनां भासां दीप्तीनां प्रतिफलनस्य प्रतिबिम्बस्य यो लाभः प्राप्तिस्तेन अरुणतया रक्तवर्णतया दृशां नयनानां कुतुकम् आनन्दं दोग्धि ददातीत्यर्थः, स हि महाकालत्वात् कठोरभावेन त्वया सह सततं रमते इति भावः ॥९४॥

कलङ्क इति । कलङ्कः चन्द्रमण्डलस्थितलाञ्छनं कस्तूरी मृगनाभिः, रजनिकरबिम्बं चन्द्रबिम्बं जलमयं कर्पूरैः कर्पूररूपाभिरित्यर्थः कलाभिः मरकतकरण्डं मरकतमणिभाजनं निबिड़ितं पूर्णमासीदिति शेषः । अतः विधिः तव प्रतिदिनं भोगेन रिक्तकुहरं शून्याभ्यन्तरम् इदं रजनिकरबिम्बं तव कृते भूयः भूयः पुनः पुनः निबिड़यति पूरयति नूनं मन्ये ॥ ९५ ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेव्ये ! नित्ये ! त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासंवर्त्ताग्निर्विरचयति नीराजनविधिम् ॥९६॥

समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं
कटाक्षे कन्दर्पाः कतिचनकदम्बद्युति वपुः ।
रहस्यं त्वद्भ्रान्तिं मनसि जनयन्तः समतुलां
भवत्यां ये भक्ताः परिणतिरमीषामियमुमे ! ॥९७॥

स्वदेहेति । स्वस्य देहात् उद्भूताभिः उत्पन्नाभिः घृणिभिः प्रभारूपाभिरिति यावत् अणिमाद्याभिः शक्तिभिरिति शेषः अभितः समन्तात् निषेव्ये आराध्ये ! नित्ये सनातनि ! यः सदा त्वाम् अहमिति भावयति साहमिति चिन्तयति, महासंवर्त्ताग्निः महाप्रलयानलः त्रिनयनस्य हरस्य समृद्धिम् ऐश्वर्य्यं तृणयतः तृणं मन्यमानस्येत्यर्थः तस्य नीराजनविधिं निर्मञ्छनव्यापारं विरचयति करोति अत्र किम् आश्चर्य्यम् ? महाप्रलयेऽपि स विराजते इति भावः ॥ ९६ ॥

समुद्भूतेति । हे उमे ! ये जनाः रहस्यं निभृतं यथा तथा समतुलां सम्यक् तुलारहितां मनसि तव भ्रान्तिं भ्रमणं जनयन्तः सततं त्वां स्मरन्त इति भावः सन्तः भवत्यां भक्ताः भक्तिमन्तः भवन्तीति शेषः, अमीषां जनानाम् इयं परिणतिः परिणामः फलमिति यावत् स्यादिति शेषः । का परिणतिरित्याह समुद्भूतेति, उरः वक्षःस्थलं समुद्भूतः समुत्थितः स्थूलयोः स्तनयोः भरः यत्र तादृशं चारु मनोहरं हसितं, कटाक्षे कन्दर्पाः वसन्तीति शेषः, वपुः शरीरं कतिचन कदम्बानां द्युतिः यस्मिन् तत् विकस्वरमित्यर्थः भवतीति शेषः कामिन्यः स्वतस्तस्य वश्या भवन्तीति भावः ॥ ९७ ॥

कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरतिधनैः ।
महादेवं हित्वा तव सति ! सतीनामचरमे !
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९८ ॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीममहिमा
महामाये ! विश्वं भ्रमयसि परब्रह्ममहिषि ! ॥९९॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विजयते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।

कलत्रमिति । कति कति कवयः विधातुरिदं वैधात्रं ब्राह्म-मित्यर्थः कलत्रं पत्नीं सरस्वतीमिति यावत् न भजन्ते न भुञ्जते इति भावः सर्वेऽपि भजन्ते इत्यर्थः एतेन सरस्वत्या असतीत्वं व्यज्यते । कैः कैश्चिदपीत्यर्थः अतिधनैः किञ्चिदधिकधनैरिति यावत् को जनः श्रियः देव्याः लक्ष्म्याः पतिः न भवति ? सर्व एव पतिर्भवतीत्यर्थः, एतेन लक्ष्म्या अपि असतीत्वं व्यज्यते । हे सतीनामचरमे अग्रगण्ये सति ! महादेवं हित्वा तव कुचाभ्यां स्तनाभ्याम् आसङ्गः सम्पर्कः कुरवकतरोरपि असुलभः दुर्लभः कुरवकपुष्पेण तव पूजाया निषिद्धत्वात् कुरवकस्य सुतरां तत्सम्पर्कविरह इति का कथान्येषामिति भावः ॥ ९८ ॥

गिरामिति । आगमविदः वेदविदः गिरां देवीं वाग्देवीं द्रुहिणगृहिणीं ब्रह्मभार्यां पद्मां लक्ष्मीं हरेः पत्नीम् अद्रितनयां पार्वतीं हरसहचरीं शम्भुसङ्गिनीम् आहुः कथयन्ति । हे महामाये परब्रह्ममहिषि ! दुरधिगमः दुर्बोधः निःसीमा महिमा यस्यास्तथाभूता तुरीया चतुर्थी कापि त्वं विश्वं जगत् भ्रमयसि घूर्णयसि ॥९९॥

चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः
परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥१००॥
निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निरायातज्ञाने नियमपरचित्तैकनिलये ! ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे
निरातङ्के नित्ये ! निगमय ममापि स्तुतिमिमाम् ॥१०१॥

सरस्वत्येति । तव भजनवान् भक्तिमान् जनः सरस्वत्या लक्ष्म्या च विधिहर्य्योः सपत्न्यौ समाने पत्न्यौ सरस्वतीं लक्ष्मीञ्चेत्यर्थः विजयते विद्वान् लक्ष्मीमांश्च भवतीति भावः रम्येण मनोहरेण वपुषा शरीरेण तत्सौन्दर्य्येणेति भावः रतेः कामपत्न्या अपीति शेषः का कथान्यासामिति भावः पातिव्रत्यं सतीत्वं शिथिलयति श्लथयति रतिमपि वशीकरोतीति भावः । यथा क्षपितः पशुपाशस्य जन्मपाशस्य व्यतिकरो येन तथाभूतः सन् पुनर्जन्मरहित इति भावः चिरं जीवन्नेव परब्रह्माभिख्यं परमात्मसंज्ञकं रसं रसयति आस्वादयति मुक्तिं लभते इति भावः ॥ १०० ॥

निधे इति । हे निधे ! हे नित्यस्मेरे सततहासिनि ! नित्योल्लासिनि ! हे निरवधिगुणे अशेषगुणे ! हे नीतिनिपुणे ! निरायातं निःशेषेण आगतं ज्ञानं यस्याः तत्सम्बुद्धौ सम्पूर्णज्ञाने इति यावत्, नियमेन नियतमित्यर्थः परेषां चित्तं मनः एकः अद्वितीयः निलयः आश्रयः यस्यास्तत्सम्बुद्धौ सर्वान्तर्यामिनीत्यर्थः, नियत्या भाग्येन. भाग्यं स्त्री नियतिर्विधिरित्यमरः । निर्मुक्ते रहिते दैवापरतन्त्रे इत्यर्थः, निखिलानां समग्राणां निगमानाम् अन्तः उपनिषत् तेन या स्तुतिः सैव पदं विषयः यस्याः तत्सम्बुद्धौ वेदान्तस्तुत्ये इति भावः, निरातङ्के निर्भये नित्ये ! सनातनि ! ममापि इमां स्तुतिं निगमय शृणु ॥ १०१ ॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि ! वाचां स्तुतिरियम् ॥ १०२ ॥

मञ्जीरशोभिचरणं वलिशोभिमध्यं
हाराभिरामकुचमम्बुरुहायताक्षम् ।
नीलालकं हिममहीधरकन्यकाख्यं
ज्ञानस्वरूपमिदमीश्वरदीपदीप्यम् ॥ १०३ ॥

इति शङ्कराचार्य्यविरचिता आनन्दलहरी समाप्ता ।

प्रदीपेति । हे जननि ! त्वदीयाभिः त्वदुत्पन्नाभिः वाग्भिः तव इयं वाचां स्तुतिः प्रदीपज्वालाभिः दीपशिखाभिः दिवसकरस्य सूर्य्यस्य नीराजनविधिः निर्मञ्छनविधानं चन्द्रोपलस्य चन्द्रकान्तमणेः जललवैः जलबिन्दुभिः सुधासूतेश्चन्द्रस्य अर्घ्यरचना अर्घ्यप्रदानं स्वकीयैः अम्भोभिः जलैः सलिलनिधेः समुद्रस्य सौहित्यकरणं तृप्तिसाधनम् । तव द्रव्येणैव तवार्चनमकिञ्चित्करमिति भावः ॥ १०२ ॥

मञ्जीरेति । मञ्जीराभ्यां नूपुराभ्यां शोभिनौ चरणौ यस्य तथोक्तं वलिभिः त्रिरेखाभिः शोभि मध्यं यस्य तथाभूतं हारेण अभिरामौ मनोहरौ कुचौ स्तनौ यस्य तादृशम् अम्बुरुहे इव आयते विशाले अक्षिणी यस्य तथाविधं नीलाः कृष्णाः अलकाः केशाः यस्य तथाभूतं हिममहीधरकन्यकाख्यं पर्वतराजकन्याभिधं ज्ञानस्वरूपं चिन्मयम् ईश्वर एव दीपः तेन दीप्यं विराज्यमानम् इदं विजयते इति शेषः । वसन्ततिलकं वृत्तं, सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥१०३॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
आनन्दलहरीव्याख्या समाप्ता ।

# श्रीकृष्णलहरी।

—:०:—

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम्।
अहो कृष्ण! स्वामिन्! मधुरमुरलीमोहनविभो!
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥
कदा कालिन्दीये हरिचरणमुद्राङ्कितटे
स्मरन् गोपीनाथं कमलनयनं सस्मितमुखम्।
अहो पूर्णानन्दाम्बुजवदन! भक्तैकललन! "प्रसी" ॥२॥

कदेति। कदा वृन्दारण्ये विपुले महति यमुनातीरपुलिने यमुनातटसैकते हलधरसुदामादिभिः गोपबालकैः सहितं चरन्तं क्रीडन्तं गोविन्दम् अहो कृष्ण! स्वामिन्! मधुरमुरलीमोहन मधुरेण वंशीरवेण मनोहारिन् विभो! प्रसीद प्रसन्नो भव इति क्रोशन् वदन् दिवसान् निमिषमिव नेष्यामि अतिवाहयिष्यामि ? शिखरिणीछन्दसि अस्मिन् सन्दर्भे। रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ १ ॥

कदेति। कदा कालिन्दीये यमुनासम्बन्धिनि हरिचरणमुद्राङ्कितटे श्रीकृष्णपादपद्मचिह्नितीरप्रदेशे कमलनयनं पद्मनयनं सस्मितमुखं सहासाननं गोपीनाथं श्रीकृष्णं स्मरन् चिन्तयन् सन् अहो पूर्णानन्द! अहो अम्बुजवदन! अहो भक्तैकललन! भक्तानुग्राहक! प्रसीद इति क्रोशन् सन् निमिषमिव दिवसान् अतिवाहयिष्यामि ॥ २ ॥

कदाचित् खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित् संप्राप्तां किमपि भयितां गोपललनाम् ।
अये राधे ! किं वा हरसि रसिके ! कञ्चुकयुगं "प्रसी" ॥३

कदाचित् गोपीनां हसितचकितस्निग्धनयनं
स्थितं गोपीवृन्दे नटमिव नटन्तं सुललितम् ।
सुराधीशैः सर्वैः स्तुतपदममुं श्रीहरिमिति "प्रसी" ॥४॥

कदाचित् स्वच्छायाश्रितमतिमहान्तं यदुपतिं
समाधिस्वच्छायञ्जल इव विलोलैकमकरम् ।
अये भक्तोदाराम्बुजवदन ! नन्दस्य तनय ! "प्रसी" ॥५॥

कदाचिदिति । कदाचित् व्रजपरिसरे व्रजभूमौ गोपतनयैः खेलन्तं विहरन्तं कृष्णमिति शेषः, कुतश्चित् सङ्केतेति भावः सम्प्राप्तां किमपि भयितां सञ्जातभयां कृष्णेन सह विहारार्थमागता पूर्वं स्तनावरणभूतं कञ्चुकद्वयं विहाय चलिता, ततश्च स्तनयोरावरणा-भावात् कोऽपि पश्यति मामेवं विवृतस्तनामिति भीतामिति भावः गोपललनां गोपकान्ताम् अये राधे ! प्रसीद प्रसन्ना भव, हे रसिके ! किं वा कथं वा कञ्चुकयुगं कञ्चुलिकायुगलं हरसि नयसि इति क्रोशन् वदन् दिवसान् निमिषमिव नेष्यामि । शिखरिणीवृत्तम् ॥३॥

कदाचिदिति । कदाचित् गोपीनां हसितेन चकिते चञ्चले स्निग्धे नयने यस्य तं गोपीवृन्दे गोपीवृन्दमध्ये इति यावत् स्थितं नटमिव सुललितं सुचारु यथा तथा नटन्तं नृत्यन्तं सर्वैः सुराधीशैः देवप्रवरैः स्तुतं पदं यस्य तादृशम् अमुं श्रीहरिं प्रसीद इति क्रोशन् वदन् दिवसान् निमिषमिव नेष्यामि ॥ ४ ॥

कदाचिदिति । कदाचित् स्वस्य छाया कान्तिः ताम् आश्रितः तम् अतिमहान्तं समाधौ चित्तैकाग्रतायां स्वस्य आत्मनः छाया प्रतिबिम्बं यस्य तादृशम् एकाग्रचित्तेषु भक्तेषु प्रतिबिम्बितस्वरूपमिति भावः जले विलोलश्चञ्चलः एकः अद्वितीयः मकरः जलजन्तुभेदः तमिव

कदाचित् कालिन्द्यास्तटतरुकदम्बे स्थितममुं
स्मयन्तं साकूतं हृतवसनगोपीस्तनतटम् ।
अहो ! शक्रानन्दाम्बुजवदन ! गोवर्द्धनधर ! "प्रसी" ॥६॥
कदाचित् कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेत्यं नृपसुत ! सखे ! बन्धुरिति च ।
भ्रमन्तं विश्रान्तं श्रितमुरसि रम्यं हरिममुं "प्रसी" ॥७॥
कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अहो विष्णो ! राधारसिक ! मुरलीमोहन ! विभो ! ।
दयां कर्तुं दीने परमकरुणाब्धे ! समुचितं "प्रसी" ॥८॥

इति श्रीकृष्णलहरी सम्पूर्णा ।

---

यदुपतिं कृष्णम् अये भक्तोदार ! भक्तवत्सल ! अम्बुजवदन ! नन्दस्य तनय ! प्रसीद इति क्रोशन् दिवसान् निमिषमिव नेष्यामि ॥ ५ ॥

कदाचिदिति । कदाचित् कालिन्द्याः यमुनायाः तटस्थितः तरुकदम्बः कदम्बतरुरित्यर्थः अग्न्याहिताादिवत् पूर्वनिपातः । तस्मिन् स्थितं स्मयन्तं हसन्तं साकूतं साभिप्रायं यथा तथा हृतं वसनं येषां तादृशाः गोपीनां स्तनतटाः येन तादृशम् अमुं कृष्णमिति शेषः अहो शक्रानन्द ! इन्द्रानन्दवर्द्धन ! असुरनाशादिति भावः अम्बुज-वदन ! पद्ममुख ! गोवर्द्धनधर ! प्रसीदेत्यादि ॥ ६ ॥

कदाचिदिति । कदाचित् कान्तारे अरण्ये भ्रमन्तं विश्रान्तं, कान्तारो वर्त्म दुर्गममित्यमरः । विजयस्य अर्जुनस्य सखा तम् इष्टं प्रियं नृपसुतं राजपुत्रम् अर्जुनं पार्थ ! पृथानन्दन ! नृपसुत ! सखे ! इत्थं बन्धुरिति च वदन्तम् उरसि वक्षसि हृदये इति यावत् श्रितं तिष्ठन्तं रम्यं मनोहरम् अमुं कृष्णमिति शेषः प्रसीदेत्यादि ॥ ७ ॥

कदेति । कदा पूर्णम् अमलं निर्मलं पङ्कजदृशं कमलनेत्रं पुरुषं

# गङ्गालहरी ।

---

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तत्
महैश्वर्य्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्त्तं सुमनसां
सुधासौन्दर्य्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥
दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् ।

कृष्णे अवलोकयिष्यामि, अहो विष्णो ! राधारसिक ! मुरलीमोहन ! विभो ! करुणाब्धे ! दयासागर ! दीने दुःखिनि जने मयीति शेषः दयां कर्त्तुं समुचितं तवेति शेषः प्रसीद इति क्रोशन् दिवसान् निमिषमिव नेष्यामि ॥ ८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
श्रीकृष्णलहरीव्याख्या समाप्ता ।

---

समृद्धमिति । सकलवसुधायाः सर्वस्याः पृथिव्याः समृद्धं सम्यक् वृद्धिं गतं सौभाग्यं सौभाग्यरूपमिति यावत् लीलया जनितं जगत् येन तादृशस्य खण्डपरशोरीश्वरस्य किमपि अनिर्वचनीयं तत् प्रसिद्धं महत् ऐश्वर्य्यं सम्पद्रूपमिति यावत् श्रुतीनां वेदानां सर्वस्वम् अथ किञ्च सुमनसां मनस्विनां मूर्त्तं मूर्त्तिमत् सुकृतं पुण्यस्वरूपं ते तव सुधायाः अमृतस्येव सौन्दर्य्यं सौभाग्यं यस्य तादृशम् अमृतोपममित्यर्थः सलिलं नः अस्माकम् अशिवम् अमङ्गलम् शमयतु नाशयतु । शिख-रिणीवृत्तमस्मिन् सन्दर्भे । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरि-णीति तल्लक्षणात् ॥ १ ॥

दरिद्राणामिति । इह जगति सकृत् एकवारं दृष्टिसरणिं दृष्टि-

अपि द्राक् चाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २ ॥
स्मृतिं याता पुंसामकृतसुकृतानामपि च या
हरत्यन्तस्तन्द्रां तिमिरमिव चन्द्रांशुसरणिः ।
इयं सा ते मूर्त्तिः सकलसुरसंसेव्यसलिला
ममान्तःसन्तापं त्रिविधमथ तापञ्च हरताम् ॥ ३ ॥
तवालम्बादम्ब ! स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं यदि भजसि भागीरथि ! तदा
निराधारो हा ! रोदिमि कथय केषामिह पुरः ॥ ४ ॥

पथम् उपगतः सन् दरिद्राणां निर्धनानां दैन्यं दारिद्र्यम्, अथ किञ्च दुष्टा वासना भोगाभिलाषः यस्य तादृशं हृत् हृदयं येषां तथाविधानां दुरितं पापं दूरीकुर्वन् द्राक् च झटिति च अविद्या माया एव द्रुमः तस्य दलने भेदने ध्वंसने इति यावत् दीक्षागुरुः मन्त्रदाताचार्य्यः ते तव वारां जलानाम् अयं प्रवाहः नः अस्माकम् अपाराम् अशेषां श्रियं दिशतु ददातु ॥ २ ॥

स्मृतिमिति । अकृतसुकृतानामपि अपुण्यवतामपि पुंसां स्मृतिं याता स्मरणपथं गता या चन्द्रांशुसरणिः चन्द्रकिरणराजिः तिमिरमिव अन्तस्तन्द्राम् आन्तरं तमः हरति नाशयति, सकलैः सुरैः देवैः संसेव्यं सलिलं यस्यास्तथाभूता इयं ते तव मूर्त्तिः मम त्रिविधम् आध्यात्मिकाधिदैविकाधिभौतिकरूपं सन्तापम् अथ किञ्च तापं वाह्यं क्लेशञ्च हरतां नाशयतु ॥ ३ ॥

तवेति । हे अम्ब ! तव आलम्बात् आश्रयात् स्फुरन् प्रसरन् अलघुर्महान् गर्वो यस्य तथाभूतेन मया सहसा सर्वे सुरगणाः अव-ज्ञासरणिम् अवमाननास्पदतां नीताः अपमानिता इति भावः, हे भागी-

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि ! तीरं श्रितवताम् ।
सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां
जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ ५ ॥

उदञ्चन्मार्तण्डस्फुटकपटहेरम्बजननी-
कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः ।
भवन्तु त्वङ्गन्तो हरशिरसि गङ्गातनुभुव-
स्तरङ्गाः प्रोत्तुङ्गा भवदुरितभङ्गाय भजताम् ॥ ६ ॥

प्रभाते स्नान्तीनां नृपतिरमणीनां कुचतटी-
गतो यावन्मातर्मिलति तव तोयैर्मृगमदः ।

रयि ! यदि इदानीम् औदास्यम् औदासीन्यं भजसि मत्समाश्रयं न ददासीति भावः, तदा निराधारः निराश्रयः अहम् इह संसारे केषां पुरः श्रयतः रोदिमि कथय । हा इति खेदसूचकमव्ययम् ॥४॥

अपीति । हे जननि ! प्राज्यं प्रभूतमपि राज्यं तृणमिव परित्यज्य सहसा विलोलन्तः वानीराः वेतसलताः यत्र तादृशं तव तीरं श्रितवतां सुधातः अमृतादपि स्वादीयः सुस्वादुतरम् इदं त्वदीयं सलिलम् आतृप्ति आपरितोषं पिबतां जनानाम् आनन्दः निर्वाण-पदवीं कैवल्यपदं परिहसति । कैवल्यादपि तव तीरवासः सुख-हेतुरिति भावः ॥ ५ ॥

उदञ्चदिति । उदञ्चता उद्गच्छता मार्तण्डेन सापत्न्यद्वेषेण स्फुटः कपटो यस्याः तथाभूतायाः हेरम्बजनन्याः पार्वत्याः कटाक्षस्य व्याक्षेपक्षणे निक्षेपसमये जनितः संक्षोभनिवहः सम्यक्क्षोभनिचयः येषां तथाभूताः हरशिरसि त्वङ्गन्तः प्रसरन्तः गङ्गातनुभुवः गङ्गा-शरीरसम्भूताः प्रोत्तुङ्गाः अत्युन्नताः तरङ्गाः भजतां जनानां भवस्य संसारस्य दुरितभङ्गाय पापक्षालनाय भवन्तु ॥ ६ ॥

मृगास्तावद्वैमानिकशतसहस्रैः परिवृता
विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम्॥ ७॥
स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि
प्रगीतं यत्पापं झटिति भवतापञ्च हरति।
इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं
मम प्राणप्रान्ते वदनकमलान्तर्विलसतु॥ ८॥
यदन्तः खेलन्तः खलु बहुलसन्तोषभरिता
न काका नाकाधीश्वरनगरसाकाङ्क्षमनसः।
निवासाल्लोकानां जनिमरणशोकापहरणं
तदेतत्ते तीरं श्रमशमनधीरं भवतु नः॥ ९॥

प्रभाते इति। हे मातः! प्रभाते प्रातःकाले स्नान्तीनां नृपतिरमणीनां राजमहिषीणां कुचतटीगतः स्तनतटगतः मृगमदः कस्तूरीलेपः यावत् यदा तव तोयैः सलिलैः मिलति सङ्गच्छते तावत् तदा मृगाः कस्तूरीमृगाः विमलवपुषः निर्मलदेहाः पापशून्या इत्यर्थः वैमानिकानां देवयानारूढानां देवानामित्यर्थः शतसहस्रैः परिवृताः सन्तः स्वच्छन्दं यथा तथा नन्दनवनं विशन्ति॥ ७॥

स्मृतमिति। यत् स्मृतं सत् सद्यः तत्क्षणात् स्वान्तं मनः शान्तं शान्तिरसपूर्णं विरचयति करोति, सकृदपि एकवारमपि प्रगीतं प्रकर्षेण उच्चरितमित्यर्थः झटिति पापं भवतापञ्च संसारक्लेशञ्च हरति, इदं तत् गङ्गेति श्रवणरमणीयं पदं खलु मम प्राणप्रान्ते प्राणप्रयाणकाले वदनकमलस्य अन्तः अभ्यन्तरे विलसतु स्फुरतु॥ ८॥

यदिति। यस्य अन्तः अभ्यन्तरे खेलन्तः विचरन्तः बहुलसन्तोष-भरिताः अत्यन्तसन्तोषसमन्विताः काकाः नाकाधीश्वरस्य देवराजस्य नगरे साकाङ्क्षमनसः साभिलाषमनसः न खलु नैव भवन्तीत्यर्थः। तदेतत् ते तव तीरं निवासात् लोकानां जनिमरणशोकापहरणं

न यत् साक्षाद्वेदैरपि गलितभेदैरवसितं
न यस्मिञ्जीवानां प्रसरति मनोवागवसरः।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि! तत्ते न विषयः॥ १०॥
महादानैर्ध्यानैर्बहुविधवितानैरपि च यत्
न लभ्यं घोराभिः सुविमलतपोराजिभिरपि।
अचिन्त्यं तद्विष्णोः पदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय नः॥ ११॥
नृणामीक्षामात्रादपि परिहरन्त्या भवभयं
शिवायास्ते मूर्त्तेः क इह बहुमानं कथयतु?।

जन्ममरणशोकनाशनं नः अस्माकं श्रमशमने कृपयाऽन्तौ नीरं निर्मलं भवतु॥ ९॥

नेति। हे सुरतटिनि! देवनदि! गलितभेदैरपि अभिन्नमतैरपि वेदैः यत् तत्त्वं साक्षात् स्वयं न अवसितं न निरूपितं, यस्मिन् जीवानां मनसः वाचाञ्च अवसरः निर्णयशक्तिरिति यावत् न प्रसरति न स्फुरति, यच्च निराकारम् अरूपं नित्यं सनातनं निजमहिम्नः निर्वासितं तमः अज्ञानं येन तादृशं ते तव तत् तत्त्वं न विषयः न कस्यापि गोचरमित्यर्थः॥ १०॥

महादानैरिति। महादानैः भूमिस्वर्णादीनां दानैः ध्यानैः समाधिभिः बहुविधवितानैरपि विविधयज्ञैरपि घोराभिः कठिनाभिः दुष्कराभिरित्यर्थः सुविमलाभिर्विशुद्धाभिः तपोराजिभिः तपःपरम्पराभिश्चान्द्रायणादिभिरपि यत् न लभ्यं न प्राप्यम्, अचिन्त्यं तत् विष्णोः पदम् अखिलसाधारणतया सर्वसाधारण्येन ददाना त्वम् इह संसारे केन तुलनीया असि, नः अस्मान् कथय, न केनापि त्वं तुलयितुं शक्येत्यर्थः॥ ११॥

अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकण्ठः शिरसि नियतं धारयति याम् ॥१२॥
विनिन्द्यान्युन्मत्तैरपि च परिहार्य्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपहास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥ १३ ॥
स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामिवायं तव जननि ! दोषः परिणतः ॥ १४ ॥

नृणामिति । ईक्षामात्रादपि दर्शनमात्रेणापि नृणां भवभयं परिहरन्त्याः शिवायाः मङ्गलमय्याः ते तव मूर्त्तेः जलमयशरीरस्य बहुमानं महत् गौरवम् इह संसारे कः कथयतु ? न कोऽपि कथयितुं शक्नोतीति भावः । श्रीकण्ठः हरः अमर्षेण सापत्न्यद्वेषेण म्लानायाः कलुषितायाः गिरिभुवः पार्वत्याः परमं महान्तम् अनुरोधं शिरसः गङ्गायास्त्यागविषये इति भावः विहाय अगणयित्वा यां ते मूर्त्तिं नियतं सततं शिरसि धारयति ॥ १२ ॥

विनिन्द्यानीति । त्वं जगति एका पुनः कदापि अश्रान्ताः श्रमविनिर्मुक्ताः अगणितश्रमेति भावः उन्मत्तैरपि विनिन्द्यानि गर्हणीयानि पतितैरपि परिहार्य्याणि त्याज्यानि व्रात्यैः ब्रह्मचर्य्यादिव्रतभ्रष्टैरपि अवाच्यानि कुत्सनीयानि पिशुनैर्दुर्जनैरपि सपुलकं सरोमाञ्चम् अपहास्यानि कियतां लोकानाम् एनांसि पापानि अनवरतं हरन्ती नाशयन्ती विजयसे सर्वोत्कर्षेण वर्त्तसे अन्येषामीदृशशक्तेरभावादिति भावः ॥ १३ ॥

स्खलन्तीति । अये जननि ! त्वम् अवनितलस्य शोकापहृतये

जडानन्धान् पङ्गून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणान् ।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपतितान्
नरानम्ब ! त्रातुं त्वमिह परमं भेषजमसि ॥ १५ ॥

स्वभावस्वच्छानां सहजशिशिराणामयमपाम्
अपारस्ते मातः ! जगति महिमा कोऽपि जयति ।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥ १६ ॥

दुःखनाशाय स्वर्लोकात् स्खलन्ती पतन्ती पुरभिदा हरेण जटाजूट-पल्ली यत् विनिबद्धा विशेषेण संयमिता, अयं निर्लोभानामपि लोभमुग्धानामपि मनसि क्षोभं जनयतां गुणसद्भावे क्लेशः स्वीक्रियते इत्येवं जानतामपि गुणार्जने लोकानामाकाङ्क्षा जायते इति भावः गुणानाम् एव दोषः परिणतः परिपक्वः परोपकारिभिः बहवः क्लेशाः सह्यन्ते इति भावः ॥ १४ ॥

जडानिति । हे अम्ब ! मातः ! इह संसारे त्वं जडान् इन्द्रिय-विकलान् अन्धान् पङ्गून् पादचरणशक्तिहीनान् प्रकृत्या स्वभावेन बधिरान् उक्तिविकलान् वाक्शक्तिहीनान् ग्रहग्रस्तान् अस्तं गतम् अखिलदुरितानां निस्तारस्य परित्राणस्य सरणम् आश्रयो येषां तान् निलिम्पैः देवैः निर्मुक्तान् त्यक्तान् प्रतिकूलदैवानिति भावः निरयान्तर्निपतितान् नरकमध्यनिमग्नानपि त्रातुं परिरक्षितुं परमं भेषजम् औषधम् असि ॥ १५ ॥

स्वभावेति । हे मातः ! जगति ते तव स्वभावस्वच्छानां प्रकृतिनिर्मलानां सहजशिशिराणां स्वभावशीतलानाम् अपां जलानाम् अयम् अपारः अशेषः कोऽपि अनिर्वचनीयः महिमा माहात्म्यं जयति सर्वोत्कर्षेण वर्तते । अद्यापि सगरजाः सगरतनयाः द्युतलं स्वर्गं

कृतात् क्षुद्रात् पापाज्झटिति निःसन्नमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरानूरीकर्तुं त्वमिव जननि ! त्वं विजयसे ॥ १७ ॥
निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ १८ ॥

कृपासाद्य प्राप्य अनवद्या या द्युतिः कान्तिः तां बिभ्रतीति तथोक्ताः तथा स्फुटैः पुलकैः रोमहर्षैः सान्द्राः पूर्णाः सन्तः मुदा आनन्देन यं महिमानं गायन्ति कीर्त्तयन्ति ॥ १६ ॥

कृतादिति । त्रिभुवनतले तीर्थनिवहाः पुण्यक्षेत्रनिचयाः कृतात् क्षुद्रात् पापात् निःसन्नम् मनो येषां तथाविधान् जनान् झटिति समुद्धर्त्तुं सन्ति प्रभवन्ति, हे जननि ! त्वं प्रायश्चित्तस्य प्रसरणं गतिः तस्य पन्थानम् अतीतम् अतिक्रान्तं चरितं येषां तादृशानपि प्रायश्चित्तानर्हौत्कटपापाक्रान्तानपीत्यर्थः नरान् त्वमिव आत्मीयं जननिव उरीकर्त्तुम् अङ्गीकर्त्तुम् उद्धर्त्तुमिति भावः विजयसे सर्वोत्कर्षेण वर्त्तसे सर्वथा चेष्टसे इति यावत् ॥ १७ ॥

निधानमिति । धर्माणां निधानं निधिः आश्रय इति यावत्, नवमुदां नवीनानाम् आनन्दानां किमपि अनिर्वचनीयं विधानं हेतुभूतमिति भावः, तीर्थानां पुण्यक्षेत्राणां प्रधानं श्रेष्ठं, त्रिजगतः अमलं निर्मलं परिधानं वस्त्रभूतं, बुद्धेः प्रज्ञायाः समाधानं सम्यक् स्फूरणभूतमिति भावः, अधियां दुर्बुद्धीनां खलु तिरोधानम् आवरणभूतं, श्रियां सम्पदाम् आधानं सञ्जननोपायभूतमिति भावः, तव वपुः शरीरं नः अस्माकं तापं परिहरतु नाशयतु ॥ १८ ॥

पुरो धावं धावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरतरुणचेष्टस्य नियतम् ।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातः! यदिह करुणान्तः क्षणमपि ॥१९॥

मरुल्लीलालोललहरिलुलिताम्भोजपटल-
स्खलत्पांशुव्रातच्छुरणविसरत्कौङ्कुमरुचि ।
सुरस्त्रीवक्षोजक्षरदगुरुजम्बालजटिलं
जलं ते जम्बालं मम जननजालं जरयतु ॥ २० ॥

पुर इति । हे मातः! इह संसारे क्षणमपि ते तव यत् करुणान्तः करुणायाः दयायाः अन्तः अवसानं यत्र तादृशः वियोगः विच्छेदः अयं द्रविणमेव मदिरा तया घूर्णिते दृशौ येषां तथोक्तानां धनमदमत्तानामिति यावत् महीपानां राज्ञां पुरः अग्रतः नियतं सततं धावं धावं धावित्वा धावित्वा नानातरा विविधतरा तरुणा अभिनवा चेष्टा यस्य तादृशस्य धनलोभात् विविधोपायान् कुर्वत इति भावः अतएव स्वस्य आत्मनः हितानां मङ्गलानां शतं त्वत्सन्निधान-मिति भावः हन्तीति तथाविधस्य जडधियः दुर्मतेः ममैव मन्तुः अपराधः, आगोऽपराधो मन्तुश्चेत्यमरः । सततं भवत्याः सङ्ग एव कर्त्तव्यः स चेत् धनलोभेनेतस्ततोधावने भवत्याः करुणायाः अलाभः स्यादिति भावः ॥ १९ ॥

मरुदिति । मरुतः वायोः लीलया लोलन्तीभिश्चलन्तीभिर्लहरिभि-स्तरङ्गैः लुलितानां कम्पितानाम् अम्भोजपटलानां पद्मसङ्घानां स्खलद्भिः विगलद्भिः पांशुव्रातैः परागचयैः छुरणेन व्यापनेन विस-रन्ती विस्फुरन्ती कौङ्कुमा कुङ्कुमसम्बन्धिनी रुचिः कान्तिर्यस्य तादृशं सुरस्त्रीणां देवाङ्गनानां वक्षोजेभ्यः स्तनेभ्यः क्षरन्ति भ्रश्यन्ति अगुरू-ण्येव तदाख्यचन्दनान्येव जम्बालाः शैवालानि तैः जटिलं युक्त-

समुत्पत्तिः पद्मारमणपदपद्मामलतला-
न्निवासः कन्दर्पप्रतिभटजटाजूटभवने ।
अथायं व्यासङ्गो हतपतितविस्तारणविधौ
न कस्मादुत्कर्षस्तव जननि ! जागर्त्ति जगतः ॥२१॥
नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि ! कपर्द्दोऽधिरुरुहे ।
कया वा श्रीभर्त्तुः पदकमलमचालि सलिलै-
स्तुलालेशो यस्यां तव जननि ! दीयेत कविभिः ॥२२॥
विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यति हरः ।

मिति यावत् अतएव जम्बालं कर्दमभूतं ते तव जलं मम जननजातं जन्मसमूहं पुनः पुनर्जन्मेत्यर्थः रमयतु स्वगयतु नाशयत्वित्यर्थः ॥२०॥

समुत्पत्तिरिति । हे जननि ! पद्मारमणस्य लक्ष्मीपतेः पदपद्मस्य चरणकमलस्य अमलतलात् तव समुत्पत्तिः समुद्भवः, कन्दर्पस्य प्रतिभटः प्रतिपक्षः शम्भुरित्यर्थः तस्य जटाजूटमेव भवनं तस्मिन् निवासः स्थितिः, अथ किञ्च हतानां दुर्भगानां पतितानां निस्तारणविधौ अयं व्यासङ्गः विशेषेण आसक्तिः अतः कस्मात् तव उत्कर्षः जगतः जगद्वासिनो जनस्येत्यर्थः मनसीति शेषः न जागर्त्ति ? अपि तु सर्वस्मादेव कारणात् तवोत्कर्षः जगति जागर्त्तीत्यर्थः ॥ २१ ॥

नगेभ्य इति । हे जननि सुरधुनि ! नगेभ्यः पर्वतेभ्यः यान्तीनां निर्गच्छन्तीनां तटिनीनां नदीनां मध्ये कतमया नद्या पुराणां संहर्तुः त्रिपुरारेः कपर्द्दः जटाजूटम् अधिरुरुहे अधिरूढः ? कया वा सलिलैः श्रीभर्त्तुः श्रीपतेः नारायणस्य पदकमलम् अचालि क्षालितम् ? यस्यां नद्यां कविभिः तव तुलालेशः साम्यबिन्दुः दीयेत ? कथय त्वत्-सदृशी कापि नदी नास्ति यया तव साम्यमस्तीति भावः ॥ २२ ॥

कृतैः प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्त्ति भवती ॥२३॥
अनाधिः सौहार्दां विगलितगतिः पुण्यगतिदां,
पतन्विश्वोद्धर्त्रीं गदविदलितः सिद्धभिषजम् ।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुः सम्प्राप्तस्त्वामहमिह निदध्याः समुचितम् ॥२४॥
विलीनोऽयं वैवस्वतनगरकोलाहलभयो

विधत्तामिति । यदि कामानाम् अभिलाषनानां सवित्री दात्री भवती जगति जागर्त्ति, तदा विधिर्ब्रह्मा निःशङ्कं यथा तथा निरवधिसमाधिं चिरसमाधिं विधत्तां करोतु, अच्युतो विष्णुः हरिः शेषे अनन्ते सुखं शेतां स्वपितु, हरः अचिरं नृत्यतु, एतेषां जगत्-पालनादिषु प्रयासेनालमिति भावः, अथ अपिच कृतैः कृच्छ्रादिभिः तपश्चान्द्रायणादिकं दानं यजनञ्च तैः प्रायश्चित्तैः पापक्षालनोपायैः अलं निष्प्रयोजनमित्यर्थः । भवत्या एव सर्वकार्य्यकर्तृत्वादिति भावः ॥ २३ ॥

अनाधिरिति । नास्ति आधिः मानसी पीड़ा यस्य स नाधिः मनोव्यथारहित इति यावत् स न भवतीति अनाधिः व्यथितमना इत्यर्थः, पुंस्याधिर्मानसी व्यथेत्यमरः । विगलिता गतिरुपायः यस्य तादृशः निरुपाय इत्यर्थः पतन् पातकी गदेन रोगेण पापेनेति भावः विदलितः भग्नीकृतः तृष्णया पिपासया आकुलितं हृदयं यस्य तथाभूतः शिशुः अबोध इति यावत् अयम् अहम् इह जगति सौहार्दां शोभन-हृदयां दयावत्त्वात् परदुःखहारिणीमिति भावः पुण्यगतिदां पवित्रा-श्रयदात्रीं विश्वोद्धर्त्रीं जगदुद्धारकारिणीं सिद्धभिषजम् अव्यर्थ-महौषधं सुधासिन्धुम् अमृतस्रोतोवहां मातरं त्वां सम्प्राप्तः शरणं गतः, समुचितं युक्तं निदध्याः विधेहि ॥ २४ ॥

गता दूता दूरं क्वचिदपि परेतान् मृगयितुम् ।
विमानानां व्रातो विदलयति वीथीर्दिविषदां
कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥२५॥
स्फुरत्कामक्रोधप्रबलरससञ्जातजटिल-
ज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम् ।
हरन्तां सन्तापं कमपि मरुदुल्लासिलहरी-
च्छटाचञ्चत्पाथःकणसरण्यो दिव्यसरितः ॥२६॥
इदं हि ब्रह्माण्डं सकलभुवनाभोगभवनं
तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुकमिव ।

विलीन इति । ते तव कल्याणी मङ्गलमयी कथा यदवधि महीमण्डलम् अगात् ततः प्रभृति अयं वैवस्वतनगरस्य यमालयस्य कोलाहलभयः विलीनः विनष्टः । अत्र भयस्य पुंस्त्वं कवेर्निरङ्कुशत्वात् बोद्धव्यम् । दूताः यमकिङ्कराः परेतान् कालप्राप्तान् क्वचिदपि अगम्ये देशे इति भावः मृगयितुम् अन्वेषितुं दूरं गताः । विमानानां देवयानानां व्रातः समूहः त्वत्तीरनीरस्नातानां ग्राहक इति भावः दिविषदां देवानां वीथीः श्रेणीः विदलयति सङ्कुलीकरोति ॥ २४ ॥

स्फुरदिति । दिव्यसरितः तव मरुता वायुना उल्लासिनीनां लहरीणां तरङ्गाणां छटाभिर्विस्तारैः चञ्चलां चपलां पाथसां जलानां कणाः बिन्दवः तेषां सरण्यः राजयः प्रवाहा इति यावत् प्रतिदिनं स्फुरन् प्रसरन् कामक्रोधयोः यः प्रबलो रसः आवेगः तेन सञ्जातः यः जटिलः कठिन इत्यर्थः दुरपनेय इति यावत् यो ज्वरः सन्तापः तस्य ज्वालाजालेन ज्वालासमूहेन ज्वलितं वपुः शरीरं येषाम् तथाभूतानां नः अस्माकं कमपि अनिर्वचनीयमित्यर्थः सन्तापं हरन्तां नाशयन्तु ॥ २६ ॥

इदमिति । हे जननि ! इदं सकलभुवनानां त्रिजगतामित्यर्थः

स एष श्रीकण्ठप्रविततजटाजूटजडितो
जलानां सङ्घातस्तव जननि ! तापं हरतु नः ॥२७॥
वयन्ते तीर्थानि त्वरितमिह यस्योद्धतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब ! त्वमियमनुकम्पार्द्रहृदया
पुनाना सर्वेषामघशमनदर्पं दलयसि ॥२८॥
श्वपाकानां व्रातैरमितविचिकित्साविगलितै-
र्विमुक्तानामेके किल सदनमेनःपरिषदाम् ।
अहो मामुद्धर्तुं जननि ! घटयन्त्याः परिकरं
तव श्लाघां कर्त्तुं कथमिव समर्थो नरपशुः ॥ २९ ॥

आभोगस्य विस्तारस्य भवनम् आश्रयः ब्रह्माण्डं परितः सर्वतः तिन्दुकमिव गेण्डुकमिव यस्य अन्तः अभ्यन्तरे तरङ्गैः लुठति हि प्रहरत्येव, स एष श्रीकण्ठस्य हरस्य प्रवितते प्रकर्षेण विस्तृते जटाजूटे जडितः सङ्घटितः तव जलानां सङ्घातः समूहः नः अस्माकं तापं हरतु नाशयतु ॥ २७ ॥

वयन्त इति । हे अम्ब ! मातः ! यस्य मम उद्धृतिविधौ पापापसरणरूपौद्धत्यानुष्ठाने तीर्थानि इह जगति त्वरितं शीघ्रं वयन्ते पलायन्ते मत्स्पर्शभियेति भावः, कपालिप्रभृतयः शम्भुप्रमुखा ...ः अपि कर्णे करं कुर्वन्ति मत्पापश्रवणभियेति भावः, अनुकम्पया कृपया आर्द्रं हृदयं यस्याः तथाभूता त्वं तं तथाभूतं पातकिनमिति भावः इमं मां पुनाना पवित्रीकुर्वाणा इयं त्वं सर्वेषां तीर्थादीनाम् अघशमनदर्पं पापशमनाहङ्कारं दलयसि चूर्णयसि ॥ २८ ॥

श्वपाकानामिति । हे जननि ! अमिता अपरिमिता या विचिकित्सा सन्देहः तया विगलिताः विरहिताः तैः, अस्मिन् कर्मणि पापं स्यान्न वेत्येवं संशयमपि कर्त्तुमजानद्भिरिति भावः

न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो
यदुद्धारादाराद्भवति जगतो विस्मयभरः।
इतीवाकाङ्क्षा ते मनसि चिरकालं स्थितवती
मयं सम्प्राप्तोऽहं सफलयितुमम्ब ! प्रथमतः ॥ २० ॥

श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम्।
अपि श्रावं श्रावं मम तु पुनरेवंविधगुणान्
त्वदृते को नाम क्षणमपि निरीक्षेत वदनम् ॥ २१ ॥

श्वपाकानां चाण्डालानां ग्रामैः वर्गैः विसृष्टानां परित्यक्तानां कर्तुं-मनिष्टानामिति भावः एनः परिषदां पापसमष्टीनाम् एकम् अद्वितीयं सदनम् आलयं किल आश्रयमेव माम् उद्धर्तुं परिकरम् उद्योगं घटयन्त्याः कुर्वत्यास्तव श्लाघां स्तुतिं कर्तुं नरपशुः मनुष्य-पशुः मादृशाधम इति यावत् अहम् अन्यो वा कथमिव समर्थः? अहो आश्चर्यं न कोऽपि समर्थ इत्यर्थः ॥ १९ ॥

नेति। एतावन्तं समयम् आरभ्य न कोऽपि तादृशपातकीति भावः मिलितः खलु प्राप्त एव, यस्य उद्धारात् जगतः विस्मयभरः आश्चर्यातिशयः भवति इतीव आकाङ्क्षा वासना ते तव मनसि चिरकालं स्थितवती। हे अम्ब ! मातः ! अहं स्वयं प्रथमतः अग्रतः सफलयितुं पूरयितुं सम्प्राप्तः समुपस्थितः। महापापिनं मामुद्धृत्य जगतां विस्मयकरकार्यक्षमत्वमात्मनः प्रकटयेति भावः ॥२०॥

श्ववृत्तिव्यासङ्ग इति। नियतं सततं श्ववृत्तेः कुक्कुरवृत्तेः पर-प्रत्याशन जीविकायाः दास्यवृत्त्या जीवनस्य वा व्यासङ्गम् आसक्तिम् अथ किञ्च मिथ्याप्रलपनं मिथ्यावचनं कुतर्केषु वेदबाह्यवादेषु अभ्या-सम् अनुशीलनं सततं परेषां पैशुन्यस्य अपकारस्य मननं चिन्तनं मम पुनरेवंविधगुणान् दोषानिति भावः श्रावं श्रावं श्रुत्वा श्रुत्वापि

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढ़ा परमरमणीया तव तनुः।
अयं हि न्यक्कारो जननि! मनुजस्य श्रवणयो-
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥ ३२ ॥
विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः
पतन्ति द्राक् पापा जननि! नरकान्तः परवशाः।
विभागोऽयं तस्मिन्नुभयविधमूर्त्तेर्जनपदे
न यत्र त्वं लीलाशमितमनुजाशेषकलुषा ॥ ३३ ॥

पुनः पुनः श्रुत्वापीत्यर्थः त्वत् ऋते त्वां विना को नाम जनः चण-मपि कदनं समीति शेषः निराचरेत पश्चात्? न कोऽपीत्यर्थः, त्वमेव पापिनामाश्रय इति भावः ॥ ३१ ॥

विशालाभ्यामिति। इह जगति याभ्यां तव परमरमणीया तनुः मूर्त्तिः न आलीढ़ा न दृष्टेत्यर्थः ताभ्यां विशालाभ्यां नयनाभ्यां किं फलं खलु, नैव किञ्चित् फलमित्यर्थः। हे जननि! मनुजस्य मानवस्य श्रवणयोः अयं हि न्यक्कारः अवमाननं, तव लहरीणां तरङ्गाणां कोलाहलः ययोः श्रवणयोः कर्णयोः न अन्तर्यातः न अन्तर्गतः। तव तरङ्गकलकलध्वनिश्रवणविनिर्मुक्तं श्रवणं धिगिति भावः ॥ ३२ ॥

विमानैरिति। हे जननि! सुकृतिनः पुण्यवन्तः जनाः स्वच्छन्दं विमानैः देवयानैः सुरपुरं स्वर्गम् अयन्ते गच्छन्ति, पापाः पापकृतः जनाः परवशाः सन्तः द्राक् झटिति नरकान्तः नरकमध्ये पतन्ति। यत्र लीलया शमितं मनुजानाम् अशेषं कलुषं पापं यया तादृशी त्वं न तिष्ठसीति शेषः तस्मिन् जनपदे अयम् उभयविधमूर्त्तेः द्विरूपस्येत्यर्थः विभागः अस्तीति शेषः। यत्र तु त्वं तिष्ठसि तत्र सुकृतिनो दुष्कृतिनश्च सर्व एव सुरपुरं गच्छन्तीति भावः ॥ ३३ ॥

अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः
पिबन्तो मैरेयं पुनरपहरन्तश्च कनकम्।
विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषा-
मुपर्य्यं विक्रीड़न्त्यखिलसुरसम्भावितपदाः ॥ २४ ॥
अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि हरति शस्त्रक्षतभृताम्।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्
पुनीते सोऽपि द्रागहह ! पवमानस्त्रिभुवनम् ॥ २५ ॥
कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानः कति न परलोकप्रणयिनः।

अपीति। विप्रान् घ्नन्तः अपि ब्रह्मघातिनोऽपि, अविरतं गुरुसतीः गुरुपत्नीः उशन्तः कामयमानाः गुरुतल्पगामिन इत्यर्थः, मैरेयं मदिरां पिबन्तः सुरापायिनः, कनकं सुवर्णम् अपहरन्तश्च चोरयन्तश्च महापातकिनोऽपीति भावः अन्ते त्वयि तनुं शरीरं त्यक्त्वा अतनुदानाध्वरजुषां महादानयज्ञानुष्ठायिनाम उपरि एव उपर्य्यम् अखिलैः सुरैः देवैः सम्भावितं सम्मानितं पदं येषां तथाभूताः सन्तः विक्रीडन्ति विहरन्ति ॥ २४ ॥

अलभ्यमिति। यः सततम् अलभ्यं दुष्प्रापं सुमनसां पुष्पाणां सुधीराणाञ्चेति ध्वनिः सौरभ्यं सुगन्धं सुयशश्चेति ध्वनिः हरति तथा शस्त्रक्षतभृतां शस्त्राहतानां प्राणान् क्षणादेव हरति सोऽपि एतादृक् पापीयानपि पवमानः वायुः त्वदीयानां लीलया विलासेन चलितानां लहरीणां तरङ्गाणां व्यतिकरात् सम्पर्कात् द्राक् झटिति त्रिभुवनं पुनीते पवित्रीकरोतीत्यर्थः स्वयं पूतो भवतीति का कथेति भावः अहह आश्चर्य्यम् ॥ २५ ॥

कियन्त इति। हे मातः! इह जगति एके एकविधाः

सुखं शेते मातः ! तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकत्रयभरः ॥ ३६ ॥
भवत्या हि व्रात्याधमपतितपाषण्डपरिषत्-
परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा ।
ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब ! जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ ३७ ॥
प्रदोषान्ते नृत्यत्पुरमथनलीलोद्धतजटा-
तलाभोगप्रेङ्खल्लहरिभुजसन्तानविधुतिः ।

कियन्तः जनाः नियतं सततं लोकानां परेषामित्यर्थः अर्थघटकाः कार्य्यकारिणः सन्ति, परे अन्ये कति जनाः स्वयं पूतात्मानः परेषां लोकानां प्रणयिनः कार्य्यपरा इति यावत् न भवन्तीति शेषः । आत्मनः सुखमेव तेषां प्रयोजनमिति भावः । तथाहि अयं पुनः जगन्नाथः जगत्स्वामी जगत्पालनैककर्मेति भावः शश्वत् निरन्तरं त्वयि निहितः अर्पितः लोकत्रयस्य त्रिजगतः भरः येन तथाभूतः सन् तव कृपातः खलु अनुकम्पादेव सुखं स्वच्छन्दं शेते निद्राति ॥३६॥

ननु कथं त्वया पापं कृतं येन मामुद्धरणाय पुनरनुरुणत्सीत्यत आह, भवत्येति । यथा भवत्या व्रात्यानां भ्रष्टब्रह्मचर्य्याणाम् अधमानां निकृष्टानां पतितानां पाषण्डानाञ्च या परिषत् समाजः संहतिरित्यर्थः तस्याः परित्राणे उद्धरणे स्नेहः प्रयत्न इति यावत् श्लथयितुं लघयितुम् अशक्यः खलु अपाय्य एव, एवं ममापि दुरितनिवहेषु पापप्रचयेषु प्रेमा स्नेहः श्लथयितुमशक्य इति शेषः । हे अम्ब ! मातः ! जगति अयं स्वभावः यतः सर्वैः अपि दुष्परिहरः खलु अनतिक्रमणीय एव, स्वभावो मूर्द्ध्नि वर्त्तते इति भावः ॥३७॥

प्रदोषान्ते इति । प्रदोषान्ते सन्ध्यावसाने नृत्यतः पुरमथनस्य हरस्य लीलया उद्धतानाम् उत्थितानां जटानां तलाभोगेषु तल-

गलत्क्रोडक्रीडज्जलडमरुडाङ्कारसुभग-
स्तिरोधत्तां तापं त्रिदशतटिनीताण्डवविधिः ॥ ३८ ॥
सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं
यदि त्वं मामम्ब ! त्यजसि समयेऽस्मिन्नविषये ।
तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते
निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥ ३९ ॥
कपर्दादुल्लस्य प्रणयमिलदर्धाङ्गयुवतेः
पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ ।

प्रदेशेषु प्रेङ्खन्ती चलन्ती लहरीरूपा या भुजङ्गानां फणसङ्घानां विधुतिः कम्पनं यस्मिन् तथोक्तः तथा गलत्क्रोडे कण्ठदेशे क्रीडतः तिष्ठत इति यावत् जलरूपस्य डमरोर्वाद्यभेदस्य डाङ्कारेण सुभगः मनोहरः त्रिदशतटिन्याः गङ्गायाः ताण्डवविधिः नर्त्तनव्यापारः तापं तिरोधत्तां शमयतु ॥ ३८ ॥

सदेवेति । हे अम्ब ! यदि त्वम् अविषये निरुपाये समये सदैव त्वय्येव अर्पितः कुशलचिन्तायाः भरः येन तादृशम् इमं मां त्यजसि, तदा अयं विश्वासः, त्वां शरणं प्राप्य न विपद्यते जन इत्येवं-रूपः प्रत्ययः त्रिभुवनतलात् अस्तम् अयते गच्छति । इयञ्च निर्व्याजकरुणा अकपटकृपा तवेति शेषः निराधारा निराश्रया भवति खलु भवत्येव ॥ ३९ ॥

कपर्दादिति । हे जननि ! प्रणयेन मिलन्ती सङ्गच्छन्ती अर्द्धाङ्गभूता युवतिर्यस्य तादृशस्य पुरारेः हरस्य मृदुलतरां अतिकोमलां या सीमन्तसरणिः सीमन्तपद्धतिः तस्यां प्रेङ्खन्त्यः प्रसरन्त्यः भवान्या मौल्यां कोमलरुचा मृदुलकान्तिना करेण सापत्न्येन सपत्नीद्वेषेण आस्फुरितं कलुषितं नयनं यस्मिन् तत् यथा तथा कपर्दात् जटाजू-

भवान्या सापत्न्यस्फुरितनयनं कोमलरुचा
करेणोत्क्षिप्तास्ते जननि! विजयन्तां लहरयः ॥४०॥

प्रपद्यन्ते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि।
अये तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि!
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥४१॥

ललाटे या लोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्त्तण्डतुलनाम्।
विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं
त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥४२॥

टात् उत्क्षिप्य आकृष्य उत्क्षिप्ताः ते तव लहरयः तरङ्गाः विजयन्तां सर्वोत्कर्षेण वर्त्तन्ताम् ॥४०॥

प्रपद्यन्त इति। अये मातः सुरधुनि! कति लोकाः अत्रभवतीं पूज्यां भवतीं न प्रपद्यन्ते न आश्रयन्ति? सर्वे एवाश्रयन्तीत्यर्थः, तत्र सर्वजनाश्रयणे अयम् उपाधिः हेतुः स्फुरति राजते, यत् अभीष्टं कामं वितरसि ददासि। मम पुनः आत्मा स्वभावादेव त्वयि अमितम् अपरिमितम् अनुरागं विधृतवान् अतः तुभ्यं नमः ॥४१॥

ललाटे इति। इह जगति लोकैः ललाटे सलीलं यथा तथा या खलु तिलकिता तिलकभूषणीकृता, तथा तमः अज्ञानं हन्तुं तरुणतरस्य मार्त्तण्डस्य मध्याह्नार्कस्य तुलनां साम्यं धत्ते, सद्यः सहसा धारणमात्र एवेत्यर्थः विधेर्लिखितानां दुर्वर्णानां दुष्टानां वर्णानाम् अक्षराणां दौर्भाग्यसूचकानामिति भावः सरणिं पङ्क्तिं विलुम्पन्ती प्रोञ्छन्ती त्वदीया सा मृत्स्ना मृत्तिका मम कृत्स्नां समग्रामपि शुचं शोकं हरतु ॥४२॥

नरान् मूढांस्तत्तज्जनपदसमासक्तमनसो
हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनाना सौरभ्यैः सततमलिनो नित्यमलिनान्
सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥ ४३ ॥

यजन्त्येके देवान् कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहन्तु त्वन्नामस्मरणभृतकामस्त्रिपथगे !
जगज्जालं जाने जननि ! तृणजालेन सदृशम् ॥ ४४ ॥

अविश्रान्तं जन्मावधिसुकृतकर्मार्जनकृतां
सतां श्रेयः कर्तुं कति न कृतिनः सन्ति विबुधाः ।

नरानिति । तेषु तेषु जनपदेषु देशेषु समासक्तं मनो येषां तान् स्वदेशानुरागेण भवत्यस्त्यागिन इति भावः मूढान् अज्ञान् नरान् विकचानां विकसितानां कुसुमानां व्रातं समूह एव मिषं छलं तस्मात् सोल्लासं सविलासं हसन्तः सततम् अलिनः भ्रमरवन्तः नित्यमलिनान् सततदुष्कृतरतान् सौरभ्यैः सुगन्धैः पुनानाः पवित्रीकुर्वाणाः त्रिदशतटिनीतीरतरवः गङ्गातटवर्त्तिनो वृक्षाः नः अस्माकं सखायः सन्तु ॥ ४३ ॥

यजन्तीति । हे जननि त्रिपथगे गङ्गे ! एके जनाः कठिनतरा सेवा येषां तान् दुराराध्यानित्यर्थः देवान् यजन्ति अर्चयन्ति, तेभ्यः अपरे जनाः वितानेषु यज्ञेषु अश्वमेधादिषु व्यासक्ताः विशेषेण आसक्ताः, कतिपये जनाः यमः बाह्येन्द्रियसंयमः नियमः अन्तरिन्द्रियसंयमः तयोः रक्ताः अनुरागिणः समाधिनिष्ठा इति यावत्, अहन्तु तव नाम्नः स्मरणं भृतं श्रवणञ्च तयोः कामः अभिलाषः यस्य तथाभूतः सन् जगज्जालं त्रिजगतीं तृणजालेन तृणसमूहेन सदृशं जाने मन्ये ॥ ४४ ॥

निरस्तालम्बानामकृतसुकृतानान्तु भवतीं
विनामुष्मिंल्लोके न परमवलोके हितकरम्॥४५॥
पयः पीत्वा मातस्तव सपदि यातः सहचरै-
र्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमम्।
इदानीमुत्सङ्गे मृदुपवनसञ्चारशिशिरे
चिरादुन्निद्रं मां सदयहृदये स्थापय चिरम्॥४६॥
बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः।
न कुर्य्यास्त्वं हेलामितरजनसाधारणधिया
जगन्नाथस्यायं सुरधुनि! समुद्धारसमयः॥४७॥

अविश्रान्तमिति। अविश्रान्तम् अनवरतं जन्मावधि आजन्म सुकृतकर्म्मणाम् अर्जनकृताम् उपार्जनकारिणां सतां साधूनां श्रेयः कर्त्तुं कति विबुधाः देवाः कृतिनः समर्थाः न सन्ति? सर्वे एव समर्था भवन्तीत्यर्थः। तु किन्तु भवतीं विना अमुष्मिन् लोके अकृत-सुकृतानाम् अपुण्यवताम् अतएव निरस्तालम्बानां निराश्रयाणां हितकरं परम् अन्यं न अवलोके न पश्यामि॥४५॥

पय इति। हे मातः! तव पयः पीत्वा सपदि विमूढैः अज्ञैः सहचरैः संरन्तुं प्रक्रीड़ितुं यातः क्वचिदपि विश्रान्तिं विशेषेण शान्तिं न अगमं न प्रापम्। इदानीं मृदुपवनसञ्चारशिशिरे मन्द-वायुसञ्चारशीतले उत्सङ्गे क्रोड़े चिरात् दीर्घकालात् पर-मित्यर्थः उन्निद्रं निद्राशून्यं तत्तत्सङ्गो न कार्य्य इत्यवबुद्ध-मिति यावत् मां चिरं सदयहृदये स्थापय॥४६॥

बधानेति। हे सुरधुनि! देवनदि! त्वं द्रागेव झटित्येव द्रढिम्ना दार्ढ्येन रमणीयं मनोज्ञं परिकरं कटिबन्धम् उद्योग-मिति यावत् बधान अवलम्बस्व, पुनः किञ्च पन्नगगणैः सह बालेन्दुं,

शरच्चन्द्रश्वेतां शशियुतकलशोभालमुकुटां
करैः कुम्भाम्भोजे वरभयनिरासौ विदधतीम् ।
सुधासाराकाराभरणवसनां शुभ्रमकर-
स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ॥ ४८ ॥

दरस्मितसमुल्लसद्वदनकान्तिपूरामृतै-
र्भवज्वलनभर्जितानविशमूर्जयन्ती नरान् ।
विवेकमयचन्द्रिकाचयचमत्कृतिं तन्वती
धुनोतु तमसं तनोः सपदि सन्तनोरङ्गना ॥ ४९ ॥

अर्द्धचन्द्रं किरीटे शमौलि शेषः नियमय बधान । इतरजनसाधारण-धिया सामान्यलोकबुद्ध्या हेलाम् अवज्ञां मयीति शेषः न कुर्य्याः, अयं जगन्नाथस्य मम सत्कारसमयः । जगन्नाथं मां सामान्यजनमिव अवज्ञया अनिराकृत्य सत्कारनीरमृतं कृत्वा शिवत्वमापन्नं कुर्विति भावः ॥ ४७ ॥

शरदिति । ये जनाः शरच्चन्द्रवत् श्वेतां शुभ्रां शशियुतकलेन चन्द्र-खण्डेन शोभाढ्यं शोभायुक्तं मुकुटं यस्याः तां करैः चतुर्भिरिति शेषः कुम्भाम्भोजे कलसं कमलञ्चेत्यर्थः तथा वरभयनिरासौ वरम् अभयञ्चेत्यर्थः विदधतीं विशेषेण दधानां सुधासारवत् आकारो येषां तथाभूतानि आभरणवसनानि यस्याः तां शुभ्रे मकरे स्थितां शुभ्र-मकरवाहनामित्यर्थः त्वां ध्यायन्ति चिन्तयन्ति तेषां परिभवः न उद-यति न जायते ॥ ४८ ॥

दरेति । दरेण मन्देन स्मितेन समुल्लसत् यत् वदनं तस्य कान्ति-पूराः कान्तिसमूहा एव अमृतानि तैः भवः संसार एव ज्वलनः अग्निः तेन भर्ज्जितान् सन्तापितानिति यावत् नरान् अनिशम् अजस्रम् ऊर्ज्जयन्ती निर्वापयन्तीति यावत् विवेकमयी ज्ञानमयी या चन्द्रिका तस्याः चयेन स्फुरणेन चमत्कृतिं विस्मयं तन्वती जनयन्ती सन्तनोः राजविशेषस्य भीष्मजनकस्य अङ्गना कान्ता गङ्गा

मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः ।
वीचिक्षालितकालिमाहितपदे स्वर्लोककल्लोलिनि !
त्वं तापं निरसाधुना मम भवव्यालावलीढात्मनः ॥५०॥

द्यूते नागेन्द्रकृत्तिं प्रमथगणफणिश्रेणिनन्दीन्दुमुख्यं
सर्वस्वं हारयित्वा स्वमथ पुरभिदि द्राक् पणीकर्तुकामे ।
साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्ब !
व्यालोलोल्लासितवल्गल्लहरिनटघटाताण्डवं नः पुनातु ॥५१॥

सपदि झटिति तनोः शरीरस्य तमसं तिमिरं मोहमिति यावत् धुनोतु अपनयतु ॥ ४९ ॥

मन्त्रैरिति । हे स्वर्लोककल्लोलिनि ! सुरधुनि ! वीचिभिः तरङ्गैः क्षालितं कालिम्ना मालिन्येन आहितं युक्तं पदं स्थानं यया तादृशी तत्सम्बुद्धौ तरङ्गस्पर्शमात्रेणैव पापक्षालनीत्यर्थः त्वं मन्त्रैः मीलितं नेत्रनिमीलनं कृतमिति यावत्, औषधैः मुकुलितम् अप्रकटितमिति भावः, सुराणां गणैः त्रस्तं भीतं, सान्द्रैः घनैः सुधारसैः अमृतद्रवैः स्रस्तं वैफल्यं गतमिति भावः, गारुत्मतैः गरुडदेवताकैः ग्रावभिः शिलाभिः गारुडमणिभिरित्यर्थः विदलितं चूर्णतां गतमिति भावः, मम तापशान्ताविति सर्वत्र योज्यम् । अधुना त्वं भवः संसार एव व्यालः भुजङ्गः तेन अवलीढः दष्टः आत्मा यस्य तथाभूतस्य संसारविषदग्धस्येति भावः तापं निरस अपनय । रूपकमलङ्कारः । तदुक्तं दर्पणे । रूपकं रूपितारोपाद्विषये निरपह्नवे इति । शार्दूलविक्रीडितं वृत्तं, सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ५० ॥

द्यूते इति । हे अम्ब ! मातः ! द्यूते पार्वत्या सह अक्षक्रीडायां नागेन्द्रकृत्तिं गजचर्म, प्रमथगणाः पारिषद्वर्गाः, प्रमथाः स्युः पारिषदा इत्यमरः । फणिश्रेणयः पन्नगवर्गाः नन्दी इन्दुश्चन्द्रश्च मुख्याः

विभूषितानङ्गरिपूत्तमाङ्गा सद्यःकृतानेकजनार्त्तिभङ्गा ।
मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ॥५२॥

इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।
यः पठेत्तस्य सर्वत्र जायन्ते जयसम्पदः ॥ ५३ ॥

इति श्रीपण्डितराजाभिधश्रीजगन्नाथकविरचितो
गङ्गालहरीस्तवराजः सम्पूर्णः ।

प्रधानानि यस्य तथाभूतं सर्वस्वं सर्वधनं हारयित्वा अथ अनन्तरं द्राक् झटिति सकृदित्यर्थः स्वम् आत्मानं स्वशरीरमित्यर्थः पणीकर्त्तुकामे पुरभिदि पुरारौ सति साकूतं सविलास मृदुलहसितया मन्दहासिन्या हैमवत्या गौर्य्या वीक्षितायाः निरीक्षिताया इत्यर्थः तव व्यालोलं विकटं यथा तथा उल्लासितत्वात् लहरीणां तरङ्गाणां नवघटा नवीना परम्परा एव ताण्डवं नृत्यं नः अस्मान् पुनातु पवित्रीकरोतु । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ ५१ ॥

विभूषितेति । विभूषितम् अनङ्गरिपोः हरस्य उत्तमाङ्गं शिरो यया सा सद्यः झटिति कृतः अनेकजनानाम् आर्त्तिभङ्गः तापशान्तिः यया तथोक्ता मनोहराः उत्तुङ्गाः चलन्तः तरङ्गाः यस्यास्तथाभूता गङ्गा मम अङ्गानि अमलीकरोतु पुनातु । उपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सति च, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् । अनेकस्य व्यञ्जनस्यासकृदनेकधा साम्याद्वृत्त्यनुप्रासः ॥ ५२ ॥

इमामिति । जगन्नाथेन कविना निर्मितां रचिताम् इमां पीयूषलहरीम् अमृततरङ्गमालां यः पठेत् तस्य सर्वत्र जयसम्पदः जायन्ते भवन्ति । अनुष्टुब्वृत्तम् ॥ ५३ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
गङ्गालहरीव्याख्या समाप्ता ।

# श्रुतबोधः ।

——:०:——

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तमहं सम्प्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥

संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥ ३ ॥

छन्दसामिति । येन श्रुतमात्रेण छन्दसां लक्षणं बुध्यते ज्ञायते, तम् अविस्तरं संक्षिप्तं श्रुतबोधं नाम छन्दोग्रन्थम् अहं सम्प्रवक्ष्यामि ॥ १ ॥

संयुक्ताद्यमिति । संयुक्तस्य वर्णस्य आद्यं दीर्घं दीर्घस्वरयुतमित्यर्थः सानुस्वारम् अनुस्वारयुक्तं विसर्गसम्मिश्रं सविसर्गम् अक्षरं लघ्वपीति भावः गुरु विज्ञेयं बोध्यम् । पादान्तस्थं श्लोकचतुर्थभागः पादः तस्य अन्तस्थं लघु विकल्पेन गुरु ज्ञेयं यत्र गुरुत्वप्रावश्यकं तत्र गुरु गणयम् अन्यथा लघ्वेव स्थितमिति भावः ॥ २ ॥

एकमात्र इति । मात्रा तु यावता पाणिः पर्य्येति जानुमण्डले तावत्कालो भवेन्मात्रेत्युक्तलक्षणः कालः मात्रा, एका मात्रा तादृशोच्चारणकालः यस्य सः एकमात्रो वर्णः ह्रस्वः भवेत् । द्विमात्रो

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥ ४ ॥

आर्य्यापूर्वार्द्धसमं द्वितीयमपि भवति यत्र हंसगते ! ।
छन्दोविदस्तदानीं गीतिं ताममृतवाणि ! भाषन्ते ॥ ५ ॥

आर्य्योत्तरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तं चेत् ।
कामिनि ! तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥ ६ ॥

आद्यचतुर्थं पञ्चमकं चेत्
यत्र गुरु स्यात् साक्षरपङ्क्तिः ॥ ७ ॥

वर्णः दीर्घः उच्यते । त्रिमात्रस्तु वर्णः प्लुतः ज्ञेयः । अर्द्धमात्रकम् अक्षरन्तु व्यञ्जनं प्रोक्तमिति शेषः ॥ ३ ॥

यस्या इति । यस्याः प्रथमे पादे आद्ये चतुर्थभागे तथा तृतीयेऽपि द्वादश मात्राः लघव इति यावत् द्वितीये पादे अष्टादश मात्रा इति शेषः तथा चतुर्थके पादे पञ्चदश मात्रा इति शेषः, सा आर्य्या नाम छन्दः । उदाहरणन्तु लक्षणमेव बोध्यमेवं सर्वत्र ॥ ४ ॥

आर्य्येति । हे हंसगते ! राजहंसगामिनि ! कान्तासम्बोधनमिदम् । यत्र आर्य्यायाः पूर्वार्द्धेन समं तुल्यं पूर्वार्द्धे यथा द्वादश मात्रा अष्टादश मात्राश्च तत्तुल्यमित्यर्थः द्वितीयं परार्द्धमपि भवति । हे अमृतवाणि ! तदानीं छन्दोविदः छन्दःशास्त्रज्ञाः तां गीतिं भाषन्ते कथयन्ति ॥ ५ ॥

आर्य्येति । हे कामिनि ! प्रथमार्द्धमपि आर्य्याया उत्तरार्द्धेन द्वादशपञ्चदशमात्रायुक्तेनेति भावः तुल्यं प्रयुक्तं रचितं चेत्, महाकवयः ताम् उपगीतिं प्रतिभाषन्ते ॥ ६ ॥

आद्येति । आद्यं चतुर्थं पञ्चमकञ्च यत्र गुरु स्यात्, सा अक्षरपङ्क्तिर्नाम छन्दः ॥ ७ ॥

अगुरु चतुष्कं भवति गुरू द्वौ ।
घनकुचयुग्मे ! शशिवदनासौ ॥ ८ ॥
तूर्य्यं पञ्चमकं चेद् यत्र स्याल्लघु बाले ! ।
विद्वद्भिर्मृगनेत्रे ! प्रोक्ता सा मदलेखा ॥ ९ ॥
श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ॥
आदिगतं तूर्य्यगतं पञ्चमकं चान्त्यगतम् ।
स्याद् गुरु चेत् संकथितं माणवकाक्रीडमिदम् ॥ ११ ॥
द्वितूर्य्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नागस्वरूपिणीम् ॥ १२ ॥

अगुर्विति । हे घनकुचयुग्मे ! निबिडस्तनयुगले ! यत्र अगुरु लघु चतुष्कं चत्वारो वर्णा लघव इत्यर्थः, भवति द्वौ वर्णौ गुरू च भवतः, असौ शशिवदना नाम छन्दः ॥ ८ ॥

तूर्य्यमिति । हे मृगनेत्रे ! बाले ! यत्र तूर्य्यं चतुर्थं पञ्चमकञ्च लघु स्यात् अपरे पञ्च वर्णा गुरव इति शेषः, विद्वद्भिः पण्डितैः सा मदलेखा प्रोक्ता कथिता ॥ ९ ॥

श्लोके इति । श्लोके अनुष्टुभा रचिते पद्ये इति भावः सर्वत्र षष्ठं गुरु, पञ्चमं लघु ज्ञेयम् । तथा द्विचतुःपादयोः द्वितीयचतुर्थ-पादयोः सप्तमं ह्रस्वम्, अन्ययोर्द्वितीयतृतीययोः पादयोः सप्तमं दीर्घं ज्ञेयम् ॥ १० ॥

आदिगतमिति । आदिगतं तूर्य्यगतं चतुर्थमित्यर्थः, पञ्चमकं तथा अन्त्यगतम् अष्टममित्यर्थः गुरु स्यात् चेत् अपरे चत्वारो लघव इति भावः, इदं माणवकाक्रीडं नाम छन्दः संकथितम् ॥ ११ ॥

द्वितूर्य्येति । यदा द्वितूर्य्यषष्ठं द्वितीयचतुर्थषष्ठं तथा अष्टमं गुरु

सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्वीणावाणि ! व्याख्याता सा विद्युन्माला ॥१३॥
तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् ।
इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला ॥१४॥
चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे ! ।
छन्दसि दक्षा ये कवयस्तन्मणिमध्यं ते ब्रुवते ॥ १५ ॥
मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे ! यदि भवति या ।
सा विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने ! ॥१६॥

प्रयोजितम् अपरे चत्वारो वर्णा लघव इति भावः, तदा बुधाः तां नागस्वरूपिणीं निवदयन्ति ॥ १२ ॥

सर्वे इति । यस्यां सर्वे अष्टावित्यर्थः वर्णाः दीर्घाः वेदैर्वेदैः चतुर्भिश्चतुर्भिः विश्रामः यतिः स्यात्, हे वीणावाणि ! वीणावत् मधुरस्वरे इत्यर्थः विद्वद्वृन्दैः सा विद्युन्माला व्याख्याता ॥ १३ ॥

तन्वीति । हे तन्वि ! कृशाङ्गि ! आद्यं चतुर्थं पञ्चमं षष्ठम् अन्त्यमुपान्त्यं नवमं दशममिति भावः यत्र गुरु स्यात्, अपरे चत्वारो लघव इति शेषः, यत्र च इन्द्रियबाणैः पञ्चभिः पञ्चभिः विरामः यतिः स्यात्, सा चम्पकमाला कथनीया ॥ १४ ॥

चम्पकमालेति । यत्र चम्पकमाला अन्त्यविहीना दशमहीना भवेत्, हे प्रेमनिधे ! छन्दसि दक्षाः ये कवयः, ते तत् छन्दः मणिमध्यं ब्रुवते कथयन्ति ॥ १५ ॥

मन्दाक्रान्तेति । हे सालङ्कारे अलङ्कारभूषिते ! या मन्दाक्रान्ता अन्त्ययतिरहिता मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममित्युक्तलक्षणा शेषयतिस्थानभूतानि सप्ताक्षराणि गुरुलघुगुरुगुरुलघुगुरुगुरूणि तैः रहितेत्यर्थः यदि भवति, तदा हे कमलवदने ! विद्वद्भिः सा ध्रुवं हंसी अभिहिता ज्ञेया ॥ १६ ॥

ह्रस्वो वर्णो जायते यत्र षष्ठः कम्बुग्रीवे ! तद्वदेवाष्टमान्त्यः
विश्रान्तः स्यात्तन्वि वेदैस्तुरङ्गैस्तां भाषन्ते शालिनीं छान्दसीयाः
आद्यचतुर्थमहीननितम्बे ! सप्तमकं दशमञ्च तथान्त्यं
यत्र गुरु प्रकटस्मरसारे ! तत् कथितं ननु दोधकवृत्तम्॥१८॥
यस्यास्त्रिषट्सप्तममक्षरं स्यात् ह्रस्वं सुजङ्घे ! नवमञ्च तद्वत्।
गत्या विलज्जीकृतहंसकान्ते तामिन्द्रवज्रां ब्रुवते कवीन्द्राः १९
यदीन्द्रवज्राचरणेषु पूर्वे भवन्ति वर्णा लघवः सुवर्णे !।
अमन्दमाद्यन्मदने ! तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः॥२०॥

ह्रस्व इति। हे तन्वि ! यत्र षष्ठो वर्णः ह्रस्वः जायते, हे कम्बुग्रीवे शङ्खग्रीवे ! शङ्खः स्यात् कम्बुरस्त्रियामित्यमरः। अष्टमान्त्यः अष्टमस्य अन्त्यः नवम इत्यर्थः तद्वत् ह्रस्व इत्यर्थः, अन्ये नव वर्णा दीर्घा इति भावः, तथा वेदैः चतुर्भिस्तुरङ्गैः सप्तभिश्च विश्रान्तः यतिः, छान्दसीयाः छन्दोविदः तां शालिनीं भाषन्ते कथयन्ति॥१७॥

आद्येति। ननु भो प्रकटः उत्कटः स्मरस्य कामस्य सारः भावः यस्याः तत्सम्बुद्धौ। हे प्रबलकामे इत्यर्थः। हे अहीननितम्बे गुरुनितम्बे ! यत्र आद्यं चतुर्थं सप्तमकं दशमं तथा अन्त्यम् एकादशमित्यर्थः गुरु, अन्ये षट् लघव इति शेषः, तत् दोधकवृत्तं कथितम्॥१८॥

यस्या इति। हे गत्या गमनेन विलज्जीकृता हंसानां कान्तिः शोभा यया तादृशि ! सुजङ्घे सुष्ठु जङ्घाशालिनि ! यस्याः त्रिषट्-सप्तमं तृतीयं षष्ठं सप्तममित्यर्थः तद्वत् नवमञ्च अक्षरं ह्रस्वं स्यात् अन्ये सप्त लघव इति शेषः, कवीन्द्राः ताम् इन्द्रवज्रां ब्रुवते॥१९॥

यदीति। यदि इन्द्रवज्रायाः चरणेषु पादेषु पूर्वे आद्या वर्णाः लघवः भवन्ति, तदानीं हे सुवर्णे सुरूपे ! अमन्दमाद्यन्मदने अत्युन्मादमदने ! कवीन्द्रैः उपेन्द्रवज्रा कथिता॥२०॥

यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते ! ।
विद्वद्भिराद्यैः परिकीर्त्तिता सा प्रयुज्यतामित्युपजातिरेषा ॥२१
आख्यानकी सा प्रकटीकृतार्थे यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्त्रयोऽन्ये मनीषिणोक्ता विपरीतपूर्वाः ॥२२॥
आद्यमक्षरमतस्तृतीयकं सप्तमञ्च नवमं तथान्तिमम् ।
दीर्घमिन्दुमुखि यत्र जायते तां वदन्ति कवयो रथोद्धतां ॥२३॥
अक्षरञ्च नवमं दशमञ्च व्यत्ययाद् भवति यत्र विनीते ! ।
प्राक्तनैः सुनयने यदि सैव स्वागतेति कविभिः कथितासौ ॥२४
सतृतीयकषष्ठमनङ्गरते ! नवमं विरतिप्रभवं गुरु चेत् ।
घनपीनपयोधरभारनते ! ननु तोटकवृत्तमिदं कथितं ॥२५॥

यत्रेति । हे चन्द्रकान्ते चन्द्रमनोहरे सीमन्तिनि ! यत्र द्वयोरपि अनयोः इन्द्रवज्रोपेन्द्रयोः पादाः भवन्ति, आद्यैर्विद्वद्भिः उपजातिरिति परिकीर्त्तिता एषा सा प्रयुज्यताम् ॥ २१ ॥

आख्यानकीति । हे प्रकटीकृतार्थे प्रकाटिताभिप्राये ! यदि पुरस्तात् प्रथमः इन्द्रवज्रायाश्चरणः अन्ये द्वितीयतृतीयचतुर्थाः पादाः विपरीतपूर्वाः पूर्वचरणविलक्षणा इत्यर्थः, तदा सा मनीषिणा आख्यानकी उक्ता ॥ २२ ॥

आद्यमिति । हे इन्दुमुखि ! यत्र आद्यम् अतः अस्मात् परं तृतीयकं सप्तमं नवमं तथा अन्तिमञ्च एकादशमित्यर्थः अक्षरं दीर्घं जायते अन्ये षट् लघव इति शेषः, कवयः तां रथोद्धतां वदन्ति ॥२३॥

अक्षरमिति । हे विनीते विनयवति ! सुनयने ! यत्र रथोद्धतायां नवमं दशमञ्च अक्षरं व्यत्ययात् विपर्य्ययात् नवम लघु दशमञ्च गुर्वित्यर्थः भवति, प्राक्तनैः पूर्वैः कविभिः सैव रथोद्धतैव स्वागता इत्यसौ कथिता ॥ २४ ॥

सतृतीयकेति । हे अनङ्गरते ! कामाविष्टे ! घनपीनपयोधर-

यदि तोटकस्य गुरु पञ्चमकं विहितं विलासिनि तदक्षरकम्।
रससंख्यकं गुरु न चेदबले प्रमिताक्षरेति कविभिः कथिता॥२६
यदाद्यं चतुर्थं तथा सप्तमं स्यात्तथैवाक्षरं ह्रस्वमेकादशाद्यम्।
शरच्चन्द्रविद्वेषिवक्त्रारविन्दे तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम्॥२७॥
अयि कृशोदरि! यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा।
विरतिगश्च तथैव सुमध्यमे द्रुतविलम्बितमित्युपदिश्यते॥२८
प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलम्बितकस्य हि पादयोः।
यदि नास्ति तदा कमलेक्षणे भवति सुन्दरि सा हरिणीप्लुता॥२९

भारवते! सह्तीयकं तृतीयसहितं षष्ठं नवमं विरतिप्रभवं विश्राम-स्थानं द्वादशमित्यर्थः चेत् गुरु, अन्ये अष्टौ लघव इति शेषः, तनु तदा इदं तोटकवृत्तं कथितम्॥२५॥

यदीति। हे विलासिनि! अबले! यदि तोटकस्य पञ्चमकं तत् अक्षरकं गुरु विहितं रससंख्यकं षष्ठं गुरु न चेत् भवति, तदा कविभिः प्रमिताक्षरेति कथिता॥२६॥

यदाद्यमिति। हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे! सकलकलाजित-शरच्चन्द्रे इत्यर्थः यदा आद्यं चतुर्थं सप्तमं तथा एकादशस्य आद्यं दशममित्यर्थः अक्षरं ह्रस्वं स्यात् अन्ये अष्टौ गुरव इति शेषः, तदा तत् कवीन्द्रैः भुजङ्गप्रयातम् उक्तम्॥२७॥

अयीति। हे अयि कृशोदरि! तथैव सुमध्यमे! यत्र चतुर्थकं सप्तमकं तथा दशमं विरतिगश्च द्वादशमित्यर्थः गुरु, अन्ये अष्टौ लघव इति शेषः, तत् द्रुतविलम्बितमिति उपदिश्यते॥२८॥

प्रथमेति। हे कमलेक्षणे! सुन्दरि! द्रुतविलम्बितकस्य आद्य-तृतीययोः पादयोः प्रथमाक्षरं यदि नास्ति, तदा सा हरिणीप्लुता भवति॥२९॥

उपेन्द्रवज्राचरणेषु सन्ति चेदुपान्त्यवर्णा लघवः परे कृताः।
मदोल्लसद्भ्रूजितकामकार्मुके वदन्ति वंशस्थविलं बुधास्तदा॥३०

यस्यामशोकाङ्कुरपाणिपल्लवे! वंशस्थपादा गुरुपूर्ववर्णकाः।
तारुण्यहेलारतिरङ्गलालसे तामिन्द्रवंशां कवयः प्रचक्षते॥३१

यस्यां प्रिये! प्रथमकमक्षरद्वयं तूर्यं तथा गुरु नवमं दशान्तिमं।
सान्त्यं भवेद्यतिरपि चेद्युगग्रहैःसालक्ष्यताममृतरुते प्रभावती॥३२

आद्यं चेत त्रितयमथाष्टमं नवान्त्यं
द्वेवन्त्यौ गुरुविरतौ सुभाषिते! स्यात्।
विश्रामो भवति महेशनेत्रदिग्भि-
र्विज्ञेया ननु सुदति! प्रहर्षिणी सा॥ ३३॥

उपेन्द्रेति। उपेन्द्रवज्रायाः चरणेषु पादेषु चेत् यदि उपान्त्यवर्णाः एकादशवर्णा इत्यर्थः लघवः परे द्वादशश्च वर्णाः कृताः गुरव इति शेषः, तदा हे मदोल्लसद्भ्रूजितकामकार्मुके! बुधाः विद्वांसः तत् वंशस्थविलं वदन्ति॥ ३०॥

यस्यामिति। हे अशोकाङ्कुरवत् पाणिपल्लवो यस्याः तादृशि! तारुण्येन या हेला विलासविशेषः तया यो रतिरङ्गः तस्मिन् लालसा लुब्धा तत्सम्बुद्धौ। यस्यां वंशस्थस्य पादाः गुरुपूर्ववर्णकाः प्रथमे गुरुवर्णाः, कवयः ताम् इन्द्रवंशां प्रचक्षते कथयन्ति॥ ३१॥

यस्यामिति। हे प्रिये! अमृतरुते! सुधामधुरभाषिणि! यस्यां प्रथमकमक्षरद्वयं प्रथमं द्वितीयमित्यर्थः तूर्यं चतुर्थं नवमं दशान्तिमम् एकादशं तथा सान्त्यम् अन्त्येन शेषेण सहितं त्रयोदशमित्यर्थः गुरु, अन्ये सप्त लघव इति शेषः, युगग्रहैः चतुर्भिर्नवभिश्च यतिरपि चेत् भवेत् सा प्रभावती आलक्ष्यताम्॥ २२॥

आद्यमिति। हे सुभाषिते! सुभाषिणि! हे सुदति! चेत् यदि आद्यं प्रथमं त्रितयं प्रथमं द्वितीयं तृतीयञ्चेत्यर्थः अथ

आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं
यत्राष्टमञ्च दशमान्त्यमुपान्त्यमन्त्यम् ।
अष्टाभिरिन्दुवदने ! विरतिश्च षड्भिः
कान्ते ! वसन्ततिलकं किल तं वदन्ति ॥ ३४ ॥

प्रथममगुरु षट्कं विद्यते यत्र कान्ते !
तदनु च दशमं चेदक्षरं द्वादशान्त्यम् ।
गिरिभिरथ तुरङ्गैर्यत्र कान्ते ! विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ॥ ३५ ॥

सुमुखि ! लघवः पञ्च प्राच्यास्ततो दशमान्तिमः
तदनु ललितालापे ! वर्णौ तृतीयचतुर्थकौ ।

अनन्तरम् अष्टमं नवान्त्यं दशममित्यर्थः अन्त्यौ द्वौ द्वादशं त्रयोदशञ्चेत्यर्थः गुरुविरतौ गुरुयुताविन्यर्थः स्यात् अन्ये षट् लघव इति शेषः तथा सप्ताश्वैः त्रिभिरित्यर्थः दिगभिर्दशभिश्च विश्रामः भवति, ननु तदा सा प्रहर्षिणी विज्ञेया ॥ ३३ ॥

आद्यमिति । हे इन्दुवदने ! कान्ते ! यत्र आद्यं प्रथमं द्वितीयं चतुर्थम् अष्टमं दशमान्त्यम् एकादशमित्यर्थः उपान्त्यं त्रयोदशम् अन्त्यं चतुर्दशञ्च चेत् गुरु, अन्ये सप्त लघव इति शेषः अष्टाभिः षड्भिश्च विरतिर्विश्रामश्च भवति, तदा तं वसन्ततिलकं वदन्ति किल ॥ ३४ ॥

प्रथममिति । हे कान्ते ! यत्र प्रथमं षट्कं तदनु तदनन्तरञ्च दशमं द्वादशान्त्यं त्रयोदशमित्यर्थः च अक्षरम् अगुरु लघ्वित्यर्थः विद्यते, यत्र च गिरिभिः पर्वतैः अष्टाभिरित्यर्थः अथानन्तरं तुरङ्गैः अश्वैः सप्तभिरित्यर्थः विरामः भवतीति शेषः, हे कान्ते ! सा सुकविजनानां मनोज्ञा मनोहारिणी मालिनी प्रसिद्धा ॥ ३५ ॥

सुमुखीति । हे सुमुखि ! ललितालापे मधुरभाषिणि ! प्राच्याः

प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे!
यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥२६॥
यदि प्राच्यो ह्रस्वः कलितकमले! पञ्च गुरवः
ततो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि! लघवः।
त्रयोऽन्ये चोपान्त्याः सुतनुजघने! भोगसुभगे!
रसै रीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥२७॥
द्वितीयमलिकुन्तले! गुरु षडष्टमद्वादशं
चतुर्दशमथ प्रिये! गुरु गभीरनाभिह्रदे!।
सपञ्चदशमान्तिमं तदनु यत्र कान्ते! यतिः
गिरीन्द्रफणभृत्कुलैर्भवति सुभ्रु! पृथ्वीति सा ॥२८॥

कनकप्रभा काञ्चनप्रभा यस्याः तत्सम्बुद्धौ। यत्र प्राच्याः पूर्वे पञ्च लघवः ततः अनन्तरं दशमान्तिमः एकादशः तदनु तदनन्तरं तृतीयचतुर्थकौ वर्णौ त्रयोदशः चतुर्दशश्चेत्यर्थः उपान्त्यः षोडशश्च पुनः लघुः प्रभवति अन्ये अष्टौ लघव इति शेषः, रसैः षड्भिः वेदैश्चतुर्भिः अश्वैः सप्तभिश्च यतिर्विश्रामोऽपि भवतीति शेषः, सा हरिणीति स्मृता कथिता ॥ २६ ॥

यदीति। हे कलितकमले धृतपद्मे! पद्मविलासिनीत्यर्थः प्रकृत्या स्वभावेन सुकुमारं सुकोमलम् अङ्गं यस्याः तत्सम्बुद्धौ, सुतनुजघने शोभनाङ्गजघने! भोगसुभगे सम्भोगसुखदायिनीत्यर्थः यस्यां प्राच्यः प्रथमः ह्रस्वः लघुरित्यर्थः ततः पञ्च गुरवः ततः अनन्तरं पञ्च वर्णाः लघवः अन्ये उपान्त्याश्च त्रयः चतुर्दशपञ्चदशषोडशा इत्यर्थः लघवः अन्ये त्रयो गुरव इति शेषः, तथा रसैः षड्भिः रुद्रैः एकादशभिः विरतिः, सा शिखरिणी भवति ॥ २७ ॥

द्वितीयमिति। हे अलिकुन्तले भ्रमरनीलकेशि! गभीरनाभिह्रदे सुभ्रु! प्रिये! कान्ते! यत्र द्वितीयं षडष्टमद्वादशं षष्ठम् अष्टमं

चत्वारः प्राक् सुतनु ! गुरवो द्वौ दशैकादशौ चेत्
मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ।
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते ! विरामो
मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां सङ्गिरन्ते ॥३९॥
आद्यं यत्र गुरु त्रयं प्रियतमे ! षष्ठं ततश्चाष्टमं
सन्त्येकादशतस्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः
मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने
तद् वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्री

द्वादशश्चेत्यर्थः गुरू, अथ अनन्तरं चतुर्दशं तदनु सप्तद... पञ्चदशं सप्तदशश्चेत्यर्थः गुरू, अन्ये दश लघव इति शेषः फणभृत्कुलैः अष्टाभिः नवभिश्चेत्यर्थः यतिः, ... भवति ॥ ३८ ॥

चत्वार इति। हे सुतनु ! मुग्धे कान्ते ! यत्र चत्वारः गुरवः, तदनु तदनन्तरं चेत् यदि दशैकादशौ एकादशश्चेत्यर्थः वर्णौ, द्वादशान्त्यौ त्रयोदशश्चतुर्दशश्च... तथा अन्त्यौ षोडशः सप्तदशश्चेत्यर्थः गुरू भवत इति... सप्त लघव इति शेषः, तथा युगरसहयैः चतुर्भिः षड्... अर्थः विरामः, हे कुमुदामोदिनि ! तन्वि ! प्रवरक... तां मन्दाक्रान्तां सङ्गिरन्ते कथयन्ति ॥ ३९ ॥

आद्यमिति। हे पूर्णेन्दुबिम्बानने पूर्णचन्द्रसदृ... यत्र आद्यं त्रयं षष्ठं ततश्च अष्टमं गुरु, तदनु एका... दशात् परं चेत् त्रयः द्वादशत्रयोदशचतुर्दशा इत्यर्थः त... द्यान्तिमाः षोडशः सप्तदशः ऊनविंशश्चेत्यर्थः गुरवः... शेषः, अन्ये अष्टौ लघव इति शेषः, यत्र च मार्त्तण्डैः द्वा... भिरित्यर्थः मुनिभिः सप्तभिश्च विरतिर्विश्रामः, काव्य... वृत्तं शार्दूलविक्रीडितं प्रवदन्ति ॥ ४० ॥

चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोडशाद्यौ मृगमदतिलके षोडशान्त्यौ तथान्त्यौ ।
रम्भास्तम्भोरुकान्ते ! मुनिमुनिमुनिभिश्छिद्यते चेद्विरामो
बाले वर्ण्यैः कवीन्द्रैः सुतनु निगदिता स्रग्धरा सा प्रसिद्धा ॥४१

इति श्रीकालिदासविरचितः श्रुतबोधः सम्पूर्णः ।

---

चत्वार इति । हे मृगमदतिलके ! रम्भास्तम्भौ इव यौ ऊरू ताभ्यां कान्ता मनोहरा तत्सम्बुद्धौ, बाले ! मुग्धे ! सुतनु शोभनाङ्गि ! यत्र प्रथमं चत्वारो वर्णाः षष्ठकः सप्तमः तद्वत् षोडशाद्यौ द्वौ चतुर्दशः पञ्चदशश्चेत्यर्थः षोडशान्त्यौ सप्तदशः अष्टादशश्चेत्यर्थः तथा अन्त्यौ विंशः एकविंशश्चेत्यर्थः अलघवः गुरव इत्यर्थः, अन्ये नव लघव इति शेषः, तथा सप्तभिः सप्तभिः सप्तभिः चेत् यदि विरामो छिद्यते, तदा वर्ण्यैः कवीन्द्रैः स्रग्धरा प्रसिद्धा सा निगदिता उक्ता ॥ ४० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
श्रुतबोधव्याख्या समाप्ता ।

---

# विदग्धमुखमण्डनम् ।

—०※०—

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
शौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥१॥

जयन्ति सन्तः सुकृतैकभाजनं परार्थसम्पादनसद्व्रतस्थिताः
करस्थनीरोपमविश्वदर्शिनो जयन्ति वैदग्ध्यभुवः कवेर्गिरः॥२

सिद्धौषधानीति । भवस्य संसारस्य दुःखान्येव तापा एव महान्तः गदाः रोगाः तेषां सिद्धौषधानि प्रस्तुतभेषजानि प्रसिद्धमहौषधानीत्यर्थः, पुण्यात्मनां सुकृतिनां परमकर्णरसायनानि परमाणि कर्णामृतानि श्रोत्रसुखानीत्यर्थः, मनोमलानां मानसिकपापानां प्रक्षालने एकसलिलानि मुख्यजलानि, शुद्धोदनस्य अपत्यं पुमान् शौद्धोदनिः तस्य बुद्धस्येत्यर्थः प्रवचनानि प्रकृष्टानि वचनानि चिरं जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । रूपकमलङ्कारः । तदुक्तं दर्पणे । रूपकं रूपितारोपाद्विषये निरपह्नवे इति । वसन्ततिलकं वृत्तं, सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

जयन्तीति । सुकृतानाम् एकम् अद्वितीयं भाजनं पात्रं, परेषाम् अर्थसम्पादनं कार्य्यसम्पादनमेव सद् व्रतं तत्र स्थिताः, करस्थं यत् नीरं जलं तदुपमं यथा तथा विश्वं पश्यन्तीति तथाविधाः सन्तः जयन्ति सर्वोत्कर्षेण वर्त्तन्ते, तथा वैदग्ध्यभुवः वैचित्र्यशालिन्यः कवेः गिरः वाचः जयन्ति । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ २ ॥

आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा
सातत्यं वत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः।
बद्धेवातनुरज्जुभिः परगुणान् वक्तुं न शक्ता सती
जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते ॥३॥
इहानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥४॥
बद्धाञ्जलिः सममसज्जनसज्जनौ तौ
वन्दे नितान्तकुटिलप्रगुणस्वभावौ।

आक्रान्तेवेति। खलानां दुर्जनानां मुखे जिह्वा महोपलेन महत्या शिलया आक्रान्तेव अभिभूतेव, मुनिना दुर्वाससा शप्तेव अभिशापं नीतेव, जतुना लाक्षया सातत्यं सततं वत खेदे मुद्रितेव, विषैः मूर्च्छां नीतेव मोहं गमितेव, अतनुभिः महतीभिः दृढाभिरिति यावत् रज्जुभिः बद्धेव, लोहशलाकया विद्धेव, परगुणान् वक्तुं न शक्ता असमेत्यर्थः सती संलक्ष्यते। उत्प्रेक्षालङ्कारः। तदुक्तं दर्पणे। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ३ ॥

इहेति। इह जगति अनेके कृतज्ञाः सुधियः सततम् उपकारिणि सत्यम् उपकृतिम् उपकारं कुर्वन्तः निवसन्ति एव, किन्तु स्वार्थं विना येषां परकृत्यव्यसनिता परकार्य्येषु आसक्तिः समुद्योग इत्यर्थः ते सुकृतानां परिपाकप्रणयिनः शुभफलकाङ्क्षिण इत्यर्थः कियन्तः कतिपये सन्तः साधवः सन्तीति शेषः। शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ ४ ॥

एकं भियाऽभिनवसंहितवैरिभावं
प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ ५ ॥
किं मेऽथवा हतखलप्रणतावपि स्यात्
स स्वीकरोति सुजनो यदि मां गुणज्ञः।
चन्द्रेण चारुचरितेन विकासितं सत्
सङ्कोचितं भवति किं कुमुदं तमोभिः ॥ ६ ॥
प्रीत्यै सतां तदनुभावगतावसादः
सन्त्यज्य गूढरचनां प्रतिभानुरूपम्।
क्षिप्रावबोधकरणक्षममीक्षितार्थं
वक्ष्ये विदग्धमुखमण्डनमप्रपञ्चम् ॥ ७ ॥

बद्धाञ्जलिरिति। बद्धाञ्जलिः कृताञ्जलिः सन् भिया भयेन अभिनवं यथा तथा संहितः योजितः वैरिभावः शात्रवं येन तादृशम् एकं, प्रीत्या प्रणयेन परमनिर्वृतिपात्रभूतं परमप्रीतिभाजनभूतं परम् अन्यम्, अतएव नितान्तकुटिलः प्रगुणस्वभावः साधुप्रकृतिश्च तथाविधौ तौ असज्जनसज्जनौ दुर्जनसुजनौ समं युगपत् वन्दे प्रणमामि। वसन्ततिलकं वृत्तम् ॥ ५ ॥

किमिति। अथवा यदि सः गुणज्ञः सुजनः मां स्वीकरोति अङ्गीकरोति आश्रयदानेनेति शेषः, तदा हतानां दुष्टानां खलानां प्रणतावपि मे मम किं स्यात्? न किमपि प्रयोजनमित्यर्थः। कुमुदं चारुचरितेन सुन्दरस्वभावेन चन्द्रेण विकासितं सत् तमोभिः अन्धकारैः किं सङ्कोचितं भवति? नैवेत्यर्थः। सुजने आश्रये सति दुर्जनाः न कैरपि आश्रियन्ते दुर्जनाश्च तस्य न किमपि अनिष्टं कर्त्तुं शक्नुवन्तीति तात्पर्य्यम्। अत्र दृष्टान्तालङ्कारः। तदुक्तं, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति। वसन्ततिलकं वृत्तम् ॥ ६ ॥

प्रीत्यामिति। सतां साधूनां प्रीत्यै सन्तोषाय तेषाम् अनु-

यद्यस्ति सभामध्ये स्थातुं वक्तुं मनस्तदा सुधियः ! ।
ताम्बूलमिव गृहीत्वा विदग्धमुखमण्डनं विशत ॥ ८ ॥
प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।
तथा व्यस्तसमस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ॥ ९ ॥
सद्विःसमस्तकव्यस्तमेकालापं प्रभिन्नकम् ।
भेद्यभेदकमोजस्वि सालङ्कारं सकौतुकम् ॥ १० ॥
प्रश्नोत्तरसमं पृष्टप्रश्नं भग्नोत्तरं तथा ।
आदिमध्योत्तराख्ये द्वे अन्त्योत्तरमतः परम् ॥ ११ ॥

भावेन प्रभावेण गतः विनष्टः अवसादः मनोदौर्बल्यं यस्य तादृशः अहं गूढ़रचनां सन्त्यज्य प्रतिभानुरूपं प्रज्ञानुरूपं चिरायबोधकरण-क्षमं शीघ्रबोधक्षमम् ईप्सितः इष्टः पर्य्यालोचितः अर्थो यस्य तादृशम् अप्रपञ्चम् अविस्तरं संक्षिप्तं विदग्धानां सहृदयानां मुखस्य मण्डनं भूषणम् अलङ्कारभूतं तदाख्यं ग्रन्थमिति शेषः वक्ष्ये कथयिष्यामि । वसन्ततिलकं वृत्तम् ॥ ७ ॥

यद्यीति । हे सुधियः ! यदि सभामध्ये स्थातुं वक्तुं मनः अस्ति, तदा ताम्बूलमिव गृहीत्वा विदग्धमुखमण्डनं विशत चर्वयत अनुशीलयत इत्यर्थः । आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् । उपमालङ्कारः । तदुक्तं दर्पणे, साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमाद्वयोरिति ॥ ८ ॥

प्राहुरित्यादि । व्यस्तं, समस्तं, द्विर्व्यस्तं, द्विःसमस्तकं, व्यस्तसमस्तं; द्विर्व्यस्तं द्विःसमस्तकं व्यस्तसमस्तं प्राहुः कथयन्ति बुधा इति शेषः । एकालापम् एकेन आलापेन कथितमित्यर्थः तथा प्रभिन्नकम् अनेकालापभिन्नम्: समस्तकव्यस्तं समस्तव्यस्तं भेद्यभेदकं ओजस्वि ओजोगुणान्वितमित्यर्थः, सालङ्कारं सकौ-

कथितापह्नुतिश्चैव विषमं वृत्तनामकम् ।
नामाख्यातं च तार्क्ष्यं च सौत्रं शाब्दीयशास्त्रजे ॥ १२ ॥
वर्णवाक्योत्तरे तद्वत् श्लोकोत्तरमतः परम् ।
खण्डपादोत्तरे चक्रं पद्मं काकपदं तथा ॥ १३ ॥
गोमूत्रीं सर्वतोभद्रं गतप्रत्यागतं बहु ।
वर्द्धमानाक्षरं तद्वद्धीयमानाक्षरं तथा ॥ १४ ॥
शृङ्खलां नागपाशं च चित्रं संयुक्तमेव च ।
प्रहेलिकां तथा हृद्यं कालसारादि वर्णितम् ॥ १५ ॥
अजमारादिकं गूढं पदपादार्थगूढकम् ।
स्तुतिनिन्दां तथा द्व्यर्थं सहापह्नुति विन्दुमत् ॥ १६ ॥

तुकं कौतुकावहमित्यर्थः । मद्भिः कथितमिति शेषः । प्रश्नोत्तरयोः समं पृष्टप्रश्नं तथा भग्नोत्तरम् आदिमध्योत्तराख्ये द्वे द्विविधे, आद्युत्तरं मध्योत्तरमित्यर्थः अतः परम् अन्त्योत्तरम् । कथिता अपह्नुतिर्यत्र तादृशं विषमं वृत्तनामकं वृत्ताख्यं नामाख्यातं तार्क्ष्यं सौत्रं शाब्दीयं शास्त्रजम् । वर्णवाक्योत्तरे वर्णोत्तरं वाक्योत्तरञ्चेत्यर्थः तद्वत् श्लोकोत्तरम् । खण्डपादोत्तरे खण्डोत्तरं पादोत्तरञ्च, चक्रं पद्मं तथा काकपदम् । गोमूत्रीं सर्वतोभद्रं गतप्रत्यागतं वर्द्धमानाक्षरं तद्वत् हीयमानाक्षरम् । शृङ्खलां नागपाशं चित्रं संयुक्तं प्रहेलिकां हृद्यं मनोहरं कालसारादि वर्णितं कथितम् अस्तीति शेषः । अजमारादिकं गूढं पदपादार्थगूढकं पदगूढं पादार्थगूढञ्चेत्यर्थः स्तुतिनिन्दां तथा द्व्यर्थं सहापह्नुति, विन्दुमत । क्रियाकारकसम्बन्धगुप्तानि क्रियागुप्तं कारकगुप्तं सम्बन्धगुप्तञ्चेत्यर्थः । आमन्त्रितस्य च सम्बोधनपदस्य समासस्य लिङ्गस्य वचनस्य च गुप्तम् । मात्राविन्दुविसर्गाणाम् अक्षरस्य च च्युतानि

क्रियाकारकसम्बन्धगुप्ताभ्यामन्वितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥ १७ ॥
मात्राबिन्दुविसर्गाणां च्युतकाक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरं तथा ॥ १८ ॥

इत्युद्देशकम् ।

पृष्टं पदविभागेन केवलेनैव यद्भवेत् ।
विदुर्व्यस्तं समस्तं यत्समुदायेन पृच्छति ॥ १९ ॥
पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः ।
क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥२०॥

सुनासीरः, इति व्यस्तसमस्तजातिः ।

को दुराढ्यस्य मोहाय का प्रिया सुरविद्विषः ।
पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥ २१ ॥

मात्राच्युतं बिन्दुच्युतं विसर्गच्युतम् अक्षरच्युतञ्चेत्यर्थः । स्थानव्यञ्जनयोश्च च्युतके इति शेषः स्थानच्युतं व्यञ्जनच्युतञ्चेत्यर्थः तथा च्युतदत्ताक्षरं च्युताक्षरं दत्ताक्षरञ्चेत्यर्थः एतत् सर्वम् उक्तमत्रेति शेषः ॥ ९—१८ ॥

पृष्टमिति । केवलेन पदविभागेन यत् पृष्टं भवेत् तत् व्यस्तं, यत् समुदायेन समस्या पदानामिति शेषः पृच्छति, तत् समस्तं विदुः बुधा इति शेषः ॥ १९ ॥

पूजायामिति । किं पदं पूजायां प्रशंसायां प्रोक्तं कथितम् ? कः अस्तनं स्तनरहितम् उरः वक्षःस्थलं बिभर्त्ति ? कः प्रलम्बासुर-विद्विषः बलभद्रस्य आयुधतया अस्त्रतया ख्यातः कीर्त्तितः ? इति प्रश्ने सुनासीर इत्युत्तरं, तथाहि पूजावाचकं सु इति पदम्,अस्तनो-रःस्थलः ना पुरुषः, बलभद्रास्त्रं सीरः लाङ्गलमिति ॥ २० ॥

क इति । कः किं वक्तीति यावत् दुराढ्यस्य दुष्टधनिनः

रामानुरागः, इति व्यस्तजातिः ।

अपि सेविता द्विजिह्वैः कदापि के न यान्ति विकारम् ।
विच्छिद्यमानतनवः स्वगुणैरधिकं विराजन्ते ॥ २२ ॥

मलयतरवः ।

अनिभृतकोकिलनिःस्वनमुखरितसहकारकाननः पुंसाम् ।
को भवति हृदयहारी मधुरभङ्कारिकङ्केलिः ॥ २३ ॥

मधुसमयः, इति समस्तजातिः ।

व्यस्तं समस्तमथवा समासपदभङ्गतः ।

मोहाय भवतीति शेषः ? सुरविद्विषः मुरारेः प्रिया का ? प्रश्न-वितर्के प्रश्ने वितर्के चार्थः किं पदं प्रयोज्यमिति शेषः ? दन्तच्छदस्य अधरस्य भूषणं किम् ? इति प्रश्ने रामानुराग इत्युत्तरं, दुष्टजनमोहनः रा धनमित्यर्थः, हरेः प्रिया मा लक्ष्मीरित्यर्थः, प्रश्नवितर्के नु इति पदम्, अधररञ्जनं रागः लौहित्यमित्यर्थः । इत्युभयत्र व्यस्ता जातिः ॥ २१ ॥

अपीति । द्विजिह्वैः सर्पैः दुर्जनैरिति ध्वनिः सेविता अपि के कदापि विकारं न यान्ति ? के च विच्छिद्यमानाः निकृत्यमानाः तनवः अङ्गानि येषां तथाभूता अपि विपद्गता अपीति ध्वनिः स्वगुणैः निजधैर्य्यादिगुणैरिति च ध्वनिः अधिकं विराजन्ते ? इति प्रश्ने मलयतरव इत्युत्तरम् । सुजनास्त्वित्युत्तरं व्यङ्ग्यार्थे योजनीयमिति । आर्य्यावृत्तम् ॥ २२ ॥

अनिभृतेति । अनिभृतेन अनवरतेन कोकिलानां निःस्वनेन मुखरितं शब्दितं सहकारकाननं यत्र तथाभूतः, मधुरः भङ्कारः भ्रमराणामिति भावः विद्यते येषु तादृशाः कङ्केलयः अशोकतरवः यत्र तादृशः, पुंसां हृदयहारी मनोहारी कः भवति ? इति प्रश्ने मधुसमय इत्युत्तरम् । इति समस्ता जातिः ॥ २३ ॥

व्यस्तमिति । व्यस्तम् असमस्तं पदम् अथवा समस्तं पदं समा-

द्विःपृष्टं यत्तदेव स्याद् द्विर्व्यस्तं द्विःसमस्तकम् ॥ २४ ॥

वर्षासु का भवति निर्मधु कीदृगब्जं
शेषं बिभर्त्ति वसुधासहितं क एकः ।
आमन्त्रयस्व धरणीधरनाथपुत्रीं
को वाऽस्ति भस्मनिचिताङ्गजनाश्रयः स्यात् ॥२५॥

कालिकापालिकमठः ।

कीदृशं वद मरुस्थलं मतं द्वारि कुत्र सति भूषणं भवेत् ।
ब्रूहि कान्त! सुभटः सकार्मकः कीदृशो भवति कुत्र विद्विषाम्२६

अवारितो रणे, इति द्विर्व्यस्तजातिः ।

पश्चिमेऽप्सखीबभ्रुसुरा वाच्याः कथं वद ।

सपदभङ्गतः समासस्य पदस्य भङ्गात् यत् द्विः पृष्टं स्यात् तदेव यथाक्रमं द्विर्व्यस्तं द्विःसमस्तकञ्च भवतीति शेषः ॥ २४ ॥

वर्षास्विति । वर्षासु का भवति ? निर्मधु मधुशून्यम् अब्जं पद्मं कीदृक् ? क एकः वसुधासहितं शेषम् अनन्तं बिभर्त्ति ? धरणी-धरनाथपुत्रीं पर्वतराजपुत्रीं आमन्त्रयस्व सम्बोधय ? को वा भस्म-निचिताङ्गजनानाम् आश्रयः स्यात् ? अत्र प्रश्नेषु कालिकापालिक-मठ इत्युत्तरम् । तथाहि प्रथमस्योत्तरं कालिका कानां जलानां आलिका समूह इत्यर्थः । द्वितीयस्य अपालि अपगता अलयः यस्मात् तत् । तृतीयस्य कमठः । चतुर्थस्य कालि! पञ्चमस्य कापालिकस्य मठः ॥ २५ ॥

कीदृशमिति । मरुस्थलं कीदृशं मतं वद, द्वारि कुत्र सति विद्यमाने भूषणं भवेत् ? हे कान्त! ब्रूहि कुत्र कीदृशः विद्विषां सकार्मुकः सुभटः सुवीरः भवति ? अत्रोत्तरम् अवारितो रणे इति । तथाहि प्रथमस्य अवारि जलरहितं, द्वितीयस्य तोरणे, तृतीयस्य रणे अवारितः दुर्निवार्य्य इत्यर्थः ॥ २६ ॥

पश्चीति । पश्चिमेऽप्सखीबभ्रुसुराः कथं केन केन शब्देनेत्यर्थः

ज्यैष्ठे मासि गताः शोषं कीदृश्योऽल्पजला भुवः ॥२७॥
विवरालीनकुलीराः ।

विश्वम्भराप्रवल्वणव्रीहिमानुषसंयतः ।
कथं वाच्याः भवन्त्येता दिनादौ विकसन्ति काः ॥२८॥
कुवलयवनराजयः, इति द्विःसमस्तजातिः ।

पृष्टं पदविभागेन समुदायेन यद्भवेत् ।
विदुर्व्यस्तसमस्तं तदुभयार्थप्रदर्शनात् ॥ २९ ॥

का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता ।
कीदृशे· पु··षेण प··यां बन्धनं समभिलष्यते सदा ॥३०॥

वाच्याः ? ज्यैष्ठे मासि अल्पजलाः भुवः शोषं गताः कीदृश्यः भवन्तीति शेषः वद । इति प्रश्ने विवरालीनकुलीरा इत्युत्तरं, तथाहि विः पक्षी, वरः श्रेष्ठः, आली सखी, नभ्रुः नकुलो, इरा सुरा । शेषस्योत्तरं विवरालीनकुलीरा इति, विवरेषु गर्त्तेषु आलीनाः अन्तर्गताः कुलीराः कर्कटा यासां तथाविधा इत्यर्थः ॥ २७ ॥

विश्वम्भरेति । विश्वम्भराप्रवल्वणव्रीहिमानुषसंयतः एताः कथं केन केन शब्देनेत्यर्थः वाच्याः भवन्ति ? दिनादौ रात्रिकाले काः ·कसन्ति ? इति प्रश्ने कुवलयवनराजय इत्युत्तरं, तथाहि विश्व·रा कुः, प्रवल्वणः वलः, व्रीहिः यवः, मानुषः नरः, संयतः ·ाजयः । शेषस्य समस्तमुत्तरम् ॥ २८ ॥

पृष्टमिति । पदविभागेन समुदायेन च पदानामिति शेषः यत् पृष्टं भवेत् तत् उभयार्थप्रदर्शनात् व्यस्तसमस्तं विदुः ॥ २९ ॥

केति । का वराङ्गना उत्तमा कामिनी प्रियेण कान्तेन रहिता, धाम्नि गृहे केन तनयेन नन्दिता, कीदृशेन पुरुषेण सदा पक्षिणां बन्धनं समभिलष्यते ? ।

शकुन्तलाभरतेन ।

कीदृशं हृदयहारि कूजितं कः सखा यशसि भूपतेर्मतः ।
कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः ॥२१॥

कलङ्कविरहितः, इति व्यस्तसमस्तजातिः ।

द्विर्व्यस्तमेव यत् पृष्टं समुदायेन यद्भवेत् ।
त्रिधाभिन्नं तदेवोक्तं द्विर्व्यस्तकसमस्तकम् ॥ २२ ॥

कौ शङ्करस्य वलयावपयोधरः कः
कीदृक् परस्य नियतं वशमेति भूपः ।
सम्बोधयोरगपतिं विजयी च कीदृग्
दुर्य्योधनो न हि भवेद्वद कीदृशश्च ॥ २३ ॥

अहीनाश्वतनयः ।

इति प्रश्ने शकुन्तला भरतेनेत्युत्तरं, तथाहि प्रथमस्य शकुन्तला, द्वितीयस्य भरतेन, तृतीयस्य शकुन्तलाभरतेन शकुन्तानां पक्षिणां लाभे रतः तेनेत्यर्थः ॥ २० ॥

कीदृशमिति । हृदयहारि मनोहारि कूजितं कीदृशम् ? भूपतेः यशसि कः सखा मतः ? विपिने वने कः तव त्वत्त इति भावः भयाकुलः अस्ति ? निशाकरश्चन्द्रश्च कीदृशः न भवेत् ? इति प्रश्ने कलङ्कविरहित इत्युत्तरं, तथाहि प्रथमस्य कलं मधुरास्फुटम् । द्वितीयस्य कविः । तृतीयस्य अहितः शत्रुः । चतुर्थस्य समस्तम् ॥२१॥

द्विरिति । यत् द्विर्व्यस्तमेव समुदायेन पृष्टं भवेत् त्रिधा त्रिप्रकारेण भिन्नं तदेव द्विर्व्यस्तकसमस्तकं प्रोक्तम् ॥ २२ ॥

काविति । शङ्करस्य हरस्य वलयौ कौ ? अपयोधरः कः ? कीदृक् भूपः नियतं परस्य वशम् एति ? उरगपतिं सम्बोधय उरगपतेः सम्बोधनं किमित्यर्थः ? विजयी कीदृक् ? कीदृशः दुर्य्योधनः न हि भवेत् वद ।

को मोक्षाय दुरीश्वरस्य विहितः सम्बोधनीयो गुरुः
को धात्र्यां विरलः कलौ नवघनः किंवत् कीदृग् द्विजः।
किं लेखावचनं भवेदतिशयन्दुःखाय कीदृग् खलः
को विघ्नाधिपतिर्मनोभवसमो मूर्त्या भवन् कीदृशः ॥२४॥
राजीवसन्निभवदनः, इति द्विर्व्यस्तसमस्तजातिः।

अक्षोत्तरम् अक्षीणाप्ततनय इति। तथाच प्रथमस्य अक्षौ पन्नगौ। द्वितीयस्य न पुरुषः। तृतीयस्य आप्तनयः नीतिभ्रष्टः। चतुर्थस्य अक्षीण सर्पराज! पञ्चमस्य अप्ततनयः नीतिमान्। षष्ठस्य अक्षीणाप्ततनयः क्षीणे अक्षिणी यस्य सः क्षीणाक्षः धृतराष्ट्रः तस्य तनयः क्षीणाक्षतनयः स न भवतीति अक्षीणाक्षतनयः ॥२३॥

क इति दुरीश्वरस्य अविवेकिनो धनिन इत्यर्थः मोक्षाय मोक्षनिमित्तं कः? सम्बोधनीयः विहितः प्रयुक्त इत्यर्थः गुरुः क इति शेषः? धात्र्यां पृथिव्यां कलौ कलियुगे विरलः कः? नवघनः नवमेघः किंवत् कीदृशः? द्विजः विप्रः कीदृक् न भवतीति शेषः? लेखावचनं लेखायल्पप्रतिपादकं किं भवेत्? कीदृक् खलः दुर्जनः अतिशयन्दुःखाय भवतीति शेषः? विघ्नाधिपतिः विघ्नराजः मूर्त्या मनोभवेन समः भवन् कीदृशः? ॥ २४ ॥

अक्षोत्तरं राजीवसन्निभवदन इति। तथाच प्रथमस्य रा धनम्। द्वितीयस्य जीव इत्युच्यते! तृतीयस्य सन् साधुः। चतुर्थस्य इभः इत्वीव। पञ्चमस्य अनः नास्ति न अभाव इत्यर्थः यस्य सः अ अभावरहितः अदरिद्र इत्यर्थः विप्रस्य दरिद्रत्वं प्रसिद्धमिति भावः। षष्ठस्य राजीभ्यो पंक्तिभ्यो लेखाय राजय इत्यमरः। सप्तमस्य वसन् प्रतिवसतीत्यर्थः। अष्टमस्य इभवदनः गजाननः। नवमस्य राजीवसन्निभवदनः राजीवेन कमलेन सन्निभं सदृशं वदनं यस्य तादृशः। इति द्विर्व्यस्तसमस्तजातिः प्रथमं द्विधा विभक्तं पश्चात् समुदायार्थ इति अविभज्योक्तत्वादिति भावः।

द्विःसमस्तं यदा पृष्टं व्यस्तकेन पुनर्भवेत् ।
तद् द्विःसमस्तकव्यस्तं कथितं प्रश्नपण्डितैः ॥ ३५ ॥

कीदृक्षः सकलजनो भवेत् सुराष्ट्रः
कः कालो विदित इहान्धकारहेतुः ।
कः प्रेयान् कुमुदवनस्य को निहन्ति
ध्वान्तव्यं वद तरसा जितस्त्वया कः ॥ ३६ ॥

विधुरविरहितः ।

संग्रामे स्फुरदसिना हतास्त्वया के
के दुःखं वत निरये नरस्य कुर्य्युः ।
कस्मिन्नुद्भवति कदापि नैव लोम
ख्याताः के जगति महालघुत्वभाजः ॥ ३७ ॥

नरकरिपवः, इति द्विःसमस्तकव्यस्तजातिः ।

द्विरिति । यदा पृष्टं द्विःसमस्तं वारद्वयेन समस्तविषयं पुनः व्यस्तकेन भवेत् उत्तरमिति शेषः, तत् प्रश्नपण्डितैः द्विःसमस्तकव्यस्तं कथितम् ॥ ३५ ॥

कीदृक्ष इति । सुराष्ट्रः सकलजनः कीदृक्षः कीदृशः भवेत् ? इह जगति अन्धकारहेतुः कः कालो विदितः ? कुमुदवनस्य प्रेयान् प्रियतमः कः ? कः ध्वान्तव्यं निहन्ति ? त्वया तरसा बलेन को जितः ? वद ॥३६॥

अत्रोत्तरं विधुरविरहित इति । प्रथमस्य विधुरेण कातर्य्येण विरहितः शून्यः सुखित इत्यर्थः । द्वितीयस्य विधुरविभ्यां चन्द्रसूर्य्याभ्यां रहित इत्यर्थः । तृतीयस्य विधुश्चन्द्रः । चतुर्थस्य रविः सूर्य्यः । पञ्चमस्य अहितः शत्रुः ।

संग्रामे इति । संग्रामे युद्धे स्फुरत् असिर्यस्य तादृशेन त्वया के हताः ? वत खेदे, निरये नरके के जनाः नरस्य दुःखं कुर्य्युः ?

एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम् ।
प्रभेदं द्विःसमस्तस्य तमेकालापकं विदुः ॥ ३८ ॥
कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः ।
प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥३९॥
नरकपालरचिता ।
केशरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः ।
तत्त्वतः शिवमपेक्ष्य मार्गणैरर्जुनः समिति कीदृशो भवेत् ॥४०॥
दानवकुलभ्रमरहितः, इत्येकालापकजातिः ।

कस्मिन् कदापि लोम नैव उद्भवति ? जगति के मनालघुत्वभाजः ख्याताः ? ॥२७॥

अत्रोत्तरं नरकरेणव इति । प्रथमस्य नरकरेणवः नराः करेणवः हस्तिन्य इत्यर्थः । द्वितीयस्य नरकस्थानस्था रेणवः रजांसि । तृतीयस्य नरकरे मनुष्यहस्ते । चतुर्थस्य अणवः परमाणव इत्यर्थः ।

एकेति । यत्र वचः वाक्यम् एकश्रुत्या एकेन श्रवणेन भिन्नार्थप्रतिपादकं तमेव द्विःसमस्तस्य एकालापकं प्रभेदं विदुः ॥ ३८ ॥

कीदृशीति । कीदृशी निरयभूः नरकभूमिः परमपापकर्मभिः अनेकधा सेव्यते ? प्रेतराक्षसपिशाचसेविता पितृकाननस्थली च कीदृशी ? ॥३९॥

अत्रोत्तरं नरकपालरचिता । नरकपालेन नरकरक्षकेण रचिता इत्येकोऽर्थः । नराणां कपालैः शिरोऽस्थिभिः रचिता व्याप्ता च इति द्वितीयोऽर्थः ।

केशरेति । केशरद्रुमतलेषु बकुलवृक्षतलेषु संस्थितः मत्तकुञ्जरः मत्तगजः कीदृशो भवति ? तत्त्वतः यथार्थतः बाणैः शिवम् अपेक्ष्य दृष्ट्वा युद्धेत्यर्थः समिति युद्धे अर्जुनः कीदृशः अभवत् ? ॥ ४० ॥

अत्रोत्तरं दानवकुलभ्रमरहित इति । दानेन मदस्रावेण वकुलभ्रम-

शब्दार्थलिङ्गवचनैर्व्यस्तैर्यद्वा समस्तकैः ।
विभक्त्या च प्रभिन्नं यत् तत् प्रभिन्नकमुच्यते ॥ ४१ ॥

निर्जितसकलारातिः पृच्छति को नैको मृत्योर्भयमृच्छति ।
मेघात्ययकृतरुचिराशायाः किं तिमिरक्षयकारि निशायाः॥४२

विधुताराातेजः ।

विहगपतिः कं हृतवानहितं कीदृग्भवति पुरं जनरहितम् ।
किं कठिनं विदितं वद धीमद् ! यादःपतिरपि कीदृग्भयकृत्४३

अहिमकरमयः, इति शब्दार्थलिङ्गप्रभिन्नकम् ।

रायां बकुलपुष्पस्थितभृङ्गाणां स्थितः ते तत्पुष्पं परित्यज्य दानेषु शोभिनः सन्तो निपतन्तीति भावः। इत्येकोऽर्थः। दानवानां कुलमेतत् किरातबलरूपेण मामभिधावतीति प्रथमं संशय्य पश्चात् बलश्चैः शिवोऽयं शबरसेनापतिरिति प्रतीतेः दानवकुले यो भ्रमस्तच्छिन्न इति द्वितीयोऽर्थः ।

शब्दार्थेति । व्यस्तैः पृथग्भूतैः यद्वा समस्तकैः अपृथग्भूतैः शब्दार्थलिङ्गवचनैः विभक्त्या च यत् प्रभिन्नं तत् प्रभिन्नकम् उच्यते ॥४१॥

निर्जितेति । निर्जिताः सकलाः अरातयः शत्रवः येन तादृशं जनं पृच्छति कोऽपीति शेषः ? एकः कः मृत्योर्भयं न ऋच्छति न प्राप्नोति ? मेघात्ययेन मेघावरणशून्यतयेत्यर्थः कृताः रुचिराः मनोज्ञाः आशाः दिशः यस्यां तथाभूतायाः निशायाः तिमिरक्षयकारि अन्धकारध्वंसि किम् ? ॥ ४२ ॥

अत्रोत्तरं विधुताराातेज इति । हे विधुताराते निर्जितशत्रो ! अजः ईश्वरः इत्येकोऽर्थः । विधोश्चन्द्रस्य ताराणां नक्षत्राणां तेज इति द्वितीयोऽर्थः ।

विहगपतिरिति । विहगपतिः गरुडः कम् अहितं शत्रुं हृतवान् ? जनरहितं पुरं नगरं कीदृक् भवति ? कठिनं विदितं

अनुकूलविधायिदैवतो विजयी स्यान्न तु कीदृशो नृपः ।
विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः ॥४४॥

कुशलवर्ह्वितः ।

कुसुमं पतदेत्यनाकतो वद कस्मै स्पृहयन्ति भोगिनः ।
अधिगम्य रतं वराङ्गना क नु यत्नं कुरुते सुशिक्षिता ॥४५॥

सुरतरवे, इति शब्दार्थभिन्नम् ।

काम्मुज्जहार हरिरम्बुधिमध्यमग्नां
कीदृक् श्रुतं भवति निर्मलमागमानाम् ।

प्रसिद्धं किम ? कीदृक् यादःपतिः समुद्रः भयकृत् ? हे धीमत् बुद्धि-मन् ! वद ॥ ४३ ॥

अत्रोत्तरम् अहिमकरमय इति। प्रथमस्य अर्कं पद्मम् । द्वितीयस्य अकरं राजस्वरहितम् । तृतीयस्य अयः लौहम् । चतुर्थस्य अहिनकरमयः सर्पमकरादिजन्तुपूर्णः इत्यर्थः ।

अनुकूलेति । कीदृशः अनुकूलविधायिदैवतः नृपः विजितः शत्रुभिरिति शेषः न स्यात् ? विरहिणी पतिवियोगविधुरा अपि जानकी सीता वने निवसन्ती कुतः कस्मात् कारणात् मुदम् आनन्दम् आदधौ प्राप ? ॥४४॥

अत्रोत्तरं कुशलवर्द्धित इति । कुशलेन मङ्गलेन वर्द्धित इत्येकोऽर्थः । कुशलवयोः निजसुतयोः वर्द्धितः अभ्युदयत इति द्वितीयोऽर्थः ।

कुसुममिति । भोगिनः अनाकतः स्वर्गात् कुसुमं पतत् पततीति भावः इति धिवति शेषः कस्मै स्पृहयन्ति ? सुशिक्षिता सुष्ठुशिक्षितरतिशास्त्रेत्यर्थः वराङ्गना उत्तमा योषित् रतम् अधिगम्य प्राप्य क नु कुत्र खलु यत्नं कुरुते ? ॥ ४५ ॥

अत्रोत्तरं सुरतरवे इति । सुरतरुः पारिजातादिः तस्मै इत्येकोऽर्थः । सुर[illegible] शब्दविशेषे इति द्वितीयोऽर्थः ।

का[illegible] हरिः अम्बुधिमध्यमग्नां काम् उज्जहार ? आग-

आमन्त्रयस्व वनमग्निशिखावलीढं
तत्रापि को दहति के मदयन्ति भृङ्गान् ॥ ४६ ॥

कुन्दमकरन्दविन्दवः ।

वसति कुत्र सरोरुहसन्तति-
र्दिनकृतो ननु के तिमिरच्छिदः ।
पवनभक्षसपत्नरणोत्सुकं
पुरुषमाह्वय को जगति प्रियः ॥ ४७ ॥

केकिरणाभ्वराः, इति शब्दार्थवचनभिन्नम् ।

कीदृग् गृहं याम्यगृहङ्गतस्य
कास्त्राणमभ्यस्तरणे जनानाम् ।

सामां वेदानां निर्मलं श्रुतं कीदृक् भवति ? अग्निशिखावलीढम् अग्नि-ज्वालादग्धं वनम् आमन्त्रयस्व सम्बोधय ? तच्च वनं कः दहति ? के भृङ्गान् मदयन्ति ? ॥ ४६ ॥

अत्रोत्तरं कुन्दमकरन्दविन्दव इति । प्रथमस्य कुं पृथिवीम् । द्वितीयस्य दमकरं दमः इन्द्रियसंयमः तस्य करं जनकमित्यर्थः । तृतीयस्य दविन् अग्निमन् ! चतुर्थस्य दवः वनाग्निः, वने च वनवह्नौ च दवो दाव इच्छ्यते इति कोषः । पञ्चमस्य कुन्दमकरन्दविन्दवः कुन्दानां माघ्यकुसुमानां मकरन्दविन्दवः रसकणा इत्यर्थः ।

वसतीति । कुत्र सरोरुहाणां सन्ततिः समूहः वसति ? दिनकृतः सूर्यस्य तिमिरच्छिदः तमोहरः कः ? पवनभक्षाणां वायुभोजिनां सर्पाणामित्यर्थः ये सपत्नाः शत्रवः मयूराः तेषां रणे ध्वनौ उत्सुकं पुरुषं मेघमित्यर्थः आह्वय सम्बोधय, कः जगति प्रियः ? सर्वेषामिति शेषः ॥ ४७ ॥

अत्रोत्तरं केकिरणाभ्वरा इति । प्रथमस्य के जले इत्यर्थः । द्वितीयस्य किरणः । तृतीयस्य अभ्र मेघ ! चतुर्थस्य राः धनम् ।

भूषा कथं कण्ठ ! न ते नु पृष्टे
मुक्ताकलापैरिति चोत्तरं किम् ॥४८॥ हाराविनावः ।

कवयो वद कुत्र कीदृशाः कठिनं किं विदितं समन्ततः ।
अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः ॥४९
गिरिसारमुषाः, इति शब्दार्थलिङ्गवचनविभक्तिभिन्नम् ।

मेघात्यये भवति किं सुभगावगाहं
का वा विडम्बयति चारणमल्लवेश्याः ।
दुर्वारवीर्य्यविभवस्य रणे भवेत् कः
काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥५०॥ सरोजराजयः ।

कीदृगिति । याम्यगृहं गतस्य यमालयं प्रस्थितस्य गृहं कीदृक् ? जनानाम् अम्भस्तरणे जलोत्तरणे काः त्राणम् ? हे कण्ठ ! ते तव भूषा कथं न इति मुक्ताकलापैः पृष्टे सति किम् उत्तरम् ? ॥४८॥

अत्रोत्तरं हाराविनावः । प्रथमस्य हारावि हाहाकारशब्द-युक्तमित्यर्थः । द्वितीयस्य नावः तरण्यः । तृतीयस्य हे हाराः ! वः युष्मान् विनेत्यर्थः ।

कवय इति । कुत्र कवयः कीदृशाः ? समन्ततः कठिनं विदितं किम् ? अधुना तव वैरियोषितां शत्रुकामिनीनां काः विहाय हृदि प्रबलः तापः भवतीति शेषः ? ॥ ४९ ॥

अत्रोत्तरं गिरिसारमुषा इति । प्रथमस्य गिरि वाचि । द्वितीयस्य सारम् । तृतीयस्य उषाः प्रभातकाला इत्यर्थः, दिवारात्रं तासां हृदयं सन्तप्तं स्यात् केवलम् उषाकाले किञ्चिन्निद्रागमात् स्वास्थ्यमिति भावः ।

मेघात्यय इति । मेघात्यये वर्षावसाने इत्यर्थः किं सुभगावगाहं भवति ? का वा चारणमल्लवेश्याः विडम्बयति विफलाः करोतीत्यर्थः । दुर्वारः वीर्य्यविभवः पराक्रमशक्तिः यस्य तथाभूतस्य पुंसः रणे कः

पृच्छति शिरोरुहो मधुमथनं
मधुमथनस्तं शिरोरुहस्य।
कः खलु चपलतया भुवि विदितः
का ननु यानतया भुवि विदिताः ॥ ५१ ॥

केशवनौकाः, इति शब्दार्थलिङ्गवचनभिन्नम्।

न भवति मलयस्य कीदृशी भूः
क इह कुचं न बिभर्त्ति कं गता श्रीः।
भवदरिनिवहेषु कास्ति नित्यं
बलमथनेन विपद् व्यधायि केषाम् ॥५२॥ विपन्नगानाम्।

भवेत्? तरणिप्रभाभिः सूर्यकिरणैः काः स्मेरसुभगाः विकसद्वदनमनोहारिण्यश्च भवन्तीति शेषः? ॥ ५० ॥

अत्रोत्तरं सरोजराजय इति। प्रथमस्य सरः सरोवरं स्वच्छसलिलत्वादिति भावः। द्वितीयस्य जरा वार्द्धक्यम्। तृतीयस्य जयः। चतुर्थस्य सरोजराजयः कमलपङ्क्तयः।

पृच्छतीति। शिरोरुहः केशः मधुमथनं विष्णुं, मधुमथनः विष्णुः शिरोरुहस्य पृच्छति आमन्त्रयति कथमिति शेषः? भुवि पृथिव्यां चपलतया चञ्चलतया कः खलु विदितः? काः यानतया भुवि विदिताः? गवीति पाठे गवि पृथिव्यामित्यर्थः ॥५१॥

अत्रोत्तरं केशवनौका इति। प्रथमस्य केशव इति, द्वितीयस्य केश इति, तृतीयस्य वनौका जलौका इत्यर्थः। चतुर्थस्य नौकाः।

नेति। मलयस्य पर्वतभेदस्य भूः कीदृशी न भवति? इह जगति कः कुचं स्तनं न बिभर्त्ति? श्रीः कं गता? भवतः तव अरिनिवहेषु शत्रुसमूहेषु का नित्यं सततम् अस्ति? बलमथनेन इन्द्रेण केषां विपत् व्यधायि जनिता? ॥ ५२ ॥

अत्रोत्तरं विपन्नगानाम्। प्रथमस्य विपन्नगा सर्परहिता।

समयमिह वदन्ति कं निशीथं
शमयति कान् वद वारिवाहवृन्दम् ।
वितरति जगतां मनःसु कीदृङ्
मुदमतिमात्रमयं महातडागः ॥५३॥ अरविन्दवान् ।

इति शब्दार्थविभक्तिवचनभिन्नम् ।

कीदृक्षं समिति बलं निहन्ति शत्रुं
विष्णोः का मनसि मुदं सदा तनोति ।
तुच्छं सत्परधिमुखं निगद्यते किं
पक्षत्वैः सममपमानमेव केषु ॥५४॥ अभिमानिषु ।

द्वितीयस्य ना पुरुषः । तृतीयस्य अम् विष्णुम् । चतुर्थस्य विपत् । पञ्चमस्य नगानां पर्वतानां पक्षच्छेदनादिति भावः ।

समयमिति । इह जगति कं समयं निशीथं वदन्ति ? वारिवाहवृन्दं मेघवृन्दं कान् शमयति । अयं महातडागः जगतां मनःसु अतिमात्रं कीदृङ्मुदं वितरति ? ॥५३॥

अत्रोत्तरम् अरविन्दवान् । प्रथमस्य अरविं सूर्यरहितम् । द्वितीयस्य दवान् वनाग्नीन् । तृतीयस्य अरविन्दवान् कमलवान् ।

कीदृक्षमिति । समिति युद्धे कीदृक्षं बलं सैन्यं शत्रुं निहन्ति ? का सदा विष्णोः मनसि मुदम् आनन्दं तनोति विस्तारयति ? किं परधिमुखं तूष्णुखं तुच्छं विफलमित्यर्थः सत् निगद्यते कथ्यते ? केषु जनेषु अपमानमेव अवश्यमेव परकृतमिति भावः पक्षत्वैः समं मृत्युतुल्यमित्यर्थः ? ॥५४॥

अत्रोत्तरम् अभिमानिषु । प्रथमस्य अभि निर्भयम् । द्वितीयस्य मा लक्ष्मीः । तृतीयस्य अनिषु वाणरहितम् । चतुर्थस्य अभिमानिषु अभिमानवत्सु ।

घनसमये शिखिषु स्यान्नृत्यं कीदृक्षु किं घनात् पतति।
प्रावृषि कस्य न गमनं मानसगमनाय कीदृशा हंसाः ॥५५

समुत्सुकमनसः।

इति शब्दार्थलिङ्गवचनभिन्नम्। इति प्रभिन्नकजातिः।

अर्थमात्रैकभेदेन भिन्नं बध्नन्ति केचन।
सुकुमारधियस्तच्च विदग्धैर्नादृतं यथा॥५६॥
आनन्दयति कोऽत्यर्थं सज्जनानिव भूतले।
प्रबोधयति पद्मानि तमांसि च निहन्ति कः॥५७॥

मित्रोदयः।

अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये!।

घनेति। घनसमये वर्षाकाले कीदृक्षु कीदृशेषु शिखिषु नृत्यं स्यात्? घनात् मेघात् किं पतति? प्रावृषि वर्षासु कस्य गमनं न? हंसाः मानसगमनाय कीदृशाः? ॥ ५५ ॥

अत्रोत्तरं समुत्सुकमनस इति। प्रथमस्य समुत्सु सानन्देषु। द्वितीयस्य कं जलम्। तृतीयस्य अनसः शकटस्य। चतुर्थस्य समुत्सुकमनसः उत्कण्ठितचेतसः।

अर्थेति। केचन सुकुमारधियः कोमलमतयः जनाः अर्थमात्रैकभेदेन केवलार्थभेदेनेत्यर्थः भिन्नं वाक्यमिति शेषः बध्नन्ति रचयन्ति। तच्च विदग्धैः विज्ञैः तथा नादृतम्॥ ५६ ॥

आनन्दयतीति। कः भूतले सज्जनानिव अत्यर्थम् आनन्दयति? कः पद्मानि प्रबोधयति विकासयति तमांसि च निहन्ति?॥ ५७ ॥

अत्रोत्तरं मित्रोदय इति। प्रथमस्य मित्राणां सुहृदाम् उदयः अभ्युन्नतिः। द्वितीयस्य मित्रस्य सूर्यस्य उदयः।

अटवीति। हे प्रिये! कीदृशी अटवी अरण्यं प्रायः बाहु-

प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥ ५८ ॥

मदनवती।

भिन्नाववश्यं कर्त्तव्यौ शब्दार्थौ प्रश्नकोविदैः।
लिङ्गादिषु यथाशक्ति भेदमाहुर्विपश्चितः ॥ ५९ ॥

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
प्रथमः परिच्छेदः।

---

विशेषणं विशेष्यञ्च यत्र प्रश्ने विधीयते।
भेद्यभेदकमाहुस्तं प्रश्नं प्रश्नविदो यथा ॥ १ ॥
कीदृक् किं स्यान्न मर्त्यानां हितं स्वेच्छाविहारिणाम्।
गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् ॥ २ ॥ विमत्सरः।

त्येन दुर्गमा भवति? कीदृशी कान्ता प्रियस्य सुरतोत्सवं तनोति? ॥ ५८ ॥

उत्तरं मदनवती। प्रथमस्य मदनास्मदृच्छपूर्णेत्यर्थः। द्वितीयस्य कामवती।

भिन्नाविति। प्रश्नकोविदैः प्रश्नविदग्धैः शब्दार्थौ अवश्यं भिन्नौ कर्त्तव्यौ। विपश्चितः विद्वांसः लिङ्गादिषु यथाशक्ति भेदम् आहुः कथयन्ति ॥ ५९ ॥

इति प्रथमः परिच्छेदः।

---

विशेषणमिति। यत्र प्रश्ने विशेषणं विशेष्यञ्च विधीयते, प्रश्नविदः पण्डिताः तं प्रश्नं भेद्यभेदकं यथा आहुः कथयन्ति ॥ १ ॥

कीदृगिति। स्वेच्छाविहारिणां मर्त्यानां कीदृक् किं वस्त्विति शेष. हितं न स्यात्? कीदृशः पुमान् परेषां गुणैः अत्यर्थम् अतिशयेन मोदते? ॥ २ ॥

अगस्त्येन पयोराशेः कियत् किं पीतमुज्झितम् ।
त्वया वैरिकुलं वीर ! समरे कीदृशं कृतम् ॥ ३ ॥

सकलङ्कम्, इति भेद्यभेदकजातिः ।

दीर्घवृत्तेन यत् पृष्टमुत्तरं कियदक्षरम् ।
तदोजस्वीति विख्यातमूर्जितं चेति केचन ॥ ४ ॥

कामिन्याः स्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः
कन्दर्पैकविलासनित्यवसतेः कीदृक् पुमान् वल्लभः ।
हेलाकृष्टकृपाणपाटितगजानीकात् कुतस्तेऽरयः
श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥५॥

समरतः ।

अत्रोत्तरं विमत्सरः । प्रथमे विमत् पक्षियुक्तं सर इति विशेषणसहितं विशेष्यमुक्तम् । द्वितीये विगतो मत्सरः अन्यशुभद्वेषः यस्य तादृशः, अत्र केवलं विशेषणमुक्तम् ।

अगस्त्येनेति । अगस्त्येन मुनिना पयोराशेः समुद्रस्य कियत् किं पीतम् उज्झितम् उद्गीर्णम् ? हे वीर ! त्वया समरे युद्धे वैरिकुलं कीदृशं कृतम् ? ॥ ३ ॥

अत्रोत्तरं सकलङ्कम् । सकलं कं जलमिति प्रथमस्य । सकलङ्कं कलङ्कयुक्तमिति द्वितीयस्य । अत्र प्रथमे सविशेषणं विशेष्यं, द्वितीये केवलं विशेषणम् ।

दीर्घवृत्तेनेति । दीर्घवृत्तेन दीर्घपद्येन यत् पृष्टं किन्तु उत्तरं कियदक्षरं अल्पाक्षरमित्यर्थः तत् ओजस्वीति विख्यातम्, ऊर्जितञ्च इति केचन आहुरिति शेषः ॥ ४ ॥

कामिन्या इति । स्तनयोर्भारेण मन्थरगतेः मन्दगामिन्याः लीलया विलासेन चलती चक्षुषी यस्याः तथोक्तायाः कन्दर्पस्य एकः मुख्यः यः विलासः तस्य नित्यवसतेः कामिन्याः कीदृक् पुमान् वल्लभः

दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः
का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः ।
स्वच्छन्दं नवगल्लकीकवलनैः पम्पासरोमज्जनैः
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः ॥ ६ ॥

कुञ्जराः, इत्यौजम्बिजातिः ।

उपमादिरलङ्कारो बहुधा परिकीर्त्तितः ।
यत्तेन कथ्यते सार्द्धं सालङ्कारं तदुच्यते ॥ ७ ॥

प्रियः ? ते तव अरयः शत्रवः श्वासेन दीर्घनिःश्वासेन यः आयासः श्रमः तेन विशुष्कं कण्ठकुहरं येषां तथाभूताः जीवार्थिनः प्राणलाभार्थिनः सन्तः हेलया अवज्ञया आक्रष्टेन कृपाणेन असिना पाटितं निहतं गजानीकं हस्त्यारोहसैन्यं यत्र तथाभूतात् कुतः कस्मात् स्थानात् निर्यान्ति पलायन्ते ? ॥ ५ ॥

अत्रोत्तरं समरतः । समं तुल्यं रतं रतिशक्तिर्यस्य तादृश इति प्रथमस्य । समरतः संग्रामादिति द्वितीयस्य ।

दैत्यारातिरिति । असौ दैत्यारातिः नारायणः वराहवपुषा अम्बुधेः समुद्रात् काम् उज्जहार ? का रूपं विनिहन्ति ? को मधोर्दैत्यविशेषस्य या वधूः नारी तस्याः वैधव्ये वैधव्यव्रताचरणे दीक्षागुरुः ? के विन्ध्याद्रिवने विन्ध्यपर्वतकानने नवगल्लकीनाम् अभिनवगजप्रियवृक्षविशेषाणां कवलनैः ग्रसनैः भक्षणैरित्यर्थः तथा पम्पा नाम यत् सरः सरोवरं तत्र मज्जनैः अवगाहनैः अभिमता या क्रीडा विहारः तया अभिरामं सुन्दरं यथा तथा स्थिताः स्वच्छन्दं वसन्ति ? ॥ ६ ॥

अत्रोत्तरं कुञ्जराः । कुं पृथिवीमिति प्रथमस्य । जरा इति द्वितीयस्य । अः विष्णुरिति तृतीयस्य तस्य मधुसूदनत्वादिति भावः ; कुञ्जराः हस्तिन इति चतुर्थस्य ।

उपमादिरिति । उपमादिः अलङ्कारः बहुधा परिकीर्त्तितः

कल्याणवाक् त्वमिव किं पदमत्र कान्तं
सद्भूपतेस्त्वमिव कः परितोषकारी ।
कः सर्वदा शुभगतिस्त्वमिवातिमात्रं
भूत्याश्रितः कथय पालितसर्वभूतः ॥ ८ ॥ शङ्करः ।

सूर्य्यस्य का तिमिरकुञ्जरवृन्दसिंही
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ।
पार्थस्य कीदृगरिदावहुताशनोऽभूत्
का मालतीकुसुमदाम हरस्य मूर्द्ध्नि ॥ ९ ॥

भागीरथी, रूपकं सालङ्कारजातिः ।

कथितः । यत्नेन साङ्गं सह उपमादिनेति शेषः यत् कथ्यते तत् सालङ्कारम् उच्यते ॥ ७ ॥

कल्याणवागिति । त्वमिव कल्याणवाक् शुभवादी शुभप्रतिपादकश्च अत्र जगति किं पदं कान्तं लोकानां प्रियमित्यर्थः ? त्वमिव सद्भूपतेः सुराज्ञः कः परितोषकारी ? त्वमिव कः सर्वदा शुभगतिः शुभवाहनः धर्मगतिश्च अतिमात्रं अत्यर्थं भूत्या भस्मना सम्पदा च, भूतिर्भस्मनि सम्पदीत्यमरः । आश्रितः तथा पालिताः सर्वे लोकाः भुवनानि जनाश्च येन तथाभूतः ? ॥ ८ ॥

अत्रोत्तरं शङ्करः । शं मङ्गलमिति प्रथमस्य । करः राजस्वमिति द्वितीयस्य । शङ्करः शिव इति तृतीयस्य । अलङ्कारश्चात्र उपमा श्लेषमूला ।

सूर्य्यस्येति । सूर्य्यस्य तिमिराण्येव कुञ्जरवृन्दानि हस्तिसमूहाः तेषां सिंही नाशकारिणीति भावः का ? सत्यस्य सुकृतमेव वारिधिः समुद्रः तस्य चन्द्रलेखा का ? पार्थस्य अर्जुनस्य कीदृक् अरिरेव दावः वनं तस्य हुताशनः अग्निः अभूत् ? हरस्य मूर्द्ध्नि शिरसि मालतीकुसुमदाम का ? ॥ ९ ॥

अत्रोत्तरं भागीरथी । भा प्रभा इति प्रथमस्य । गीर्वाक् इति

लघुवृत्तेन यत् पृष्टं प्रभूताक्षरमुत्तरम्।
सकौतुकमितीच्छन्ति तद्विदस्तदिदं यथा॥ १०॥
के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियो नक्तमाह्वय।
नृत्यभूः कीदृशी रम्या नदी कीदृग् घनागमे॥ ११॥
अगाधवारिपूरजनिततरङ्गा।
का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते।
असेव्यः कीदृशः स्वामी को निहन्ति निशातमः॥१२॥
कुमुदवनबान्धवोदयः, इति सकौतुकजातिः।

द्वितीयस्य। रथीति तृतीयस्य। भागीरथीति चतुर्थस्य। अत्र रूप कमलङ्कारः।

लघुवृत्तेनेति। लघुवृत्तेन क्षुद्रपद्येन यत् पृष्टम्, उत्तरञ्च प्रभूताक्षरं बह्वक्षरं, तद्विदः तज्ज्ञा जनाः तत् इदं यथा सकौतुकम् इति गच्छन्ति॥ १०॥

के इति। के स्थिराः? के स्त्रीणां प्रियाः? कः अप्रियः? नक्तं रात्रिम् आहूय सम्बोधय? कीदृशी नृत्यभूः नाट्यशाला रम्या? घनागमे वर्षाकाले नदी कीदृक्? ॥ ११॥

अत्रोत्तरम् अगाधवारिपूरजनिततरङ्गा। अगाः पर्वता इति प्रथमस्य। धवाः भर्त्तार इति द्वितीयस्य। रिपुः शत्रुरिति तृतीयस्य। रजनि! इति चतुर्थस्य। ततरङ्गा विस्तृतरङ्गनव्यापारैर्युक्ता इति पञ्चमस्य। अगाधेन अतलस्पर्शेन प्रभूतेनेति यावत् वारिपूरेण जलराशिना जनितः उत्पादितः तरङ्गः यस्याः तथाभूतेति षष्ठस्य।

केति। विष्णुना का कृता? योषितां कीदृक् कः प्रशस्यते आद्रियते? कीदृशः स्वामी असेव्यः? कः निशातमः निहन्ति? ॥१२॥

अत्रोत्तरं कुमुदवनबान्धवोदयः। कुः पृथिवी तस्याः मुत् आनन्द इति प्रथमस्य। अवनवान् धवः रक्षणकारी पतिरिति

प्रश्नवर्णश्रुतेस्तुल्यं यत्र स्यादुत्तरं वचः ।
प्रश्नोत्तरसमन्तज्ज्ञाः प्राहुस्तत् श्रूयतां यथा ॥ १३ ॥

कन्दर्पं मदजनकं प्राहुः काचघटी गठिताच्छतमेह ।
इत्यादि प्रश्ने युक्तं यद्ब्रूत तदुत्तरमाशु विचिन्त्य ॥ १४ ॥

पथिकस्तिष्ठति कष्टं विरही नाविक आस्ते तत्कृतरक्षः ।
इत्यादि प्रश्ने युक्तं यद्ब्रूहि तदुत्तरमुत्तमपूरुष ! ॥ १५ ॥

इति प्रश्नोत्तरसमजातिः ।

यस्मिन्नुत्तरमुच्चार्य्य प्रश्नस्तस्यैव पृच्छ्यते ।
पृष्टप्रश्नं तदिच्छन्ति प्रश्नोत्तरविदो यथा ॥ १६ ॥

द्वितीयस्य । अदयः निष्ठुर इति तृतीयस्य । कुमुदवनानां बान्धवः चन्द्रस्तस्य उदय इति चतुर्थस्य ।

प्रश्नेति । प्रश्नवर्णस्य प्रश्नाक्षरस्य श्रुतेः तुल्यं यत्र वचः उत्कृष्टम् उत्तरं स्यात्, तद् प्रश्नोत्तरसमं तज्ज्ञाः यथा आहुः तद् श्रूयताम् ॥ १३ ॥

कन्दर्पमिति । कन्दर्पं मदजनकं प्राहुः, अत्र प्रश्नः कन्दर्पमिति, उत्तरं कन्दर्पमिति, काचघटी पात्रविशेषः इह अच्छतमा निर्मलतमा गठितेति प्रश्नः, काचघटी काचनिर्मिता घटीति उत्तरम् । अन्यत् सुगमम् ॥ १४ ॥

पथिक इति । पथि मार्गे कः कष्टं तिष्ठतीति प्रश्ने पथिकः विरहीत्युत्तरं, तेन कृता रक्षा यस्य तादृशः नावि नौकायां कः आस्ते तिष्ठतीति प्रश्ने नाविकः कर्णधार इति उत्तरम् । अन्यत् सुगमम् ॥ १५ ॥

यस्मिन्निति । यस्मिन् उत्तरम् उच्चार्य्य कथयित्वा तस्यैव उत्तरस्य प्रश्नः पृच्छावचनं पृच्छ्यते, प्रश्नोत्तरविदः तद् पृष्टप्रश्नं यथा इच्छन्ति ॥ १६ ॥

लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः।
पौष्णे द्विरदवृन्दाय वनाली कीदृशी हिता ॥ १७ ॥
कासारसङ्गिता।
चाटय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः।
कथय त्वरितं के स्युर्नौकाया वाहनोपायाः ॥ १८ ॥
केनिपाताः, इति पृष्टप्रश्नजातिः।
कथयामुकमित्यादि भङ्ग्या यत्रोत्तरं भवेत्।
भग्नोत्तरं तदिच्छन्ति काकुमात्रेण गोपितम् ॥१९॥
भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम्।

लक्ष्मणेति। लक्ष्मणा सुलक्षणवती इति उत्तरं यत्र, तत्र कीदृशः प्रश्नः स्यात्? पौष्णे द्विरदवृन्दाय हस्तियूथाय कीदृशी वनाली वनराजिः हिता? ॥ १७ ॥

अत्रोत्तरं कासारसङ्गिता। सा रसङ्गिता रसवती का? इत्यत्र लक्ष्मणा सुलक्षणवतीत्युत्तरम्। द्वितीये कासारः सरसी तेन सङ्गिता।

चाटय इति। चाटयः च वा तु हि इत्यादयः इति यत्र उत्तरं स्यात्, अथ तत्र कीदृशः प्रश्नः? नौकाया वाहनोपायाः के स्युः? त्वरितं कथय ॥ १८ ॥

अत्रोत्तरं के निपाताः। निपाताः अव्ययशब्दाः के? इति प्रश्ने चाटय इत्युत्तरं, द्वितीये के जले निपतन्तीति तथोक्ताः कर्णकुक्षाटय इत्यर्थः।

कथयेति। अमुकं कथय इत्यादि भङ्ग्या विपर्यस्तेऽर्थः यत्र उत्तरं भवेत्, तत् काकुमात्रेण गोपितं गूढं भग्नोत्तरम् इच्छन्ति बुधा इति शेषः ॥ १९ ॥

भवत इति। भवत इव तव इव कस्य जनस्य अभ्यन्तरम् अन्तः-

काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥२०॥
वीरे सक्रुधि रिपूणां नियतं का हृदयशालिनी भवति ।
नभसि प्रस्थितजलदे का राजति देव ! वद तारा ॥२१॥

इति भग्नोत्तरजातिः ।

यत् पृष्टं प्रश्नवाक्ये स्यादादिमध्यान्तसंस्थितम् ।
उत्तरं तत् त्रिधा प्रोक्तमादिमध्यान्तसंस्थितम् ॥ २२ ॥
भ्रमरस्थितः कीदृशो भवतितरां विकसितः पद्मः ।
ज्योतिषि कः कीदृशः प्रायो भुवि पूज्यते लोकैः ॥ २३ ॥

करणम् अतिस्वच्छम् अतिनिर्मलम् अगाधम् अतिशिशिरम् अति-शीतलञ्चेत्यर्थः, इति प्रश्ने न कस्यापीति विपर्य्यासेन उत्तरम् । काव्यामृतरसे मग्नः त्वमिव सदा सरसः सुरसिकः कः ? कथय इत्यत्रापि न कोऽपीति काका विपर्य्यासेनोत्तरम् ॥ २० ॥

वीरे इति । नियतं सक्रुधि सक्रोधे वीरे रिपूणां शत्रूणां का सामादिप्रयुक्तिरिति शेषः हृदयशालिनी भवति ? हे देव ! प्रस्थित-जलदे चलितमेघे नभसि आकाशे का तारा राजति ? वद । अत्र न कापीति काका विपर्य्यासेनोत्तरम् ॥ २१ ॥

यदिति । प्रश्नवाक्ये यत् आदिमध्यान्तसंस्थितं पृष्टं स्यात्, तत् तस्येत्यर्थः आदिमध्यान्तसंस्थितं त्रिधा उत्तरं प्रोक्तम् ॥२२॥

भ्रमरस्थित इति । विकसितः पद्मः कीदृशो भवतितराम् अतिशयेन भवति ? अत्रोत्तरं भ्रमरस्थितः भ्रमराणां स्थितः । कीदृशो भ्रमराणां स्थितो भवतितरामिति प्रश्ने भ्रमरस्थितः भ्रमेण भ्रान्त्या चाञ्चल्येनेति भावः स्थित इत्युत्तरं पद्मे पद्मे भ्रमराणाम् अधिष्ठानस्था-योगादिति भावः । भुवि पृथिव्यां लोकैः ज्योतिषि कीदृशः प्रायः बाहुल्येन पूज्यते ? अत्रोत्तरं ज्योतिषिकः ज्योतिर्विद् इति ॥२३॥

प्रभवः को गङ्गाया नगपतिरतिसुभगमनुष्यधरः ।
के सेव्यन्ते सेवकसार्थैरर्थैर्नरैरर्थ्यते ॥ २४ ॥

मध्योत्तरजातिः ।

अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः ।
नीलादिकोपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥ २५ ॥
गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो नगतः ।
यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥ २६ ॥

इति मध्योत्तरजातिः ।

प्रभव इति । गङ्गायाः प्रभवः उत्पत्तिस्थानं कः ? इति प्रश्ने अतिसुभगपट्टकुधरः नगपतिः शैलराज इत्युत्तरम् अथच गङ्गायाः प्रभवः कः विष्णुः, विष्णुपादाब्जसम्भूते गङ्गे त्रिपथगामिनीत्युक्तेः स च नगपतिः नगेन पर्वतेन गोवर्द्धनेनेति यावत् पाति रक्षति गोकुलमिति व्युत्पत्त्या गोवर्द्धनधर इत्यर्थः अतिसुभगस्य पट्टकस्य वादित्रविशेषस्य धरः । अत्यर्थम् अर्थपरैः धनलुब्धैः सेवकसार्थैः के सेव्यन्ते ? इति प्रश्ने के राजान इत्यर्थः सेव्यन्ते इत्युत्तरम् ॥ २४ ॥

अयमिति । वनितावदनस्य सदृशः कीदृशः ? अयम् उदितः हिमरश्मिश्चन्द्र इत्युत्तरम् । कस्य, प्रत्यक्षतः अध्यक्षतः नीलादिकानाम् उपलम्भः ज्ञानं स्फुरति ? अक्ष्णोस्तरं कस्य सूर्यस्य प्रत्यक्षत इति ॥ २५ ॥

गैरिकेति । प्रायेण गैरिकमनःशिलादि कुतः उत्पद्यते ? नगतः पर्वतादित्युत्तरम् । यः खलु स्थानात् स्थितेः मर्यादाया इति यावत् न चलति स कीदृक्षः कीदृशः उक्तः ? पुरुष इत्युत्तरम् ॥ २६ ॥

कस्मिन्वसन्ति वद मीनगणा विकल्पं
किं वा पदं वदति किं कुरुते विवस्वान् ।
विद्युल्लतावलयवान् पथिकाङ्गनानाम्
उद्वेजको भवति कः खलु वारिवाहः ॥ २७ ॥

शब्दः प्रभूगत इति प्रचुराभिधायी
कीदृग् भवेद्वदत शब्दविदो विचिन्त्य ।
कीदृग् बृहस्पतिमते विदिताभियोगः
प्रायः पुमान् भवति नास्तिकवर्गमध्यः ॥ २८ ॥

इत्यन्योत्तरजातिः ।

पदान्तरादिसम्बन्धात् प्रश्नवाक्येऽपि संस्थितम् ।
कथितापह्नुतिः सा स्याल्लक्ष्यते यत्र नोत्तरम् ॥ २९ ॥

कस्मिन्निति । मीनगणाः मत्स्यचयाः कस्मिन् वसन्ति ? वद । अत्रोत्तरं कस्मिन् जले इति जलवाचकः किम्शब्द इति बोध्यम् । किं वा पदं विकल्पं वदति कथयति ? अत्रोत्तरं वापदमिति । विवस्वान् सूर्यः किं कुरुते इति प्रश्ने किं जलमित्यर्थः, आदित्याज्जायते वृष्टिरिति श्रुतेः । कः खलु वारिवाहः मेघः पथिकाङ्गनानां प्रोषितभर्तृकाणाम् उद्वेजकः विरहोद्दीपकः भवति ? विद्युल्लतावलयवान् इत्युत्तरम् ॥ २७ ॥

शब्द इति । प्रभूगतः प्रपूर्वकभूधातुं गतः प्रचुराभिधायी प्रचुरबोधकः कीदृक् शब्दः भवेत् ? हे शब्दविदः ! विचिन्त्य वदत । अत्रोत्तरं प्रभूत इति । हे बृहस्पतिमते बृहस्पतिबुद्धे ! कीदृक् पुमान् विदिताभियोगः ज्ञाताशय इत्यर्थः प्रायः बाहुल्येन नास्तिकवर्गमध्यः भवति ? अत्रोत्तरं बृहस्पतिमते अविदिताभियोगः अज्ञातबृहस्पतिमत इत्यर्थः नास्तिकवर्गाणां मध्यगतः भवतीत्यर्थः ॥ २८ ॥

पदान्तरेति । पदान्तरादेः अन्यपदादेः सम्बन्धात् संयोगात्

पृथ्वीसम्बोधनं कीदृक् कविना परिकीर्तितम् ।
केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥ २० ॥

कस्य मरौ दुरधिगमः कमले कः कथय विरचितावासः ।
कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टाः ॥ २१ ॥

इति कथितापह्नुतिजातिः ।

यत्र भङ्गस्य वैषम्यं विषमं तन्निगद्यते ।
वृत्तनामोत्तरं यत्र प्रश्नं तं वृत्तनामकम् ॥ २२ ॥

कीदृग्वनं स्यान्न भयाय पृष्टे तदुत्तरं तस्य च कीदृशस्य ।

प्रश्नवाक्येऽपि संस्थितम् उत्तरं यत्र न कथ्यते, सा कथितापह्नुतिः स्यात् ॥ १९ ॥

पृथ्वीति । पृथ्वीसम्बोधनं कीदृक् कविना परिकीर्तितम् ? अत्रोत्तरं को इना इति पदच्छेदे को पृथिवि ! इना कामिनेत्यर्थः । इदं विश्वं केन मोहितम् ? केन विष्णुनेत्युत्तरम् । केन प्रायः यशः आप्यते, केन विष्णुना सूर्येण आत्मना राज्ञा इत्यादिकशब्दस्य नानार्थत्वात् बोद्धव्यम् ॥ २० ॥

कस्येति । मरौ मरुदेशे कस्य दुरधिगमः अप्राप्तिः ? अत्रोत्तरं कस्य जलस्य । कः कमले पद्मे विरचित आवासो येन सः कः ? कथय । अत्रोत्तरं कः ब्रह्मा । यद्वा कमले जले कः विरचितावासः ? अत्रोत्तरं कः विष्णुः जलधिशायित्वादिति भावः । चामुण्डा काली कैः तुष्यति ? अत्रोत्तरं कैः शिरोभिः असुराणामिति शेषः । ते तव रिपवः शत्रवः कुतः भ्रष्टाः ? वद । अत्रोत्तरं कुतः पृथिवीत इति ॥ २१ ॥

यत्रेति । यत्र भङ्गस्य पदच्छेदस्य वैषम्यं वैपरीत्यं भवतीति शेषः, तत् विषमं निगद्यते कथ्यते । यत्र वृत्तनाम पद्यनाम उत्तरे यस्य तं वृत्तनामकं प्रश्नं विदुरिति शेषः ॥ २२ ॥

कीदृगिति । कीदृक् वनं भयाय न स्यात् ? पृष्टे यत् उत्तरं

वाच्यं भवेदीदृ[illegible] कं पाथियोदेति [illegible] कोऽर्च्चनीयः ॥ २३

अहिंसमहिमः ।

प्रायः कार्य्ये न मुह्यन्ति नराः सर्व्वत्र कीदृशाः ।
नाधा इति भवेच्छब्दो नौकायां वद कीदृशः ॥ २४ ॥

सावधानाः, इति विषमजातिः ।

गतक्लेशायासा विमलमनसः कुत्र मुनयः
तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता ।
कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभिः
बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ २५ ॥

शिखरिणी ।

भवेदिति शेषः तस्य कीदृशस्य उत्तरस्य ईदृग्जातं नवनतम् अन्त्यं वाच्यं प्रतिपाद्यं भवेत् ? कः गवि पृथिव्याम् अर्च्चनीयः कम् अधियेते ? ॥ २३ ॥

अस्योत्तरम् अहिंसमहिमः । अहिंसमिति प्रथमस्य, अस्य मेतत्तदमिति द्वितीयस्य । अहिम् अनन्तनागम् अः विष्णुरिति तृतीयस्य । अत्र अहिंसमित्यस्य हि परित्यागेन भङ्गस्य वैषम्यं बोद्धव्यमिति ।

प्राय इति । सर्व्वत्र कार्य्ये कीदृशाः नराः प्रायः न मुह्यन्ति न विपद्यन्ते इत्यर्थः । कीदृशः नाधा इति शब्दः नौकायाः नौकाबोधकः भवेत् ? वद ॥ २४ ॥

अस्योत्तरं सावधाना इति ।

गतेति । मुनयः कुत्र गतक्लेशायासाः विमलमनसः स्वस्थाः सन्तः तपस्यन्ति ? सुररिपूणाम् असुराणां रिपोः विष्णोरित्यर्थः दयिता का ? कवीनां प्रेयः अतिप्रियं नवभिर्लघुभिर्युतैरष्टभिर्गुरुभिः

उरसि मुरभिदः का गाढमालिङ्गिताऽऽस्ते
सरसिजमकरन्दामोदिता नन्दने का ।
गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यैः
गुरुभिरपि कृता का छन्दसां वृत्तिरम्या ॥ २६ ॥

मालिनी, इति वृत्तनामजातिः ।

एकमेवोत्तरं यत्र सुश्लिष्टत्वाद् द्विधा भवेत् ।
सुप्तिङन्तप्रभेदेन नामाख्यातं तदुच्यते ॥ २७ ॥

वर्णैः स्फुटं घटितः रचितः बन्धो रचना यस्य तादृशं वृत्तं पद्यं किं किन्नामधेयं स्यात् ? हे बुधाः ! कथयत ॥ २५ ॥

अत्रोत्तरं शिखरिणी । शिखरिणि पर्वते इति प्रथमस्य । ई लक्ष्मीरिति द्वितीयस्य । शिखरिणीति तृतीयस्य, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ।

उरसीति । का मुरभिदः मुरारेः उरसि वक्षसि गाढमालिङ्गिता आस्ते तिष्ठति ? का नन्दने स्वर्गोद्याने सरसिजानां पद्मानां मकरन्देन आमोदिता ? गिरिसमलघुवर्णैः सप्तभिर्लघुभिरित्यर्थः तथा अर्णवाख्यातिसंख्यैः समुद्रनामसंख्यातैः सप्तभिरित्यर्थः गुरुभिः कृता छन्दसां वृत्त्या वर्त्तनेन निबद्धा इति यावत् रम्या चतुष्पदीति शेषः का ? ॥ २६ ॥

अत्रोत्तरं मालिनी । मा लक्ष्मीरिति प्रथमस्य । अलिनी भ्रमरीति द्वितीयस्य, मालिनीति तृतीयस्य, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ।

एकमिति । यत्र एकमेव उत्तरं सुप्तिङन्तप्रभेदेन सुश्लिष्टत्वात् शोभनश्लेषनिबन्धनत्वात् द्विधा द्विविधप्रश्नपूरकमिति यावत् भवेत्, तत् नामाख्यातम् उच्यते ॥ २७ ॥

समरशिरसि सैन्यं कीदृशं दुर्निवारं
विगतघननिशीथे कीदृशी व्योम्नि शोभा ।
कमपि विधिवशेन प्राप्य योग्याभिमानं
अखिलजगदनिन्द्यं दुर्जनः किं करोति ॥२८॥

अभिभवति ।

पदमनन्तरवाचि किमिष्यते कपिपतिर्विजयी ननु कीदृशः ।
परगुणं गदितुं गतमत्सराः कुरुत किं सततं भुवि सज्जनाः ॥२९

अनुसरामः । लट् ।

वदति राम इति स्वजघन्यजं
वसति कुत्र सदालसमानसः ।

समरेति । समरशिरसि संग्रामे कीदृशं सैन्यं दुर्निवारम् ? । विगता घना यस्मात् तादृशः निशीथः यस्मिन् तथोक्ते कीदृशे व्योम्नि आकाशे शोभा ? दुर्जनः अखिलजगताम् अनिन्द्यं योग्याभिमानं युक्तसम्मानं कमपि जनं विधिवशेन दुर्भाग्यक्रमेण प्राप्य स्वशमानी- येत्यर्थः किं करोति ? ॥ २८ ॥

अत्रोत्तरम् अभिभवति । अभि निर्भयमिति प्रथमस्य, भवतीति द्वितीयस्य, अभिभवतीति तृतीयस्य ।

पदमिति । अनन्तरवाचि पदं किम् इष्यते ? कीदृशः कपिपति- र्वानरराजः विजयी ननु विजयवान् खलु ? हे गतमत्सराः विद्वेष- रहिताः सज्जनाः ! भुवि पृथिव्यां परगुणं गदितुं कीर्त्तयितुं सततं किं कुरुत ? ॥ २९ ॥

अत्रोत्तरम् अनुसरामः । अनु पश्चादिति प्रथमस्य, सराम इति द्वितीयस्य, अनुसराम इति तृतीयस्य ।

वदतीति । रामः स्वजघन्यजं स्वकनिष्ठं कनिष्ठभ्रातरमित्यर्थः इति वदति किं सम्बोध्येति शेषः ? सदा अलसमानसः कुत्र वसति

अपि च शक्रसुतेन तिरस्कृतो
रविसुतः किमसौ विदधे त्वया ॥४०॥ अनुजग्रहे।

भवति गमनयोग्या कीदृशी भूरथानां
किमतिमधुरमन्नं भोजनान्ते प्रदेयम्।
प्रियतम ! वद नीचामन्त्रणे किं पदं स्यात्
कुमतिकृतविवादाश्चक्रिरे किं समर्थैः ॥ ४१ ॥
समादधिरे। लिट्।

वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः।
तव सुहृदो गुणनिवहैरिपुनिवहं किं नु कर्त्तारः ॥४२॥
अवमन्तारः।

जन इति शेषः ? अपि च शक्रसुतेन वालिना तिरस्कृतः निर्जितः असौ रविसुतः सुग्रीवः त्वया किं विदधे ? ॥ ४० ॥

अत्रोत्तरम् अनुजग्रहे। हे अनुज कनिष्ठ ! इति प्रथमस्य। ग्रहे इति द्वितीयस्य। अनुजग्रहे अनुगृहीत इति तृतीयस्य।

भवतीति। कीदृशी भूः भूमिः रथानां गमनयोग्या भवति ? भोजनान्ते अतिमधुरं किम् अन्नं प्रदेयम् ? हे प्रियतम ! नीचानाम् आमन्त्रणे सम्बोधने किं पदं स्यात् ? समर्थैः जनैः कुमत्या कुबुद्ध्या कृतविवादाः किं चक्रिरे ? ॥ ४१ ॥

अत्रोत्तरं समादधिरे। समेति प्रथमस्य, दधीति द्वितीयस्य, रे इति तृतीयस्य, समादधिरे इति क्रियापदं चतुर्थस्य।

वदतेति। अनुत्तमवचनं किमिति वदत ? उच्चैः ध्वनिः उच्यते स कीदृक्षः कीदृशः ? तव सुहृदः गुणनिवहैः गुणसमूहैः रिपुनिवहं शत्रुसमूहं किं नु कर्त्तारः ? ॥ ४२ ॥

अत्रोत्तरम् अवमन्तारः। अवमं नीचं कुत्सितमिति प्रथमस्य, तारः उच्चैःस्वरः इति द्वितीयस्य, अवमन्तारः अवज्ञातारः इति तृतीयस्य।

कीदृक् तोयं दुस्तरं स्यात्तितीर्षोः
का पूज्यास्मिन् खड्गमामन्त्रय[illegible]मा ।
दृष्ट्वा धूमं दूरतो मानविज्ञाः
किं कर्त्तास्मि प्रातरेवाश्रयाश्रम् ॥ ४३ ॥

अनुमाताासे । लुट्लकारः ।

कामुकाः स्युः कया नीचाः सर्वः कस्मिन् प्रमोदते ।
अर्थिनः ! प्राप्य पुण्याहं करिष्यध्वे वसूनि किम् ॥४४॥

दास्यामहे ।

को दुःखी सर्वकार्य्येषु किं भयार्थस्य वाचकम् ।
यो यत्र विरतो नित्यन्ततः किं स करिष्यति ॥ ४५ ॥

प्रयास्यति । लृट् ।

कीदृगिति । तितीर्षोः तर्त्तुमिच्छोर्जनस्य दुस्तरं तोयं कीदृक् स्यात् ? अस्मिन् जगति का पूज्या ? खड्गम् आमन्त्रयस्व सम्बोधय ? हे मानविज्ञाः अनुमानविदः ! दूरतः दूरे प्रातरेव धूमं दृष्ट्वा आश्रयाशम् अग्निं किं कर्त्तास्मि ? ॥ ४३ ॥

अत्रोत्तरम् अनुमातासे । अनु अल्पमिति प्रथमस्य, मातेति द्वितीयस्य, असे इति तृतीयस्य, अनुमातासे इति क्रियापदं चतुर्थस्य ।

कामुका इति । नीचाः जनाः कया कामुकाः स्युः ? सर्वो जनः कस्मिन् प्रमोदते उल्लसति ? हे अर्थिनः ! धनिनः ! पुण्याहं पुण्यतिथिं प्राप्य वसूनि धनानि किं करिष्यध्वे ? ॥ ४४ ॥

अत्रोत्तरं दास्यामहे । दास्येति प्रथमस्य । महे उत्सवे इति द्वितीयस्य । दास्यामहे इति तृतीयस्य ।

क इति । कः सर्वकार्य्येषु दुःखी ? भयार्थस्य वाचकं बोधकं किम् ? यः यत्र कार्य्ये विषये वा नित्यं विरतः, स ततः विषयात् किं करिष्यति ? ॥४५॥

विद्यान्त इति समानार्थः प्रश्नः कोऽचिरयति मुद्रां किम् ।
रविसुतो रः स्यात् तं सुजनः किं करोतु वद ॥४६॥

सन्त्यजतु ।

मेघात्यये भवति का सुभगावगाहा
वृत्तं वसन्ततिलकं कियदक्षराणाम् ।
भो भोः कदर्य्यपुरुषा ! विषुवद्दिने च
वित्तञ्च नः सुबहु तत् क्रियतां किमेतत् ॥ ४७ ॥

नदीयताम् । लोट् ।

अत्रोत्तरं प्रयास्यति । प्रयासो परिश्रमोति प्रथमस्य, अस्तीति द्वितीयस्य, प्रयास्यति प्रस्थास्यते इति तृतीयस्य ।

विद्यान्त इति । विद्यान्त इति अस्येत्यर्थः समानार्थः प्रश्नः कः ? किं वस्तु मुद्राम् अचिरयति चिरस्थां कर्त्तुं न पारयतीत्यर्थः ? कथमपि यदि कोपः स्यात् तदा सुजनः तं किं करोतु वद ॥४६॥

अत्रोत्तरं सन्त्यजतु । सन्तीति प्रथमस्य । अजतु वाचात्यतिरिक्तमित्यर्थः द्वितीयस्य, वाचया मुद्रायाः चिरस्थायित्वादिति भावः । सन्त्यजतु सम्यक् त्यजत्विति तृतीयस्य ।

मेघात्यये इति । मेघात्यये वर्षापगमे का सुभगावगाहा भवति ? कियदक्षराणां वृत्तं पद्यं वसन्ततिलकम् ? भो भोः कदर्य्यपुरुषाः ! विषुवद्दिने मकरविषुवसंक्रान्त्यामित्यर्थः न अस्माकं यत् बहु प्रभूतं वित्तं धनमस्तीति शेषः एतत् किं क्रियताम् ? ॥ ४७ ॥

अत्रोत्तरं नदीयताम् । नदीति प्रथमस्य । यतां यमानां चतुर्दशानामिति यावत्, यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औडुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ इति यमस्य चतुर्दशसंख्यकीर्त्तनादिति भाव इति द्वितीयस्य । न दीयतामिति तृतीयस्य ।

का माद्यति मकरन्दैः तनयं कमसूत जनकराजसुता ।
कथय कृषीवल! यस्य पक्षं किमचीकरस्त्वमपि ॥ ४८ ॥

अलीलवम् ।

पृच्छति पुरुषं कथं केऽस्यां समभूवन् वज्रकृतपद्मतयः ।
बहुभयदेशं जिगमिषुरेकाकी वार्यते च कथम् ॥ ४९ ॥

मानवनगाः । लुङ् ।

किमकरवमहं हरिर्महीध्रं
स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतमवदनेन पीयते कः
परिणतबिम्बफलोपमः प्रियायाः ॥ ५० ॥ अधरः ।

केति । का मकरन्दैः पुष्पमधुभिः माद्यति ? जनकराजसुता सीता कं तनयम् असूत प्रसूतवती ? हे कृषीवल ! कर्षक ! त्वमपि पक्वं यस्य किम् अचीकरः ? कथय ॥ ४८ ॥

अत्रोत्तरम् अलीलवम् । अली भ्रमरीति प्रथमस्य, लवमिति द्वितीयस्य, अलीलवं लुनन्तं कृतवन्तमित्यर्थः प्रैरिरमिति तृतीयस्य ।

पृच्छतीति । पुरुषं पृच्छति कथम् ?. अस्यां भूमाविति शेषः वज्रेण कुलिशेन कृता छिन्ना पद्मतिः पद्ममूलं येषां तथाभूताः के समभूवन् ? बहुभयदेशं जिगमिषुः गन्तुमिच्छुः एकाकी जनः कथं वार्यते निषिध्यते च ? ॥ ४९ ॥

अत्रोत्तरं मानवनगाः । मानवेति प्रथमस्य, नगाः पर्वता इति द्वितीयस्य, हे नवम नवीनेत्यर्थः मा गाः न गच्छ इति तृतीयस्य ।

किमिति । अहं हरिः कृष्णः गवां पशूनां हितं विधित्सुः चिकीर्षुः स्वभुजबलेन निजबाहुबलेन महीध्रं पर्वतं गोवर्द्धनमिति यावत् किम् अकरवं कृतवान् ? प्रियायाः कान्तायाः परिणतं परिपक्वं

परिहरति भयात्तवाहितः किं
कमथ कदापि न विन्दतीह भीतः ।
कथय किमकरोरिमां धरित्रीं
नृपतिगुणैर्नृपते ! स्वयं त्वमेकः ॥ ५१ ॥

समरञ्जयम् । लङ् ।

कीदृक् सेना भवति रणे दुर्वारा
वीरः कस्मिन् स्पृहयति लक्ष्मीमिच्छन् ।
का सम्बुद्धिर्भवति भुवः संग्रामे
किं कुर्वीध्वं सुभटजना भ्रातृव्यान् ॥ ५२ ॥

पराजयेमहि ।

रक्तमिति भावः बिम्बफलं तदुपमः तत्सदृशः कः प्रियतमस्य कान्तस्य वदनेन पीयते ? ॥ ५० ॥

अत्रोत्तरम् अधरः हृतवानसीत्यर्थ इति प्रथमस्य अधरः दशन-च्छद इति द्वितीयस्य ।

परिहरतीति । तव अहितः शत्रुः भयात् किं परिहरति परित्यजति ? इह संसारे भीतः अहित इति शेषः कदापि कं न विन्दति न लभते ? हे नृपते ! स्वयम् एकस्त्वं नृपतिगुणैः राजगुणैः इमां धरित्रीं पृथिवीं किम् अकरोः कृतवानसि ? कथय ॥ ५१ ॥

अत्रोत्तरं समरञ्जयम् । समरमिति प्रथमस्य, जयमिति द्वितीयस्य, समरञ्जयं सम्यक् रञ्जितवानसीत्यर्थ इति तृतीयस्य ।

कीदृगिति । कीदृक् सेना रणे दुर्वारा भवति ? लक्ष्मीमिच्छन् वीरः कस्मिन् स्पृहयति कामयते ? भुवः पृथिव्याः सम्बुद्धिः सम्बोधनं का भवति ? हे सुभटजनाः सुवीरवर्गाः ! संग्रामे भ्रातृव्यान् शत्रून् किं कुर्वीध्वम् ? ॥ ५२ ॥

कंसारातेर्वद गमनं केन स्यात्
कस्मिन् हृष्टिं लभते महेच्छुः।
कं सर्वेषां शुभकरमूचुर्धीराः
किं कुर्य्यास्त्वं सुजन! सशोकं लोकम्॥ ५३॥

विनोदयेयम्। लिङ्।

वारणेन्द्रो भवेत् कीदृक् प्रीतये भृङ्गसंहतेः।
यद्यवश्यं तदास्मै किमकरिष्यमहं धनम्॥ ५४॥

समदायः।

काले देशे यथायुक्तं नरः कुर्वन्नुपैति काम्।

अत्रोत्तरं पराजयेमहि। परा श्रेष्ठेति प्रथमस्य, जये इति द्वितीयस्य, महीति तृतीयस्य, पराजयेमहीति चतुर्थस्य।

कंसारातेरिति। कंसारातेः कृष्णस्य गमनं केन स्यात्? महेच्छुर्जनः कस्मिन् हृष्टिं लभते ददाति? धीराः विद्वांसः कं सर्वेषां शुभकरम् ऊचुः? हे सुजन! त्वं सशोकं शोकार्त्तं लोकं किं कुर्य्याः? ॥ ५३॥

अत्रोत्तरं विनोदयेयम्। विना पक्षिणा गरुडेनेति यावदिति प्रथमस्य। उदये अभ्युन्नताविति द्वितीयस्य। अयं शुभावहं विधिमिति तृतीयस्य। अयः शुभावहो विधिरित्यमरः। विनोदयेयं सान्त्वयेयमिति चतुर्थस्य।

वारणेन्द्र इति। कीदृक् वारणेन्द्रः हस्ती भृङ्गसंहतेः भ्रमर-समूहस्य प्रीतये भवेत्? यदि अवश्यं तदा अस्मै अनाय अहं धनं किम् अकरिष्यम्? ॥ ५४॥

अत्रोत्तरं समदायः। समदं मदस्राविणमास्यं मुखं यस्य तथोक्त इति प्रथमस्य, समदायः सम्यक् दत्तमकरिष्य इति द्वितीयस्य।

काले इति। नरः काले देशे यथायुक्तं कुर्वन् काम् उपैति

भुक्तवन्तावलं स्फीतं किमकमकरिष्यताम् ॥ ५५ ॥

अहास्यताम्। लृङ्। इति नामाख्यातजातिः।

ज्ञेयन्तार्क्यं दृशा तार्क्यं सौत्रं सूत्रोत्तरैस्तथा।

शाब्दीयं शब्दसंज्ञाभिः शास्त्रजं शास्त्रभाषया ॥ ५६ ॥

हिमानीखगिती स्यातां कीदृशौ शशिभास्करौ।

कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसम्मतः ॥ ५७ ॥

अभावः।

के प्रवीणाः कुतो हीनं जीर्णं वासोऽशुमांश्च कः।

निरन्तरविणवो वाह्यं योगाचाराश्च कीदृशाः ॥ ५८ ॥

विज्ञानवादिनः। तार्क्यजातिः।

प्राप्नोति? अलम् अतिशयेन स्फीतं यथा तथा भुक्तवन्तौ जनौ अकं किम् अकरिष्यताम्? यद्वा भुक्तवन्तौ अलमत्यन्तं चेदिति शेषः तदा अकं किम् अकरिष्यताम् ॥ ५५ ॥

अत्रोत्तरम् अहास्यताम्। अहास्यतां हास्यास्पदताभावमिति प्रथमस्य, अहास्यताम् अत्यक्ष्यतामिति द्वितीयस्य।

ज्ञेयमिति। तार्क्यदृशा तर्कदृष्ट्या ज्ञेयं वस्तु तार्क्यम्। तथा सूत्रोत्तरैः सूत्राणाम् उत्तरैः ज्ञेयं सौत्रम्। शब्दसंज्ञाभिः ज्ञेयं शाब्दीयम्। शास्त्रभाषया शास्त्रस्य परिभाषया ज्ञेयं शास्त्रजम् ॥ ५६ ॥

हिमानीति। हिमानी हिमसंहतिः तथा खगिती आच्छादितौ शशिभास्करौ कीदृशौ स्याताम्? कः पूज्यः? कः प्रमाणेभ्यः हेतुभ्यः प्रभाकरस्य सम्मतः न? ॥ ५७ ॥

अत्रोत्तरम् अभावः। अभौ भा दीप्तिः तद्रहिताविति प्रथमस्य। अः विष्णुरिति द्वितीयस्य। अभाव इति तृतीयस्य, प्रभाकरमते अभावस्य पदार्थत्वं प्रमाणैर्निराकृतमिति भावः।

के इति। प्रवीणाः बहुदर्शिनः के? जीर्णं वासः कुतः कस्मात्

को नयति जगदशेषं क्षयमथ बिभराम्बभूव कं विष्णुः ।
नीचः कुत्र सगर्वः पाणिनिसूत्रञ्च कीदृशम् ॥ ५९ ॥

यमोगमने ।

किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी न भवति ।
नीचः केन सगर्वः सूत्रं चन्द्रस्य कीदृशम् ॥ ६० ॥

विशेषणमेकार्थेन । इति सौत्रजातिः ।

जीर्णं परित्यज्य भवेदिति शेषः ? अंशुमान् कः ? कीदृशाः योगाचाराः योगिनः बाह्यं वह्निर्भवं वस्तुजातं निराकरिष्णवः अमन्येनेति शेषः ? ॥ ५८ ॥

अत्रोत्तरं विज्ञानवादिनः । विज्ञा इति प्रथमस्य । नवात् नवीनात् वस्त्रादिति शेषः, नवीनं वस्त्रमासाद्य जीर्णं परित्यजतीति भावः इति द्वितीयस्य । इनः सूर्य्य इति तृतीयस्य । विज्ञानवादिनः विशिष्टतत्त्वदर्शिन इत्यर्थ इति चतुर्थस्य ।

क इति । कः अशेषं जगत् क्षयं नयति ? अथ किञ्च विष्णुः कं बिभराम्बभूव ? कुत्र सति नीचो जनः सगर्वः भवतीति शेषः ? पाणिनिसूत्रञ्च कीदृशं कीदृशम् ? ॥ ५९ ॥

अत्रोत्तरं यमोगमने । यम इति प्रथमस्य, अगं पर्वतमिति द्वितीयस्य, धने इति तृतीयस्य, समस्तं चतुर्थस्य ।

किमिति । विशेष्यनिष्ठं विशेष्याधीनं किं स्यात् ? पूरणी संख्या का न भवति ? नीचः केन सगर्वः ? चन्द्रस्य सूत्रं कीदृशं कीदृशम् ? वदत ॥ ६० ॥

अत्रोत्तरं विशेषणमेकार्थेन । विशेषणमिति प्रथमस्य, एकेति द्वितीयस्य, अर्थेन धनेनेति तृतीयस्य, विशेषणमेकार्थेनेति समस्तं चतुर्थस्य ।

न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते।
लादेशानां नवानाञ्च तिङां किं नाम कथ्यताम्॥ ६१॥
परस्मैपदम्।

सततं श्लाघते कस्मै नीचो भुवि किमुत्तमम्।
कर्त्तर्य्यपि रुचादीनां धातूनां किं पदं भवेत्॥ ६२॥
आत्मनेपदम्।

किमव्ययतया ख्यातं कस्य लोपो विधीयते।
ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते॥ ६३॥
स्वरितः। इति शाब्दीयजातिः।

नेति। खलः दुर्जनः कस्मै न श्लाघते न प्रशंसति? सुप्तिङन्तं किम् उच्यते? लादेशानां दशानां लकाराणां लट्प्रभृतीनां ये आदेशाः रूपाणि पूर्व्वाणीति भावः तेषां नवानां तिङां नाम किम्? कथ्यताम्॥ ६१॥

अत्रोत्तरं परस्मैपदम्। परस्मै इति प्रथमस्य, पदमिति द्वितीयस्य, परस्मैपदमिति तृतीयस्य।

सततमिति। नीचः जनः सततं कस्मै श्लाघते प्रशंसति? भुवि पृथिव्याम् उत्तमं किम्? कर्त्तरि कर्त्तृवाच्येऽपि रुचादीनां धातूनां किं पदं स्यात्?॥ ६२॥

अत्रोत्तरम् आत्मनेपदम्। आत्मने इति प्रथमस्य, पदम् उन्नतमधिकारस्थानमिति यावदिति द्वितीयस्य, आत्मनेपदमिति तृतीयस्य रोचते इति प्रयोगादिति भावः।

किमिति। अव्ययतया ख्यातं किं पदमिति शेषः? कस्य लोपः विधीयते? हे शब्दविदः! ज्ञात्वा ब्रूत, समाहारः क उच्यते?॥ ६३॥

अत्रोत्तरं स्वरितः। स्वरितः अव्ययं स्वर्गवाचकं, स्वरुत्वं

जलदात्यये भवति कः समदः
सुभगश्च किं कमधरन्मुरजित् ।
कटुतैलमिश्रितो गुड़ो नियतं
विनिहन्ति कं त्रिगुणसमदिनैः ॥ ६४ ॥
श्वासरोगम् ।

कीदृक् प्रातर्दीपवर्त्तेः शिखा स्याद्
उष्ट्रं पृच्छत्याभजन्ते मृगाः किम् ।
देवामात्ये किं गते प्रायशोऽस्मिन्
लोकः कुर्य्यान्नो विवाहं विविक्तः ॥ ६५ ॥
विभाकरभवनम् ।

श्वगन्ताक्तेत्यमर इति प्रथमस्य । इतः इदन्तवन्स इति द्वितीयस्य ।
चरितशब्देन समाहार उच्यते तृतीयस्य ।

जलदात्यये इति । जलदात्यये वर्षापगमे कः समदः भवति ?
किञ्च सुभगं शोभनं भवति ? मुरजित् कृष्णः कम् अधरत् ? कटु-
तैलेन सार्षपतैलेन मिश्रितो गुड़ः त्रिगुणसप्तदिनैः एकविंशतिदिनै-
रित्यर्थः नियतं कं विनिहन्ति ? ॥ ६४ ॥

अत्रोत्तरं श्वासरोगम् । श्वा कुक्कुर इति प्रथमस्य, सर इति
द्वितीयस्य, अगं पर्वतं गोवर्द्धनमिति तृतीयस्य, श्वासरोगमिति
चतुर्थस्य ।

कीदृगिति । प्रातः प्रभाते दीपवर्त्तेः शिखा कीदृक् स्यात् ? उष्ट्रं
पृच्छन्ति कथमिति शेषः ? मृगाः किम् आभजन्ते आश्रयन्ति ?
देवामात्ये देवमन्त्रिणि किं गते सति प्रायशः विविक्तः विशुद्धः लोकः
अस्मिन् लोके विवाहं नो कुर्य्यात् ? ॥ ६५ ॥

अत्रोत्तरं विभाकरभवनम् । विभा विगतप्रभेति प्रथमस्य । कर-
भेति द्वितीयस्य । वनमिति तृतीयस्य । विभाकरस्य सूर्य्यस्य भवनं स्थ-

वर्ण एवोत्तरं यत्र तद्वर्णोत्तरमुच्यते।
वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम्॥ ६६॥
कः प्रभुर्भुवि विख्यातः प्रोक्तं वदति किं पदम्।
कोऽभीष्टोऽत्र दरिद्रस्य सेवन्ते के च भिक्षुभिः॥६७॥

विहाराः।

किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा।
पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः॥६८॥

कंसासुरः, इति वर्णोत्तरजातिः।

दृष्टो हरिः कं शुचि कीदृगभ्र
पृच्छत्यकः किं कुरुते सशोकः।

ऽमिति चतुर्थस्य, तथाच ज्योतिस्तत्त्वम्। गुरौ हरिस्थे न विवाह-माङ्गल्यरीतमर्गप्रहुला मुनीन्द्रा इति।

वर्ण इति। यत्र वर्ण एव उत्तरं तत् वर्णोत्तरम् उच्यते, यत्र वाक्यम् उत्तरं तत्तु वाक्योत्तरम् इति स्मृतं कथितम्॥ ६६॥

क इति। भुवि पृथिव्यां कः प्रभुः विख्यातः? किं पदं प्रोक्तं वदति बोधयति? अत्र दरिद्रस्य अभीष्टः कः? भिक्षुभिः के च सेवन्ते?॥ ६७॥

अत्रोत्तरं विहाराः। वि अव्ययम् वाक्यमित्यर्थं इति प्रथमस्य, हा इति द्वितीयस्य, रा धनमिति तृतीयस्य, विहाराः बौद्धमठा इति चतुर्थस्य।

किमिति। पयोवाहाः मेघाः किं मुञ्चन्ति वर्षन्ति? हरिवल्लभा कीदृशी? पूजायां किं पदं प्रोक्तमिति शेषः? अग्निः कः? कः रिपुः कृष्णेन हतः?॥ ६८॥

अत्रोत्तरं कंसासुरः। कं जलमिति प्रथमस्य, सा लक्ष्मीरिति द्वितीयस्य, सु इति तृतीयस्य। रः अग्निरिति चतुर्थस्य, कंसासुर इति पञ्चमस्य।

श्लोकं विधायापि किमित्युदारः
कविर्न तोषं समुपैति भूयः ॥ ६८ ॥
अगमकमकरोदिति ।
लक्ष्मीधरः पृच्छति कीदृशः स्यात्
नृपः सपत्नैरपि दुर्निवारः ।
अकारि किं ब्रूहि नरेण सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥ ६९ ॥
समजनितनयः, इति वाक्योत्तरजातिः ।
इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
द्वितीयः परिच्छेदः ।

दधाविति । हरिः कं दधौ ? गुचि योग्यं अगं मेघः आकाशं वा कीदृक् ? अकं दुःखं पृच्छति कथमिति शेषः ? सशोकः किं कुरुते ? उदारो महान् कविः श्लोकं विधायापि भूयः अधिकं तोषं किमिति न समुपैति न प्राप्नोति ? ॥ ६८ ॥

अत्रोत्तरम् अगमकमकरोदिति । अगं पर्वतमिति प्रथमस्य, अकं जलदाच्छन्नमिति द्वितीयस्य, अक इति तृतीयस्य, रोदितीति चतुर्थस्य, अगमकम् अयौक्तिकम् अकरोत् इति शेषोरिति पञ्चमस्य ।

लक्ष्मीधर इति । लक्ष्मीधरः पृच्छति कीदृशो नृपः सपत्नैः शत्रुभिरपि दुर्निवारः दुर्जयः स्यात् ? नरेण सम्यक् स्वकीयं पितृत्वम् आरोपयितुं पिता भवितुमित्यर्थः किम् अकारि ? ब्रूहि कथय ॥ ६९ ॥

अत्रोत्तरं समजनितनयः । समं योग्यं यथा तथा जनितः अनुष्ठित इत्यर्थः नयः नीतिर्येन तथोक्तः यथानीतिकार्य्यकारीत्यर्थः इति प्रथमस्य । तनयः पुत्रः समजनि उत्पादित इत्यर्थ इति द्वितीयस्य ।

इति द्वितीयपरिच्छेदः ।

श्लोक एवोत्तरं यत्र तत् श्लोकोत्तरमुच्यते ।
खण्डोत्तरं भवेदर्धश्लोकात् पादात्तदुत्तरम् ॥ १ ॥

कान्त्वद्धेऽर्चयन्ति स्फुटरुचि निशि किं कीदृशी दुःखिनी स्त्री
कीदृक् चक्रं सदास्ते क्व च तव विजयी प्रावृषं कीदृशं खम् ।
क्ष्मामाहुः प्रेतयोग्यां कथय सुकृतिनः कीदृशाः स्युः पुमांसः
कं धत्ते कञ्च धत्ते गगनतलमलं प्रेक्षणीयं जनानाम् ॥ २ ॥

प्लक्षः कीदृक् चकास्ति स्फुटनवकुसुमाशोकमासाद्य कालं
किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किम्भवश्च ।
किं नेत्रप्रावृतिः स्यादतिशयलघवः के च को व्रीहिभेदः
प्रायेण प्रावृषेण्याः प्रियतमदिवसाः कीदृशाः कीदृशाः स्युः ॥३॥

श्लोक इति । यत्र श्लोक एव उत्तरं तत् श्लोकोत्तरम् उच्यते । अर्द्धश्लोकात् उत्तरं खण्डोत्तरम् । पादात् श्लोकचतुर्थांशात् उत्तरं तदुत्तरं पादोत्तरमित्यर्थः भवेत् ॥ १ ॥

कमिति । के जना कं देवम् अर्चयन्ति ? निशि रजन्यां स्फुटरुचि उज्ज्वलप्रभं किम् ? दुःखिनी स्त्री कीदृशी ? चक्रं सदा कीदृक् आस्ते तिष्ठति ? तव विजयः क्व च कुत्र ? प्रावृषं वार्षिकमित्यर्थः खमाकाशं कीदृशम् ? प्रेतयोग्यां काम् आहुः ? सुकृतिनः पुण्यवन्तः पुमांसः कीदृशाः स्युः ? जनानाम् अलम् अत्यर्थं प्रेक्षणीयं गगनतलं कं धत्ते ? कञ्च धत्ते ? ॥ २ ॥

प्लक्ष इति । स्फुटानि नवानि कुसुमानि येषां तादृशाः अशोकाः यत्र तथाभूतं कालं वसन्तमित्यर्थः आसाद्य प्राप्य प्लक्षः वटः कीदृक् सन् चकास्ति राजते ? अम्बुवाहाः मेघाः किं मुञ्चन्ति ? भवतः अरिनिवहे शत्रुसमूहे किम्भवः संज्वरः ? नेत्राणां प्रावृतिरावरणं यस्मात् तादृशं किं स्यात् ? अतिशयलघवः के ?

अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।
कदम्बकन्दलीकन्दरजःपक्ष्मलवायवः ॥ ४ ॥

कुर्य्यादुद्वेगवन्तं कमपि निशि सरः कीदृशं कास्ति वक्त्रे
वक्त्रा निन्द्यः कया स्यात् परिषदि नियतं मन्त्रसम्बोधनं किम् ।
वर्णोपान्त्यक्रमं तु: किमसुररिपुणा नन्दगोपालयेऽस्तं
कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः ॥ ५ ॥
कीदृक् कस्येह बन्धुः स्वकृतमपहरत् प्रेयसी का त्वयान्ते
कीदृग् भीतिं विधत्ते धनुरवनिरुहां कश्चिदामन्त्रयस्व ।

श्लोकभेदः कः ? हे प्रियतम ! प्रावृषेण्याः वार्षिकाः दिवसाः प्रावेण्य कीदृशाः कीदृशाश्च स्युः ? ॥ २ ॥

अस्योत्तरम्, अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।

कदम्बकन्दलीकन्दरजःपक्ष्मलवायवः ॥ ४ ॥ अं विष्णुं जना इति प्रथमस्य, भं नक्षत्रमिति द्वितीयस्य, अहावेति तृतीयस्य, अराः चक्रान्तर्गतदारवयवाः यस्मिन् तत् अरीति चतुर्थस्य, वाहौ इति पञ्चमस्य, घनि मेघयुतमिति षष्ठस्य, चितामिति सप्तमस्य, वराः श्रेष्ठा इति अष्टमस्य, कदं कं जलं ददातीति कदं मेघमिति नवमस्य, वकमिति दशमस्य । दली दलयुक्त इति एकादशस्य, कं जलमिति द्वादशस्य, दरजः भयजनित इति त्रयोदशस्य, पक्ष्म नेत्रलोम इति चतुर्दशस्य, लवाः विन्दव इति पञ्चदशस्य, यव इति षोडशस्य, पूर्वार्द्धं सप्तदशस्य, उत्तरार्द्धम् अष्टादशस्य । पूर्वार्द्धस्यार्थः—अञ्जनस्य कज्जलस्य आभेव आभा येषां तादृशा महान्तः ये वारिवाहाणां मेघानाम् ओघाः समूहाः तैः निचितं व्याप्तम् अम्बरम् आकाशं येषु तादृशाः । उत्तरार्द्धस्यार्थः—कदम्बानां कन्दलीकन्दानाञ्च रजोभिः परागैः पक्ष्मलाः युक्ताः दलर्थः वायवः येषु तथाभूताः ।

कुर्य्यादित्यादि । कीदृशं सरः निशि कमपि जनमित्यर्थः विरहिणमिति भावः उद्वेगवन्तम् उत्कण्ठितं कुर्य्यात् ? वक्त्रे वदने का

दैत्यः कंसद्विषा कः क्षयं विनिहतो मद्रदः कः प्रतीतः
कीदृक्कीदृग्वसन्तः प्रियतम ! भवतः प्रीतये नित्यमस्तु ॥ ६ ॥

कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥ ७ ॥

इति श्लोकोत्तरजातिः ।

अस्ति ? परिषदि सभायां कया वक्ता निन्द्यः स्यात् ? नियतं सततं मन्दस्य सम्बोधनं किम् ? कं वर्णानाम् अक्षराणाम् उपान्त्यं चरमा- क्षरपूर्वमित्यर्थः अधुः ? नन्दगोपस्य आलये अश्वरिपुणा कृष्णेन किम् अस्तं निक्षिप्तं पटुश्वासमिति शेषः ? कः प्रालेयाद्रेः हिमवतः पुत्र्याः गौर्याः इत्यर्थः कुचकलशयोः लुठन्तौ पाणी यस्य तादृशः एणाङ्कमौलिश्चन्द्रशेखरस्य ? इह कस्य बन्धुः कीदृक् ? का प्रेयसी वयान्ते प्रलयकाले सकलं निजस्थितिमित्यर्थः अहरत् ? कीदृक् बहुः भीतिं विधत्ते जनयति ? अवनिरुहां वृक्षाणां मध्ये कञ्चित् आमन्त्रयस्व सम्बोधय ? । को दैत्यः कंसद्विषा विष्णुना विनिहतः ? कः मद्रदः प्रतीतः प्रसिद्धः ? हे प्रियतम ! कीदृक् कीदृक् वसन्तः भवतः प्रीतये नित्यम् अस्तु ? कथय ॥ ५ ॥ ६ ॥

अथोत्तरं, कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥ ७ ॥

कोकि चक्रवाकविशिष्टमिति प्रथमस्य, लाला इति द्वितीयस्य, अपवाचा अशुद्धवचसा इति तृतीयस्य, अलस इति चतुर्थस्य, हकार- मिति पञ्चमस्य, अनः शकटमिति षष्ठस्य, हर इति सप्तमस्य, अशोकः तव इति अष्टमस्य, कालीति नवमस्य, मत्तादिति दशमस्य, तालि वृक्ष- भेद इति एकादशस्य, मधुरिति द्वादशस्य, अस्वनः स्वशब्दरहित इत्यर्थ इति त्रयोदशस्य । पूर्वार्द्धं चतुर्दशस्य, परार्द्धं पञ्चदशस्य । पूर्वार्द्धस्यार्थः—कोकिलानाम् आलापेन रवेण वाचालैः शब्दितैः सहकारैः आम्रतरुभिः मनोहरः । परार्द्धस्यार्थः—अशोकानां

का चक्रे हरिणा धने कृपणधीः कीदृक् भुजङ्गेऽस्ति किं
कीदृक् कुम्भसमुद्भवस्य जठरं कीदृग् यियासुर्वधूः ।
श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ् नभो निर्मलं
क्षोणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ८ ॥
कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखम् ।
वृद्धं पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां

स्तवकेषु आलीनानां मत्तानाम् अलीनां भ्रमराणां मधुरः मनोहरः ध्वनिर्यत्र तादृशः ।

केति । हरिणा का चक्रे कृता ? धने विषये कृपणानां धीः बुद्धिः कीदृक् ? भुजङ्गे किम् अस्ति ? कुम्भसमुद्भवस्य जठरम् उदरं कीदृक् ? यियासुः जिगमिषुः पतिकुलमिति शेषः वधूः कीदृक् ? कीदृक् श्लोकः सुकृतिनाम् अभीप्सितः ? निर्मलं नभः आकाशं कीदृक् ? क्षोणीं पृथ्वीम् आह्वय, किं सर्वगं सर्वव्यापि उदितम् उक्तम् ? रात्रौ सरः सरोवरं कीदृशम् ? ॥ ८ ॥

अत्रोत्तरं कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखम् । कुः पृथ्वी तस्याः मुत् आनन्द इति प्रथमस्य, अवनपरा रक्षणपरेति द्वितीयस्य, गरं विषमिति तृतीयस्य, जिताम्भः जितजलमिति चतुर्थस्य, विहितगमा विशेषेण हितः गमः यात्रा यस्याः तादृशीति पञ्चमस्य, गमकः अर्थबोधक इति षष्ठस्य, अकमुक् कं जलं मुञ्चतीति कमुक् तन्न भवतीति तथोक्तमिति सप्तमस्य, धरे पृथिवीति अष्टमस्य, खमाकाशमिति नवमस्य, समस्तं दशमस्य । समस्तस्यार्थः—कुमुदवनानां कुमुदसमूहानां परागैः रञ्जितं शोभितम् अम्भः जलं यस्य तथाभूतं तथा विहिताः कृताः गमागमाः इतस्ततः सञ्चाराः यैः तथोक्तैः कोकैः चक्रवाकैः मुग्धा मनोहारिणी रेखा आभोगो यस्य तादृशम् ।

वृद्धमिति । वृद्धं पृच्छति सम्बोधयति कथमिति शेषः ?

कीदृग्वीरजनश्च कोऽतिगहनः सम्बोधयाशङ्कितम् ।
का धात्री जगतो बृहस्पतिवधूः कीदृक् कविः स्वादृतः ।
कोऽर्थः किं भवता हतं रिपुकुलं कीदृक् नरो वासरे ॥९॥
विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम् ।

इति खण्डोत्तरजातिः ।

त्रिभक्ति वदनेन किं क इह सत्त्वपीड़ाकरं
कुलं भवति कीदृशं गलितयौवनं योषिताम् ।
बभार हरिरम्बुधेरुपरि काश्च केन स्तुते
हतः कथय कस्त्वया नयपतेर्भयं कीदृशात् ॥ १० ॥

विषमपादनिकुञ्जगताहितः ।

मुरारेः नारायणस्य शयनं किम्? का नृणां रूपं हन्ति? वीरजनः कीदृक्? अतिगहनः अतिदारुण इत्यर्थः कः? अशङ्कितं सम्बोधय? जगतः धात्री धारयित्री का? बृहस्पतिवधूः गुरुभार्या तारेत्यर्थः कीदृक्? कविः क कस्य आदृतः आदरवान्? अर्थः कः? भवता रिपुकुलं किं हतम्? वासरे दिवसे नरः कीदृक्? ॥ ९ ॥

खण्डोत्तरं विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम् । विकच केशशून्य इति प्रथमस्य, वारि जलमिति द्वितीयस्य, जरा वार्द्धक्यमिति तृतीयस्य, आजिसमुत् संग्रामानन्दीति चतुर्थस्य, भवः संसारः शिवश्चेति पञ्चमस्य, उच्छलितः अशङ्कित इति षष्ठस्य, भूरिति सप्तमस्य, इः कामः तत्परा कामासक्तेति अष्टमस्य, गवि वाचीति नवमस्य, रा धनमिति दशमस्य, जितमिति एकादशस्य, समस्तं द्वादशस्य । समस्तस्यार्थः—विकचानां प्रस्फुटितानां वारिजानां पद्मानां राजिभ्यः समुद्भवैः समुत्पन्नैः उच्छलितैः प्रसृतैः भूरिभिः बहुभिः परागैः रजोभिः विराजितं शोभितम् ।

त्रिभक्तीति । इह जगति कः वदनेन सत्त्वानां जीवानां पीड़ा-

हरिर्वहति कान्तया क्वरिपु का मता कस्य का
कमर्चयति रोगवान् धनवती पुरी कीदृशी ।
हरिः कमधरद्बलिप्रहृतयोऽधरां किं व्यधुः
कया सदसि कस्त्वया वद जितोऽम्बुधिः कीदृशः ॥ ११ ॥
कुम्भीरमीनमकरागमदुर्गवारिः । इति पादोत्तरजातिः ।

करं किं बिभर्ति ? गलितयौवनं योषितां कुलं कीदृशं भवति ? हरिः अम्बुधेः समुद्रस्य उपरि कां बभार, त्वया केन स्तुते सति कः हतः, कीदृशात् नगपतेः पर्वतराजात् भयं भवतीति शेषः ? ॥ १० ॥

अत्रोत्तरं विषमपादनिकुञ्जगताहित इति । विषम् अपात् सर्पं इति प्रथमस्य, अनि नास्ति मीनांशको यस्य तथाभूतमिति द्वितीयस्य, कुं पृथिवीमिति तृतीयस्य, जगतां अहितः गम्भुरिति चतुर्थस्य, समस्तं ऽम्भस्य । समस्तस्यार्थः—विषमेषु उन्नतानतेषु पादेषु प्रत्यन्तपर्वतेषु, पादाः प्रत्यन्तपर्वता इत्यमरः । ये निकुञ्जाः लतादि-पिहितभूभागाः, निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे इत्यमरः । तत्र गताः स्थिताः अहयः सर्पाः यस्य तथाभूतात् ।

हरिरिति । हरिः कां वहति ? तव अरिषु शत्रुषु का अस्ति ? का कस्य मता ? रोगवान् कं देवमिति शेषः अर्चयति पूजयति ? कीदृशी पुरी धनवती भवतीति शेषः ? हरिः कम् अध-रत् ? बलिप्रहृतयः दानवीयका इति भावः धरां पृथिवीं किं व्यधुः चक्रुः ? त्वया सदसि सभायां कया कः जितः ? अम्बुधिः समुद्रः कीदृशः ? वद ॥ ११ ॥

अत्रोत्तरं कुम्भीरमीनमकरागमदुर्गवारिः । कुं पृथ्वीति प्रथमस्य, भीर्भयमिति द्वितीयस्य, रं विष्णुम् ई लक्ष्मीरिति तृतीयस्य, रमं सूर्यमिति चतुर्थस्य सूर्यं आरोग्यदत्वेन शास्त्रेषु कीर्तनादिति भावः, अकरा राजस्वहीना इति पञ्चमस्य, अगं पर्वतं गोवर्द्धनमिति षष्ठस्य,

चत्वार्य्यराणि यान्याभ्यां नेमिं पादद्वयेन च ।
लिखित्वा दक्षिणावर्त्तं चक्रं प्रश्नमवेहि मे ॥ १२ ॥

कं चौरस्य च्छिनत्ति क्षितिपतिरनघः किं पदं वक्ति कुत्सां
क्षौणीसम्बोधनं किं वदति कमलजं का च विश्वं बिभर्त्ति ।
चक्राङ्गामन्त्रणं किं कथमपि सुजनः किं न कुर्य्यादनार्य्यं
कीदृग्भोक्तुः पुरं स्यात्पयसि वद कुतो मीनपङ्क्तिर्बिभेति ॥ १३ ॥
किं स्वच्छं शारदं स्याद्वदति वृषगतिं कोऽंशुमाली पवित्रः
कोऽस्मिन् किं जीवनं काः विरचयति कविर्वक्तिसम्बोधनं किम् ।

चतुर्दलपद्म इति प्रथमस्य, गदा बाणा अरिः शक्तिरिति चरमस्य, समस्तं नवमस्य । समस्तस्यार्थः—कुम्भीराणां मीनानां मकराणाञ्च आगमेन सद्भावेनेत्यर्थः सञ्चारेणेति यावत् दुर्गाणि दुःप्रवेशानि वारीणि यस्य तथाभूतः ।

सम्प्रति चक्रबन्धमाह चत्वारीति । पादाभ्यां चत्वारि अराणि अन्तरवर्त्तिकाष्ठानि, पादद्वयेन नेमिं परिधिमिति यावत् दक्षिणावर्त्तं लिखित्वा यत्र चक्रं चक्राकृति बन्धविशेषः तं प्रश्नं मे मम सकाशा-दिति शेषः अवेहि जानीहि ॥ १२ ॥

कमिति । अनघः अपापः क्षितिपतिः राजा चौरस्य कं छिनत्ति ? किं पदं कुत्सां वक्ति बोधयति ? क्षौणीसम्बोधनं पृथिव्याः सम्बोधनं किम् ? कमलजं ब्रह्माणं वदति सम्बोधयति किमिति शेषः ? का च विश्वं जगत् बिभर्त्ति ? चक्राङ्गस्य आमन्त्रणं सम्बोधनं किम् ? सुजनः कथमपि कष्टेनापि किम् अनार्य्यं अकार्य्यं न कुर्य्यात् ? भोक्तुः भोगपरस्य राज्ञ इति शेषः पुरं नगरं कीदृक् स्यात् ? पयसि जले मीनपङ्क्तिः कुतः बिभेति ? वद ॥ १३ ॥

किमिति । किं शारदं शरत्कालीनं वस्त्विति शेषः स्वच्छं स्यात् ? वृषगतिं हरं वदति सम्बोधयति किं पदमिति शेषः ? अंशु-

नाकाङ्क्षन्ति स्त्रियः कन्तनुरसुररिपोः कीदृशी कस्य मूकः
सम्यक्प्रीतिन्तड़ागः प्रियतम ! तनुते कीदृशः कीदृशस्ते ॥ १४॥

करंकुकोककुररवलहंसकरम्बितः ।

सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

इति चक्रजातिः ।




भानौ सूर्य्यः कः ? पवित्रः कः ? अस्मिन् जगति जीवनं किम् ? कविः काः विरचयति वाङ्गसम्बोधनं किम् ? स्त्रियः कं जनं न आकाङ्क्षन्ति ? असुररिपोः विष्णोः तनुः मूर्त्तिः कीदृशी ? कस्य मूकः ? हे प्रियतम ! कीदृशः कीदृशः तड़ागः सरः ते तव सम्यक् प्रीतिं तनुते विस्तारयति ? ॥ १४ ॥

अत्रोत्तरं, करंकुकोककुररवलहंसकरम्बितः ।

सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

करं हस्तमिति प्रथमस्य, कु इति द्वितीयस्य, को पृथिवि इति तृतीयस्य, क मल्लाविति चतुर्थस्य, कुः पृथिवीति पञ्चमस्य, ररं इति षष्ठस्य, कलहम् इति सप्तमस्य, सकरं राजस्वयुतमिति अष्टमस्य बितः पाचित इति नवमस्य, सर इति दशमस्य, अज इति एकादशस्य, कः सूर्य्ये इति द्वादशस्य, अमल इति त्रयोदशस्य, मरुत् जलमिति

वर्णद्वयद्वयैकैकदलभूतदलाष्टकम् ।
सर्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिकम् ॥ १६ ॥

पुण्यात्मा वद कीदृशः सरसिजैः के मोदिताः कीदृशः
तद्वैरी गतचक्षुषः कुलमभूत कीदृक् त्वया के जिताः ।
बद्धालिः सलिलाशयः कथय भोः कीदृक् च आक्षेपवाक्
शब्दः कुत्र न तस्करादिकभयं दत्ते भवेत् प्रायशः ॥ १७ ॥

अप्सित्तं गवि कीदृशं निगदितो मुक्तः पुमान् कीदृशः
कस्मात् बिभ्यति कौशिका भुवि कृतः कीदृक् त्वया तस्करः ।

चतुर्दशस्य, गा वाच इति पञ्चदशस्य, र अग्ने इति षोडशस्य, नीरसम् अरसिकमिति सप्तदशस्य, सक्रमा उल्लोयुतेति अष्टादशस्य, अकृतः अशक्त इति ऊनविंशस्य, पूर्वार्द्धं विंशस्य, परार्द्धमेकविंशस्य । पूर्वार्द्धस्यार्थः—करङ्कुभिः जलपक्षिभेदैः कोकैः चक्रवाकैः कुररैः उत्क्रोशपक्षिभिः कलहंसैः हंसविशेषैश्च करम्बितः मिश्रितः । परार्द्धस्यार्थः—सरोजानां कमलानां कोमलाः उद्गाराः सौरभाणि येषु तादृशैः नीरैः जलैः संसक्तः सम्पृक्तः मारुतः वायुर्यस्मिन् तथाभूतः ।

वर्णेति । वर्णानां द्वयद्वयेन एकैकं प्रत्येकं दलभूतं यथाक्रमविन्यस्तं दलाष्टकम् अष्टौ दला यस्य तादृशं सर्वेषाम् उत्तराणाम् आद्यवर्णेन कृता कर्णिका पद्मबीजाधारकोषो यस्य तादृशं पद्मं स्यात् ॥ १६ ॥

पुण्यात्मेति । पुण्यात्मा जनः कीदृशः स्यादिति शेषः ? सरसिजैः पद्मैः के मोदिताः ? तव वैरी शत्रुः कीदृशः ? गतचक्षुषः अन्धस्य धृतराष्ट्रस्येत्यर्थः कुलं कीदृक् अभूत् ? यद्वा गतचक्षुषः अन्धस्य कुलं कीदृक् ? त्वया के जिताः ? बद्धालिः बद्धसेतुः सलिलाशयः जलाशयः कीदृक् ? आक्षेपवाक् नीचसम्बोधनवचनं कीदृक् ? कुत्र शब्दे दत्ते सति प्रायशः तस्करादीनां भयं न भवेत् ? ॥ १७ ॥

अप्सित्तमिति । गवि जले अप्सित्तम् अग्निः वड़वानल इत्यर्थः

हस्ती स्यान्नु कीदृशो बहुमतः शोच्यो रथः कीदृशः
कीदृक्षः पुरुषः पराप्रतिहतः कीदृक् भवेद्वासुकिः ॥ १८ ॥
अलयः अपश्यत् अबन्धः अहस्तः अगजः अहीनः,
इति पद्मोत्तरजातिः।




कीदृशम्? शुष्कः पुमान् कीदृशो निगदितः? कौशिकाः पेचकाः कस्मात् बिभ्यति भयं प्राप्नुवन्ति? भुवि पृथिव्यां त्वया तस्करः कीदृक् कृतः? कीदृशो हस्ती ननु भोः बहुमतः स्यात्? कीदृशः रथः शोच्यः? कीदृक्षः कीदृशः पुरुषः परैः शत्रुभिः अप्रतिहतः अजितः? वासुकिः नागराजः कीदृक् भवेत्? ॥ १८ ॥

अस्योत्तरं पद्मबन्धश्लोकः। अस्ति लयः ध्वंसः अधोगतिरित्यर्थः यस्य सः अथवा अः विष्णुः तत्र लयो यस्य तथाभूतः अलयः इति प्रथमस्य, पुनरलयः भ्रमरा इति द्वितीयस्य। अपश्यत् शी शयनम् अद् भोजनम् अपगते शयनभोजने यस्य तथाभूत इत्यर्थः इति तृतीयस्य, पुनरपश्यत् दर्शनशक्तिहीनमित्यर्थः यद्वा हिताहितज्ञानशून्यमित्यर्थः इति चतुर्थस्य। अरयः शत्रव इति पञ्चमस्य, पुनररयः नास्ति रयो वेगो यस्य तथाभूत इति षष्ठस्य। अररे अरे इति नीचसम्बोधनवचनमिति सप्तमस्य, पुनरररे कवाटे इति अष्टमस्य। अबन्धः आपः अम्भांसि अस्मानि इन्धनानीति यावत्

काकस्येव पदं न्यस्तं यत्तत्काकपदं मतम् ।
तिर्य्यगन्योन्यरेखाभिर्गोमूत्री द्विपदीद्वये ॥ १९ ॥

कुतः कः स्यात् कीदृक् कथय विषवैद्य ! स्फुटमिदं
रिपोः कः कीदृक्षो भवति वशगः कश्च करभः ।
प्रवीणः सम्बोध्यः सुभग ! वद कौ रत्नवचनौ
सुरूपे विख्यातिं जगति महती का गतवती ॥२०॥

नागदरतः, नागतनयः, नागरमणी, इति काकपदजातिः ।




यस्य तादृशं अशाययमित्यर्थ इति नवमस्य, पुनरबन्धः बन्धनरहित इति दशमस्य । अहस्तः दिवसादिति एकादशस्य, पुनरहस्तः हस्तशून्य इति द्वादशस्य । अगजः पर्वतज इति त्रयोदशस्य, पुनरगजः गजरहित इति चतुर्दशस्य । अहीनः अह्नानिति पञ्चदशस्य, पुनरहीनः अहीनां सर्पाणाम् इनः स्वामीति षोडशस्य ।

काकपदं गोमूत्रञ्च बन्धमाह काकस्येत्यादि । काकस्येव यत् न्यस्तं निहितं पदं तत् काकपदं मतं कथितम् द्विपदीद्वये तिर्य्यक्-वक्रभावेन अन्योन्यरेखाभिः परस्पररेखाभिः गोमूत्री भवतीति शेषः ॥ १९ ॥

कुत इति । हे विषवैद्य ! कुतः कस्मात् कः कीदृक् स्यात् ? इदं स्फुटं कथय, कीदृक्षः कीदृशः कः रिपोः शत्रोः वशगः भवति ? करभः करिशावकः कस्य ? प्रवीणः विचक्षणः सम्बोध्यः, हे सुभग ! रत्नवचनौ रत्नबोधकौ कौ शब्दाविति शेषः ? वद । का महती सुरूपे सौन्दर्य्ये जगति विख्यातिं गतवती ? ॥ २० ॥

कामाहुर्युवतीममङ्गलवती कीदृग् यक्षाणां गतिः
सम्बोध्या बत मत्स्यवेधनपरः कीदृग्भवेत्पामरः ।
कीदृग्वाल्मीकिवेश्म कोऽस्तनमुरो धत्ते सुरैरुच्यते
गीः कीदृङ्न कदापि कम्बुरहितं वाञ्छन्ति कं योषितः २१
कीदृक् पान्थकुलन्तमो हरति का किञ्चक्रसम्बोधनं
रम्या चम्पकशाखिनां कथय का कश्चोटजार्थो भवेत् ।
किं क्षिप्तं बलिवैरिणा मुररिपोः काह्वा श्मशानेऽस्ति का
क्ष्मा कीदृग् भवति स्म पूर्वमधुना कीदृक् पुनर्वर्त्तते ॥२२॥

अत्रोत्तरम् चक्रं काकपदन्यासः । नागदरतः सर्पभयात् यः अगदरतः विषापनयनौषधरतः न स ना अगदरतः विषापनयनौषधरतः भवतीति शेष इति प्रथमस्य । ना पुरुषः गतनयः नीतिभ्रष्ट इति द्वितीयस्य । नागस्य हस्तिनस्तनयः शिशुरिति तृतीयस्य, नागर सुविज्ञ नगरवासित्वादिति भाव इति चतुर्थस्य । मणी इति पञ्चमस्य । नागस्य पन्नगविशेषस्य रमणी यद्वा नगे पर्वते भवा नागी पर्वतजेत्यर्थः सा चासौ रमणी चेति नागरमणी गौरीति षष्ठस्य ।

कामिति । कां युवतीम् आहुः कथयन्ति ? कीदृक् अमङ्गलवती यक्षाणां गतिः सम्बोध्या ? मत्स्यवेधनपरः मत्स्यजीवीत्यर्थः पामरः मूर्खः कीदृक् भवेत् ? वाल्मीकेः वेश्म गृहं कीदृक् ? कः अस्तनम् उरः वक्षःस्थलं धत्ते ? सुरैः देवैः कीदृक् गीः वाक् उच्यते ? योषितः कम्बुरहितं धनरहितं कं न वाञ्छन्ति ? पान्थानां पथिकानां कुलं कीदृक् ? का तमः अन्धकारं हरति ? चक्रस्य सम्बोधनं किम् ? चम्पकशाखिनां चम्पकवृक्षाणां का रम्या कथय, कश्च शब्दः उटजार्थः भवेत् ? बलिवैरिणा कृष्णेन किं क्षिप्तम् पादाभ्यामिति शेषः ? मुररिपोर्विष्णोः आह्वा आह्वानं

अजरामशुभाचारवलिशीलविनोदिता ।
भुजङ्गमनिभासारकलिकालजनोचिता ॥२३॥

गोमूत्रजातिः ।

अ ज रा म शु भा चा र व लि शी ल वि नो दि ता
भु ज ङ्ग म नि भा सा र क लि का ल ज नो चि ता

इति गोमूत्रिकाबन्धः ।

वर्णेनैकेन वा द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ।
उत्तरैः सर्वतोभद्रं दुष्करं तदिदं यथा ॥ २४ ॥

सम्बोधनमित्यर्थः काः ? श्मशाने का अस्ति ? क्ष्मा पृथ्वी पूर्वं कीदृक् भवति स्म, अधुना पुनः कीदृक् वर्त्तते ? ॥ २२ ॥

उत्तरमजरेत्यादिगोमूत्रिकाजातिः । अजरां वार्द्धकरहिता-मिति प्रथमस्य, अशुभाचार इति द्वितीयस्य । वलिशो वाड़िशवा-निति तृतीयस्य, लवि सीतासुतौ लवकाद्विशिष्टमिति चतुर्थस्य । ना पुमानिति पञ्चमस्य । उदिता व्युत्पादिता संस्कृतेति यावदिति षष्ठस्य । भुजङ्गं विटमिति सप्तमस्य, अनि नास्ति इः कामो यस्य तादृशं कामसम्भोगरहितमित्यर्थ इति अष्टमस्य । भा दीप्ति-रिति नवमस्य । सार अयुत इति दशमस्य । कलिकेति एका-दशस्य । आलजिति द्वादशस्य । अनः शकटमिति त्रयोदशस्य । अ विष्णो इति चतुर्दशस्य । चितेति पञ्चदशस्य । पूर्वार्द्धं षोड़शस्य । परार्द्धं सप्तदशस्य । पूर्वार्द्धस्यार्थः—अजस्य रघुसुतस्य रामस्य दाशरथेः शुभाचारस्य बलेश शीलेन विनोदिता सन्तोषिता । परार्द्धस्यार्थः—भुजङ्गमनिभानां सर्पसदृशानाम् अतिखलानामित्यर्थः असाराणाम् अन्तःसाररहितानां कलिकालजनानां कलिकालोचितनराणाम् उचिता सन्तोषविधायिनीत्यर्थः ॥ २३ ॥

वर्णेनेति । वर्णेन एकेन द्वाभ्यां वा वर्णाभ्यां सर्वैर्वा सर्वदिग्-

कस्त्यागे धातुरुक्तस्तव रिपुहृदि का भूषणं के स्तनानां
को दुःखी कश्च शब्दो वदति वद शुचञ्चौ रिपू ख्यातवीर्य्यौ।
शृङ्गारी कीदृशः का रणशिरसि भयाद्भङ्गमाप्नोति सेना
का दानार्थाभिधायी शिरसि शिरसि कौ युध्यतः संप्रहृत्य॥२५

कीदृक् तोयार्थिनी स्त्री भवति मदकरः प्रायशः को दुराढ्ये
कस्मिन्मन्दायतेऽसौ नियतमुडुपतिः प्रेयसी का मुरारेः।
विख्यातौ वाहनौ कौ द्रुहिणमुरभिदोः कीदृगाखेटकस्त्री
कीदृङ्नैवाचिराभा समिति गतभयाः के गतौ कश्च धातुः॥२६

क्ष्मारावौ। इति सर्वतोभद्रजातिः।

...ः वर्णैः उत्तरैः सर्वतोभद्रं नाम बन्धः तदिदं यथा तत्त्वतः दुष्करं कर्त्तुमशक्यम् ॥ २४ ॥

क इति। को धातुः त्यागे उक्तः कथितः? तव रिपोः शत्रोः हृदि मनसि का? स्तनानां भूषणं के? दुःखी कः? कश्च शब्दः शुचं शोकं वदति बाधयति? वद। ख्यातवीर्य्यौ विख्यातबलौ शत्रू कौ? शृङ्गारी पुरुषः कीदृशः? रणशिरसि का सेना भयात् भङ्गम् आप्नोति? दानार्थाभिधायी कः? कौ शिरसि शिरसि संप्रहृत्य युध्यतः? ॥ २५ ॥

तोयार्थिनी जलार्थिनी स्त्री कीदृक्? कः दुराढ्ये दुष्टधनिनि प्रायशः मदकरः भवति? असौ उडुपतिश्चन्द्रः कस्मिन् नियतं मन्दायते, मुरारेः कृष्णस्य प्रेयसी का? द्रुहिणमुरभिदोः ब्रह्मविष्णोः कौ विख्यातौ वाहनौ? आखेटकस्य व्याधस्य स्त्री कीदृक्? अचिराभा विद्युत् कीदृक् नैव? समिति युद्धे गतभयाः अभयाः के? कश्च धातुः गतौ गत्यर्थप्रतिपादक इत्यर्थः? ॥ २६ ॥

अस्योत्तरं क्ष्मारावौ इति सर्वतोभद्रजातिः। क्षा इति एकेन ...न प्रथमस्य, क्षो क्षा कान्त्यागे इति वैयाकरणाः। पुनः क्षा

प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।
मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥ २७ ॥

वद वल्लभ ! सर्वत्र साधुर्भवति कीदृशः ।
गोविन्देनानसि क्षिप्ते नन्दवेश्मनि काभवत् ॥ २८ ॥

दीनरक्षी ।

इति एकेन वर्णेन दुःखजनकः शब्द इति द्वितीयस्य । ह्वारा इति द्वाभ्यां वर्णाभ्यां तृतीयस्य । ह्वाराओ ह्वाह्वाकाररवविशिष्ट इति त्रिभिर्वर्णैश्चतुर्थस्य । पुनः ह्वा इति शोकसूचकः शब्द इति एकेन वर्णेन पञ्चमस्य । रः प्रियः कः कामः तौ वी हरकामावित्यर्थः यतो परस्परं वैरिणाविति षष्ठस्य । ह्वावीति मध्यवर्णत्यागेन, ह्वावी विलासविशेषवानित्यर्थ इति सप्तमस्य । ह्वावीरा ह्वा शोचनीयः वीरो यस्याः तथाभूता विपन्नवीरेत्यर्थ इति अष्टमस्य । रा इति राजदाने इति धातोः क्विपि रूपमिति नवमस्य । अवी मेषावित्यर्थः अनयोश्च युद्धं प्रसिद्धमिति दशमस्य । अवीह्वा अप्सु जलेषु ईह्वा चेष्टा यस्याः तथोक्तेति एकादशस्य । रा धनमिति द्वादशस्य । राह्वौ इति त्रयोदशस्य । ई लक्ष्मीरिति चतुर्दशस्य । वी पक्षिणौ हंसगरुडाविति भाव इति पञ्चदशस्य । वीह्वा विषु पक्षिषु ईह्वा चेष्टा यस्याः सेति षोडशस्य । वीरा विगता इरा जलं यस्याः सा तथोक्तेति सप्तदशस्य । वीरा इति अष्टादशस्य । ह्वा अो ह्वाङ्‌न गताविति ई गताविति चेति ऊनविंशस्य ।

प्रतिलोमेति । प्रतिलोमानुलोमाभ्यां परतः पूर्वतश्चेत्यर्थः उत्तरेण गतागतं भवति, कदाचित् मध्यवर्णविलोपेन उत्तरं भवतीति शेषः तच्च मध्यवर्णविलोपोत्तरम् अनेकप्रकारकं बहुविधम् ॥ २७ ॥

वदेति । हे वल्लभ ! कीदृशो जनः सर्वत्र साधुः भवति, गोविन्देन कृष्णेन अनसि शकटे क्षिप्ते सति नन्दवेश्मनि का अभवत् ? वद ॥ २८ ॥

यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमज्जिका ।
घनान्धकारे निःशङ्कं मोदते केन बन्धकी ॥ २९ ॥

नारिकेलजा ।

असुरसुरनरेन्द्रैरुह्यते का शिरोभिः
तनुरपि शुचिवस्त्रे कातिविस्तारमेति ।
वदति कमलयोनिं सेव्यते केन पुष्पं
मधुरमरुणमृद्वी का भवेदुत्पलस्य ॥ ३० ॥

| | | |
|---|---|---|
| | ना | |
| मा | लि | का |
| | का | |

अत्रोत्तरं दीनरक्षी । दीनान् दुर्गतान् रक्षतीति तथोक्तो जन इति अनुलोमेन प्रथमस्य । क्षीरनदी दुग्धसरिदिति प्रतिलोमेन द्वितीयस्य, आनन्देन दुग्धनिक्षेपपूर्वकमुत्सव आसीदिति भावः ।

यत्नादिति । लेखकैः यत्नात् अन्विष्य का मसिमज्जिका लेखनी ग्राह्या ? बन्धकी दुश्चारिणी स्त्री घनान्धकारे निःशङ्कं यथा तथा केन मोदते आनन्दमनुभवति ? ॥ २९ ॥

अत्रोत्तरं नारिकेलजा । नारिकेलवृक्षपत्रजाता पूर्वं तेनैव लेखनीकरणं प्रचलितमासीदिति भाव इति अनुलोमेन प्रथमस्य । जारकेलिनेति प्रतिलोमेन द्वितीयस्य ।

असुरेति । असुरसुरनरेन्द्रैः शिरोभिः का उह्यते ध्रियते ? का तनुरपि अल्पापि शुचिवस्त्रे धौतवसने अतिविस्तारम् एति प्राप्नोति ? कमलयोनिं ब्रह्माणं वदति, केन पुष्पं सेव्यते ? उत्पलस्य का मधुरमरुणमृद्वी भवेत् ? ॥ ३० ॥

हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद्वराङ्गप्रवरस्य कीदृशम्।
विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम्॥ ३१॥

दंष्ट्राभम्।

वसन्तमासाद्य वनेषु कीदृशाः
पिकेन राजन्ति रसालभूरुहाः।
निरस्य वर्णद्वयमत्र मध्यमं
तव द्विषां कान्त्यतमा तिथिश्च का॥ ३२॥

कान्तगिरा। गतप्रत्यागतजातिः।

अत्रोत्तरं मालिका कालिने। मालिका पुष्पमालेति अनुलोमेन प्रथमस्य। कालिमेति प्रतिलोमेन द्वितीयस्य। क अलिनीति तृतीयस्य। अलिना भ्रमरेणेति चतुर्थस्य। नालिका मालामिति प्रतिलोमेन पञ्चमस्य।

हिमांश्विति। कुटिलोज्ज्वलप्रभं हिमांशुखण्डं चन्द्रखण्डं वराङ्गप्रवरस्य वराङ्गश्रेष्ठस्य कीदृशं भवेत्? पदमध्यसंस्थितं वर्णं विहाय जिनः बुद्धदेवः किं न करोत्येव? करोति च किम्? ॥ ३१॥

अत्रोत्तरं दंष्ट्राभम्। दंष्ट्राभं दशनप्रभमिति प्रथमस्य, मध्यवर्णं त्यक्त्वा दम्भमिति द्वितीयस्य, प्रतिलोमेन भद्रं कल्याणमिति तृतीयस्य।

वसन्तमिति। वनेषु वसन्तम् आसाद्य प्राप्य रसालभूरुहाः सहकारतरवः कीदृशाः पिकेन कोकिलेन सन्तः राजन्ति? अत्र मध्यमं वर्णद्वयं निरस्य त्यक्त्वा तव द्विषां शत्रूणां का? अन्त्यतमा चरमा तिथिश्च का? ॥ ३२॥

अत्रोत्तरं कान्तगिरा। रमणीयवचसेति प्रथमस्य, मध्यवर्ण-

आदौ मध्ये तथान्ते वा वर्द्धन्ते वर्णजातयः।
एकद्वित्राद्यो यत्र वर्द्धमानाक्षरं हि तत् ॥ ३३ ॥
किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय।
जनानां लोचनानन्दं तन्वन्ति घनात्यये ॥ ३४ ॥

खञ्जनाः।

उरःस्थलं कोऽत्र विना पयोधरं
बिभर्त्ति सम्बोधय मारुताशनम्।
वदन्ति कं पत्तनसम्भवं जनाः
फलञ्च किं गौडवधूकुचोपमम् ॥ ३५ ॥

नागरङ्गम्।

इयत्यागे कारा बन्धनागार इति द्वितीयस्य, प्रतिलोमेन राजा पौर्ण-मासीति तृतीयस्य।

आदाविति। यत्र आदौ मध्ये तथा अन्ते वा एकद्वित्रादयः वर्णजातयः वर्द्धन्ते, तत् वर्द्धमानाक्षरं नाम बन्ध इति शेषः ॥३३॥

किमिति। अनन्ततया किं ख्यातं प्रसिद्धम्? पादेन व्यङ्गं विकलाङ्गम् आह्वय सम्बोधय? घनात्यये वर्षापगमे के जनानां लोच-नानन्दं तन्वन्ति विस्तारयन्ति? ॥ ३४ ॥

अत्रोत्तरं खञ्जनाः। खमाकाशमिति प्रथमस्य, खञ्जेति द्वितीयस्य, खञ्जनाः पक्षिविशेषा इति तृतीयस्य।

उरःस्थलमिति। अत्र जगति कः विना पयोधरम् स्तन-मित्यर्थः उरःस्थलं वक्षःस्थलं बिभर्त्ति? मारुताशनं सर्पं सम्बोधय? जनाः पत्तनसम्भवं नगरजातं कं वदन्ति? गौडानां गौडदेशीयानां कुचोपमं स्तनसदृशं फलञ्च किम्? ॥ ३५ ॥

अत्रोत्तरं नागरङ्गम्। ना पुमानिति प्रथमस्य, नागेति

प्रायेण नीचलोकस्य कः करोतीह गर्वताम्।
आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः॥ ३६॥
शवराः।
सानुजः काननङ्गत्वा नैकषेयान् जघान कः।
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद॥ ३७॥
राक्षसोत्तमः।
धत्ते वियोगिनी गण्डस्थलपाण्डुफलानि का।
वद वर्णौ विधायान्ते सीता हृष्टा कयाभवत्॥३८॥
लवलीलया।

द्वितीयस्य, नागरमिति तृतीयस्य, नागरङ्गं तदाख्यफलमिति चतुर्थस्य।

प्रायेणेति। कः प्रायेण नीचलोकस्य गर्वताम् अहङ्कारम् इह करोति? आदौ वर्णद्वयं दत्त्वा के वनवासिनः भवन्ति, ब्रूहि कथय॥ ३६॥

अत्रोत्तरं शवराः। रा धनमिति प्रथमस्य, पूर्वे वर्णद्वयदाने शवराः व्याधा इति द्वितीयस्य।

सानुज इति। कः सानुजः काननं गत्वा नैकषेयान् निकषात्मजान् राक्षसानित्यर्थः जघान? मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशः? वद॥ ३७॥

अत्रोत्तरं राक्षसोत्तमः। राम इति प्रथमस्य, मध्ये वर्णत्रयदाने राक्षसोत्तम इति द्वितीयस्य।

धत्ते इति। का वियोगिनी गण्डस्थलपाण्डुफलानि धत्ते? अन्ते वर्णौ विधाय दत्त्वा सीता कया हृष्टा अभवत्? ॥ ३८॥

अत्रोत्तरं लवलीलया। लवलीति प्रथमस्य, लवस्य स्वसुतस्य लीलया क्रीड़या इति द्वितीयस्य।

विष्णोः का वल्लभा देवी लोकत्रितयपावनी ।
वर्णमाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाग्वद ॥ ३९ ॥

समानः, इति वर्द्धमानाक्षरजातिः ।

आदितो मध्यतोऽन्ताद्वा हीयन्ते वर्णजातयः ।
एकद्वित्रादयो यत्र हीयमानाक्षरं हि तत् ॥ ४० ॥

वसन्तमासाद्य विकासि राजते
वनेषु किं वल्लभ ! पुष्पमुच्यताम् ।
विहङ्गमं कञ्च परिस्फुटाक्षरं
वदन्ति कम्पङ्कजसम्भवं विदुः ॥ ४१ ॥

किंशुकम् ।

विष्णोरिति । का लोकत्रितयपावनी देवी विष्णोः वल्लभा ? आद्यन्तयोर्वर्णं दत्त्वा कः शब्दः तुल्यवाक् तुल्यार्थबोधकः भवतीति शेषः ? वद ॥ ३९ ॥

अत्रोत्तरं समानः । मा लक्ष्मीरिति प्रथमस्य, आदौ अन्ते च वर्णद्वयदाने समान इति द्वितीयस्य ।

आदित इति । यत्र आदितः मध्यतः अन्तात् वा एकद्वित्रा-दयः वर्णजातयः हीयन्ते, तत् हीयमानाक्षरं नाम बन्धः ॥ ४० ॥

वसन्तमिति । हे वल्लभ ! वसन्तमासाद्य वनेषु किं पुष्पं विकासि राजते, उच्यताम् । कञ्च विहङ्गमं पक्षिणं परिस्फुटाक्षरं वदन्ति कथयन्ति ? कं पङ्कजसम्भवं पद्मयोनिं विदुः बुधा इति शेषः ? ॥४१॥

अत्रोत्तरं किंशुकम् । किंशुकं पलाशपुष्पमिति प्रथमस्य, एकेन वर्णेन हीनं शुकमिति द्वितीयस्य, द्वाभ्यां वर्णाभ्यां हीनं कं ब्रह्माण-मिति तृतीयस्य ।

समुद्यते कुत्र न याति पांशुला:
समुद्यते कुत्र भयं भवेज्जलात् ।
समुद्यते कुत्र तवापयात्यरि:
प्रहीनसम्बोधनवाचि किं पदम् ॥ ४२ ॥

हिमकरे ।

तपस्विनोऽत्यन्तमहासुखाशया
वनेषु कस्मै स्पृहयन्ति सत्तमा: ।
इहाद्यवर्णद्वितयं निरस्य भो:
सदा स्थितं कुत्र च सत्त्वमुच्यताम् ॥ ४३ ॥

तपसे ।

पुरुष: कीदृशो वेत्ति प्रायेण सकला: कला: ।

समुद्यते इति । कुत्र कस्मिन् समुद्यते सम्यक् उदयमाने सति पांशुला: रजस्वला: न याति नाभिगच्छति पुरुष इति शेष: ? कुत्र समुद्यते समुन्नते सति जलात् भयं भवेत् ? कुत्र समुद्यते तव अरि: शत्रु: अपयाति अपगच्छति ? प्रहीनस्य निकृष्टस्य जनस्य सम्बोधनवाचि किं पदं भवतीति शेष: ॥ ४२ ॥

अत्रोत्तरं हिमकरे इति । हिमकरे चन्द्रे इति प्रथमस्य, एकवर्णत्यागेन मकरे इति द्वितीयस्य, वर्णद्वयत्यागेन करे इति तृतीयस्य, वर्णत्रयत्यागेन रे इति चतुर्थस्य ।

तपस्विन इति । सत्तमा: साधव: तपस्विन: वनेषु अत्यन्तमहासुखाशया कस्मै स्पृहयन्ति ? इह आद्यवर्णद्वितयं निरस्य त्यक्त्वा भो: मित्रेति शेष: कुत्र सत्त्वं बलं सदा स्थितम् उच्यताम् ॥ ४३ ॥

अत्रोत्तरं तपसे । तपसे तपश्चरणायेति प्रथमस्य, आद्यवर्णद्वयत्यागेन से विष्णौ इति द्वितीयस्य ।

पुरुष इति । कीदृश: पुरुष: प्रायेण सकला: कला: कामविद्या:

मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥ ४४ ॥

नागरिकः ।

यजमानेन कः स्वर्गहेतुः सम्यग्विचार्य्यते ।

विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥ ४५ ॥

यागविधिः । हीयमानाक्षराजातिः ।

अन्योन्याक्षरवर्त्तिन्या चैकान्तरितयाऽथवा ।

शृङ्खलाबन्धः इत्युक्तो ग्रन्थिमान्नागपाशकः ॥ ४६ ॥

पवित्रमतितृप्तिकृत् किमिह किं भटामन्त्रणं

ब्रवीति धरणीधरस्तु किमजीर्णसम्बोधनम् ।

हरिर्वदति को जितो मदनवैरिणा संयुगे

तनोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥४७॥

पयोधरसमयः ।

वेत्ति जानाति ? मध्यवर्णद्वयं त्यक्त्वा कः सुरालयः स्यात् ब्रूहि

अत्रोत्तरं नागरिकः । नागरिकः नगरसम्भव इति प्रथमस्य, मध्यवर्णद्वयत्यागेन नाकः स्वर्ग इति द्वितीयस्य ।

यजमानेनेति । यजमानेन याज्ञिकेन स्वर्गहेतुः कः विचार्य्यते ? आद्यन्तयोः वर्णौ विहाय गोत्वं कुत्र स्थितं वद ॥ ४५ ॥

अत्रोत्तरं यागविधिः । यागविधिर्यज्ञानुष्ठानमिति प्रथमस्य, आद्यन्तवर्णद्वयत्यागेन गवीति द्वितीयस्य ।

अन्योन्येति । अन्योन्याक्षरवर्त्तिन्या अथवा एकान्तरितया वर्णपरम्परयेति शेषः शृङ्खलाकारेण बन्धः ग्रन्थिमान् नागपाशक इति उक्तः कथितः ॥ ४६ ॥

पवित्रमिति । इह जगति पवित्रम् अतितृप्तिकृत् अतिसन्तोष-जनकं किम् ? भटस्य योधस्य आमन्त्रणं सम्बोधनं किम् ? धरणी-

भवति जयिनी काजौ सेनाह्वयाधरभूषणं
वहति किमहिः पुष्पं कीदृक् कुसुम्भसमुद्भवम् ।
महति समरे वैरी वीर ! त्वया वद किं क्षतः
कमलमुकुले भृङ्गः कीदृक् पिबन्मधु राजते ॥ ४८ ॥

परागरञ्जितः । शृङ्खलाजातिः ।

आह्वानं किं भवति हि तरोः कस्यचित् प्रश्नविज्ञाः !
प्रायः कार्य्यं किमपि न कलौ कुर्वते के परेषाम् ।

अधरस्तु ब्रवीति किमिति शेषः ? अजीर्णसम्बोधनं किम् ? हरिः वदति किमिति शेषः ? भटनवैरिणा हरेण संयुगे युद्धे कः जितः ? ननु भोः कः शिखण्डिनां मयूराणां कुलं तस्य ताण्डवस्य नृत्यस्य आडम्बरं तनोति विस्तारयति ? ॥ ४७ ॥

अत्रोत्तरं पयोधरसमयः । पयः जलमिति प्रथमस्य, योध इति द्वितीयस्य, धर इति तृतीयस्य, रस इति चतुर्थस्य, स विष्णुः इति पञ्चमस्य, मयः दैत्यविशेषः त्रिपुराधिपतिरित्यर्थः इति षष्ठस्य, पयोधरसमयः वर्षाकाल इति सप्तमस्य ।

भवतीति । का सेना आजौ युद्धे जयिनी भवति ? अधरस्य भूषणम् आह्वय सम्बोधय ? अहिः सर्पः किं वहति ? कुसुम्भसमुद्भवं पुष्पं कीदृक् ? हे वीर ! महति समरे युद्धे त्वया वैरी शत्रुः किं क्षतः ? वद । कमलमुकुले मधु पिबन् भृङ्गः भ्रमरः कीदृक् राजते ? ॥ ४८ ॥

अत्रोत्तरं परागरञ्जितः । परा श्रेष्ठेति प्रथमस्य, रागेति द्वितीयस्य, गरं विषमिति तृतीयस्य, रञ्ज रक्तमिति चतुर्थस्य, जित इति पञ्चमस्य, परागेण कौसुमरजसा रञ्जितः भूषित इति षष्ठस्य ।

आह्वानमिति । कस्यचित् तरोः आह्वानं किं भवति हि ?

पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः
केनोदन्याजनितमसमं कष्टमाप्नोति लोकः॥ ४९॥

* निरापकारेण।

का सम्बुद्धिः सुभट! भवतो ब्रूहि पृच्छामि सम्यक्
प्रातः कीदृग् भवति विपिनं सम्प्रहृष्टैर्विहङ्गैः।
लोकः कस्मिन् प्रणयति मुदं का त्वदीया च जैत्री
प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन॥ ५०॥

वीहारसेविना। एकान्तरितशृङ्खलाजातिः।

गोष्ठी विदग्धजनवत्यपि शोचनीया
कीदृग् भवेत्तरणिरश्मिषु का सदास्ति।

हे प्रश्नविज्ञाः! के जनाः प्रायः परेषां किमपि कार्य्यं न कुर्वते? ननु भोः का पूर्णं चन्द्रं वहति? म्लानचक्षुः पृच्छति? लोकः केन उदन्याजनितं तृष्णाजनितम् असमं कष्टम् आप्नोति? ॥ ४९॥

अत्रोत्तरं नीरापकारेण। अत्र एकान्तरिततया वर्णपरम्परया नीप कदम्ब इति प्रथमस्य, परे इति द्वितीयस्य, राका पौर्णमासीति तृतीयस्य, काण इति चतुर्थस्य, नीरस्य जलस्य अपकारेण ह्रान्येति पञ्चमस्य।

केति। हे सुभट! भवतः सम्बुद्धिः का? ब्रूहि वद, सम्यक् पृच्छामि, प्रातः प्रभाते सम्प्रहृष्टैः विहङ्गैः पक्षिभिः विपिनं वनं कीदृक् भवति? लोकः कस्मिन् मुदं हर्षं प्रणयति प्रकाशयति? त्वदीया जैत्री जयसाधनी च का? कीदृशेन जन्तुना प्राणिना इह लोके प्रायः सुखं स्थितम्? ॥ ५०॥

अत्रोत्तरं विहारसेविना। वीरेति प्रथमस्य, रवि कोलाहल-विशिष्टमिति द्वितीयस्य, हासे इति तृतीयस्य, सेनेति चतुर्थस्य, वीहारसेविना वीहारं बौद्धमठं सेवते इति तथोक्तेन।

गोष्ठीति। विदग्धजनवती विद्वज्जनवती अपि कीदृक् गोष्ठी

दुर्वारदर्पदलितामरनायकापि
कीदृश्यकारि सुरशत्रुचमूर्गुहेन ॥ ५१ ॥

तारकविरहिता ।

| | | |
|---|---|---|
| | क | |
| वि | र | हि |
| | ता | |

कीदृक् परैरुपहतो भवति क्षितीशः
पृच्छत्यनुज्ञ इह किं विदितं पवित्रम् ।
विच्छिन्नपाणिचरणो जनको यदीयः
कीदृक् परैरभिहितः स पुमान् पुनः स्यात् ॥५२॥

सभा शोचनीया भवेत् ? तरणिरश्मिषु सूर्यकिरणेषु का सदा अस्ति ? दुर्वारेण दर्पेण अहङ्कारेण दलितः अमरनायकः देवेन्द्रः यया तादृशी सुरशत्रोस्तारकस्य चमूः सेना गुहेन कार्त्तिकेयेन कीदृशी अकारि कृता ? ॥ ५१ ॥

अत्रोत्तरं तारकविरहिता । कविरहितेति प्रथमाक्षरद्वय-त्यागेन प्रथमस्य, रविकरहितेति शेषाक्षरद्वयत्यागेन प्रतिलोमत इति द्वितीयस्य, तारकः असुरराजस्तद्विरहितेति तृतीयस्य ।

कीदृगिति । कीदृक् क्षितीशः नृपतिः परैः शत्रुभिः उपहतः पराभूतः भवति ? अनुज्ञः पृच्छति ? इह संसारे किं पवित्रं विदितम् ? यदीयः जनकः पिता विच्छिन्नपाणिचरणः, स पुमान् परैः पुनः कीदृक् अभिहितः उक्तः स्यात् ? ॥ ५२ ॥

व्यङ्गतनयः । नागपाशजातिः ।

भाषाभिश्चित्रितं यत् स्यात्संस्कृतप्राकृतादिभिः ।
सन्तश्चित्रन्तदिच्छन्ति संशुद्धं त्वेकभाषया ॥५३॥
किं न स्यात्कीदृक्त्वं महतोऽपि च तादृशस्य जलराशेः ।
दिनअरकिरणप्पंसण पडिवुद्धं होइ किं गोसे ॥५४॥

कमलवणम् ।

मत्स्यहितमम्बु कीदृक् पृच्छति रोगी निशासु किं भाति ।
कोऽनङ्गो वदति मृगः खे गम्मइ केरिसा रइणा ॥५५॥

अविसामभामिरेण । संस्कृतप्राकृतजातिः ।

अत्रोत्तरं व्यङ्गतनयः । अत्र व्यामित्यक्षरपरित्यागेन गतनयः नीतिभ्रष्ट इति प्रथमस्य, नत इति प्रथमाक्षरद्वयत्यागेनान्त्याक्षरत्यागेन च प्रतिलोमत इति द्वितीयस्य, शेषाक्षरत्रयत्यागेन प्रतिलोमतः गव्यमिति तृतीयस्य, व्यङ्गस्य विगताङ्गस्य तनय इति चतुर्थस्य ।

भाषाभिरिति । यत् काव्यमिति भावः संस्कृतप्राकृतादिभिर्भाषाभिः चित्रितं खचितं, सन्तः साधवः तत् चित्रम्, एकभाषया रचितं तु संशुद्धं केवलम् इच्छन्ति वदन्तीति यावत् ॥ ५३ ॥

किमिति । महतोऽपि तादृशस्य जलराशेः किं वस्त्विति शेषः कीदृक्त्वं कीदृशं न स्यात् ? दिनअरेति, दिनकरकिरणस्पर्शेन प्रतिबुद्धं भवति किं प्रभाते ? इति संस्कृतम् ॥ ५४ ॥

अत्रोत्तरं कमलवणम् । कं जलम् अलवणं लवणशून्यमिति प्रथमस्य, कमलवनमिति द्वितीयस्य ।

मत्स्यमिति । कीदृक् अम्बु जलं मत्स्येभ्यः हितम् ? रोगी पृच्छति ? निशासु किं भाति राजते ? अनङ्गः कः ? मृगः वदति ? खे आकाशे गम्मइ इत्यादि प्राकृतं, गम्यते कीदृशा रविणेति संस्कृतम् ॥५५॥

प्रायो बिभ्यति कीदृशादरिगजाद्दन्तप्रहीणा गजाः
पृथ्वी सम्प्रति कीदृशा नृपतिना राजन्वती राजते ।
प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कं जले
मज्झम्मिवलिये घणच्चयदिणे जादं सरो केरिसम् ॥ ५६ ॥

सरटादवताविदवाहिरम् ।

क्षत्तं कीदृशमङ्गं दन्त्यभवं कं वदन्ति विद्वांसः ।
अतिलघुवाचि पदं किं केरिसु सुम्रणेसु होइ जणो ॥५७॥

विसन्तमण । इति संस्कृतापभ्रंशजातिः ।

अत्रोत्तरम् अविसामभमिरेण । अवि मक्षिरक्षितमिति प्रथमस्य, मक्षिणां मदस्थत्वादिति भावः । साम अमो रोगः तेन सहितः तत्सम्बुद्धौ इति द्वितीयस्य, भं नक्षत्रमिति तृतीयस्य, इः काम इति चतुर्थस्य, एण मृग इति पञ्चमस्य, अविसामभमिरेण अविश्रामभ्रमणेनेति षष्ठस्य ।

प्राय इति । दन्तप्रहीणाः क्षीणदन्ताः गजाः कीदृशात् अरिगजात् शत्रुगजात् प्रायः बाहुल्येन बिभ्यति ? कीदृशा नृपतिना राजन्वती पृथ्वी सम्प्रति राजते ? प्रावृषि वर्षाकाले गिरितटी प्रायः कीदृशी भवतीति शेषः ? कः जले कं धत्ते धारयति ? मध्याह्ने इत्यादि, मध्याह्नवेलायां घनात्ययदिने जातं सरः कीदृशमिति संस्कृतम् । घनात्ययदिने शरदीत्यर्थः । अन्यत् सुगमम् ॥ ५६ ॥

अत्रोत्तरं सरटादवताविदवाहिरम् । सरटात् सदन्तादिति प्रथमस्य, अवता रक्षतेति द्वितीयस्य, विदवा दावाग्निरहितेति तृतीयस्य, अहिः नागराजः अं विष्णुमिति चतुर्थस्य ।

क्षत्तमिति । क्षत्तं छिन्नम् अङ्गं कीदृशं भवतीति शेषः ? विद्वांसः कं वर्णमिति शेषः दन्तभवं दन्त्यमिति यावत् वदन्ति ? किं

किं सुखमाहुः प्रायः केशविकारश्च का हरेर्दयिता ।
कथमाभा कस्मिन्निशि को लुब्भइ वीरपुलिसाणम् ॥ ५८ ॥
शमलकम्भालम्भे ।

कस्तम्बेरमसुत इति विख्यातः पृच्छति स्फुटं हरिणः ।
अहिणवणअलीजणो असाहुं केण उज्झइ ॥ ५९ ॥
कलभएण । संस्कृतमागधिकम् ।

पदम् अतिलघुवाचि अतिलघुबोधकम् ? केरिसु इत्यादि, कीदृशः सुजनेषु भवति जन इति संस्कृतम् ॥ ५७ ॥

अत्रोत्तरं विसन्तमणु । विसम् आमगन्धि विस्रं स्यादामगन्धि यदित्यमर इति प्रथमस्य, तं तकारमिति द्वितीयस्य, अणु इति तृतीयस्य, विसन्तमणु इति विश्वस्तमना इति संस्कृतं चतुर्थस्य ।

किमिति । किं सुखं केशविकारश्च कमिति शेषः आहुः कथयन्ति ? हरेः विष्णोः दयिता स्त्री का ? निशि कस्मिन् आभा कथम् ? को लुब्भइ इत्यादि को रोचते वीरपुरुषाणामिति संस्कृतम् ॥ ५८ ॥

अत्रोत्तरं शमलकम्भालम्भे । शं मङ्गलमिति प्रथमस्य, अलकमिति द्वितीयस्य, मा लक्ष्मीरिति तृतीयस्य, भे नक्षत्रे अलम् अतिशयेन भा इति चतुर्थस्य, समरकर्मारम्भ इति संस्कृतं पञ्चमस्य ।

क इति । कः स्तम्बेरमस्य सुत इति विख्यातः ? हरिणः मृगः स्फुटं पृच्छति ? अहिणवेत्यादि, अभिनवनगरीजनः असाधुं केन त्यजतीति संस्कृतम् ॥ ५९ ॥

अत्रोत्तरं कलभएण । कलभः करिशावक इति प्रथमस्य, एण हरिण इति द्वितीयस्य, *करभयेनेति संस्कृतं करात् राजस्वात् भयेन असाधुं नृपतिं त्यजतीत्यर्थ इति तृतीयस्य ।

कोपारुणं किमरुणाग्रसरस्य पूर्व-
काष्ठाग्रनिष्ठिततनोरुपमानपात्रम् ।
पत्तं खणेण मरणं सअर स्स रण्णो
पुत्तेहि किं पविसिउण तुरङ्गमत्थम् ॥ ६० ॥

कपिलपणम् ।

कं प्रीणयन्ति जलदाः सैन्यं कीदृक् पलायते समरात् ।
धत्त शिरोधरा किं रुद्दसिरं केरिसं भोदी ॥ ६१ ॥

चातकं कातरं कम् । संस्कृतपैशाचिकम् ।

को वर्णाद्यः क च जलधिसुता कश्च दीर्घादिसंज्ञं
प्राहुर्वृद्धाः कमजयदसौ तार्किकैः के क्रियन्ते ।

कोपेति । कोपेन अरुणं रक्तं किं पूर्वकाष्ठा पूर्वा दिक् तस्याः अग्रे निष्ठिता तनुर्यस्य तथोक्तस्य अरुणाग्रसरस्य सूर्य्यस्य अथवा अरुणस्य सूर्य्यस्य अग्रसरः तस्य अनूरोः उपमानपात्रम् ? पत्तमित्यादि, प्राप्तं क्षणेन मरणं सगरस्य राज्ञः पुत्रैः किं प्रविश्य तुरङ्गमार्थ-मिति संस्कृतम् । सगरस्य राज्ञः पुत्रैः तुरङ्गमार्थम् अश्वमेधाया-श्वाहरणार्थं किं प्रविश्य मरणं प्राप्तम् ? ॥ ६० ॥

अत्रोत्तरं कपिलपणम् । कपिलपणं वानरमुखमिति प्रथमस्य, कपिलस्य मुनेः वनमिति द्वितीयस्य ।

कमिति । जलदाः मेघाः कं प्रीणयन्ति ? कीदृक् सैन्यं समरात् पलायते ? शिरोधरा ग्रीवा किं धत्ते ? रुद्दसिरमि-त्यादि, रुद्रशिरः कीदृशं भवति ? ॥ ६१ ॥

अत्रोत्तरं चातकं कातरं कम् । चातकमिति प्रथमस्य, कातरं भीतमिति द्वितीयस्य, कं शिरः इति तृतीयस्य, चातकं कातरं कं जातगङ्गातरङ्गमिति संस्कृतं चतुर्थस्य ।

क इति । वर्णानाम् आद्यः प्रथमः कः ? जलधिसुता लक्ष्मीः

आमन्त्र्यो विः कथय विदितं किं पदं हेतुवाचि
जा णच्चेडं महइ महिला सावि वोसेइ कोसे ॥ ६२ ॥
अए चम्मारं वादावेहि ।
शब्दः कः स्यात्पुरुषवचनं कुण्डलौ कौ स्मरारेः
कामम्भोधेर्हरिरुदहरद्दीवधः पृच्छतीदम् ।
हण्डीकुण्डी अणसि ण धरे कौस अम्हारअत्थं
ये पुच्छिल्ला स उण परिहारुत्तरं कौस देइ ॥ ६३ ॥
नाही कुम्भार । संस्कृतलौकिकमिति चित्रजातिः ।

क च कुत्र तिष्ठतोत्यर्थः ? बुधाः कं दीर्घादिसंज्ञं प्राहुः ? असौ बुध इति शेषः कम् अजयत् ? तार्किकैः के क्रियन्ते ? विः पक्षी आमन्त्र्यः सम्बोधनीयः ? किं पदं हेतुवाचि हेतुबोधकं विदितं प्रसिद्धं कथय ? जा णच्चेडमित्यादि, या नर्त्तितुम् इच्छति महिला सापि जल्पति कथमिति संस्कृतम् । या महिला स्त्री नर्त्तितुम् इच्छति आगच्छति सा अपि निश्चितं कथं जल्पति ? ॥ ६२ ॥

अत्रोत्तरम् अए चम्मारं वादावेहि । अः अकार इति प्रथमस्य, ए अशब्दो विष्णुवाचकः तस्मिन्निति द्वितीयस्य, चं चकारमिति तृतीयस्य, मारं कन्दर्पमिति चतुर्थस्य, वादा इति पञ्चमस्य, वे पक्षिन्निति षष्ठस्य, हि इति सप्तमस्य, अए चम्मारं वादावेहि अये चर्म्मारं वादयेति संस्कृतम् । अये इति सम्बोधनं चर्म्मारं स्वदङ्गं वादय इति अष्टमस्य ।

शब्द इति । कः शब्दः पुरुषवचनः पुंवाचकः स्यात् ? स्मरारेः हरस्य कुण्डलौ कौ ? हरिः अम्भोधेः समुद्रात् काम् उदहरत् उद्धार ? वीवधः भारविशेषः इदं पृच्छति ? हण्डीत्यादि, हण्डिकाकुण्डिकाः आनयसि न धरे ! कथमस्मदर्थं यं पृच्छेत् स पुनः प्रत्युत्तरं कीदृक् ददातीति संस्कृतम् । अस्मदर्थं हण्डिका-

को णिवसइ सच्छन्दं सुन्दरि ! गिरिगहणकुञ्जमज्झम्मि ।
सह अज्जुणेण योद्धुं सिहिगमणो केरिसो होइ ॥ ६४ ॥
सरहससवराहवग्गो ।

का हरइ मणं पइणो गुणगणजीवणसलाहणिज्जस्स ।
कअ चड्चड़ेति सद्दा हुआसना केरिसा होन्ति ॥ ६५ ॥
सरिसबहुआ । इति शुद्धप्राकृतम् ।

काण्डिकाः हाण्डिकाड़ इति भाषा । कथं न आनयसि ? घर इति सम्बोधनं च घर तदाऽन्यपुरुषेत्यर्थः । इति यं पृच्छेत् स जनः पुनः प्रत्युत्तरं कीदृक् ददाति ? ॥ ६३ ॥

अत्रोत्तरं नाही कुम्भार । ना पुमानिति प्रथमस्य, अही भुजङ्गौ इति द्वितीयस्य, कं पृथिवीमिति तृतीयस्य, भार इति चतुर्थस्य, नाही कुम्भार नास्ति कुम्भार इति संस्कृतम् । कुम्भकारो नास्तीति कथम् आनयामीति प्रत्युत्तरम् ।

को इति ।—

को निवसति स्वच्छन्दं सुन्दरि ! गिरिगहनकुञ्ज- मध्ये ।
सह अर्जुनेन योद्धुं शिखिगमनः कीदृशो भवतीति संस्कृतम् ॥

अस्यार्थः, हे सुन्दरि ! कः गिरेः पर्वतस्य यत् गहनं निबिडं कुञ्जं तस्य मध्ये स्वच्छन्दं निवसति ? शिखी मयूरः तेन गमनं यस्य सः कार्त्तिकेय इत्यर्थः अर्जुनेन सह योद्धुं कीदृशो भवति ? ॥ ६४ ॥

अत्रोत्तरं सरहससवराहवग्गो । सरभशशवराहवर्ग इति संस्कृतम् । सरभाः अष्टापदमृगविशेषाः शशाः प्रसिद्धाः वराहाः शूकराः तेषां वर्गः समूह इति प्रथमस्य, द्वितीये सरभसशबराहवग इति संस्कृतम् । सरभसाः सवेगाः ये शबराः किराताः तैः सह आहवे युद्धे गच्छतीति तथोक्तः ।

केति । का हरति मनः पत्युर्गुणगणयौवनश्लाघनीयस्य ।
कथय चट्चटेति शब्दा हुताशनाः कीदृशा भवन्तीति संस्कृतम् ।

पाणिगाहणणिश्रंसण सोहइ केहि मण्डिअम्।
साहसुवइ वीर! पइणोरिउबलं केहिं खण्डिअम्॥ ६६॥
समरङ्गणेहिम्।

रसिअइ केण उच्चाड़ण किज्जइ
जुअइमाणसु केण उविज्जइ।
तिसिअ लोअ खण केण सुहिणाइ
एहु पहु मम भुअणे गिग्धइ॥ ६७॥
णीरसराएण। शुद्धापभ्रंशम्।

का स्त्री गुणगणयौवनैः श्लाघनीयस्य प्रशंसनीयस्य पत्युः स्वामिनः मनः हरति? चटत् चटत् इति शब्दो येषां तथाभूताः हुताशनाः अग्नयः कीदृशाः भवन्ति? ॥ ६५॥

अत्रोत्तरं सरिसबहुश्रा सद्दशबधूः सर्षपबहुलाश्चेत्यर्थः। आद्ये सदृशी अनुरूपा वधूः। द्वितीये सर्षपाङ्कितयुता इत्यर्थः।

पाणीति। पाणिग्रहणनिवसनं शोभते कैर्मण्डितम्।

साहसवद्दपि वीर! प्रतिरिपुबलं कथं खण्डितमिति संस्कृतम्॥

पाणिग्रहणस्य विवाहस्य निवसनं वस्त्रं कैः मण्डितं रञ्जितं शोभते? हे वीर! साहसवद्दपि साहससम्पन्नमपि प्रतिरिपुबलं शत्रुसैन्यं कथं खण्डितं पराभूतं त्वयेति शेषः॥ ६६॥

अत्रोत्तरं समरङ्गणेहिम् समरञ्जनैरिति समराङ्गणैरिति च संस्कृतम्। समैः अनुरूपैः रञ्जनैः रागकरणैरिति प्रथमस्य, समराङ्गणैः युद्धव्यापारैरिति द्वितीयस्य।

रसिश्रश्च इति, रसिकानां केन उच्चाटनं क्रियते
युवतिमानसं केन उद्विज्यते।
तृषितो लोकः क्षणं केन सुखीक्रियते।
एष प्रश्नो मम भुवने केन गायते॥ इति संस्कृतम्॥६७॥

सुअलो मेहं पुच्छइ पुच्छइ मेहोवि तं तहा सुअलम् ।
केण हआ सअलसुआ केण जणो विसइ पाआलम् ॥६८॥

बलाहकविलेण ।

धवलुज्जलेहिं केहिं सोहइ धलणी मसाणदेसस्स ।
णिलअस्स रक्कवणाला केहिं पलिवेटिआ होन्ति ॥६९॥

णलकलंकेहिम् । शुद्धमागधिकम् ।

सुगमम् । अत्रोत्तरं णीरसराएण । नीरसरागेणेति संस्कृतम् । नीरसः रसशून्यः यः रागः स्वरविशेषः तेनेति प्रथमस्य, नीरसे रसानभिज्ञे पुंसीति शेषः यः रागः प्रणयः अज्ञानजनित इति भावः तेन इति द्वितीयस्य, नीरे नीरदाने यः सरागः यत्नवान् तेन इति तृतीयस्य, निर्गतो रसो यस्मात् तादृशो यो रागः स्वरः तेनेति चतुर्थस्य ।

सुअलो इति, सूकरो मेघं पृच्छति पृच्छति मेघोऽपि तं तथा सूकरम् ।
केन हताः सगरसुताः केन जनो विशति पातालम् ॥
इति संस्कृतम् ॥६८॥

सूकरः मेघं पृच्छति सगरयुताः केन हताः दग्धा इत्यर्थः ? मेघोऽपि तं सूकरं पृच्छति जनः केन पातालं विशति ?

अत्रोत्तरं बलाहकविलेण । हे वराह ! कपिलेन मुनिनेति प्रथमस्य, हे बलाहक मेघ ! विलेन भूविवरेणेति द्वितीयस्य ।

धवलु इति, धवलोज्ज्वलैः कैः शोभते धरणी श्मशानदेशस्य ।
निरयस्य रक्षपालाः कैः परिवेष्टिता भवन्ति ॥
इति संस्कृतम् ॥६९॥

अत्रोत्तरं णलकलंकेहिम् । नरकरङ्कैः नराणां करङ्कैरस्थि-भिरिति प्रथमस्य, नरकस्य रङ्कैः अधमैः अतिनारकिभिरित्यर्थः इति द्वितीयस्य ।

पेरी पुच्छइ कअणे रोचइ कसणो घणो केह्निम् ।
सखाइ ण केहिं समत्थन्ति सच्चं णिह्नितं कताइम्मि ।७०॥
अह्नितपरकेह्निम् ।
पत्तूण किं भड़अणो णिजदेहदाणं
अद्धासणं भवति जम्भणिसूअणस्य ।
भोत्तूण खोरतरदुक्खसदाइ पावा
मोहंधआरगहणं लप किं लहन्ति ॥ ७१ ॥
विसमरणम् । शुद्धपैशाचिकम् ।

पैरीति, वैरी पृच्छति गगने रोचते कृष्णो घनः कथम् ।
कृत्यानि न कैः समर्थ्यन्ते निह्नितं कृतान्यपीति संस्कृतम् ।
वैरी शत्रुः पृच्छति ? कृष्णः श्यामो घनः मेघः गगने आकाशे कथं रोचते राजते ? कृतानि अपि कृत्यानि कार्य्याणि सामादीनि कैः जनैः न समर्थ्यन्ते न दृढीक्रियन्ते न समाप्यन्ते इत्यर्थः भक्ष-भयादिति भावः ॥ ७० ॥
अत्रोत्तरम् अह्नितपरकेह्निम् । अह्नितपक्षिभिरिति संस्कृतम् । हे अह्नित शत्रो इति प्रथमस्य, पक्षिभिर्बलाकाभिरिति भाव इति द्वितीयस्य, अह्नितपक्षिभिः शत्रुपक्षिभिरिति तृतीयस्य ।
पत्तूणेति ।——
प्राप्याथ किं भटजनो निजदेहदानादर्द्धासनं भजति जम्भनिषूदनस्य ।
भुक्त्वा च घोरतरदुःखशतानि पापा मोहान्धकारगहनं वद किं लभन्ते ॥
इति संस्कृतम् ।
भटजनः वीरजनः किं प्राप्य निजस्य आत्मनः देहस्य दानात् समरे परित्यागादिति भावः जम्भनिषूदनस्य इन्द्रस्य अर्द्धासनं भजति ? पापाश्च घोरतरदुःखशतानि भुक्त्वा किं मोहान्धकारगहनं लभन्ते ? वद । वसन्ततिलकं वृत्तम् ॥ ७१ ॥

जा णी आणइ णिद्दे विब्भलि
सा किस वुच्चइ बोल्ल रे सब्भरि ।
जो तिलसरीसव पीडइ घाणी
कीस भणीज्जइ सोवि जाणी ॥ ७२ ॥

सुतेल्ली । शुद्धलौकिकमिति संशुद्धजातिः ।

एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया ।
येन येन हि माद्यन्ति तद्विदस्तत्तदूह्यताम् ॥ ७३ ॥

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
तृतीयः परिच्छेदः ।

---

अत्रोत्तरं विसमरणम् । विषमरणमिति संस्कृतम् । विषमं घोरं रणमिति प्रथमस्य, विषेण विषभक्षणेन मरणम् आत्महत्यामिति यावदिति द्वितीयस्य ।

जाणी इत्यादि ।——

या न जानाति निद्राविह्वला सा कीदृशी उच्यते वद रे सखि ।
यस्तिलान् सर्षपांश्च पीडयति घान्या कीदृक् भण्यते सोऽपि ज्ञानी ॥

इति संस्कृतम् ।

या स्त्री निद्रया विह्वला न किमपीति शेषः जानाति, सा कीदृशी उच्यते ? रे सखि ! वद । यः तिलान् सर्षपांश्च घान्या घानीयन्त्रेण पीडयति तैलनिष्कासनार्थं पेषयति, सोऽपि ज्ञानी विज्ञो कीदृक् उच्यते ? ॥ ७२ ॥

अत्रोत्तरं सुतेल्ली । सुप्तोत्थितेति सुतैलीति च संस्कृतम् । सुप्तोत्थितेति प्रथमस्य, सुतैलीति द्वितीयस्य, भूरत्राभिकस्तैलीति शेषः ।

एतावतेति । एतावतापि उदाहरणेनेति शेषः मया प्रश्नानां

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका॥ १॥
सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने।
आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः॥२॥
तरुण्या लिङ्गितः कण्ठे नितम्बस्थलमाश्रितः।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः॥३॥
पानीयकुम्भः।

दिङ्मात्रं प्रदर्शनमात्रं दर्शितं, तद्विदः तदभिज्ञा जनाः येन येन प्रश्नेनेति शेषः बाध्यन्ति ऊह्यन्ति, तत्तत् ऊह्यतां प्रदश्यतामित्यर्थः।

इति तृतीयः परिच्छेदः।

---

व्यक्तीकृत्येति। यत्र स्वरूपार्थस्य स्वाभिधेयार्थस्य गोपनात् कमपि अर्थं व्यक्तीकृत्य प्रकाश्य बाह्यान्तरौ वाच्यव्यङ्ग्यौ अर्थौ कथ्येते प्रकाश्येते सा प्रहेलिका। अनुष्टुब्वृत्तम्॥ १॥

सेति। सा प्रहेलिका शब्दशासने शब्दशास्त्रे आर्थी अर्थवशगा च शाब्दी शब्दगम्या चेति द्विधा द्विविधा भवति। तत्र अर्थस्य विज्ञानात् विशेषेण पर्य्यालोचनात् आर्थी, शब्दविभागतः शब्दभागवशादिति भावः शाब्दी स्यात्॥ २॥

उदाहरति तरुण्या इति। तरुण्या युवत्या कण्ठे आलिङ्गितः आश्लिष्टः नितम्बस्थलं कटिदेशमिति भावः आश्रितः सन्निविष्ट इत्यर्थः कः गुरूणां श्वशुरादीनां सन्निधानेऽपि मुहुः मुहुः पुनः पुनः कूजति अव्यक्तं स्वनतीत्यर्थः॥ ३॥

अत्रोत्तरं पानीयकुम्भः। अत्र स्वरूपार्थस्यैतस्य गोपनं कान्तालिङ्गनरूपप्रकाशनञ्चेति अर्थद्वयप्रकाशनात् आर्थी प्रहेलिकेति बोद्धव्यम्।

आपाण्डु पीनकठिनं वर्त्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं हस्तैरपि सस्पृहम् ॥ ४ ॥

पक्वबिल्वफलम् । इत्यार्थी जातिः ।

दुर्वारवीर्य्ये ! सकुपि त्वयि का प्रसूता
श्यामा सपत्नहृदये सुपयोधरा च ।
तुष्टे पुनः प्रमतमत्र सरोजसूर्य्ये
सैवाद्यवर्णरहिता वद नाम का स्यात् ॥ ५ ॥

शस्त्री ।

आपाण्डिति । आपाण्डु, पाण्डुवर्णं पीनक[illegible] [illegible] वर्त्तुलं गोलं सुमनोहरं किं वस्त्विति शेषः हस्तैरपि [illegible] [illegible] वक्तव्यमित्यपिशब्दार्थः । सस्पृहं करैः हस्तैः [illegible] [illegible] सादरं स्पृश्यते इत्यर्थः ॥ ४ ॥

अत्रोत्तरं पक्वबिल्वफलम् । अत्र कामिनी[illegible] प्रक-टनमिति आर्थी प्रहेलिका ।

दुर्वारेति । हे दुर्वारवीर्य्ये ! दुरपनेयपरा[illegible] ! [illegible] सक्रोधे सति सपत्नानां शत्रूणां हृदये का सुप[illegible] [illegible]-रूपं शत्रुरुधिरमिति भावः तद् धरतीति धरा [illegible] ! अथच सुस्तनी श्यामा तप्तस्वर्णा अथच, शीते [illegible] [illegible] च सुखशीतला । तप्तकाञ्चनवर्णाभा सा श्यामा [illegible] [illegible] प्रसूता ? पुनः किन्तु तुष्टे अतएव [illegible] [illegible] सरोजानि [illegible] तेषां सूर्य्ये त्वयीति [illegible] [illegible] रहिता स्यात् ? वद ॥ ५ ॥

अत्रोत्तरं शस्त्री । छुरिकेत्यर्थः । आद्यवर्णरहिता स्त्री । अत्र शब्दस्य विभागात् अर्थान्तरद्योतनमिति शाब्दी जातिः ।

सदारिमध्यापि न वैरयुक्ता
नितान्तरक्तापि सितैव नित्यम् ।
यथोक्तवादिन्यपि नैव दूतिका
का नाम कान्तेति निवेदयाशु ॥ ६ ॥

सारिका । शाब्दी जातिः ।

णीरसआ उण सो बहुगुणवन्तउ
भमइ निरन्तर णीच्चल होन्तउ ।
तरु भिज्जइ ण उण फलुपत्तु ससु
यो परिआणइ पावइ सोवि जसु ॥ ७ ॥

गुणरुक्क ।

सदेति । हे कान्त ! सदा अरिमध्यापि शत्रुमध्यगतापि न वैरयुक्ता न शत्रुभावान्विता, नितान्तरक्तापि अत्यनुरागवती अपि नित्यं सितैव शुभ्रवर्णैव यथोक्तवादिनी अपि दूतिका नैव, का नाम इति आशु शीघ्रं निवेदय ? ॥ ६ ॥

अत्रोत्तरं सारिका । अत्र शाब्दप्रहेलिकाकथनमयुक्तं शब्द-विभागराहित्यादिति आर्थीत्वमेवेति सुधीभिर्भाव्यम् ।

नीरसेति ।——

नीरसकः पुनः स बहुगुणवान् भ्रमति निरन्तरं निश्चलो भवन् ।
तरुर्गीयते न पुनः फलपत्रे स्तो यः परिजानाति प्राप्नोति सोऽपि यशः ।

इति संस्कृतम् ।

नीरसकः कठिनः बहुगुणवान् निश्चलो भवन् एकत्र तिष्ठन्नित्यर्थः भ्रमति, स न पुनः तरुः वृक्षः गीयते कथ्यते, यतः तस्य फलपत्रे न स्तः न भवतः, यः एतत् परिजानाति बुध्यते सः यशः प्राप्नोति अपि लभते एवेत्यर्थः ॥ ७ ॥

अत्रोत्तरं गुणरुक्क इति । गुणवृक्षः मास्तुल इति भाषा । स हि काष्ठमयत्वात् कठिनः, बहुरज्जुयुक्तत्वात् बहुगुणवान् जलयानोपरि-निविष्टः सततं भ्रमतीति बोध्यम् ।

घरि घरि चलइ सअलपिआरी
जीवन्ति होइ वैरआरी।
खण बन्धइ खण मुच्चइ
खण एकल्ली तह जाणह जह जाइ ण पेल्ली ॥ ८ ॥

पाशकसारी। इति प्रहेलिकाजातिः।

कालसारादिकं हृद्यमजमारादि गूढकम्।
विदग्धा दुर्विदग्धानां कुर्वते दर्पशान्तये ॥ ९ ॥

घरीति। गृहे गृहे चलति सकलप्रीता
जीवन्ती भवति वैरकरी।
क्षणेन बध्यते क्षणेन मुच्यते
क्षणेनैकाकिनी तथा जानीथ यदि या न पत्नी ॥

इति संस्कृतम्॥

गृहे गृहे प्रतिगृहं या चलति तिष्ठति, सकलप्रीता सर्व एव जनः याम् आद्रियते इति भावः जीवन्ती अमृता वैरकरी विरोधकारिणी अपरनाशिनीति यावत् भवति, क्षणेन बध्यते बद्धा तिष्ठतीति भावः क्षणेन मुच्यते बन्धनात् विश्लीयते, क्षणेन एकाकिनी तिष्ठतीति शेषः या न पत्नी न नारी, यदि तथा जानीथ यूयमिति शेषः तदा वद इति वाक्यशेषः ॥ ८ ॥

अत्रोत्तरं पाशकसारी पाशगुटिका। सा हि गृहे गृहे क्रीडार्थं व्यवह्रियते, सर्वप्रीता च जीवन्ती कदापि अपरगुटिकां हन्ति, कदापि अपरगुटिकया बध्यते, कदाचित् ततो निःसरति, कदाचिच्च एकाकिनी तिष्ठतीति बोध्यम्।

कालेति। विदग्धाः निपुणाः जनाः दुर्विदग्धानाम् अज्ञानां दर्पशान्तये अहङ्कारापनयाय हृद्यं मनोहरं प्रश्नियामिति शेषः कालसारादिकम् कालस्य सारस्य तौ आदौ यत्र तत्, आदिशब्देन रागद्वेषादयो गृह्यन्ते। अजमारादि अजस्य मारस्य तौ अजमारौ

अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः।
यावत् पतितः स तया तत्क्षणमवधीरितः कस्मात् ॥१०॥

रजस्वला यतः।

अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ।
निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥११॥

असारस्तनयो यतः। कालसारजातिः।

दरं दिवु चूअमउलं पिच्छिअ सहिआरा विरहिणीं सहियम्।
खमिओ कंकेल्लितरु चूओ चलणाहओ कुटो ॥ १२ ॥

गण्डु मन्मथौ तौ आटौ यत्र तत्, गूढकं गुप्तं वस्त्विति शेषः कुर्वते रचयन्ति वस्तुविशेषमिति शेषः ॥ ९ ॥

अनुनेतुमिति। दयितः कान्तः अनुनेतुं कोपं शमयितुं सरागचरणायाः लाक्षारक्तचरणायाः मानिन्याः चरणे यावत् पतितः, तावत् स दयितः तया कान्तया तत्क्षणं कस्मात् अवधीरितः अवज्ञातः? ॥ १० ॥

अत्रोत्तरं रजस्वला यतः। यतः सा रजस्वला ऋतुमतीत्यर्थः। ऋतुमतीं मां मा स्पृशेति ऋतुकालरूपहृद्यवस्तु द्योत्यते।

अवलोक्येति। वध्वाः स्तनौ गुञ्जाफलविभूषितौ अवलोक्य व्याधकुटुम्बिनी व्याधगृहिणी निःश्वस्य कुतः कस्मात् रोदितुं लग्ना प्रवृत्ता? ॥ ११ ॥.

अत्रोत्तरम् असारस्तनयो यत इति। यतः तनयः पुत्रः असारः असमर्थ इत्यर्थः। पुत्रस्य गजादिहननेन तन्मुक्ताफलाहरणाशक्तेः गुञ्जाफलेन तरुणी मम वधूः कुचावलङ्करोतीति दुःखं रोदनहेतुरिति असारत्वाख्यहृद्यत्वं सारस्य च हृद्यत्वमिति द्योत्यते।

दरेति। दरं दृष्टा चूतमुकुलं प्रेक्ष्य सखीभिर्विरहिणीं सखीम्। नमितः कङ्केलितरुश्चूतश्चरणाहतः कथमिति संस्कृतम् ॥ १२ ॥

पिच्छन्तमणिमिसच्छ पिच्छिश्च महुश्राए झत्ति भिक्खुवचरम् ।
दंसिश्र कश्राइ सीसे किदे दो आदकुसुमाइं ॥ १३ ॥

इति कालसारादिच्युतजातिः ।

रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः ।
नरकशिरा जगदखिलं चिरमव्यादसमरुक्पाणिः ॥ १४ ॥

सर्गाभि: दरम् ईषत् चूतस्य आम्रस्य मुकुलं दृष्ट्वा विरहिण्यौ सख्यौ प्रेक्ष्य कङ्केलितरुः अशोकः नमितः प्रणामेनादृतः चूतः आम्रतरुः चरणेन आहतः कथम् ?

अत्रोत्तरं सहृदयगम्यं रागद्वेषरूपं बोध्यं तथाहि अशोककुसुमोद्गमे अस्याः कान्तः समेष्यतीति स्थितेस्तं प्रति प्रणतिरिति रागः, चूतमुकुलस्य अत्युद्दीपकत्वात् तं प्रति द्वेष इति भावः ।

पिच्छन्तमिति ।——

प्रेक्षन्तमनिमिषाक्षं प्रेक्ष्य मधूकया झटिति भिक्षाचरम् ।
दर्शयित्वा कया च शीर्षे कृते द्वे जातीकुसुमे ॥ इति संस्कृतम् ॥१३

कयाचित् मधूकया नार्या अनिमिषाक्षं निर्निमेषनयनं यथा तथा प्रेक्षन्तम् अवलोकयन्तं भिक्षाचरं भिक्षुकं प्रेक्ष्य दृष्ट्वा झटिति शीघ्रं द्वे जातीकुसुमे दर्शयित्वा शीर्षे शिरसि कृते । अत्र जातीकुसुमयोरुत्तमस्थाने निवेशनात् मम भर्तृपितृकुले अतिमहती उज्ज्वले च तस्मान्नाहं त्वद्योग्या, त्वं कथं मां कामयसे इति भावः सूचितः। तदत्रापि स्वकुलयो रागः भिक्षुके द्वेषश्चेति रागद्वेषौ द्योत्येते ।

रवीति । रविसुतेन तदाख्येन अथवा रवेः कस्यचित् महापुरुषस्य सुतेन पुत्रेण कृतः संस्थापितः गोकर्णः तदाख्यस्थानं यस्य तथोक्तः गोकर्णतीर्थाश्रित इत्यर्थः श्रुतेर्विषयः शब्दः गुणः यस्य तत् श्रुतिविषयगुणमाकाशम् अम्बरं वसनं यस्य तथाभूतः दिगम्बर इति यावत् वनं जलम् आत्मा स्वरूपं यस्याः सा वनात्मा गङ्गा तस्याः धरः गङ्गाधर इत्यर्थः नरकशिराः नरकपालधारीत्यर्थः

कुम्भीनसप्रीनयनाग्नयायदग्धोन्मदा दर्दुरहर्षकाले ।
स्वजन्मभक्षप्रियभोजनाय नृत्यन्ति भीमानुजगोजभाजः ॥१५॥

इत्यक्षमारादिगूढजातिः ।

वाताच्छीतिररिभ्रोऽरं वो हरतान्महासुरीदयितः ।
वीड़व्राड्भानीका वार्वाहाभोऽसमस्तानाः ॥ १६ ॥

इति पदगूढजातिः ।

नास्ति समः यस्याः सा असमा अतुल्या विषमेत्यर्थः या रुक् रोगः शूलमित्यर्थः सा पाणौ यस्य तथोक्तः शूलधर इति यावत् शम्भुः अखिलं समस्तं जगत् चिरम् अव्यात् रक्षतु ॥ १४ ॥

अत्र अजः न जायते इत्यजः शम्भुः गूढः दुर्बोधत्वादिति भावः ।

कुम्भेनेति । दर्दुराणां भेकानां, भेके मण्डूकदर्दुरावित्यमरः । हर्षकाले वर्षाकाले इत्यर्थः भीमानुजः अर्जुनः स चासौ गोजः भूरुहश्चेति भीमानुजगोजः अर्जुनवृक्ष इत्यर्थः तं भजन्ते आश्रयन्तीति तथोक्ताः स्वेभ्यः जन्म येषां ते स्वजन्मानः स्वापत्यानि तेषां भक्षाः भक्षकाः, सर्पा इत्यर्थः प्रियाणि भोजनानि येषां ते मयूरा इत्यर्थः कुं पृथिवीं धरन्तीति कुम्भाः पर्वताः तेषाम् इनः स्वामी हिमालय इत्यर्थः तस्मात् सम्भवतीति अम्भस्याः सा पार्वतीत्यर्थः तस्यां प्रीयतीति तथोक्तः कुम्भेनसप्रीः शम्भुरित्यर्थः तस्य नयने नेत्रे तृतीये इति भावः यः आश्रयाशः अग्निः तेन दग्धः भस्मीकृतः मदनः इत्यर्थः तेन उन्मादः उल्लासः येषां तादृशाः सन्तः नृत्यन्ति । अत्र मारवर्षामयूरार्जुनवृक्षाणां नामानि गोपितानीति मारादि गूढं बोध्यम् ॥ १५ ॥

वातेति । वातं वायुम् अश्नाति वातात् पन्नगः शेषनाग इत्यर्थः शीतिः शयनं यस्य तथोक्तः अरिभ्रः चक्रधरः विशिष्टा या ईड़ा स्तुतिः तस्यां व्रजति गच्छतीति वीड़व्राट् विशेषेण स्तुत्यः याकं

दयावान् प्रयतः शुद्धः प्रबुद्धः कमलेक्षणः ।
पापापहस्त्रिभुवनं बुद्धः पायादपायतः ॥ १७ ॥

न सज्जति क्वचिद्दोषे प्रीणाति जगतां मनः ।
य एकः स परं श्रीमांश्चिरं जयति सज्जनः ॥ १८ ॥

इति पादगूढजातिः ।

दृष्टस्त्वया सखि ! ब्रूहि रोदयित्वा गतोऽद्य माम् ।
भद्रे ! कल्याणिनी भूयाः प्राचीं पश्य विनिर्म्मलाम् ॥ १९ ॥

वाहनम् श्येनः पक्षिविशेषः गरुड इत्यर्थः यस्य तथाभूतः वार्वाहाभः नवनीरदनिभः श्यामाङ्गः त्रिपुरघ्नः महासुरी महादेवी या ई लक्ष्मीस्तस्याः दयितः कान्तः विष्णुरित्यर्थः वः युष्माकम् अघम् अशुभम् अरं शीघ्रं हरतात् हरतु । अत्र पदानि गूढानि ॥ १६ ॥

दयावानिति । दयावान् दयालुः प्रयतः संयतेन्द्रियः शुद्धः पूतात्मा । प्रबुद्धः प्रकृष्टज्ञानः कमलेक्षणः पद्मचक्षुरित्यर्थः पापापहः पापनाशकः बुद्धः शौद्धोदनिः त्रिभुवनम् अपायतः नाशात् पायात् रक्षतु । अत्र बुद्धः पायादपायत इति चतुर्थपादः पूर्वेषु त्रिषु पादेषु गूढोऽस्तीति पादगूढा जातिरिति बोध्यम् ॥ १७ ॥

नेति । यत्र एकः क्वचिदपि दोषे न सज्जति, जगतः मनः प्रीणाति आनन्दयति, स श्रीमान् सज्जनः परं केवलं चिरं जयति सर्वोत्कर्षेण वर्त्तते । अत्रापि चिरं जयति सज्जन इति चतुर्थपादाक्षराणि पूर्वेषु त्रिषु पादेषु गोपितानीति पादगूढत्वम् ॥ १८ ॥

दृष्ट इति । हे सखि ! अद्य मां रोदयित्वा गतः स मे कान्त इति शेषः त्वया दृष्टः, ब्रूहि वद इदानीं किं करोमीति शेषः । हे भद्रे ! साध्वि ! कल्याणिनी स्वस्थचित्ता भूयाः भव प्राचीं पूर्वां दिशं विनिर्मलां विकसितां पश्य अवलोकय । नायिकायास्तत्सख्याश्च उक्तिप्रत्युक्ती । अत्र यथा प्राची स्वभर्त्तुः सूर्य्यस्यागमने रात्रौ

दाहिणपवणुविग्गा संमीलइ लोअणाइ पहिअवहू ।
णिउणसही अङ्गुलीए कण्णविवरे ठक्केइ ॥ २० ॥

अर्थगूढजातिः ।

स्तुतिनिन्दा तदर्थत्वाद् द्वयर्थमर्थद्वयोदयात् ।
निह्नवात् कथितस्यापि शब्दव्याजादपह्नुतिः ॥ २१ ॥
बहुदोषो गुणध्वंसी गोहन्ता जनपीडकः ।
करोतु विरथो लोकमस्तमाप्तमहोदयम् ॥ २२ ॥

विष्णोः स्तुतिनिन्दे ।

विरहिणी सती प्रातस्तदुदयेन पुनर्विकाशमवाप्नोति तथा त्वमपि पुनः स्वकान्तागमे सुखमाप्स्यतीति भावार्थस्य गूढत्वमिति बोध्यम् ॥ १९ ॥

दाहिणेति ।——

दक्षिणपवनोद्विग्ना सम्मीलयति लोचने पथिकवधूः ।
निपुणसखी अङ्गुल्या कर्णविवरं ठक्कयति ॥ इति संस्कृतम् ॥ २० ॥

काचित् पथिकवधूः विरहिण्यर्थः दक्षिणपवनेन मलयसमीरणेन उद्विग्ना व्याकुलिता सती लोचने नेत्रे सम्मीलयति तस्याश्च निपुणा सुविज्ञा सखी अङ्गुल्या कर्णविवरं कर्णच्छिद्रं ठक्कयति सङ्कुचयति आच्छादयतीत्यर्थः । अत्र नायिकाया नेत्रनिमीलनात् मरणाशङ्कया कर्णविवरात् प्राणवायुविनिर्गमनिवारणार्थं तत्सख्या कर्णविवररोधः कृत इति भावार्थस्य गूढत्वं सुधीभिर्विभाव्यम् ॥ २० ॥

स्तुतीति । स्तुतिश्च निन्दा च यत्र सा स्तुतिनिन्दा नाम जातिः तदर्थत्वात् स्तुतिनिन्दापरत्वात् ज्ञेयेति शेषः अर्थद्वयोपादानात् उभयार्थप्रकाशनात् द्वयर्थं तदाख्यं जातिरिति भावः कथितस्यापि शब्दव्याजात् शब्दच्छलात् निह्नवात् गोपनात् अपह्नुतिर्नाम जातिर्ज्ञेयेति शेषः ॥ २१ ॥

बहुदोष इति । बहवः दोषाः यस्य स बहुदोषः अथच बहवः दोषः भुजाः यस्य सः बहुबाहुरित्यर्थः, तथाच भगवद्गीतायामर्जुन-

सततमञ्छितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः ।
इह कलिकाले कुपतिर्जगतस्त्वं परमदुःखकरः ॥२३॥

राज्ञः स्तुतिनिन्दे । इति स्तुतिनिन्दाजातिः ।

प्रसन्नवदनः श्रीमानयं लब्धगुणोदयः ।
करप्रचारसुभगो राजा नन्दयति प्रजाः ॥ २४ ॥

चन्द्रभूपती ।

वाक्यम् । तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते इति । गुणध्वंसी गुणनाशकः अथच त्रिगुणातीतः । गोहन्ता गोवधकारी अथच गां पृथ्वीं हन्ति गच्छति अवतारधारणेनेति भावः तथोक्तः भूभारहरणार्थमवतारं गच्छतीत्यर्थः, जनानां पीडकः अथच पापिनां दण्डयितेत्यर्थः जनार्दन इति यावत्, विरथः रथशून्यः अथ च विः पक्षी गरुड इति यावत् रथो यस्य तथाभूतः हरिरिति यावत्, लोकं जगत् अस्तमाप्तः विनष्टः महान् उदयो यस्य तादृशम् अथच अटयं लोकं दुर्जनमित्यर्थः अस्तं प्राप्तविनाशं करोतु आप्तमहः लब्धोत्सव इति कर्त्तृविशेषणमस्मिन् पक्षे वेदितव्यम् ॥ २२ ॥

सततमिति । इह अस्मिन् कलिकाले सततं मञ्छितजनानां पूज्यजनानां वत्सलः प्रियः बहूनि भयानि यस्यां तथाभूता या पापक्रिया पापकार्य्यं तस्याः परिभ्रष्टः विहीनः कुपतिः पृथिवीपतिस्त्वं जगतः परं केवलं अदुःखकरः सुखकरः । अथच सततम् अञ्छितजनानां दुर्जनानां वत्सलः बहुभयः पापक्रियया भयङ्करपापानुष्ठानेन परिभ्रष्टः सदाचारादिति भावः कुपतिः कुत्सितप्रभुः त्वं जगतः परमं यत् दुःखं तस्य करः कर्त्ता ॥ २३ ॥

प्रसन्नेति । प्रसन्नं वदनं यस्य तथोक्तः श्रीमान् शोभावान् शोभनस्य लब्धः गुणानाम् उदयः अन्यत्र लब्धगुणः प्राप्तोत्कर्षः उदयो यस्य तथोक्तः करस्य राजभागधेयस्य प्रचारे प्रकटने सुभगः अक्लेशकर इति यावत् अन्यत्र कराणां किरणानां प्रचारेण

विनायकाहितप्रीतिर्देवो गङ्गां बभार यः ।
सर्वदो माधवः स त्वामव्यादव्यर्थविक्रमः ॥ २५ ॥

शङ्करवासुदेवौ । द्व्यर्थजातिः ।

शीत्कारं जनयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किमु मिलितो नहि नहि सखि ! हैमनः पवनः॥२६

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥२७॥

अपह्नुतिजातिः ।

विलासेन सुभगः मनोहरः राजा चन्द्रश्च प्रजाः लोकान् नन्दयति रञ्जयति ॥ २४ ॥

विनायकेति । विनायके गणाधिपे अन्यत्र वीनां पक्षिणां नायके अधिपतौ गरुडे इति यावत् आहिता अर्पिता प्रीतिर्येन तथोक्तः यः देवः गङ्गां सुरधुनीम् अन्यत्र अगं पर्वतं गोवर्द्धनं गां पृथिवीञ्च बभार दधार, सः अव्यर्थविक्रमः सफलशक्तिः उमाधवः शङ्करः सर्वदा त्वाम् अव्यात् रक्षतु अन्यत्र सर्वदः सर्वाभीष्टप्रदः माधवः विष्णुः त्वाम् अव्यादित्यन्वयः ॥ २५ ॥

शीत्कारमिति । शीत्कारं जनयति, अधरं व्रणयति क्षतं करोतीत्यर्थः, रोमाञ्चं तनोति विस्तारयति । इति नायिकया कयाचिदुक्ते नागरिकः कोऽपीति शेषः मिलितः किमु ? यः तव शीत्कारादिहेतुरिति भावः इति सख्या उक्ते, हे सखि ! नहि नहि नैवं नैव नागरिकः मिलित इति शेषः हैमनः हैमन्तः पवनः वायुरिति नायिकया अपह्नुतमिति अपह्नुतिजातिः ॥ २६ ॥

रुचिरेति । रुचिरं मनोहरं स्वरः वर्णः पदं पदविन्यासश्च यस्याः तादृशी रसभाववती रसिका भावुका चेत्यर्थः जगतां मनः हरति । इति केनचित् उक्ते कथिते तत् तदा तरुणी युवतिः

स्वरेषु बिन्दुयुक्तेषु हलां यदवबोधनम् ।
तद्बिन्दुमदिति प्राहुः केचिद्बिन्दुमतीमिति ॥ २८
मानसी नाभसीत्याद्याः बुद्धादौ न्यासतो हि याः ।
बाहुल्येनाप्रयोगात्तु नेह तासां प्रदर्शनम् ॥ २९ ॥
त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः ।
अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥३०॥
इति बिन्दुमज्जातिः ।

किम् इति प्रश्नकारिणोक्ते नहि नहि मधुरमीवस्य मनोहर-स्वभावस्य मनोहरस्वभाववर्णनचतुरस्येति यावत् बाणस्य कवेरिति शेषः वाणी वाक् जगन्मनः हरतीति शेष इति पूर्ववक्त्रा स्वाभिप्राया-पह्नवः कृत इत्यत्रापि अपह्नुतिजातिः ॥ २७ ॥

स्वरेष्विति । बिन्दुयुक्तेषु हलानां व्यञ्जनानां यत् अवबोधनं प्रतीतिः, तत् बिन्दुरनुस्वारो विद्यतेऽस्मिन्निति बिन्दुमत् बिन्दु-युक्तम् इति केचित् बिन्दुमतीमिति च प्राहुः कथयन्ति ॥ २८ ॥

मानसीति । मानसी नाभसी इत्याद्याः याः बुद्धादौ न्यासतः कथिता इति शेषः ताः बाहुल्येन प्रायशः अप्रयोगाः प्रयोगाभाव-वत्य इत्यर्थः तस्मात् इह ग्रन्थे तासां मानसीप्रभृतीनां प्रदर्शनं न अस्तीति शेषः ॥ २९ ॥

त्रिनयनेति । त्रिनयनस्य हरस्य चूडारत्नं शिरोमणिः सिन्धोः समुद्रस्य मित्रं सखा, कुमुद्वतीनां कुमुदिनीनां दयितः कान्तः घुसृणेन कुङ्कुमेन अरुणं रक्तं यत् तरुण्याः युवत्याः वदनं मुखं तदुपमः अयं चन्द्रः उदयति । आर्य्यावृत्तम् ॥ ३० ॥

बिन्दुयुक्ताः स्वरा आदौ लेखनीयाः तद्यथा ।——

ि ः....ृ ा ०ः० ि ०ः० ि ० ः ा ः . ु ृ ः०ो • ि ••ः ।

अ. .ु ••ि • .ु .ृ .ा .ु..ु .ो•• •ो••ःःः ।

क्रियादिकं पदे यत्र पदसाधनकौशलात्।
स्फुटं न लक्ष्यते तत्स्यात् क्रियागुप्तादिकं यथा॥ ३१॥
राजन्नवघनश्यामनिस्त्रिंशाकर्षदुर्जय।
आकल्पं वसुधामेतां विद्विषो त्व रणे बहून्॥ ३२॥
पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः।
सहकारद्रुमा रम्यां वसन्ते कामपि श्रियम्॥ ३३॥

इति क्रियागुप्तजातिः।

न करोतु नाम रोषं न वदतु परुषं न हन्तु वा शत्रून्।
रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य॥ ३४॥

एतद्दर्शनेन वृत्तानां योजनेन विन्दुमत् वृत्तं भवतीत्येवं सर्वत्र वेदितव्यम्।

क्रियादिकमिति। यत्र पदानां सन्धानस्य योजनस्य कौशलात् क्रियादिकं स्थितं स्फुटं न लक्ष्यते तत् क्रियागुप्तादिकं यथा स्यात्॥ ३१॥

राजन्निति। हे राजन्! त्वं घनवत् श्यामो यः निस्त्रिंशः असिः तस्य आकर्षेण दुर्जयः सन् आकल्पम् आप्रलयम् एतां वसुधाम् अव रक्ष तथा रणे बहून् विद्विषः शत्रून् द्य छिन्धि दो अ छेदे इत्यस्मात् कर्त्तरि लोट्। अत्र अव द्य इति क्रियाद्वयं गुप्तं बोध्यम्॥ ३२॥

पुंस्कोकिलेति। एते सहकारद्रुमाः चूततरवः वसन्ते पुंस्कोकिलकुलस्य आरवैः कूजितैः नितान्तं रम्यां कामपि श्रियम् अगुः प्रापुः। अत्र अगुरिति क्रिया गुप्ता॥ ३३॥

नेति। रोषं न करोतु नाम, परुषं निष्ठुरं न वदतु, शत्रून् वा न हन्तु अयमिति शेषः, तथापि अस्य वीरस्य धीः बुद्धिः अखिलां समग्रां महीं पृथिवीं रञ्जयति। अत्र धीरिति कर्त्तृपदं गुप्तम्॥३४॥

शरदिन्दुकुन्दधवलं नगनिलयरतं मनो हरं देवम्।
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति॥ २५॥

कर्तृगुप्तम्।

शीत्कारासारसंवाही सरो जवनमारुतः।
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः॥ २६॥

सुभग! तवाननपङ्कजदर्शनसञ्जातनिर्भरप्रीतेः।
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः॥ २७॥

कर्मगुप्तम्।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी।
दुर्वारा मानसं हंसाः गमिष्यन्ति घनागमे॥ २८॥

शरदिति। यैः जनैः अनिशं सुकृतं पुण्यं कृतं तेषामेव मनः शरदिन्दुकुन्दधवलं शरच्चन्द्रकुन्दकुसुमशुभ्रं नगनिलयरतं पर्वतावासगतं देवं हरं प्रसादयति। अत्र मन इति कर्तृपदं गुप्तम्॥ २५॥

शीत्कारेति। शीत्काराणाम् आसारः धारासम्पातः तं वहतीति तथाभूतः, पान्थस्त्रीणां विरहिणीनामित्यर्थः निःश्वासैः मांसल इव परिपुष्ट इव जवनमारुतः वेगवान् वायुः सरः सरोवरं प्रक्षोभयति कम्पयति। अत्र सर इति कर्मपदं गुप्तम्॥ २६॥

सुभगेति। हे सुभग! तव आननपङ्कजस्य मुखकमलस्य दर्शनात् सञ्जाता निर्भरा अत्यन्ता प्रीतिः यस्य तादृशस्य कस्य पुण्यवतः रमणीयः दिवसः शं मङ्गलं कुर्वन् शमयति गच्छति? अत्र शमिति कर्मपदं गुप्तम्॥ २७॥

पूतेति। घनागमे वर्षाकाले पूतिपङ्कमये दुर्गन्धकर्दमपूर्णे कासारे सरसि दुष्टं याः जलं तेन कलुषितवारिणेत्यर्थः अत्यर्थं दुःखिताः अमी हंसाः मानसं गमिष्यन्ति। अत्र दुर्वारा वारयितुमशक्या इत्यापाततः प्रतीतेः करणस्य गूढत्वं बोध्यम्॥ २८॥

अहं महानसायातः कल्पितो नरकस्तव ।
मया मांसादिकं भुक्तं भीमं जानीहि मां वक ! ॥३९॥

करणगुप्तम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यकामया ॥ ४० ॥
प्रयस्त्वायुक्तमार्गस्य तव सम्मानिताश्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय ! प्रभो ! ॥ ४१ ॥

सम्प्रदानगुप्तम् ।

शिलीमुखैस्त्वया वीर ! दुर्वारैर्निर्जितो रिपुः ।

अहमिति । अहं महानसा महता अनसा शकटेन, अनः शकटतातयोरिति कोषः । आयातः आगतः तव नरकः दुःखदस्थानविशेषः कल्पितः विधिनेति शेषः । हे वक ! मया मांसादिकं त्वदर्थमाहृतमिति भावः भुक्तं मां भीमं जानीहि । अत्र महानसायात इत्यस्य महानसात् आयात इत्यर्थप्रतीतेः करणस्य गुप्तत्वमिति बोध्यम् ॥ ३९ ॥

अम्भोरुहेति । कामिनी वाप्याः दीर्घिकायाः पयसि स्नात्वा भक्तिसम्पन्ना सती सौभाग्यकामया पतिवाल्लभ्याभिलाषेण अये इः कामः तस्मै अम्भोरुहं पुष्पं ददाति । अत्र अये इति आपाततः सम्बोधनप्रतीतेः सम्प्रदानस्य गुप्तत्वं बोध्यम् ॥ ४० ॥

प्रयस्त्वा इति । हे गुणरत्नानाम् आलय ! प्रभो ! उक्तमार्गस्य उपदिष्टशिष्टाचारस्य तव प्रयस्त्वै मङ्गलाय सम्मानितां सम्मार्गं श्रिताः प्राप्ताः आत्मीया इत्यर्थः के नाम जनाः न स्पृहयन्ति नाकाङ्क्षन्ति ? सर्वे एव स्पृहयन्तीत्यर्थः । अत्र प्रयस्त्वायुक्तमार्गस्येत्यस्य आपाततः एकपदत्वप्रतीतेः सम्प्रदानगुप्तत्वं बोध्यम् ॥ ४१ ॥

शिलीमुखैरिति । हे वीर ! त्वया दुर्वारैः शिलीमुखैः शरैः

विभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ४२ ॥

सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम्।
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ ४३ ॥

अपादानगुप्तम्।

या कटाक्षच्छटापातैः पवित्रयति मानवम्।
एकान्तरोपितप्रीतिरस्ति सा कमलालया ॥ ४४ ॥

विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः।
तथाहि भक्ष पादाभ्यां निर्वाणं हन्त्ययं जनः ॥४५॥

अधिकरणगुप्तम्। कारकगुप्तजातिः।

निर्जितः रिपुः शत्रुः कुसुमाकुले वनेऽपि अलिनः भ्रमरात् अत्यन्तं बिभेति। अत्रात्यन्तमलिन इत्यस्यापाततः एकपदत्वप्रतीतेरपादानस्य गूढत्वम् ॥ ४२ ॥

सरसीति। अयं जनः सरसीतः सरोवरात् अम्भोजसुरभि पद्मसुगन्धं स्वच्छं निर्मलम् एकान्तशीतलम् अतिशीतं दर्पकारकं बलकरमित्यर्थः कं जलं यद्वा कन्दर्पकारकं कामोद्दीपकरं जलमिति शेषः उद्धृत्य पिबति। अत्र सरसीतोयमिति आपातत एकपदत्वप्रतीतेरपादानस्य गूढत्वम् ॥ ४३ ॥

येति। या कटाक्षच्छटापातैः मानवं पवित्रयति शोधयति सम्पन्नं करोतीति भावः सा कमलालया लक्ष्मीः कान्ते भर्त्तरि ए अः विष्णुः तस्मिन् रोपिता अर्पिता प्रीतिः प्रणयो यया तथाभूता अस्ति। अत्र एकान्ते इति एकपदत्वप्रतीतेरधिकरणस्य गुप्तत्वम् ॥४४॥

विपद्यीति। निरूष्मणः उष्मरहितस्य निरभिमानस्येत्यर्थः सर्वस्यैव विपदि अमानता मानं प्रति अवज्ञेया सिद्धा निश्चिता, तथाहि तमेवार्थं आलोच्य अयं जनः पादाभ्यां निर्वाणं भक्ष हन्ति ताडयति। अत्र विपद्यीति अधिकरणस्य गूढत्वम् ॥ ४५ ॥

तृष्णीव मधुमासेऽस्मिन् सहकारद्रुमञ्जरी ।
इयमुद्भिन्नमुकुलैः भाति न्यस्तशिलीमुखा ॥ ४६ ॥
प्राप्तमद्यो मधुमासः प्रबला रुक् प्रियतमो विदूरस्थः ।
असतीयं सन्निहिता हा हतशीला सखी नियतम् ॥ ४७ ॥

सम्बन्धगुप्तजातिः ।

सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्या वचस्तथाच त्वमसत्यं वेत्सि न क्वचित् ॥ ४८ ॥

तृष्णीवेति । अस्मिन् मधुमासे चैत्रमासे इयं सहकारद्रोः चूततरोः मञ्जरी उद्भिन्नमुकुला प्रस्फुटितमुकुला सती उद्भिन्न-मुकुलेति पाठेऽपि स एवार्थः । ए: इ: कामः तस्य न्यस्तशिलीमुखा निहितशरा तृष्णीव भाति राजते । न्यस्तशिलीमुखा उपविष्ट-भ्रमरेति सहकारद्रुमञ्जरीत्यस्यापि विशेषणम् । अत्र उद्भिन्न-मुकुलैरिति अपृथक्पदत्वप्रतीतेः सम्बन्धगूढत्वम् ॥ ४६ ॥

प्राप्तेति । अदः मधु मद्यं प्राप्तं मासचन्द्रस्य प्रबला रुक् पीड़ा, अत्युद्दीपकत्वमित्यर्थः प्रियतमः कान्तः अस्याः इति शेषः विदूरस्थः अतिदूरवर्त्ती प्रियतमोऽपि दूरस्थ इत्यपि पाठः । इयम् असती मत्सखीति शेषः सन्निहिता, हा इति खेदे सखी अहमिति शेषः नियतं निश्चितं हतशीला दुःशीला जातेति शेषः मयि सन्निहितायामस्या दुःशीलतायां सर्वां सर्वे मामेव दूषयन्तीति मम हतशीलत्वमिति भावः । अत्र मधुमास इति प्रथमान्तप्रतीतेः सम्बन्धगूढत्वम् ॥ ४७ ॥.

सर्वज्ञेनेति । हे सर्वज्ञानाम् इन प्रभो ! त्वया अविज्ञातम् ईदृशं किञ्चिदपि मिथ्या वचः न अस्ति, तथाच त्वं क्वचिदपि असत्यं न वेत्सि । अत्र सर्वज्ञेनेति तृतीयान्तप्रतीतेरामन्त्र्यपदस्य गूढत्वम् ॥ ४८ ॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥ ४९ ॥

आमन्त्रितगुप्तजातिः ।

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति ।
रुष्टेनापि त्वया वीर ! शम्भुनारिः समः कृतः ॥ ५० ॥
नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती ॥ ५१ ॥

समासगुप्तजातिः ।

नितान्तस्वच्छहृदयं सखि ! प्रेयान् समागतः ।

कमले इति । हे अले भ्रमर ! कमले नित्यं मधूनि पिबतः तव किं सुखं भविष्यति न सन्देहः, अत्र सन्देहो नास्तीत्यर्थः । किन्तु दोषाकरोदये चन्द्रोदये कष्टं कमलस्य सङ्कुचितत्वादिति भावः । कमले कमले इत्यापाततः सप्तम्याप्रतीतेरामन्त्र्यपदस्य गूढत्वम् ॥ ४९ ॥

विषादीति । हे वीर ! त्वया रुष्टेनापि कुपितेनापि अरिः शत्रुः शम्भुना हरेण समः कृतः तथाच तव अरिः विषादी विषण्णः पक्षे विषं कालकूटम् अत्तीति तथोक्तः, सदारः सस्त्रीकः पक्षे सपार्वतीकः अगं पर्वतं राज्यच्युतत्वादिति भावः पक्षे कैलासं हिमवन्तं वा न मुञ्चति न त्यजति । यद्वा सदा रोगं पीड़ां दुःखमित्यर्थः न मुञ्चतीत्यपि शत्रुपक्षे अर्थः सङ्गच्छते । अत्र विषादीति सदार इति च समासगूढत्वम् ॥ ५० ॥

नित्यमिति । देवैर्नित्यम् आराधिता सेविता नित्यं मा लक्ष्मीर्यस्याः सा देवैराराधिता चेति वा मण्डलाग्रं खड्गं गदां शङ्खं चक्रं बिभ्रती कंसस्य द्विषतः कृष्णस्य तनुः मूर्त्तिः जयति सर्वोत्कर्षेण वर्त्तते । अत्र नित्यमिति समासस्य गूढत्वम् ॥ ५१ ॥

नितान्तेति । हे सखि ! नितान्तस्वच्छम् अतिनिर्मलं हृदयं

त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५२ ॥

कलिकालमियन्तावदगस्त्यस्य मुनेरपि ।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५३ ॥

लिङ्गगुप्तजातिः ।

प्रमोदं जनयन्त्येव सदारा: गृहमेधिनः ।
यदि धर्मश्च कामश्च भवेतां सङ्गतावुभौ ॥ ५४ ॥

सुव्वचनगुप्तम् ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति ।
त्वयि सन्निहिते तासु दद्यात् किं कथयोत्तरम् ॥ ५५ ॥

यस्य तादृशः अयं प्रेयान् प्रियतमः समागतः, यः चिराद्दर्शनेन या प्रीतिः अनुरागः तया त्वां समालिङ्ग्य रंस्यते विहरिष्यति। अत्र नितान्तस्वच्छहृदयमिति क्लीबत्वभ्रमेण पुंस्त्वस्य गूढत्वम् ॥५२॥

कलिकेति। इयं तावत् शशिखण्डानुकारिणी चन्द्रखण्डसदृशी अगस्त्यस्य वकस्य कलिका कोरकः, कलिका कोरकः पुमानित्यमरः। अत्र जगति मुनेरपि तपस्विनोऽपि मानसम् अतिशयेन खण्डयति क्षोभयति उद्दीपकत्वादिति भावः। अत्र कलिकालमिति लिङ्गस्य गूढत्वम् ॥ ५३ ॥

प्रमोदमिति। राः धनं सदा गृहमेधिनः गृहस्थस्य प्रमोदम् आनन्दं जनयन्त्येव। यदि धर्मश्च कामश्च उभौ सङ्गतौ धनेनेति शेषः भवेताम्। अत्र सदारा गृहमेधिन इति प्रथमाबहुवचनान्तप्रतीतेः रा इति प्रथमैकवचनस्य गूढत्वम् ॥ ५४ ॥

कस्मादिति। त्वं कस्मात् दुर्बला असीति सख्यः तां कान्तां परिपृच्छति पुनः पुनरतिशयेन वा पृच्छन्तीति यङ्लुगन्तस्य लटि अन्तिविभक्तेरूपमिदम्। त्वयि सन्निहिते सति तासु सखीषु किम् उत्तरं दद्यात् इति शेषः कथय ॥ ५५ ॥

विलक्षवचनगुप्तम् । वचनगुप्तजातिः ।

अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ।
प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ॥ ५६ ॥

महाशयमतिस्वच्छं नीरं सन्तापशान्तये ।
खलावासादतिश्रान्ताः समाश्रयत हे जनाः ! ॥५७॥

तुषारधवलः स्फूर्जन्महामणिधरोऽनघः ।
नागराजो जयत्येकः पृथिवीधरणक्षमः ॥ ५८ ॥

मात्राच्युतजातिः ।

सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।

अन्य इति । यत्र येषु मात्रा स्वरवर्णा आदयो येषां तानि च्युतानि येषां तेषु आदिबिन्दुविसर्गादयो गृह्यन्ते । अन्यः द्वितीयोऽपि अर्थः स्फुटः स्पष्टः प्रतीयते, तज्ज्ञाः तद्विदः जनाः तत् इत्तं मात्राच्युतकादिकं मात्राच्युतकं बिन्दुच्युतकं विसर्गच्युतकमित्यादि विदुः जानन्ति ॥ ५६ ॥

महाशयमिति । हे खले शस्यादिरक्षणार्थमनावृते स्थाने वासात् पक्षे खलस्य दुर्जनस्य आवासात् आश्रयात् अतिश्रान्ता जनाः महाशयं विस्तृतं पक्षे सदाशयसम्पन्नम् अतिस्वच्छम् अतिनिर्मलं पक्षे अपापं नीरं जलं मात्राच्युतौ नरं सन्तापशान्तये समाश्रयत ॥५७॥

तुषारेति । तुषारवत् धवलः पक्षे तुषारेण धवलः श्वेतः स्फूर्जन् दीप्यमानः यः महामणिः महारत्नं तस्य धरतीति धरः पक्षे स्फूर्जतां महतां मणीनां धरः आकर इत्यर्थः अनघः निर्मलः एकः एकलः पृथिव्या धरणे क्षमः शक्तः उभयत्र समानमेतत् । नागराजः शेषः मात्राच्युतौ नगराजः हिमालयः जयति सर्वोत्कर्षेण वर्त्तते ॥ ५८ ॥

सुश्यामेति । शोभना श्यामा, शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च

कस्यैषा नगभूः प्रीतिं भुजङ्गस्य करोति न ॥ ५९ ॥

यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः।

तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥ ६० ॥

विन्दुच्युतकजातिः।

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम्।

विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥ ६१ ॥

सुरगीतेत्या। तप्तकाञ्चनवर्णाभा सा श्यामा परिगीयते इत्युक्त-लक्षणा चन्दनवती चन्दनालङ्कृता तिलकभूषिता तिलकशोभिता एषा अनङ्गस्य कामस्य भूः स्थानं कान्ता कस्य भुजङ्गस्य कामिनः प्रीतिं न करोति ? न जनयति ? अपि तु सर्वस्यैवेत्यर्थः। अत्र नङ्गभूरि-त्यस्य विन्दुच्युतौ नगभूरिति पाठे नगभूः पर्वतभूमिरित्यर्थः अस्मिन् पक्षे श्यामा तृणभूयस्त्वादिति भावः ॥ ५९ ॥

यथेति। अयं मे मम वकुलद्रुमः वकुलवृक्षः यथा सन्तः प्रसवाः फलपुष्पाणि यस्य तथोक्तः स्निग्धः छायावाहुल्यादिति भावः सति उत्कृष्टे मार्गे पथि विहिता कृता स्थितिरवस्थानं येन तथाभूतः तथा सर्वेषाम् आश्रयः सेवनीय इति भावः। सत्यं निश्चितम् अस्तीति शेषः। अत्र विन्दुच्युतौ अयमेव कुलद्रुम इति पाठे अयमेव जनः सत्प्रसवः सुसन्तानः स्निग्धः सर्वस्नेहवान् सन्मार्गे सदाचारे कृत-स्थितिः तथा सर्वेषां जनानाम् आश्रयः उपकर्त्तेति यावत् अतएव सत्यं कुलद्रुमः वंशेषु तरुवत् उन्नत इति यावत् ॥ ६० ॥

महीरुह इति। एते महीरुहः वृक्षाः कलापिनां मयूराणां विहङ्गानां पक्षिणां हृद्यैः मनोज्ञैः स्निग्धैः विरुतैः रवैः नीरवाहाय मेघाय स्वागतानीव सुखेन आगतं भवतेति प्रश्नवाक्यानीव कुर्वते। अत्र हृद्यैः कलापिनामित्यत्र विसर्गच्युतौ हृद्यैकलापिनामिति पाठे हृद्यं मनोज्ञम् एकम् अद्वितीयं कलापमस्तीति तथोक्तानां पक्षिणां मयूराणामिति भावः ॥ ६१ ॥

अगस्त्यस्य मुनेः शापाद् ब्रह्मस्यन्दनमास्थितः ।
महासुः खात् परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६२ ॥

विसर्गच्युतकजातिः ।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारः नदीनः केन सेव्यते ॥ ६३ ॥

सुशीलः स्वर्णगौराभः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६४ ॥

अक्षरच्युतकजातिः ।

अगस्त्यस्येति । ब्रह्मस्यन्दनं ब्राह्मणवाहनम् आस्थितः महासुः महाप्राणः नहुषः अगस्त्यस्य मुनेः शापात् खात् आकाशात् परिभ्रष्टः सन् सर्पतां गतः प्राप्तः । अत्र महासुः खादित्यस्य विसर्गच्युतौ महासुखात् स्वर्गसुखात् परिभ्रष्ट इत्यर्थः ॥ ६२ ॥

महानपीति । महानपि अतिविस्तृतोऽपि पक्षे उदारोऽपि, सुधीरोऽपि अतिगभीरोऽपि पक्षे सुपण्डितोऽपि बहुरत्नयुतोऽपि नानारत्नाकरोऽपि पक्षे बहुधनसम्पन्नोऽपि सन् विरसः विस्वादः क्षारमयत्वादिति भावः पक्षे कर्कशः कुपरिवारः पृथिवीवेष्टितः पक्षे कुत्सितपरिजनः नदीनाम् इनः स्वामी समुद्र इत्यर्थः दीन इत्यस्य नकारस्य सस्वरस्य च्युतौ दीनः व्ययकुण्ठ इत्यर्थः केन जनेन सेव्यते ? न केनापीत्यर्थः ॥ ६३ ॥

सुशील इति । सुशीलः शोभनचरितः स्वर्णगौराभः हेमकान्तिरित्यर्थः पूर्णचन्द्रनिभाननः चन्द्रवदनः सुगतः बुद्धदेवः हृदि संस्थितः सन् कस्य प्रीतिं न तनोति न विस्तारयति ? सर्वस्यैवेत्यर्थः । अत्र सुगत इत्यस्य मध्यवर्णस्य गकारस्य सस्वरस्य लोपे सुत इति पाठे तथाविधः सुतः पुत्रः कस्य प्रीतिं न तनोतीत्यन्वयः ॥ ६४ ॥

तनोतु ते यस्य फणी गरुत्मान्
पाणौ सुरारिर्दयिता च शय्या ।
नाभ्यां स्फुरन् भद्रमशुभ्रदेहः
पद्मा गतिश्चक्रमसौ विरिञ्चिः ॥ ६५ ॥
हरः क्षयी तापकरः सुरेशः
शान्तो हरिर्गोत्ररिपुर्विवस्वान् ।
चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य
लक्ष्म्या हृतः पातु विधिर्जगन्ति ॥ ६६ ॥

स्थानच्युतकजातिः ।

भिक्षवो रुचिराः सर्वे सुरसाश्च जनप्रियाः ।

तनोत्विति । यस्य शय्या फणी शेषनागः, गतिर्वाहनं गरुत्मान् गरुड़ः, पाणौ हस्ते चक्रं सुदर्शनमिति यावत्, दयिता कान्ता पद्मा लक्ष्मीः, नाभौ स्फुरन् कमलदुद्भवन् विधाता विरिञ्चिरिति वा पाठः । असौ अशुभ्रः कृष्णः देहः यस्य तथोक्तः सुरारिः कृष्णः ते तव भद्रं शुभं तनोतु विस्तारयतु । अत्र यो येनान्वेति तस्य अयथा-स्थाने विन्यस्तत्वात् स्थानच्युतकत्वम् ॥ ६५ ॥

हर इति । हरः शम्भुः द्विजिह्वाश्रितः पन्नगभूषण इत्यर्थः, चन्द्रः क्षयी क्षयरोगग्रस्तः, विवस्वान् सूर्यः तापकरः असह्यतेजा इत्यर्थः, सुरेशः इन्द्रः गोत्ररिपुः पर्वतशत्रुः अथच कुलशत्रुः, विधिः ब्रह्मा शान्तः संयतेन्द्रियः सम्भोगाक्षम इति भावः इति हेतोः उपेक्ष्य अनपेक्ष्येत्यर्थः एतानिति शेषः लक्ष्म्या हृतः हरिः जगन्ति पातु रक्षतु । अत्रापि अन्वेतव्यानां पदानामयथास्थानपातित्वेन स्थानच्युतकत्वम् ॥ ६६ ॥

भिक्षव इति । मगधे मगधदेशे सर्वे जनाः भिक्षवः श्वेतवसनाः

क्षमायामतिसम्पन्ना दृश्यन्ते मगधे परम् ॥ ६७ ॥

सत्यशीलो दयोपेतो दाता शुचिरमत्सरः ।
जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ ६८ ॥

व्यञ्जनच्युतजातिः ।

स्फोटयित्वाक्षरं किञ्चित् पुनरन्यस्य दानतः ।
यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥ ६९ ॥

सदागतिहतोच्छ्रायस्तमसो वश्यतां गतः ।
अस्तमेष्यति दीपोऽयं विधुरेकः शिवे स्थितः ॥ ७० ॥

रुचिराः मनोज्ञाः सुरसाः रसिकाः जनप्रियाः लोकरञ्जनाः क्षमायां पृथिव्याम् अतिसम्पन्नाः अत्यन्तधनशालिनः परं केवलं दृश्यन्ते । अत्र भिक्षव इत्यस्य भकारं व्यञ्जनं त्यक्त्वा इक्षव इति पाठे इक्षवः मिष्टरसविशेषा इत्यर्थः सुरसाः सुष्ठु रसशालिनः अतिसम्पन्नाः अतिप्रचुरा इत्यर्थः । अन्यत् सुगमम् ॥ ६७ ॥

सत्येति । सत्यशीलः सत्यभाषणरतः दयोपेतः दयावान् दाता दानशीलः शुचिः विशुद्धचरितः अमत्सरः अन्यशुभद्वेषरहितः जिनः बुद्धदेवः उच्चैः उन्नतं पदम् उत्तमां गतिमिति यावत् अभीप्सता अभिलषता जनेन सर्वात्मना सर्वप्रकारेण सेव्यः । अत्र जिन इत्यस्य जकारं व्यञ्जनं हित्वा इन इति पाठे इनः प्रभुरित्यर्थः । अन्यत् सुगमम् ॥ ६८ ॥

स्फोटयित्वेति । किञ्चित् किमपि अक्षरं स्फोटयित्वा ध्वंसयित्वा पुनः अन्यस्य अक्षरस्य दानतः दानात् यत्र अपरोऽर्थः भवेत् तत् च्युतदत्ताक्षरं च्युतं दत्तञ्च अक्षरं यस्मिन् तथोक्तं नाम वृत्तं स्यादिति शेषः ॥ ६९ ॥

सदेति । सदा गत्या गमनेन हतः उच्छ्रायः औन्नत्यं यस्य तथाभूतः समस्तलोकगमनजन्यश्रमखेदाधीनक्षयित्वार्थः तमसः

पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा ।
करोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ ७१ ॥
इति च्युतदत्ताक्षरजातिः ।

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
चतुर्थः परिच्छेदः ।

समाप्तः ।

---

अन्धकारस्य वश्यतां गतः दशवर्त्ती अयम् एक एव शिवे स्थितः दीपः उज्ज्वलप्रभः विभुः अस्तम् एष्यति गमिष्यति । अत्र दीप इत्यस्य पकारं त्यक्त्वा तत्स्थाने नकारे दत्ते दीन इति पाठे दीनो दुःखित इत्यर्थ इति च्युतदत्ताक्षरत्वम् ॥ ७० ॥

पूर्णेति । पूर्णचन्द्रवत् मुखं यस्याः पक्षे पूर्णचन्द्र एव मुखं यस्या-स्तथोक्ता रम्या मनोज्ञा निर्मलम् अम्बरं वसनं यस्याः पक्षे निर्मलम् अम्बरम् आकाशं यस्यां तथोक्ता कामिनी कस्य जनस्य स्वान्तं मनः एकान्तमदनातुरं नितान्तकामासक्तं न तनोति ? न करोति ? सर्व-स्यैवेत्यर्थः । अत्र कामिनीत्यस्य ककारं छित्वा तत्स्थाने यकारं दत्त्वा यामिनीति पाठे च्युतदत्ताक्षरत्वम् । एकान्तमदनोत्तरमिति पाठान्तरम् ॥ ७१ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्येण कृता
विदग्धमुखमण्डनव्याख्या समाप्ता ।

---

# रतिमञ्जरी ।



नत्वा सदाशिवं देवं नागराणां मनोहरम् ।
रचिता जयदेवेन सुबोधा रतिमञ्जरी ॥ १ ॥
रतिशास्त्रं कामशास्त्रं तस्य सारं समाहृतम् ।
सुप्रबन्धं सुसंक्षिप्तं जयदेवेन भण्यते ॥ २ ॥
पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥ ३ ॥
भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥ ४ ॥

नत्वेति । नागराणां नगरवासिनां मनोहरं सदाशिवं देवं नत्वा जयदेवेन सुबोधा रतिमञ्जरी रचिता । अनुष्टुब्वृत्तम् ॥१॥

रतिशास्त्रमिति । रतिशास्त्रं कामशास्त्रं तस्य रतिशास्त्रस्य समाहृतं संगृहीतं सुसंक्षिप्तं संक्षेपेण कथितं सुप्रबन्धं शोभनप्रस्तावसमन्वितं सारं जयदेवेन भण्यते कथ्यते । अनुष्टुब्वृत्तम् ॥२॥

पद्मिनीति । स्त्रीपुंसोः जातिलक्षणं प्रत्येकं चतुर्विधमिति शेषः तत्र स्त्रीजातिश्चतुर्विधा, पद्मिनी, चित्रिणी, शङ्खिनी तथा हस्तिनी । पुंजातिश्च तथा शशः, मृगः, वृषः, अश्वश्च । अनुष्टुब्वृत्तम् ॥ २ ॥

भवतीति । कमले इव नेत्रे यस्याः तथोक्ता पङ्कजाक्षीत्यर्थः, नासिकायां क्षुद्रं रन्ध्रं छिद्रं यस्याः तथाविधा, अविरलं संश्लिष्ट-

भवति रतिरसज्ञा नातिखर्वा न दीर्घा
तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणसमेता चित्रिणी चित्रवक्त्रा॥ ५॥

दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा॥ ६॥

मित्यर्थः कुचयोः युग्मं यस्याः तथोक्ता, चारवः शोभनाः केशाः यस्याः तादृशी, कृशाङ्गी नातिस्थूला नातिकृशेति यावत्, मृदु कोमलं मधुरमित्यर्थः वचनं शोभनं शीलञ्च यस्याः तथोक्ता, गीतेषु वाद्येषु च अनुरक्ता अनुरागिणी, सकलासु ततुषु अङ्गेषु शुभं वेशो यस्याः तथोक्ता, पद्मस्येव गन्धो यस्याः तादृशी स्त्री पद्मिनी भवति। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्॥ ४॥

भवतीति। रतिरसज्ञा सुरतास्वादज्ञा नातिखर्वा नातिह्रस्वाकृतिः न दीर्घा न आयतदेहा, तिलकुसुममिव शोभना नासा यस्याः तथोक्ता, स्निग्धे नीलोत्पले इव अक्षिणी यस्याः तादृशी, घनाभ्यां सान्द्राभ्यां कठिनाभ्यां कुचाभ्याम् आढ्या युक्ता, सुन्दरी सुरूपा, बद्धशीला विनयवती, सकलैः गुणैः शिल्पदयादाक्षिण्यादिभिः समेता युक्ता, चित्रवक्त्रा मनोहरवदना स्त्री चित्रिणी भवति। मालिनीवृत्तम्॥ ५॥

दीर्घेति। या दीर्घातिदीर्घे अत्यायते इत्यर्थः नयने यस्याः तथोक्ता, कामोपभोगे सुरतव्यापारे रसिका रसवती, गुणैर्दयादिभिः शीलैः विनयादिभिश्च युक्ता, रेखात्रयेण विभूषितः अलङ्कृतः कण्ठदेशः यस्याः तादृशी, सम्भोगे यः केलिः क्रीडाविशेषः तत्र रसिका

स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुली स्थूलकुचा सुशीला।
कामोत्सुका गाढरतिप्रिया या
नितान्तभोक्त्री करिणी मता सा ॥ ७ ॥

शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥ ८ ॥

पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी।
शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी ॥ ९ ॥

बाला च तरुणी प्रौढा वृद्धा भवति नायिका।

विचक्षणा, वरसुन्दरी श्रेष्ठसुन्दरी, सा शङ्खिनी किलेतिप्रसिद्धौ शङ्खिनीति प्रसिद्धेत्यर्थः। वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति लक्षणात् ॥ ६ ॥

स्थूलेति। या स्थूलः अधरः यस्याः तथोक्ता, स्थूलः नितम्बभागः यस्याः सा, स्थूला अङ्गुलयः यस्याः तथोक्ता, स्थूलौ कुचौ स्तनौ यस्याः तथाभूता, सुशीला विनयवती, कामोत्सुका भोगाभिलाषिणी, गाढा दृढा रतिः सुरतं प्रिया यस्याः तथाविधा तथा नितान्तभोक्त्री सततभोगरता, सा करिणी हस्तिनी मता। उपजातिवृत्तम् ॥ ७ ॥

शशके इति। पद्मिनी शशके पुंसि तुष्टा, चित्रिणी मृगं मृगाख्यं पुरुषं रमते रमणार्थं कामयते इत्यर्थः। शङ्खिनी वृषभे तुष्टा, हस्तिनी हयम् अश्वाख्यं पुरुषं रमते। अनुष्टुब्वृत्तम् ॥ ८ ॥

पद्मिनीति। पद्मिनी पद्मगन्धा पद्मगन्धवती, चित्रिणी मीनगन्धा मत्स्यगन्धवती, शङ्खिनी क्षारगन्धा लवणगन्धवती, हस्तिनी मदगन्धा मदगन्धवती भवतीति शेषः। अनुष्टुब्वृत्तम् ॥९॥

बालेति। नायिका बाला मुग्धा, तरुणी युवतिः प्रौढा

गुणयोगेन रक्तव्या नारी वश्या भवेत्तदा ॥ १० ॥
आ षोड़शाद् भवेद् बाला तरुणी त्रिंशता मता ।
पञ्चपञ्चाशता प्रौढ़ा भवेद् वृद्धा ततः परम् ॥ ११ ॥
फलमूलादिभिर्बाला तरुणी रतियोगतः ।
प्रमदानादिभिः प्रौढ़ा वृद्धा च दृढ़ताड़नात् ॥ १२ ॥
बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी ।
प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥ १३ ॥

प्रमत्ता, वृद्धा चेति चतुर्विधेति शेषः । गुणयोगेन यस्याः याद्दशो गुणः शोभावेशादिः तद्योगेन तदनुसारेण रक्तव्या, तदा नारी वश्या भवेत् । अनुष्टुब्वृत्तम् ॥ १० ॥

आ षोड़शादिति । आ षोड़शात् षोड़शवर्षपर्य्यन्तम् अभिविधावाङ् । केचित्तु मर्य्यादायामाङित्युक्त्वा अनषोड़शवर्षपर्य्यन्तमिति व्याचक्षुः । बाला भवेत्, त्रिंशता षोड़शादारभ्य त्रिंशद्वर्षपर्य्यन्तवित्यर्थः तरुणी मता, पञ्चपञ्चाशता त्रिंशदारभ्य पञ्चपञ्चाशद्वर्षपर्य्यन्तवयस्कत्यर्थः प्रौढ़ा भवेत्, ततः परं वृद्धा भवतीति शेषः । अनुष्टुब्वृत्तम् ॥ ११ ॥

फलेति । बाला मुग्धा स्त्री फलमूलादिभिः, तरुणी रतियोगतः सुरतव्यापारात्, प्रौढ़ा प्रेमदानादिभिः, वृद्धा दृढ़ताड़नात् बल्गेनव्यापारे इति भावः वश्या भवतीति शेषः । अनुष्टुब्वृत्तम् ॥१२॥

बालेति । बाला स्त्री प्राणदा प्राणदायिनी प्रोक्ता कथिता बालासम्भोगस्यायुष्करत्वादिति भावः । तरुणी प्राणहारिणी, तरुणीसम्भोगस्य बलक्षयकरत्वादिति भावः । प्रौढ़ा वृद्धत्वं करोति, प्रौढ़ासम्भोगस्य जराजनकत्वादिति भावः । वृद्धा मरणम् आदिशेत् जनयेत्, वृद्धासम्भोगस्य मृत्युजनकत्वादिति भावः । अनुष्टुब्वृत्तम् ॥१३॥

अङ्गुष्ठे चरणे च गुल्फनिलये जानुद्वये वस्तिके
नाभौ वक्षसि अक्षयोर्निगदिता कण्ठे कपोलेऽधरे।
नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवा-
मूर्द्धाधश्चलनक्रमेण कथिता चान्द्री कला पक्षयोः॥१४॥
सीमन्ते नयनेऽधरे च गलके कक्षस्तटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गण्डके।
गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धिक्षीणतया समं शशिकला पक्षद्वये योषिताम्॥१५॥
शुक्लपक्षे वसेद्वामे पादाङ्गुलिकनिष्ठके।
शुक्लप्रतिपदादौ च कृष्णे चाधः प्रलम्बते॥ १६ ॥

अङ्गुष्ठे इति। पक्षयोः शुक्लकृष्णयोः कथिता निरूपिता चान्द्री कला चन्द्रसम्बन्धी कामविशेषः ऊर्द्धाधश्चलनक्रमेण शुक्ले ऊर्द्धचलनेन कृष्णे अधश्चलनेनेत्यर्थः वामभ्रुवां रमणीनाम् अङ्गुष्ठे, चरणे, गुल्फनिलये गुल्फस्थाने, जानुद्वये, वस्तिके नाभ्यधोभागे, नाभौ, वक्षसि, अक्ष्योः, कण्ठे, कपोले गण्डे, अधरे, नेत्रे, कर्णयुगे, ललाटफलके, मौलौ शिरसि च निगदिता उक्ता। शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात्॥१४॥

सीमन्त इति। पक्षद्वये शुक्लकृष्णयोः असौ शशिकला चन्द्रकला वृद्धिक्षीणतया शुक्ले वृद्धा कृष्णे क्षीणतया च समं समभावेनेत्यर्थः योषितां नारीणां सीमन्ते केशे, नयने, अधरे, गलके कण्ठे, कक्षस्तटे उरसि, चूचुके कुचाग्रे, नाभौ, श्रोणितटे नितम्बे, मनोभवगृहे योनौ, जङ्घातटे, गण्डके कपोले, गुल्फे, पादतले चरणतले, तदङ्गुलितटे तस्य चरणस्य अङ्गुलिदेशे, अङ्गुष्ठे वृद्धाङ्गुलौ च तिष्ठति। शार्दूलविक्रीडितं वृत्तम्॥१५॥

शुक्लेति। ... वामे वामभागे योषितामिति शेषः, शुक्ल-

पुंसः सव्ये स्त्रिया वामे शुक्ले कृष्णे विपर्य्ययः ।
एतानि कामस्थानानि ज्ञेयानि नागरैः सदा ॥ १७ ॥
बलयुक्ता यदा नारी विपरीतरतिर्भवेत् ।
सञ्चाल्य तु कलास्थानं रन्तव्या कामिनी तदा ॥ १८ ॥
नेत्रे कण्ठे कपोले च हृदि पार्श्वद्वयेऽपि च ।
ग्रीवायां नाभिदेशे च कामी चुम्बति कामिनीम् ॥१९॥
मुखे जङ्घे नितम्बे च जघने मदनालये ।
स्तनयुग्मे सदाप्रीतिः कामी चुम्बति कामिनीम् ॥२०॥
प्रेम्णा स्त्रियं समालिङ्ग्य शीत्कारं मुखचुम्बनम् ।

प्रतिपदादौ च पादाङ्गुष्ठकनिष्ठके वसेत् शशिकलेति शेषः, कृष्णे कृष्णपक्षे अधः प्रलम्बते च । अनुष्टुब्वृत्तम् ॥१६॥

पुंस इति । शुक्ले शुक्लपक्षे पुंसः पुरुषस्य सव्ये दक्षिणे, स्त्रियाः वामे शशिकला वसेदिति शेषः, कृष्णे विपर्य्ययः पुंसः वामे, स्त्रियाः दक्षिणे शशिकला वसेदित्यर्थः । एतानि पूर्वोक्तानि सीमन्तादीनि कामस्थानानि नागरैः कामिभिः सदा ज्ञेयानि वेद्यानि । अनुष्टुब्वृत्तम् ॥१७॥

बलेति । यदा बलयुक्ता बलवती नारी विपरीतरतिः वैपरीत्येन रतं कुर्वाणा पुरुषायितमाचरन्तीत्यर्थः भवेत्, तदा कलास्थानं क्रीडास्थानं भगमित्यर्थः सञ्चाल्य सम्मर्द्य सदा कामिनी रन्तव्या ॥१८॥

नेत्रे इति । कामी कामिनीं नेत्रे कण्ठे कपोले हृदि पार्श्वद्वये ग्रीवायां नाभिदेशे च चुम्बति । अनुष्टुब्वृत्तम् ॥१९॥

मुखे इति । सदाप्रीतिः सर्वदानुरागी कामी कामिनीं मुखे जङ्घे नितम्बे जघने मदनालये योनौ स्तनयुग्मे च चुम्बति । अनुष्टुब्वृत्तम् ॥ २० ॥

प्रेम्णेति । प्रेम्णा प्रणयेन स्त्रियं समालिङ्ग्य समाश्लिष्य शीत्-

कण्ठासक्तं पुनः कृत्वा गाढालिङ्गनमाचरेत् ॥ २१ ॥

विधृत्य हस्तौ जघनोपविष्टः शीत्कृत्य वक्त्रे च मुदा प्रचुम्ब्य ।
भगे च लिङ्गं स्तनमर्दनञ्च दत्त्वापि कृत्वा प्ररमेच्च कामी ॥ २२ ॥

केतक्यग्रनखं कृत्वा नखांस्त्रीन् पञ्च चैव वा ।
पृष्ठे च जघने योनौ दत्त्वा कामी रमेत् स्त्रियम् ॥ २३ ॥

नखरोमाञ्चितं कृत्वा दन्तेनाधरपीडनम् ।
ग्रीवामाकृष्य यत्नेन योनौ लिङ्गेन ताडनम् ॥ २४ ॥

लिङ्गप्रवेशनं कृत्वा धृत्वा गाढप्रयोगतः ।
पार्श्वद्वयेन सम्पीड्य निष्कृपं ताडयेद्भगम् ॥ २५ ॥

कारं सुचुम्बनं कृत्वा पुनः कण्ठासक्तं गाढालिङ्गनं कण्ठमाश्लिष्य दृढमालिङ्गनम् आचरेत् । अनुष्टुब्वृत्तम् ॥ २१ ॥

विधृत्येति । कामी हस्तौ विधृत्य गृहीत्वा कामिन्या इति शेषः जघने उपविष्टः सन् शीत्कृत्य शीत्कारं कृत्वा मुदा आनन्देन वक्त्रे वदने च प्रचुम्ब्य भगे लिङ्गं दत्त्वा स्तनमर्दनञ्च कृत्वा प्ररमेच्च प्रकर्षेण रमणं कुर्य्याच्च । उपजातिवृत्तम् ॥ २२ ॥

केतकीति । कामी केतक्या अग्रमिव नखं कृत्वा पृष्ठे जघने योनौ च त्रीन् पञ्च वा नखान् दत्त्वा स्त्रियं रमेत् । अनुष्टब्वृत्तम् ॥ २३ ॥

नखेति । नखेन नखक्षतेन रोमाञ्चितं लोमहर्षं दन्तेन अधर-पीडनं दन्तच्छददंशनं कृत्वा ग्रीवाम् आकृष्य यत्नेन लिङ्गेन योनौ ताडनं कर्त्तव्यमिति शेषः ॥ २४ ॥

लिङ्गेति । गाढप्रयोगतः दृढप्रयोगेन धृत्वा स्त्रियमिति शेषः लिङ्गप्रवेशनं भगे इति शेषः कृत्वा पार्श्वद्वयेन सम्पीड्य समाश्लिष्य निष्कृपं निष्ठुरं यथा तथा भगं योनिं ताडयेत् ॥ २५ ॥

समालिङ्ग्य स्त्रियं गाढ़ं स्तनयुग्मे च मर्द्दनम् ।
योनौ नाभौ च संमर्द्य निष्ठुरं लिङ्गताड़नम् ॥ २६ ॥
केशं करेण संगृह्य दृढ़ं सन्ताड़येद्भगम् ।
वदने चुम्बनं कृत्वा भगं हस्तेन मर्द्दयेत् ॥ २७ ॥
कुचं करेण संमर्द्य पीड़येदधरं दृढम् ।
रमणं पद्मबन्धेन पद्मिनीरतिमादिशेत् ॥ २८ ॥
सीत्कारं चुम्बनं पीड़ां गले हस्ते च चुम्बनम् ।
चणे चणे स्तने हस्तं चित्रिणीरतिमादिशेत् ॥ २९ ॥
स्त्रीपुंसयो स्तथान्योन्यं भगे लिङ्गे च चुम्बनम् ।
रमणन्तु तथा गाढ़ं शङ्खिनीरतिमादिशेत् ॥ ३० ॥

समालिङ्ग्येति । स्त्रियं गाढ़ं समालिङ्ग्य स्तनयुग्मे मर्द्दनं तथा योनौ नाभौ च संमर्द्य निष्ठुरं यथा तथा लिङ्गेन ताड़नं कर्त्तव्यमिति शेषः ॥ २६ ॥

केशमिति । करेण केशं संगृह्य भगं दृढ़ं यथा तथा सन्ताड़येत् । वदने चुम्बनं कृत्वा हस्तेन भगं मर्द्दयेत् ॥ २७ ॥

कुचमिति । करेण हस्तेन कुचं स्तनं संमर्द्य अधरं दृढ़ं पीड़येत् दशेत् । पद्मबन्धेन रमणं पद्मिन्या रतिम् आदिशेत् कथयेत् ॥ २८ ॥

सीत्कारमिति । सीत्कारं, चुम्बनं, गले कण्ठे पीड़ाम् आश्लेषमित्यर्थः, हस्ते चुम्बनं तथा चणे चणे स्तने हस्तं चित्रिणीरतिं चित्रिण्याः रतिम् आदिशेत् कथयेत् ॥ २९ ॥

स्त्रीति । स्त्रीपुंसयोः अन्योन्यं परस्परं भगे लिङ्गे च चुम्बनं तथा गाढ़ं रमणं शङ्खिन्याः रतिम् आदिशेत् कथयेत् ॥ ३० ॥

शेफं करेण संगृह्य सुदृढं गजबन्धनम् ।
भगं करेण संताड्य हस्तिनीरतिमादिशेत् ॥ २१ ॥
कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुगन्धि च ।
अलोमकं सुविस्तीर्णं पञ्चैतद् भगमुत्तमम् ॥ २२ ॥
शीतलं निम्नमत्युच्चं गोजिह्वासदृशं परम् ।
इत्युक्तं कामशास्त्रज्ञैर्भगदोषचतुष्टयम् ॥ २३ ॥
मुषलं वंशकरीरं द्विविधं लिङ्गलक्षणम् ।
स्थूलं मुषलमित्युक्तं दीर्घं वंशकरीरकम् ॥ २४ ॥
स्त्रीजितो गायकश्चैव नारीसङ्गपरः सुखी ।
सङ्कुलशरीरश्च स श्रीमान् शशको मतः ॥ २५ ॥

शेफमिति । करेण शेफं संगृह्य पुनः करेण भगं सन्ताड्य सम्पीड्य सुदृढं गजबन्धनं हस्तिन्याः रतिम् आदिशेत् ॥ २१ ॥

कूर्मेति । कूर्मस्येव पृष्ठं यस्य तत् गजस्य स्कन्ध इव उन्नतमिति शेषः गजस्कन्धं पद्मगन्धम् अतएव सुगन्धि शोभनगन्धवत् अलोमकं अल्पलोमयुतं सुविस्तीर्णं सुविशालञ्च एतत् पञ्च पञ्चविधमित्यर्थः उत्तमं भगम् आहुरिति शेषः ॥ २१ ॥

शीतलमिति । शीतलं सततशीतं निम्नं नतम् अत्युच्चम् अत्युन्नतम् [illegible] अन्यत् गोजिह्वासदृशम् इति हेतोः कामशास्त्रज्ञैः भगस्य दोषचतुष्टयं शीतत्वादिदोषचतुष्कम् उक्तम् ॥ २२ ॥

मुषलमिति । मुषलं वंशकरीरञ्च इति द्विविधं लिङ्गस्य लक्षणम् । तत्र स्थूलं लिङ्गं मुषलं दीर्घं लिङ्गं वंशकरीरकम् उक्तम् ॥२४॥

स्त्रीति । स्त्रीजितः स्त्रीवशः गायकः सङ्गीतपटुः, नारीसङ्गे परः तत्परः सततस्त्रीसङ्गकाम इत्यर्थः सुखी सुखासक्तः सङ्कुचं शरीरं लिङ्गावयवः यस्य तादृशः श्रीमान् सश्रीकः सुमानिति शेषः शशकः मतः कथितः ॥ २५ ॥

श्रेष्ठस्तु धार्मिकः श्रीमान् सत्यवादी प्रियंवदः ।
अष्टाङ्गुलशरीरश्च रूपयुक्तो मृगो मतः ॥ ३६ ॥
उपकारपरो नित्यं स्त्रीजितः श्लेष्मणः सुखी ।
दशाङ्गुलशरीरश्च मनस्वी वृषभो मतः ॥ ३७ ॥
काष्ठतुल्यवपुर्धृष्टो मिथ्यावाक्यश्च निर्भयः ।
द्वादशाङ्गुललिङ्गश्च दरिद्रश्च हयो मतः ॥ ३८ ॥
न रमन्ते यदा नार्य्यस्तुष्टा वा रमते यथा ।
नानाबन्धांस्तथा वक्ष्ये रन्तव्याः कामिभिः स्त्रियः ॥३९॥
पद्मासनो नागपदो लतावेष्टोऽर्द्धसम्पुटः ।

श्रेष्ठ इति । श्रेष्ठः सर्वजनप्रशंसनीयः धार्मिकः धर्मशीलः श्रीमान् धनसम्पन्नः सत्यवादी प्रियंवदः मधुरभाषी अष्टाङ्गुलं शरीरं लिङ्गस्येति भावः यस्य तादृशः रूपयुक्तः सुदर्शन इत्यर्थः पुमानिति शेषः मृगः मतः कथितः ॥ ३६ ॥

उपकारेति । उपकारपरः परोपकारनिरतः नित्यं सततं स्त्रीजितः स्त्रैणः श्लेष्मणः सौम्यस्वभावः सुखी भोगसुखासक्तः दशाङ्गुलं शरीरं लिङ्गस्येति भावः यस्य तथाभूतः मनस्वी प्रशस्तमनाः पुमान् वृषभः मतः कथितः ॥ ३७ ॥

काष्ठेति । काष्ठेन तुल्यं वपुः शरीरं यस्य तथाभूतः कठिनाकृतिरित्यर्थः धृष्टः प्रगल्भः मिथ्यावाक्यः मिथ्यावादी निर्भयः द्वादशाङ्गुलं लिङ्गं यस्य तथाभूतः दरिद्रः निर्धनः पुमान् हयः मतः कथितः ॥ ३८ ॥

नेति । यदा नार्य्यः न रमन्ते न रतिं कर्त्तुम् इच्छन्ति तदा हृष्टा प्रीता सती यथा रमते, यैरुपायैः कामिभिः स्त्रियः रन्तव्याश्च तथा बन्धान् उपायविशेषान् वक्ष्ये कथयिष्यामि ॥ ३९ ॥

तांश्च बन्धानाह द्वाभ्यां पद्मासन इत्येताभ्याम् । पद्मासनः

कुलिशः सुन्दरश्चैव तथा केशर एव च ॥ ४० ॥
हिल्लोली नरसिंहोऽपि विपरीतस्तथापरः ।
क्षुद्वारो धेनुकश्चैव उत्कण्ठश्च ततः परः ।
सिंहासनो रतिनागो विद्याधरस्तु षोडश ॥ ४१ ॥
हस्ताभ्याञ्च समालिङ्ग्य नारीं पद्मासनोपरि ।
रमेद्गाढ़ं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥ ४२ ॥
पादौ स्कन्धयुगे हस्तौ चिपेल्लिङ्गं भगे लघु ।
प्ररमेत्कामुको नारीं बन्धो नागपदो मतः ॥ ४३ ॥
बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा रमेत् स्त्रियम् ।
लघु लिङ्गं ताड़येद्योनौ लतावेष्टोऽयमुच्यते ॥ ४४ ॥
स्त्रीपादावन्तरीचे तु किञ्चिद्भूमौ च जानुनी ।

नागपदः लतावेष्टः अर्द्धसम्पुटः कुलिशः सुन्दरः केशरः हिल्लोलः नरसिंहः विपरीतः क्षुद्वारः धेनुकः उत्कण्ठः सिंहासनः रतिनागः विद्याधरः एते षोड़श बन्धा इति शेषः ॥ ४० ॥ ४१ ॥

हस्ताभ्यामिति। पद्ममिव आसनं पद्मासनं तदाख्य उपवेशनविशेषः तस्य उपरि हस्ताभ्यां नारीं समालिङ्ग्य गाढ़ं समाकृष्य रमेत् अयं बन्धः रमणप्रकार इति यावत् पद्मसंज्ञकः पद्मासनाख्यः ॥४२॥

पादाविति। स्कन्धयुगे स्कन्धद्वये कामिन्या इति शेषः पादौ चरणौ हस्तौ च दत्त्वेति शेषः भगे योनौ लघु चिप्रं लिङ्गं चिपेत् प्रवेशयेत्, इत्थं कामुकः नारीं यत् प्ररमेत् प्रकर्षेण रमेत्, अयं बन्धः नागपदः मतः कथितः ॥ ४३ ॥

बाहुभ्यामिति। बाहुभ्यां पादयुग्माभ्यां पादाभ्याञ्च स्त्रियं वेष्टयित्वा समाकृष्य स्त्रियं रमेत्, लघु द्रुतं योनौ लिङ्गं ताड़येत् प्रवेशयेच्च, अयं बन्धः लतावेष्टः उच्यते ॥ ४४ ॥

स्त्रीति। अन्तरीचे ऊर्द्धमित्यर्थः स्त्रियाः पादौ भूमौ च

स्तनयोर्मर्दनं पीड़ा बन्धोऽयमर्धसम्पुटः ॥ ४५ ॥
स्त्रीपादद्वयमास्फाल्य हठाल्लिङ्गस्य ताड़नम् ।
योनिमापीड़येत्कामी बन्धः कुलिशसंज्ञकः ॥ ४६ ॥
नारीपादद्वयं स्वामी धारयेदूर्ध्वदेशतः ।
कुचौ धृत्वा पिबेद्वक्त्रं बन्धोऽयं रतिसुन्दरः ॥ ४७ ॥
स्त्रिया अङ्के समापीड्य दोर्भ्यां गात्रस्य मर्दनम् ।
पुनः प्रपीड़येद्योनिं बन्धः केशरसंज्ञकः ॥४८॥
हृदि कृत्वा स्त्रियाः पादौ कराभ्यां धारयेत् करौ ।
यथेष्टं ताड़येद्योनिं बन्धो हिल्लोलसंज्ञकः ॥ ४९ ॥
पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।

जानुनी निजे इति शेषः किञ्चित् कृत्वेति शेषः स्तनयोर्मर्दनं पीड़ा पीड़नं सम्यक्चर्वणमिति यावत्, अयं बन्धः अर्धसम्पुटः ॥ ४५ ॥

स्त्रीति । स्त्रियाः पादद्वयम् आस्फाल्य संमर्द्य हठात् सहसा लिङ्गस्य कर्त्तरि षष्ठी लिङ्गेनेत्यर्थः ताड़नं कृत्वेति शेषः कामी वह योनिम् आपीड़येत् संमर्दयेत्, अयं बन्धः कुलिशसंज्ञकः कुलिशाख्यः ॥ ४६ ॥

नारीति । स्वामी नार्य्याः पादद्वयम् ऊर्ध्वदेशतः उपरि उत्तोल्येति शेषः धारयेत्, ततश्च कुचौ धृत्वा वक्त्रं वदनं पिबेत्, अयं बन्धः रतौ रमणे सुन्दरः तदाख्यः ॥ ४७ ॥

स्त्रिया इति । स्त्रियाः अङ्के समापीड्य दोर्भ्यां भुजाभ्यां गात्रस्य मर्दनं कृत्वेति शेषः पुनः योनिं प्रपीड़येत्, अयं बन्धः केशरसंज्ञकः केशराख्यः ॥ ४८ ॥

हृदीति । स्त्रियाः पादौ हृदि कृत्वा कराभ्यां हस्ताभ्यां करौ हस्तौ स्त्रिया इति शेषः धारयेत्, ततश्च योनिं यथेष्टं यथाकामं ताड़येत्, अयं बन्धः हिल्लोलसंज्ञकः हिल्लोलाख्यः ॥ ४९ ॥

पादाविति । पादौ सम्पीड्य संमर्द्य हस्तयोः गाढं वेष्टनं

हस्तयोर्वेष्टनं गाढं बन्धो नृसिंहसंज्ञकः॥ ५० ॥
पादमेकमुरः कृत्वा द्वितीयं कटिसंस्थितम्।
नारीञ्च सुरमेत्कामी विपरीतस्तु बन्धकः॥ ५१ ॥
पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताडयेत्।
बाहुभ्यां ताडयेद्गाढं चुडारो बन्ध एव सः॥ ५२ ॥
सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत् पुनः।
यल्लिङ्गं चालयेद् योनौ बन्धोऽयं धेनुकः स्मृतः॥ ५३ ॥
नारीपादौ च हस्तेन धारयेद् गलके पुनः।
स्तनार्पितकरो कामी बन्धश्चोत्कण्ठसंज्ञकः॥ ५४ ॥
स्वयं जङ्घाद्वयं बाह्वौ कृत्वा योषित्पदद्वयम्।

कृत्वेति शेषः योनौ हठात् लिङ्गस्य प्रवेशनम्, अयं बन्धः नृसिंहसंज्ञः नृसिंहाख्यः॥ ५० ॥

पादमिति। एकं पादम् उरः वक्षोदेशं द्वितीयं पादं कटिसंस्थितं स्त्रिया इति शेषः कृत्वा कामी यत् नारीं सुरमेत् सुखेन रमेत्, अयं बन्ध एव बन्धकः विपरीतः॥ ५१ ॥

पार्श्वोपरीति। पार्श्वयोः उपरि पदौ कृत्वा लिङ्गेन योनौ ताडयेत् बाहुभ्याञ्च गाढं ताडयेत्, अयं बन्धः चुडुगारः कथित इति शेषः॥ ५२ ॥

सुप्तामिति। सुप्तां निद्रितां स्त्रियं समालिङ्ग्य स्वयं सुप्तः स्त्रियाः पार्श्वे सम्मीलितनयनः सन् रमेत् पुनः पुनः योनौ लिङ्गं चालयेत्, अयं बन्धः धेनुकः स्मृतः॥ ५३ ॥

नारीति। कामी स्तनयोः अर्पितकरः दत्तहस्तः सन् नार्य्याः पादौ तथा गलके कण्ठे हस्तेन धारयेत्, अयं बन्धः उत्कण्ठसंज्ञकः उत्कण्ठाख्यः॥ ५४ ॥

स्वयमिति। कामी जनः स्वयं जङ्घाद्वयं बाह्वौ कृत्वा योषितः

स्तनौ धृत्वा रमेत् कामी बन्धः सिंहासनो मतः ॥५५॥
पीडयेदूरुयुग्मेन कामुकः कामिनीं यदि ।
रतिनागः समाख्यातः कामिनीनां मनोहरः ॥५६॥
नार्य्याश्चोरुयुगं धृत्वा कराभ्यां ताडयेत् पुनः ।
रमयेन्निर्भरं कामो बन्धो विद्याधरो मतः ॥ ५७ ॥
स्त्रियमानीय यत्नेन विधृत्य चरणद्वयम् ।
वशं नयति यः कामी रतिशास्त्रविचक्षणः ॥ ५८ ॥
रतिशास्त्रं समाकर्ण्य बन्धान् पद्मादिषोड़श ।
नानाविधरतिं कुर्य्यात् कामिनीं कामुको जनः ॥५९॥
सर्वशास्त्रार्थविज्ञेन जयदेवेन धीमता ।

कान्तायाः पदद्वयं स्तनौ च धृत्वा यत् रमेत्, अयं बन्धः सिंहासनः मतः ॥ ५५ ॥

पीडयेदिति । यदि कामुकः ऊरुयुग्मेन कामिनीं पीडयेत् तदासौ बन्धः कामिनीनां मनोहरः रतिनागः समाख्यातः कथितः ॥५६॥

नार्य्या इति । कामी जनः नार्य्याः ऊरुयुगं कराभ्यां धृत्वा पुनः ताड़येत् प्रहरेत् तथा निर्भरं गाढ़ं रमयेत्, अयं बन्धः विद्याधरः मतः कथितः ॥ ५७ ॥

स्त्रियमिति । यः कामी यत्नेन स्त्रियम् आनीय चरणद्वयं तदीयमिति शेषः विधृत्य उत्तोल्य वशं नयति प्रापयति, स रतिशास्त्रेषु विचक्षणः पण्डितः ॥ ५८ ॥

रतीति । कामुको जनः रतिशास्त्रं तथा पद्मादिषोड़श बन्धान् समाकर्ण्य सम्यक् विदित्वेति भावः कामिनीं नानाविधा रतिः रमणं यस्यां तादृशीं कुर्य्यात् नानाप्रकारेण रमयेदित्यर्थः ॥ ५९ ॥

मञ्जरी रतिशास्त्रस्य कृता नीता समाप्ततम् ॥ ६० ॥

इति श्रीजयदेवेन विरचिता रतिमञ्जरी समाप्ता ।

---

# जगन्नाथाष्टकम् ।

---

कदाचित् कालिन्दीतटविपिनसङ्गीतकपरो
मुदाभिरीनारीवदनकमलास्वादमधुपः ।
रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ १ ॥
भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितले
दुकूलं नेत्रान्ते सहचरिकटाक्षेण विदधत् ।

सर्वेति । सर्वशास्त्रार्थविज्ञेन धीमता जयदेवेन रतिशास्त्रस्य मञ्जरी कृता समाप्ततां नीता च ॥ ६० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
रतिमञ्जरी व्याख्या समाप्ता ।

---

कदाचिदिति । कालिन्द्याः यमुनायाः तटेषु यत् विपिनं वनं वृन्दावनमिति यावत् तस्मिन् यत् सङ्गीतकं तत्परः, मुदा आनन्देन आभीरीनारीणां गोपाङ्गनानां वदनान्येव कमलानि तेषाम् आस्वादे मधुपः भ्रमरः, रमया लक्ष्म्या शम्भुना हरेण ब्रह्मणा विधात्रा अमरपतिना देवेन्द्रेण गणेशेन च अर्च्चिते पूजिते पदे यस्य तथाभूतः, जगन्नाथस्वामी प्रभुः जगत्पतिः कदाचित् मे मम नयनपथगामी नेत्रगोचरो भवतु । शिखरिणीछन्दस्मिन् प्रबन्धे । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ १ ॥

भुजे इति । सव्ये दक्षिणे भुजे वेणुं, शिरसि शिखिपिच्छं

सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ २ ॥
महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्तः सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ३ ॥
कृपापारावारः सजलजलदश्रेणिरुचिरो
रमावाणीरामस्फुरदमलपद्मेक्षणमुखः ।
सुरेन्द्रैराराध्यः श्रुतिमुखगणोद्गीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ४ ॥

मयूरपिच्छं, कटितले दुकूलं पीतं वसनमिति यावत्, नेत्रान्ते नयन-प्रान्ते सहचरतीति सहचारि यत् कटाक्षं तेन विदधत् विशेषेण दधानः सदा सततं श्रीमति वृन्दावने या वसतिः अवस्थानं तया लीलापरिचयः क्रीड़ापरिचयः यस्य तादृशः, जगन्नाथस्वामीत्यादि ॥२॥

महाम्भोधेरिति । महाम्भोधेः महासमुद्रस्य तीरे तटे कनक-रुचिरे काञ्चनोज्ज्वले नीलशिखरे नीलाचलशिरसि प्रासादान्ते मन्दिरमध्ये बलिना बलवता सहजेन सोदरेण बलभद्रेण सह वसन्, सुभद्रा मध्यस्था यस्य तादृशः उभयोर्मध्ये सन्निवेशितसुभद्र इत्यर्थः, सकलानां सुराणां देवानां सेवायाः अवसरं ददातीति तथोक्तः, जगन्नाथस्वामीत्यादि ॥ ३ ॥

कृपेति । कृपापारावारः दयासागरः, सजलानां जलपूर्णानां जलदानां मेघानां या श्रेणिः तद्वत् रुचिरः मनोहरः, रमया लक्ष्म्या वाण्या सरस्वत्या रामेण बलभद्रेण च स्फुरन्ति अमलानि निर्मलानि पद्मानीव ईक्षणानि नयनानि यत्र तादृशं मुखं यस्य तथा-भूतः, सुरेन्द्रैः इन्द्रादिभिः आराध्यः सेव्यः, श्रुतिमुखगणैः वेदम्र ऽ-

परं ब्रह्मापीषत्कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रमानन्दी राधासरसवपुरानन्दनसुखी
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ५ ॥

रथारूढो गच्छन् पथि मिलितभूदेवपटल-
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसदयो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ६ ॥

न वेच्छेयं राज्यं न च कनकमाणिक्यविभवं
न याचेऽहं रम्यां सकलजनकाम्यां वरवधूम् ।

वर्णैः उच्चैःस्वरेण गीतं कीर्त्तितं चरितं यस्य यथाभूतः, जगन्नाथ-स्वामीत्यादि ॥ ४ ॥

परमिति । परं ब्रह्मापि परमात्मापि ईषत् कुवलयदले इव नीलोत्पलपत्रे इव उत्फुल्ले विकसिते नयने यस्य तथोक्तः, नीलाद्रौ नीलाचले निवासी, अनन्तस्य शेषनागस्य शिरसि निहितचरणः अर्पितपदः, रमानन्दी लक्ष्म्याः आनन्ददायी, राधयाः सरसेन प्रेम-पूर्णेन वपुषा शरीरेण यत् आनन्दनं क्रीड़नं तेन सुखी, जगन्नाथ-स्वामीत्यादि ॥ ५ ॥

रथारूढ़ इति । रथारूढ़ः रथमास्थितः, पथि गच्छन् मिलि-तानां सङ्गतानां भूदेवपटलानां विप्रवर्गाणां स्तुतिप्रादुर्भावं स्तवावलीं प्रतिपदं पदे पदे उपाकर्ण्य श्रुत्वा सदयः सानुकम्पः, दयासिन्धुः कृपासागरः, सकलजगतां बन्धुः, सिन्धुसदयः समुद्रं प्रति दयावान्, जगन्नाथस्वामीत्यादि ॥ ६ ॥

न वेति । अहं राज्यं न च कनकमाणिक्यविभवं स्वर्णरत्न-सम्पदं न च इच्छेयं, रम्यां सकलजनकाम्यां सर्वजनस्य ईप्सितां वरवधूम्

सदा काले कामः प्रथमपठितोद्गीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ७ ॥
हर त्वं संसारं द्रुततरमसारं सुरपते!
वर त्वं भोगीशं सततमपरं नीरजपते!।
अहो दीनानाथो निहितमचले निश्चितमिदं
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८ ॥
जगन्नाथाष्टकं पुण्यं यः पठेत् प्रयतः शुचिः।
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ॥ ९ ॥

इति जगन्नाथाष्टकं सम्पूर्णम्।

उत्तमां कान्तां न च याचे नैव प्रार्थये, सदा काले सर्वस्मिन् समये कामः अभिलाषः ममेति शेषः यत् प्रथमपठितम् उद्गीतम् उच्चैर्गीतं चरितं यस्य तथाभूतः, जगन्नाथस्वामीत्यादि ॥७॥

हर त्वमिति। हे सुरपते! देवेन्द्र! त्वम् असारं संसारं द्रुततरम् अतिशीघ्रं हर नाशय, हे नीरजपते! पद्मिनीकान्त! त्वं सततम् अपरम् अन्यं भोगीशं धनवन्तं वर कृतिभिर्यैः न मम [illegible] वाञ्छनेति भावः। अहो खेदे अह दीनानाथः दीनः दरिद्रः अनाथः अनाश्रयश्च अचले नीलपर्वते निश्चितम् इदं निश्चितम् आश्रितं मयेति शेषः। यद्वा अहो दीनाः जनाः! इदम् अचलं स्थिरं नयनमिति शेषः निश्चितं निश्चितम् एकाग्रतामापादितं, जगन्नाथदर्शनार्थमिति भावः। अतः नाथः जगन्नाथस्वामीत्यादि ॥८॥

जगन्नाथेति। यः प्रयतः संयतः शुचिः सन् पुण्यं पवित्रं जगन्नाथाष्टकं पठेत् स सर्वपापेभ्यः विशुद्धः आत्मा यस्य तादृशः सन् विष्णुलोकं गच्छति। अनुष्टुप् वृत्तम् ॥९॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
जगन्नाथाष्टकव्याख्या समाप्ता।

अपि च शक्रसुतेन तिरस्कृतो
रविसुतः किमसौ विदधे त्वया ॥ ४० ॥ अनुजग्रहे ।
भवति गमनयोग्या कीदृशी भूरथानां
किमतिमधुरमन्नं भोजनान्ते प्रदेयम् ।
प्रियतम ! वद नीचामन्त्रणे किं पदं स्यात्
कुमतिकृतविवादाश्चक्रिरे किं समर्थैः ॥ ४१ ॥
समादधिरे । लिट् ।
वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः ।
तव सुहृदो गुणनिवहैरिपुनिवहं किं नु कर्त्तारः ॥४२॥
अवमन्तारः ।

जन इति शेषः ? अपिच शक्रसुतेन वालिना तिरस्कृतः निर्जितः असौ रविसुतः सुग्रीवः त्वया किं विदधे ? ॥ ४० ॥

अत्रोत्तरम् अनुजग्रहे । हे अनुज वज्रधर ! इति प्रथमस्य । ग्रहे इति द्वितीयस्य । अनुजग्रहे अनुगृहीत इति तृतीयस्य ।

भवतीति । कीदृशी भूः भूमिः रथानां गमनयोग्या भवति ? भोजनान्ते अतिमधुरं किम् अन्नं प्रदेयम् ? हे प्रियतम ! नीचा-नाम् आमन्त्रणे सम्बोधने किं पदं स्यात् ? समर्थैः जनैः कुमत्या कुबुद्ध्या कृतविवादाः किं चक्रिरे ? ॥ ४१ ॥

अत्रोत्तरं समादधिरे । समेति प्रथमस्य, दधीति द्वितीयस्य, रे इति तृतीयस्य, समादधिरे इति क्रियापदं चतुर्थस्य ।

वदतेति । अनुत्तमवचनं किञ्चित् वदत ? उच्चैः ध्वनिः उच्यते स कीदृक्षः कीदृशः ? तव सुहृदः गुणनिवहैः गुणसमूहैः रिपुनिवहं शत्रुसमूहं किं नु कर्त्तारः ? ॥ ४२ ॥

अत्रोत्तरम् अवमन्तारः । अवमं नीचं कुत्सितमिति प्रथमस्य, तारः उच्चैस्वरं इति द्वितीयस्य, अवमन्तारः अवज्ञातार इति तृतीयस्य ।

कीदृक् तोयं दुस्तरं स्यात्तितीर्षोः
का पूज्यास्मिन् खङ्गमामन्त्रय ... मा ।
दृष्ट्वा धूमं दूरतो मानविज्ञाः ... ाभि ...
किं कर्त्तास्मि प्रातरेवाश्रयाग्रम् ॥ ४३ ॥

अनुमातासे । लुट्लकारः ।

कामुकाः स्युः कया नीचाः सर्वः कस्मिन् प्रमोदते ।
अर्थिनः ! प्राप्य पुण्याहं करिष्यध्वे वसूनि किम् ॥ ४४ ॥

दास्यामहे ।

को दुःखी सर्वकार्येषु किं भृग्वार्थस्य वाचकम् ।
यो यत्र विरतो नित्यन्ततः किं स करिष्यति ॥ ४५ ॥

प्रयास्यति । लृट् ।

कीदृगिति । तितीर्षोः तर्त्तुमिच्छोर्जनस्य दुस्तरं तोयं कीदृक् स्यात् ? (अस्मिन् जगति का पूज्या ? खड्गम् आमन्त्रयस्व सम्बोधय ? हे मानविज्ञाः अनुमानविदः ! दूरतः दूरे प्रातरेव धूमं दृष्ट्वा आश्रयाग्रम् अग्निं किं कर्त्तास्मि ? ॥ ४३ ॥

अत्रोत्तरम् अनुमातासे । अनु अल्पमिति प्रथमस्य, मातेति द्वितीयस्य, असे इति तृतीयस्य, अनुमातासे इति क्रियापदं चतुर्थस्य ।

कामुका इति । नीचाः जनाः कया कामुकाः स्युः ? सर्वो जनः कस्मिन् प्रमोदते उल्लसति ? हे अर्थिनः ! धनिनः ! पुण्याहं पुण्यतिथिं प्राप्य वसूनि धनानि किं करिष्यध्वे ? ॥ ४४ ॥

अत्रोत्तरं दास्यामहे । दास्येति प्रथमस्य । महे उत्सवे इति द्वितीयस्य । दास्यामहे इति तृतीयस्य ।

क इति । कः सर्वकार्येषु दुःखी ? भृग्वार्थस्य वाचकं बोधकं किम् ? यः यत्र कार्ये विषये वा नित्यं विरतः, स ततः विषयात् किं करिष्यति ? ॥ ४५ ॥

विद्यान्त इति समानार्थः शब्दः कोऽचिरयति सुद्रां किम् ।
रविमुते न स्यात् तं सुजनः किं करोतु वद ॥ ४६ ॥
सन्त्यजतु ।

मेघात्यये भवति का सुभगावगाहा
वृत्तं वसन्ततिलकं कियदक्षराणाम् ।
भो भोः कदर्य्यपुरुषा ! विषुवद्दिने च
वित्तञ्च नः सुबहु तत् क्रियतां किमेतत् ॥ ४७ ॥
नदीयताम् । लोट् ।

अन्तोत्तरं प्रयास्यति । प्रयाणो परिश्रमोति प्रथमस्य, अन्तोति द्वितीयस्य, प्रयास्यति प्रस्थास्यते इति तृतीयस्य ।

विद्यान्त इति । विद्यन्ते इति अस्येत्यर्थः समानार्थः शब्दः कः ? किं वस्तु सुद्राम् अचिरयति चिरस्थां कर्त्तुं न पारयतीत्यर्थः ? कथमपि यदि कोपः स्यात् तदा सुजनः तं किं करोतु वद ॥४६॥

अन्तोत्तरं सन्त्यजतु । सन्तीति प्रथमस्य । अजतु आज्ञाव्यतिरिक्तमित्यर्थः द्वितीयस्य, आज्ञया सुद्रायाः चिरस्थायित्वादिति भावः । सन्त्यजतु सम्यक् त्यजत्विति तृतीयस्य ।

मेघात्यये इति । मेघात्यये वर्षापगमे का सुभगावगाहा भवति ? कियदक्षराणां वृत्तं पद्यं वसन्ततिलकम् ? भो भोः कदर्य्यपुरुषाः ! विषुवद्दिने महाविषुवसंक्रान्त्यामित्यर्थः न अस्माकं यत् बहु प्रभूतं वित्तं धनमस्तीति शेषः एतत् किं क्रियताम् ? ॥ ४७ ॥

अन्तोत्तरं नदीयताम् । नदीति प्रथमस्य । यतां यमानां चतुर्दशानामिति यावत्, यमाय धर्म्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥ औडुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ इति यमस्य चतुर्दशसंख्यत्वकीर्त्तनादिति भाव इति द्वितीयस्य । न दीयतामिति तृतीयस्य ।

का माद्यति मकरन्दैः तनयं कमसूत जनकराजसुता ।
कथय कृषीवल ! शस्यं पक्वं किमचीकरस्त्वमपि ॥ ४८ ॥

अलीलवम् ।

पृच्छति पुरुषं कथं केऽस्यां समभूवन् वज्रकृतपद्मतयः ।
बहुभयदेशं जिगमिषुरेकाकी वार्य्यते च कथम् ॥ ४९ ॥

मानवनगाः । लुङ् ।

किमकरवमहं हरिर्महीध्रं
स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतमवदनेन पीयते कः
परिणतविम्बफलोपमः प्रियायाः ॥ ५० ॥ अधरः ।

केति । का मकरन्दैः पुष्पमधुभिः माद्यति ? जनकराजसुता सीता कं तनयम् असूत प्रसूतवती ? हे कृषीवल ! कर्षक ! त्वमपि पक्वं शस्यं किम् अचीकरः ? कथय ॥ ४८ ॥

अत्रोत्तरम् अलीलवम् । अली भ्रमरीति प्रथमस्य, लवमिति द्वितीयस्य, अलीलवं लुनन्तं कृतवानित्यर्थः प्रश्न इति तृतीयस्य ।

पृच्छतीति । पुरुषं पृच्छति कथम् ? अस्यां भूमाविति शेषः वज्रेण कुलिशेन कृता छिन्ना पद्मतिः पद्ममूलं येषां तथाभूताः के समभूवन् ? बहुभयदेशं जिगमिषुः गन्तुमिच्छुः एकाकी जनः कथं वार्य्यते निषिध्यते च ? ॥ ४९ ॥

अत्रोत्तरं मानवनगाः । मानवेति प्रथमस्य, नगाः पर्वता इति द्वितीयस्य, हे नवम नवीनेत्यर्थः मा गाः न गच्छ इति तृतीयस्य ।

किमिति । अहं हरिः कृष्णः गवां पशूनां हितं विधित्सुः चिकीर्षुः स्वभुजबलेन निजबाहुबलेन महीध्रं पर्वतं गोवर्द्धनमिति यावत् किम् अकरवं कृतवान् ? प्रियायाः कान्तायाः परिणतं परिपक्वं

परिहरति भयात्तवाहितः किं
कमथ कदापि न विन्दतीह भीतः ।
कथय किमकरोरिमां धरित्रीं
नृपतिगुणैर्नृपते ! स्वयं त्वमेकः ॥ ५१ ॥

समरञ्जयम् । लङ् ।

कीदृक् सेना भवति रणे दुर्वारा
वीरः कस्मिन् स्पृहयति लक्ष्मीमिच्छन् ।
का सम्बुद्धिर्भवति भुवः संग्रामे
किं कुर्वीध्वं सुभटजना आढ्यान् ॥ ५२ ॥

पराजयेमहि ।

रक्तमिति भावः बिम्बफलं तदुपमः तत्सदृशः कः प्रियतमस्य कान्तस्य वदनेन पीयते ? ॥ ५० ॥

अत्रोत्तरम् अधरः धृतवानसीत्यर्थ इति प्रथमस्य अधरः दशनच्छद इति द्वितीयस्य ।

परिहरतीति । तव अहितः शत्रुः भयात् किं परिहरति परित्यजति ? इह संसारे भीतः अहित इति शेषः कदापि कं न विन्दति न लभते ? हे नृपते ! स्वयम् एकस्त्वं नृपतिगुणैः राजगुणैः इमां धरित्रीं पृथिवीं किम् अकरोः कृतवानसि ? कथय ॥५१॥

अत्रोत्तरं समरञ्जयम् । समरमिति प्रथमस्य, जयमिति द्वितीयस्य, समरञ्जयं सम्यक् रञ्जितवानसीत्यर्थ इति तृतीयस्य ।

कीदृगिति । कीदृक् सेना रणे दुर्वारा भवति ? लक्ष्मीमिच्छन् वीरः कस्मिन् स्पृहयति कामयते ? भुवः पृथिव्याः सम्बुद्धिः सम्बोधनं का भवति ? हे सुभटजनाः सुवीरवर्गाः ! संग्रामे आढ्यान् धनवत् किं कुर्वीध्वम् ? ॥ ५२ ॥

कंसारातेर्वद गमनं केन स्यात्
कस्मिन् दृष्टिं लभते मद्दिच्छुः।
कं सर्वेषां शुभकरमूचुर्धीराः
किं कुर्य्यास्त्वं सुजन! सशोकं लोकम्॥ ५३॥

विनोदयेयम्। लिङ्।

वारणेन्द्रो भवेत् कीदृक् प्रीतये भृङ्गसंहतेः।
यद्यवश्यं तदास्मै किमकरिष्यमहं धनम्॥ ५४॥

समदाद्यः।

काले देशे यथायुक्तं नरः कुर्वन्नुपैति काम्।

अस्योत्तरं पराजयेमहि। परा श्रेष्ठेति प्रथमस्य, जये इति द्वितीयस्य, महीति तृतीयस्य, पराजयेमहीति चतुर्थस्य।

कंसारातेरिति। कंसारातेः कृष्णस्य गमनं केन स्यात्? मद्दिच्छुर्जनः कस्मिन् दृष्टिं लभते ददाति? धीराः विद्वांसः कं सर्वेषां शुभकरम् ऊचुः? हे सुजन! त्वं सशोकं शोकार्त्तं लोकं किं कुर्य्याः? ॥ ५३॥

अस्योत्तरं विनोदयेयम्। विना पक्षिणा गरुडेनेति यावदिति प्रथमस्य। उदये अभ्युन्नताविति द्वितीयस्य। अयं शुभावहं विधिमिति तृतीयस्य। अयः शुभावहो विधिरित्यमरः। विनोदयेयं सान्त्वयेयमिति चतुर्थस्य।

वारणेन्द्र इति। कीदृक् वारणेन्द्रः हस्ती भृङ्गसंहतेः भ्रमरसङ्घस्य प्रीतये भवेत्? यदि अवश्यं तदा अस्मै अनाय अहं धनं किम् अकरिष्यम्? ॥ ५४॥

अस्योत्तरं समदाद्यः। समदः मदस्रावि आद्यं मुखं यस्य तथोक्त इति प्रथमस्य, समदाद्यः सम्यक् दत्तमकरिष्य इति द्वितीयस्य।

काले इति। नरः काले देशे यथायुक्तं कुर्वन् काम् उपैति

भुक्तवन्तावलं स्फीतं किमकमकरिष्यताम् ॥ ५५ ॥

अहास्यताम् । लुङ् । इति नामाख्यातजातिः ।

ज्ञेयन्तार्क्यं दृशा तार्क्यं सौत्रं सूत्रोत्तरैस्तथा ।

शाब्दीयं शब्दसंज्ञाभिः शास्त्रजं शास्त्रभाषया ॥ ५६ ॥

हिमानीस्थगितौ स्यातां कीदृशौ शशिभास्करौ ।

कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसम्मतः ॥ ५७ ॥

अभावः ।

के प्रवीणाः कुतो हीनं जीर्णं वासोऽंशुमांश्च कः ।

निरञ्चरिणवो वाह्यं योगाचाराश्च कीदृशाः ॥ ५८ ॥

विज्ञानवादिनः । तार्क्यं जातिः ।

प्राप्नोति ? अलम् अतिशयेन स्फीतं यथा तथा भुक्तवन्तौ जनौ अकं किम् अकरिष्यताम् ? यद्वा भुक्तवन्तौ अलप्स्येतां चेदिति शेषः तदा अकं किम् अकरिष्यताम् ॥ ५५ ॥

अत्रोत्तरम् अहास्यताम् । अहास्यतां हास्यास्पदताभावमिति प्रथमस्य, अहास्यताम् अत्यक्ष्यतामिति द्वितीयस्य ।

ज्ञेयमिति । तार्क्यदृशा तर्कदृष्ट्या ज्ञेयं वस्तु तार्क्यम् । तथा सूत्रोत्तरैः सूत्राणाम् उत्तरैः ज्ञेयं सौत्रम् । शब्दसंज्ञाभिः ज्ञेयं शाब्दीयम् । शास्त्रभाषया शास्त्रस्य परिभाषया ज्ञेयं शास्त्रजम् ॥५६॥

हिमानीति । हिमानी हिमसंहतिः तया स्थगितौ आच्छादितौ शशिभास्करौ कीदृशौ स्याताम् ? कः पूज्यः ? कः प्रमाणेभ्यः हेतुभ्यः प्रभाकरस्य सम्मतः न ? ॥ ५७ ॥

अत्रोत्तरम् अभावः । अभौ भा दीप्तिः तद्रहिताविति प्रथमस्य । अः विष्णुरिति द्वितीयस्य । अभाव इति तृतीयस्य, प्रभाकरमते अभावस्य पदार्थत्वं प्रमाणैर्निराकृतमिति भावः ।

के इति । प्रवीणाः बहुदर्शिनः के ? जीर्णं वासः कुतः कस्मात्

को नयति जगदशेषं चयमथ बिभराम्बभूव कं विष्णुः ।
नीचः कुत्र सगर्वः पाणिनिसूत्रस्य कीदृशम् ॥ ५९ ॥
यमोगम्धने ।

किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी न भवति ।
नीचः केन सगर्वः सूत्रं चन्द्रस्य कीदृशम् ॥ ६० ॥
विशेषणमेकार्थेन । इति सौत्रजातिः ।

र्णीमं परित्यक्तं भवेदिति शेषः ? अंशुमान् कः ? कीदृशाः योगाचाराः योगिनः बाह्यं बहिर्भवं वस्तुजातं निराकरिष्णवः असत्त्वेनेति शेषः ? ॥ ५८ ॥

अत्रोत्तरं विज्ञानवादिनः । विशा इति प्रथमस्य । नवात् नवीनात् वस्त्रादिति शेषः, नवीनं वस्त्रमादाय जीर्णं परित्यजतीति भावः इति द्वितीयस्य । इनः सूर्य्य इति तृतीयस्य । विज्ञानवादिनः विशिष्टतत्त्वदर्शिन इत्यर्थ इति चतुर्थस्य ।

क इति । कः अशेषं जगत् चयं नयति ? अथ किल विष्णुः कं बिभराम्बभूव ? कुत्र सति नीचो जनः सगर्वः भवतीति शेषः ? पाणिनिसूत्रस्य कीदृशं कीदृशम् ? ॥ ५९ ॥

अत्रोत्तरं यमोगम्धने । यम इति प्रथमस्य, अगं पर्वतमिति द्वितीयस्य, धने इति तृतीयस्य, समस्तं चतुर्थस्य ।

किमिति । विशेष्यनिष्ठं विशेष्याधीनं किं स्यात् ? पूरणी संख्या का न भवति ? नीचः केन सगर्वः ? चन्द्रस्य सूत्रं कीदृशं कीदृशम् ? वदत ॥ ६० ॥

अत्रोत्तरं विशेषणमेकार्थेन । विशेषणमिति प्रथमस्य, एकेति द्वितीयस्य, अर्थेन धनेनेति तृतीयस्य, विशेषणमेकार्थेनेति समस्तं चतुर्थस्य ।

न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते ।
लादेशानां नवानाञ्च तिङां किं नाम कथ्यताम् ॥ ६१ ॥
परस्मैपदम् ।

सततं श्लाघते कस्मै नीचो भुवि किमुत्तमम् ।
कर्त्तर्य्यपि रुचादीनां धातूनां किं पदं भवेत् ॥ ६२ ॥
आत्मनेपदम् ।

किमव्ययतया ख्यातं कस्य लोपो विधीयते ।
ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥ ६३ ॥
स्वरितः । इति शाब्दीयजातिः ।

नेति । खलः दुर्जनः कस्मै न श्लाघते न प्रशंसति ? सुप्तिङन्तं किम् उच्यते ? लादेशानां दशानां लकाराणां लट्प्रभृतीनां ये आदेशाः रूपाणि पूर्वाणीति भावः तेषां नवानां तिङां नाम किम् ? कथ्यताम् ॥ ६१ ॥

अत्रोत्तरं परस्मैपदम् । परस्मै इति प्रथमस्य, पदमिति द्वितीयस्य, परस्मैपदमिति तृतीयस्य ।

सततमिति । नीचः जनः सततं कस्मै श्लाघते प्रशंसति ? भुवि पृथिव्याम् उत्तमं किम् ? कर्त्तरि कर्त्तृवाच्येऽपि रुचादीनां धातूनां किं पदं स्यात् ? ॥ ६२ ॥

अत्रोत्तरम् आत्मनेपदम् । आत्मने इति प्रथमस्य, पदम् उन्नतमधिकारस्थानमिति यावदिति द्वितीयस्य, आत्मनेपदमिति तृतीयस्य रोचते इति प्रयोगादिति भावः ।

किमिति । अव्ययतया ख्यातं किं पदमिति शेषः ? कस्य लोपः विधीयते ? हे शब्दविदः ! ज्ञात्वा ब्रूत, समाहारः क उच्यते ? ॥ ६३ ॥

अत्रोत्तरं स्वरितः । स्वरितः अव्ययं स्वर्गवाचकं, स्वरूपं

जलदात्यये भवति कः समदः
सुभगश्च किं कमभरन्मुरजित् ।
कटुतैलमिश्रितो गुडो नियतं
विनिहन्ति कं त्रिगुणसप्तदिनैः ॥ ६४ ॥

श्वासरोगम् ।

कीदृक् प्रातर्दीपवर्त्तेः शिखा स्याद्
उष्ट्रं पृच्छत्याभजन्ते मृगाः किम् ।
देवामात्ये किं गते प्रायशोऽस्मिन्
लोकः कुर्य्यान्नो विवाहं विविक्तः ॥ ६५ ॥

विभाकरभवनम् ।

खगेन्नाकेत्यमर इति प्रथमस्य । इतः इदतुकस्य इति द्वितीयस्य । सरितशब्देन समाहार उच्यते तृतीयस्य ।

जलदात्यये इति । जलदात्यये वर्षापगमे कः समदः भवति ? किञ्च सुभगं शोभनं भवति ? मुरजित् कृष्णः कम् अधरत् ? कटुतैलेन सार्षपतैलेन मिश्रितो गुडः त्रिगुणसप्तदिनैः एकविंशतिदिनैरित्यर्थः नियतं कं विनिहन्ति ? ॥ ६४ ॥

अत्रोत्तरं श्वासरोगम् । श्वा कुक्कुर इति प्रथमस्य, सर इति द्वितीयस्य, अगं पर्वतं गोवर्द्धनमिति तृतीयस्य, श्वासरोगमिति चतुर्थस्य ।

कीदृगिति । प्रातः प्रभाते दीपवर्त्तेः शिखा कीदृक् स्यात् ? उष्ट्रं पृच्छति कथमिति शेषः ? मृगाः किम् आभजन्ते आश्रयन्ति ? देवामात्ये देवमन्त्रिणि किं गते सति प्रायशः विविक्तः विशुद्धः लोकः अस्मिन् लोके विवाहं नो कुर्य्यात् ? ॥ ६५ ॥

अत्रोत्तरं विभाकरभवनम् । विभा विगतप्रभेति प्रथमस्य । करभेति द्वितीयस्य । वनमिति तृतीयस्य । विभाकरस्य सूर्य्यस्य भवनं स्थान-

वर्ण एवोत्तरं यत्र तद्वर्णोत्तरमुच्यते।
वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम् ॥ ६६ ॥
कः प्रभुर्भुवि विख्यातः प्रोक्तं वदति किं पदम्।
कोऽभीष्टोऽत्र दरिद्रस्य सेवन्ते के च भिक्षुभिः ॥६७॥

विहाराः।

किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा।
पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः ॥६८॥

कंसासुरः, इति वर्णोत्तरजातिः।

दृष्टो हरिः कं भुवि कीदृगत्र
पृच्छत्यकः किं कुरुते सशोकः।

र्मिति चतुर्थस्य, तथाच ज्योतिस्तत्त्वम्। गुरौ हरिस्थे न विवाह-
माङ्गल्यादीतमर्गप्रहृष्टा मुनीन्द्रा इति।

वर्ण इति। यत्र वर्ण एव उत्तरं तत् वर्णोत्तरम् उच्यते, यत्र
वाक्यम् उत्तरं तत्तु वाक्योत्तरम् इति स्मृतं कथितम् ॥ ६६ ॥

क इति। भुवि पृथिव्यां कः प्रभुः विख्यातः? किं पदं प्रोक्तं
वदति बोधयति? अत्र दरिद्रस्य अभीष्टः कः? भिक्षुभिः के च
सेवन्ते? ॥ ६७ ॥

अत्रोत्तरं विहाराः। वि अव्ययम् वाक्यमित्यर्थं इति प्रथमस्य,
हा इति द्वितीयस्य, रा धनमिति तृतीयस्य, विहाराः बौद्धमठा इति
चतुर्थस्य।

किमिति। पयोवाहाः मेघाः किं मुञ्चन्ति वर्षन्ति? हरिवल्लभा
कीदृशी? पूजायां किं पदं प्रोक्तमिति शेषः? अग्निः कः? कः
रिपुः कृष्णेन हतः? ॥ ६८ ॥

अत्रोत्तरं कंसासुरः। कं जलमिति प्रथमस्य, सा लक्ष्मीरिति
द्वितीयस्य, सु इति तृतीयस्य, रः अग्निरिति चतुर्थस्य, कंसासुर
इति पञ्चमस्य।

श्लोकं विधायापि किमित्युदारः
कविर्न तोषं समुपैति भूयः ॥ ६८ ॥
अगमकमकरोदिति ।
लक्ष्मीधरः पृच्छति कीदृशः स्यात्
नृपः सपत्नैरपि दुर्निवारः ।
अकारि किं ब्रूहि नरेण सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥ ६८ ॥
समजनितनयः, इति वाक्योत्तरजातिः ।
इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
द्वितीयः परिच्छेदः ।

दधाविति । हरिः कं दधौ ? गुणि योग्यं अश्वं मेघः आकाशं वा कीदृक् ? अकं दुःखं पृच्छति कथमिति शेषः ? सशोकः किं कुरुते ? उदारो महान् कविः श्लोकं विधायापि भूयः अधिकं तोषं किमिति न समुपैति न प्राप्नोति ? ॥ ६८ ॥

अस्योत्तरम् अगमकमकरोदिति । अगं पर्वतमिति प्रथमस्य, अकं जलदाच्छन्नमिति द्वितीयस्य, अक इति तृतीयस्य, रोदितीति चतुर्थस्य, अगमकम् अयौक्तिकम् अकरोत् इति हेतोरिति पञ्चमस्य ।

लक्ष्मीधर इति । लक्ष्मीधरः पृच्छति कीदृशो नृपः सपत्नैः शत्रुभिरपि दुर्निवारः दुर्जयः स्यात् ? नरेण सम्यक् स्वकीयं पितृत्वम् आरोपयितुं पिता भवितुमित्यर्थः किम् अकारि ? ब्रूहि कथय ॥ ६८ ॥

अस्योत्तरं समजनितनयः । समं योग्यं यथा तथा जनितः अनुष्ठित इत्यर्थः नयः नीतिर्येन तथोक्तः यथानीतिकार्य्यकारीत्यर्थः इति प्रथमस्य । तनयः पुत्रः समजनि उत्पादित इत्यर्थ इति द्वितीयस्य ।

इति द्वितीयपरिच्छेदः ।

श्लोक एवोत्तरं यत्र तत् श्लोकोत्तरमुच्यते ।
खण्डोत्तरं भवेदर्धश्लोकात् पादात्तदुत्तरम् ॥ १ ॥

कान्देवेऽर्चयन्ति स्फुटरुचि निशि किं कीदृशी दुःखिनी स्त्री
कीदृक् चक्रं सदास्ते क च तव विजयी प्रावृषं कीदृशं खम् ।
कामाहुः प्रेतयोग्यां कथय सुकृतिनः कीदृशाः स्युः पुमांसः
कं धत्ते कश्च धत्ते गगनतलमलं प्रेक्षणीयं जनानाम् ॥ २ ॥

प्लक्षः कीदृक् चकास्ति स्फुटनवकुसुमाशोकमासाद्य कालं
किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किम्भवश्च ।
किं नेत्रप्रावृतिः स्यादतिशयलघवः के च को व्रीहिभेदः
प्रायेण प्रावृषेण्याः प्रियतमदिवसाः कीदृशाः कीदृशाः स्युः ॥३॥

श्लोक इति । यत्र श्लोक एव उत्तरं तत् श्लोकोत्तरम् उच्यते । अर्द्धश्लोकात् उत्तरं खण्डोत्तरम् । पादात् श्लोकचतुर्थांशात् उत्तरं तदुत्तरं पादोत्तरमित्यर्थः भवेत् ॥ १ ॥

कमिति । के जना कं देवम् अर्चयन्ति ? निशि रजन्यां स्फुटरुचि उज्ज्वलप्रभं किम् ? दुःखिनी स्त्री कीदृशी ? चक्रं सदा कीदृक् आस्ते तिष्ठति ? तव विजयः क च कुत्र ? प्रावृषं वार्षिकमित्यर्थः खमाकाशं कीदृशम् ? प्रेतयोग्यां काम् आहुः ? सुकृतिनः पुण्यवन्तः पुमांसः कीदृशाः स्युः ? जनानाम् अलम् अत्यर्थं प्रेक्षणीयं गगनतलं कं धत्ते ? कश्च धत्ते ? ॥ २ ॥

प्लक्ष इति । स्फुटानि नवानि कुसुमानि येषां तादृशाः अशोकाः यत्र तथाभूतं कालं वसन्तमित्यर्थः आसाद्य प्राप्य प्लक्षः वटः कीदृक् सन् चकास्ति राजते ? अम्बुवहाः मेघाः किं मुञ्चन्ति ? भवतः अरिनिवहे शत्रुसमूहे किम्भवः संज्वरः ? नेत्रावृतिः प्राप्तिरावरणं यस्मात् तादृशं किं स्यात् ? अतिशयलघवः के ?

अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।
कदम्बकन्दलीकन्दरजःपक्ष्मलवायवः ॥ ४ ॥

कुर्य्यादुद्वेगवन्तं कमपि निशि सरः कीदृशं कास्ति वक्रो
वक्रा निम्नः कया स्यात् परिषदि नियतं मन्त्रसम्बोधनं किम् ।
वर्णोपान्त्यङ्गमुचुः किमसुररिपुणा नन्दगोपालयेऽस्तं
कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः ॥ ५ ॥
कीदृक् कस्येह बन्धुः स्वकृतमपहरत् प्रेयसी का त्वयान्ते
कीदृग् भीतिं विधत्ते धनुरवनिरुहां कश्चिदामन्त्रयस्व ।

भीष्मभेदः कः? हे प्रियतम! प्रावृषेण्याः वार्षिकाः दिवसाः प्रायेण कीदृशाः कीदृशाश्च स्युः? ॥ २ ॥

अत्रोत्तरम्, अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।

कदम्बकन्दलीकन्दरजःपक्ष्मलवायवः ॥ ४ ॥ अं विष्णुं जना इति प्रथमस्य, भं नक्षत्रमिति द्वितीयस्य, अहावेति तृतीयस्य, अराः चक्रान्तर्गतदार्वंवयवाः यस्मिन् तत् अरीति चतुर्थस्य, वाही इति पञ्चमस्य, घनि मेघयुतमिति षष्ठस्य, चितामिति सप्तमस्य, वराः श्रेष्ठा इति अष्टमस्य, कदं कं जलं ददातीति कदं मेघमिति नवमस्य, वक्रमिति दशमस्य । दली दलयुक्त इति एकादशस्य, कं जलमिति द्वादशस्य, दरजः भयजनित इति त्रयोदशस्य, पक्ष्म नेत्रलोम इति चर्तुदशस्य, लवाः विन्दव इति पञ्चदशस्य, यव इति षोड़शस्य, पूर्व्वार्द्धं सप्तदशस्य, उत्तरार्द्धम् अष्टादशस्य । पूर्व्वार्द्धस्यार्थः—अञ्जनस्य कज्जलस्य आभेव आभा येषां तादृशा महान्तः ये वारिवाहाणां मेघानाम् ओघाः समूहाः तैः निचितं व्याप्तम् अम्बरम् आकाशं येषु तादृशाः । उत्तरार्द्धस्यार्थः—कदम्बानां कन्दलीकन्दानाञ्च रजोभिः परागैः पक्ष्मलाः युक्ताः इत्यर्थः वायवः येषु तथाभूताः ।

कुर्य्यादित्यादि । कीदृशं सरः निशि कमपि जनमित्यर्थः विरहिणमिति भावः उद्वेगवन्तम् उत्कण्ठितं कुर्य्यात्? वक्रो वदने का

दैत्यः कंसद्विषा कः कथय विनिहतो गह्वरः कः प्रतीतः
कीदृक्कीदृग्वसन्तः प्रियतम ! भवतः प्रीतये नित्यमस्तु ॥ ६ ॥

कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥ ७ ॥

इति श्लोकोत्तरजातिः ।

अस्ति ? परिषदि सभायां कया वक्ता निन्द्यः स्यात् ? नियतं सततं मन्दस्य सम्बोधनं किम् ? कं वर्णानाम् अक्षराणाम् उपान्त्यं चरमात्परपूर्वमित्यर्थः आहुः ? नन्दगोपस्य आलये असुररिपुणा कृष्णेन किम् अस्तं निक्षिप्तं पद्भ्यामिति शेषः ? कः प्रालेयाद्रेः हिमवतः पुत्र्याः गौर्याः इत्यर्थः कुचकलशयोः लुठन्तौ पाणी यस्य तादृशः एणाङ्कमौलिश्चन्द्रशेखरश्च ? इह कस्य बन्धुः कीदृक् ? का प्रेयसी वयान्ते प्रलयकाले सततं निजस्फूर्तिमित्यर्थः अहरत् ? कीदृक् धनुः भीतिं विधत्ते जनयति ? अरनिवहानां छात्राणां मध्ये कांश्चित् आमन्त्रयस्व सम्बोधय ? । को दैत्यः कंसद्विषा विष्णुना विनिहतः ? कः गह्वरः प्रतीतः प्रसिद्धः ? हे प्रियतम ! कीदृक् कीदृक् वसन्तः भवतः प्रीतये नित्यम् अस्तु ? कथय ॥ ५ ॥ ६ ॥

अथोत्तरं, कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥ ७ ॥

कोकि चक्रवाकविशिष्टमिति प्रथमस्य, लाला इति द्वितीयस्य, अपवाचा अशुद्धवचसा इति तृतीयस्य, अलस इति चतुर्थस्य, हकारमिति पञ्चमस्य, अनः शकटमिति षष्ठस्य, हर इति सप्तमस्य, अशोकः तव इति अष्टमस्य, कालीति नवमस्य, नर्मादिति दशमस्य, तालि वृक्षभेद इति एकादशस्य, मधुरिति द्वादशस्य, अस्वनः स्पष्टध्वनिरहित इत्यर्थ इति त्रयोदशस्य । पूर्वार्द्धं चतुर्दशस्य, परार्द्धं पञ्चदशस्य । पूर्वार्द्धस्यार्थः—कोकिलानाम् आलापेन रवेण वाचालैः शब्दितैः सहकारैः आम्रतरुभिः मनोहरः । परार्द्धस्यार्थः—अशोकानां

का चक्रे हरिणा धने कृपणधीः कीदृक् भुजङ्गेऽस्ति किं
कीदृक् कुम्भसमुद्भवस्य जठरं कीदृग् जिघांसुर्वधूः ।
श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ् नभो निर्मलं
क्षौणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ८ ॥
कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखम् ।
बुध पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां

स्तबकेषु आलीनानां सक्तानाम् अलीनां भ्रमराणां मधुरः मनोहरः ध्वनो यत्र तादृशः ।

केति । हरिणा का चक्रे कृता ? धने विषये कृपणानां धीः बुद्धिः कीदृक् ? भुजङ्गे किम् अस्ति ? कुम्भसमुद्भवस्य जठरम् उदरं कीदृक् ? जिघांसुः जिगमिषुः पतिकुलमिति शेषः वधूः कीदृक् ? कीदृक् श्लोकः सुकृतिनाम् अभीप्सितः ? निर्मलं नभः आकाशं कीदृक् ? क्षौणीं पृथ्वीम् आह्वय, किं सर्वगं सर्वव्यापि उदितम् उक्तम् ? रात्रौ सरः सरोवरं कीदृशम् ? ॥ ८ ॥

अत्रोत्तरं कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखम् । कुः पृथ्वी तस्याः मुत् आनन्द इति प्रथमस्य, अवनपरा रक्षणपरेति द्वितीयस्य, गरं विषमिति तृतीयस्य, जिताम्भः जितजलमिति चतुर्थस्य, विहितगमा विशेषेण हितः गमः यात्रा यस्याः तादृशीति पञ्चमस्य, गमकः अर्थबोधक इति षष्ठस्य, अकमुक् कं जलं मुञ्चतीति कमुक् तन्न भवतीति तथोक्तमिति सप्तमस्य, धरे पृथिवीति अष्टमस्य, खमाकाशमिति नवमस्य, समस्तं दशमस्य । समस्तस्यार्थः—कुमुदवनानां कुमुदसमूहानां परागैः रञ्जितं शोभितम् अम्भः जलं यस्य तथाभूतं तथा विहिताः कृता गमागमाः इतस्ततः सञ्चाराः यैः तथोक्तैः कोकैः चक्रवाकैः मुग्धा मनोहारिणी रेखा आभोगो यस्य तादृशम् ।

बुधमिति । बुधं पृच्छति सम्बोधयति कथमिति शेषः ?

कीदृग्वीरजनः कोऽतिगहनः सम्बोधयाचक्षितम् ।
का धात्री जगतः बृहस्पतिवधूः कीदृक् कविः आदृतः ।
कोऽर्थः किं भवता हतं रिपुकुलं कीदृक् नरो वासरे ॥९॥
विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम् ।

इति खण्डोत्तरजातिः ।

त्रिभक्ति वदनेन किं क इह सत्त्वपीडाकरं
कुलं भवति कीदृशं गलितयौवनं योषिताम् ।
बभार हरिरम्बुधेरुपरि काश्च केन स्तुते
इतः कथय कास्त्वया नयपतेर्भयं कीदृशात् ॥ १० ॥

विषमपादनिकुञ्जगताहितः ।

मुरारेः नारायणस्य शयनं किम् ? का नृणां रूपं हन्ति ? वीरजनः कीदृक् ? अतिगहनः अतिदारुण इत्यर्थः कः ? अवधृतं सम्बोधय ? जगतः धात्री धारयित्री का ? बृहस्पतिवधूः गुरुभार्या तारेत्यर्थः कीदृक् ? कविः क कृत आदृतः आदरवान् ? अर्थः कः ? भवता रिपुकुलं किं हतम् ? वासरे दिवसे नरः कीदृक् ? ॥ ९ ॥

खण्डोत्तरं विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम् । विकच केशशून्य इति प्रथमस्य, वारि जलमिति द्वितीयस्य, जरा वार्द्धकमिति तृतीयस्य, आजिसमुत् संग्रामानन्दीति चतुर्थस्य; भवः संसारः शिवश्चेति पञ्चमस्य, उच्छलितः अवधूत इति षष्ठस्य, भूरिति सप्तमस्य, रः कामः तत्परा कामासक्तेति अष्टमस्य, गवि वाचीति नवमस्य, रा धनमिति दशमस्य, जितमिति एकादशस्य, मत्तं द्वादशस्य । समस्तस्यार्थः—विकचानां प्रस्फुटितानां वारिजानां पद्मानां राजिभ्यः समुद्भवैः समुत्पन्नैः उच्छलितैः प्रसृतैः भूरिभिः बहुभिः परागैः रजोभिः विराजितं शोभितम् ।

त्रिभक्तीति । इह जगति कः वदनेन सत्त्वानां जीवानां पीडा-

हरिर्वहति कान्तया क्वरिषु का मता कश्च मा
कमर्चयति रोगवान् धनवती पुरी कीदृशी ।
हरिः कमधरद्बलिप्रभृतयोऽधरां किं व्यधुः
कया सदसि कस्त्वया वद जितोऽम्बुधिः कीदृशः ॥ ११ ॥
कुम्भीरमीनमकरागमदुर्गवारिः । इति पादोत्तरजातिः ।

धरं किं विभर्त्ति ? गलितयौवनं योषितां कुलं कीदृशं भवति ? हरिः अम्बुधेः समुद्रस्य उपरि कां बभार, त्वया केन स्तुते सति कः हृतः, कीदृशात् नगपतेः पर्वतराजात् भयं भवतीति शेषः ? ॥ १० ॥

अत्रोत्तरं विषमपादनिकुञ्जगताहित इति । विषम् अपात् सर्प इति प्रथमस्य, अनि नास्ति मीनांशको यस्य तथाभूतमिति द्वितीयस्य, कुं पृथिवीमिति तृतीयस्य, जगतां अहितः शत्रुरिति चतुर्थस्य, समस्तं पञ्चमस्य । समस्तस्यार्थः—विषमेषु उन्नतानतेषु पादेषु प्रत्यन्तपर्वतेषु, पादाः प्रत्यन्तपर्वता इत्यमरः । ये निकुञ्जाः लतादि-पिहितभूभागाः, निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः । तत्र गताः स्थिताः अहयः सर्पाः यस्य तथाभूतात् ।

हरिरिति । हरिः कां वहति ? तव अरिषु शत्रुषु का अस्ति ? का कश्च मता ? रोगवान् कं देवमिति शेषः अर्चयति पूजयति ? कीदृशी पुरी धनवती भवतीति शेषः ? हरिः कम् अधरत् ? बलिप्रभृतयः दानवश्रेष्ठा इति भावः धरां पृथिवीं किं व्यधुः चक्रुः ? त्वया सदसि सभायां कया कः जितः ? अम्बुधिः समुद्रः कीदृशः ? वद ॥ ११ ॥

अत्रोत्तरं कुम्भीरमीनमकरागमदुर्गवारिः । कुं पृथ्वीमिति प्रथमस्य, भीमं भयमिति द्वितीयस्य, मं विष्णुम् ई लक्ष्मीरिति तृतीयस्य, रनं सूर्यमिति चतुर्थस्य सूर्यस्यारोग्यदातृत्वेन शास्त्रेषु कीर्त्तनादिति भावः, अकरा राजकरहीना इति पञ्चमस्य, अगं पर्वतं गोवर्द्धनमिति षष्ठस्य,

चत्वार्य्यारचि वाभ्यां नेमिं पादद्वयेन च ।
लिखिता दक्षिणावर्त्तं चक्रं प्रश्नमवेहि मे ॥ १२ ॥

कं चौरस्य छिनत्ति क्षितिपतिरनघः किं पदं वक्ति कुत्सां
क्षौणीसम्बोधनं किं वदति कमलजं का च विश्वं बिभर्त्ति ।
चक्राङ्गामन्त्रणं किं कथमपि सुजनः किं न कुर्य्यादनार्य्यं
कीदृग्भोक्तुः पुरं स्यात्पयसि वद कुतो मीनपंक्तिर्बिभेति ॥ १३ ॥
किं स्वच्छं शारदं स्याद्वदति वृषगतिं कोऽंशुमाली पवित्रः
कोऽस्मिन् किं जीवनं काः विरचयति कविर्वक्तिसम्बोधनं किम् ।

अदुर्दन्तवन्त इति वप्रभस्य, नवा बाधा अरिः यस्य रिति चरमस्य, समस्तं नवमस्य । समस्तस्यार्थः—कुम्भीराणां मीनानां मकराणाञ्च स्यागमेन सद्भावेनेत्यर्थः सञ्चारयोग्य यावत् दुर्गाणि दुःप्रवेशानि वारीणि यस्य तथाभूतः ।

सम्प्रति चक्रबन्धमाह चत्वारीति । पादाभ्यां चत्वारि अराणि अन्तरवर्त्तकाष्ठानि, पादद्वयेन नेमिं परिधिमिति यावत् दक्षिणावर्त्तं लिखिता यत्र चक्रं चक्राकृति बन्धविशेषः तं प्रश्नं मे मम सकाशात् इति शेषः अवेहि जानीहि ॥ १२ ॥

कमिति । अनघः अपापः क्षितिपतिः राजा चौरस्य कं छिनत्ति ? किं पदं कुत्सां वक्ति बोधयति ? क्षौणीसम्बोधनं पृथिव्याः सम्बोधनं किम् ? कमलजं ब्रह्माणं वदति सम्बोधयति किमिति शेषः ? का च विश्वं जगत् बिभर्त्ति ? चक्राङ्गस्य आमन्त्रणं सम्बोधनं किम् ? सुजनः कथमपि कष्टेनापि किम् अनार्य्यं अकार्य्यं न कुर्य्यात् ? भोक्तुः भोगिपरस्य राज्ञ इति शेषः पुरं नगरं कीदृक् स्यात् ? पयसि जले मीनपङ्क्तिः कुतः बिभेति ? वद ॥ १३ ॥

किमिति । किं शारदं शरत्कालीनं वस्त्विति शेषः स्वच्छं स्यात् ? वृषगतिं वृषं वदति सम्बोधयति किं पदमिति शेषः ? अंशु-

नाकाङ्क्षन्ति स्त्रियः कन्तनुरसुररिपोः कीदृशी कश्च मूकः
सम्यक्प्रीतिन्तडागः प्रियतम ! तनुते कीदृशः कीदृशस्ते ॥ १४॥

करंकुकोककुररकलहंसकरम्बितः ।
सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

इति चक्रजातिः ।




भानौ सूर्य्यः कः ? पवित्रः कः ? अस्मिन् जगति जीवनं किम् ? कविः काः विरचयति वाङ्मसम्बोधनं किम् ? स्त्रियः कं जनं न आकाङ्क्षन्ति ? असुररिपोः विष्णोः तनुः मूर्त्तिः कीदृशी ? कश्च मूकः ? हे प्रियतम ! कीदृशः कीदृशः तडागः सरः ते तव सम्यक् प्रीतिं तनुते विस्तारयति ?॥ १४ ॥

अत्रोत्तरं, करंकुकोककुररकलहंसकरम्बितः ।

सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

करं हस्तमिति प्रथमस्य, कु इति द्वितीयस्य, को पृथिवि इति तृतीयस्य, क मह्यमिति चतुर्थस्य, कुः पृथिवीति पञ्चमस्य, रंर इति षष्ठस्य, कलहम् इति सप्तमस्य, सकरं राजस्वयुतमिति अष्टमस्य बितः पावित इति नवमस्य, सर इति दशमस्य, अज इति एकादशस्य, कः सूर्य्य इति द्वादशस्य, अमल इति त्रयोदशस्य, मरुत् जलमिति

वर्णद्वयद्वयैकैकदलभूतदलाष्टकम् ।
सर्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिकम् ॥ १६ ॥

पुण्यात्मा वद कीदृशः सरसिजैः के मोदिताः कीदृशः
तद्वैरी गतचक्षुषः कुलमभूत कीदृक् त्वया के जिताः ।
बद्धालिः सलिलाशयः कथय भोः कीदृक् च आक्षेपवाक्
शब्दः कुत्र न तस्करादिकभयं दत्ते भवेत् प्रायशः ॥ १७ ॥

अप्यित्तं गवि कीदृशं निगदितो मुक्तः पुमान् कीदृशः
कस्मात् बिभ्यति कौशिका भुवि कृतः कीदृक् त्वया तस्करः ।

चतुर्दशस्य, गा वाच इति पञ्चदशस्य, र अग्ने इति षोडशस्य, नीरसम् अरसिकामिति सप्तदशस्य, सक्षमा वक्ष्मीयुतेति अष्टादशस्य, अकृतः अशक्त इति ऊनविंशस्य, पूर्वार्द्धं विंशस्य, परार्द्धमेकविंशस्य । पूर्वार्द्धस्यार्थः—करडुभिः जलपक्षिभेदैः कोकैः चक्रवाकैः कारवैः उत्क्रोशपक्षिभिः कलहंसैः हंसविशेषैश्च करम्बितः मिश्रितः । परार्द्धस्यार्थः—सरोजानां कमलानां कोमलाः उद्गाराः सौरभाणि येषु तादृशैः नीरैः जलैः संसक्तः सम्पृक्तः मारुतः वायुर्यस्मिन् तथाभूतः ।

वर्णेति । वर्णानां द्वयद्वयेन एकैकं प्रत्येकं दलभूतं यथाक्रमविन्यस्तं दलाष्टकम् अष्टौ दला यस्य तादृशं सर्वेषाम् उत्तराणाम् आद्यवर्णेन कृता कर्णिका पद्मबीजाधारकोषो यस्य तादृशं पद्मं स्यात् ॥ १६ ॥

पुण्यात्मेति । पुण्यात्मा जनः कीदृशः स्यादिति शेषः ? सरसिजैः पद्मैः के मोदिताः ? तव वैरी शत्रुः कीदृशः ? गतचक्षुषः अन्धस्य धृतराष्ट्रस्येत्यर्थः कुलं कीदृक् अभूत् ? यद्वा गतचक्षुषः अन्धस्य कुलं कीदृक् ? त्वया के जिताः ? बद्धालिः बद्धसेतुः सलिलाशयः जलाशयः कीदृक् ? आक्षेपवाक् नीचसम्बोधनवचनं कीदृक् ? कुत्र शब्दे दत्ते सति प्रायशः तस्करादीनां भयं न भवेत् ? ॥ १७ ॥

अप्यित्तमिति । गवि जले अप्यित्तम् अग्निः वड़वानल इत्यर्थः

हस्ती स्यान्ननु कीदृशो बहुमतः शोच्यो रथः कीदृशः
कीदृक्षः पुरुषः परप्रतिहतः कीदृग्भवेद्वासुकिः ॥ १८ ॥

अलयः अपश्यत् अबन्धः अहस्तः अगजः अहीनः,

इति पद्मोत्तरजातिः ।




कीदृशम्? शुक्लः पुमान् कीदृशो निगदितः? कौशिकाः पेचकाः कस्मात् बिभ्यति भयं प्राप्नुवन्ति? भुवि पृथिव्यां त्वया तस्करः कीदृक् ज्ञातः? कीदृशो हस्ती ननु भोः बहुमतः स्यात्? कीदृशः रथः शोच्यः? कीदृक्षः कीदृशः पुरुषः परैः शत्रुभिः अप्रतिहतः अजितः? वासुकिः नागराजः कीदृक् भवेत्? ॥ १८ ॥

अस्योत्तरं पद्मबन्धश्लोकः। अस्ति लयः ध्वंसः अधोगतिरित्यर्थः यस्य सः अथवा लः विष्णुः तत्र लयो यस्य तथाभूतः अलयः इति प्रथमस्य, पुनरलयः भ्रमरा इति द्वितीयस्य। अपश्यत् शी शयनम् अद् भोजनम् अपगते शयनभोजने यस्य तथाभूत इत्यर्थः इति तृतीयस्य, पुनरपश्यत् दर्शनशक्तिहीनमित्यर्थः यद्वा हिताहितज्ञानशून्यमित्यर्थः इति चतुर्थस्य। अरयः शत्रव इति पञ्चमस्य, पुनररयः नास्ति रयो वेगो यस्य तथाभूत इति षष्ठस्य। अररे अरे इति नीचसम्बोधनवचनमिति सप्तमस्य, पुनरररे कवाटे इति अष्टमस्य। अबन्धः आपः अम्भांसि अन्नानि दर्शनानीति यावत्

काकस्येव पदं न्यस्तं यत्तत्काकपदं मतम् ।
तिर्य्यगन्योन्यरेखाभिर्गोमूत्री द्विपदीद्वये ॥ १९ ॥

कुतः कः स्यात् कीदृक् कथय विषवैद्य ! स्फुटमिदं
रिपोः कः कीदृक्षो भवति वशगः कस्य करभः ।
प्रवीणः सम्बोध्यः सुभग ! वद कौ रत्नवचनौ
सुरूपे विख्यातिं जगति महती का गतवती ॥२०॥

नागदरतः, नागतनयः, नागरमणी, इति काकपदजातिः ।




यस्य तादृशं जलाशयमित्यर्थ इति नवमस्य, पुनरबन्धः बन्धनरहित इति दशमस्य । अहस्तः दिवसादिति एकादशस्य, पुनरहस्तः हस्तशून्य इति द्वादशस्य । अगजः पर्वतज इति त्रयोदशस्य, पुनरगजः गजरहित इति चतुर्दशस्य । अहीनः महानिति पञ्चदशस्य, पुनरहीनः अहीनां सर्पाणाम् इनः स्वामीति षोडशस्य ।

काकपदं गोमूत्रञ्च बन्धमाह काकस्येत्यादि । काकस्येव यत् न्यस्तं निहितं पदं तत् काकपदं मतं कथितम् द्विपदीद्वये तिर्य्यक्-वक्रभावेन अन्योन्यरेखाभिः परस्पररेखाभिः गोमूत्री भवतीति शेषः ॥ १९ ॥

कुत इति । हे विषवैद्य ! कुतः कस्मात् कः कीदृक् स्यात् ? इदं स्फुटं कथय, कीदृक्षः कीदृशः कः रिपोः शत्रोः वशगः भवति ? करभः करिशावकः कस्य ? प्रवीणः विचक्षणः सम्बोध्यः, हे सुभग ! रत्नवचनौ रत्नबोधकौ कौ शब्दाविति शेषः ? वद । का महती सुरूपे सौन्दर्य्ये जगति विख्यातिं गतवती ? ॥ २० ॥

कामाहुर्युवतीममङ्गलवती कीदृग् यक्षाणां गतिः
सम्बोध्या वत मत्स्यवेधनपरः कीदृग्भवेत्पामरः ।
कीदृग्वाल्मीकिवेश्म कोऽस्तनमुरो धत्ते सुरैरुच्यते
गीः कीदृङ् न कदापि कम्बुरहितं वाञ्छन्ति कं योषितः २१
कीदृक् पान्थकुलं तमो हरति का किञ्चक्रसम्बोधनं
रम्या चम्पकशाखिनां कथय का कश्चोटजार्थो भवेत् ।
किं क्षिप्रं बलिवैरिणा मुररिपोः काह्वा श्मशानेऽस्ति का
क्ष्मा कीदृग् भवति स्म पूर्वमधुना कीदृक् पुनर्वर्त्तते ॥२२॥

अत्रोत्तरम् चक्रं काकपदवन्धः । नागदरतः सर्पभयात् यः अगदरतः विषापनयनौषधरतः न स ना अगदरतः विषापनयनौषधरतः भवतीति शेष इति प्रथमस्य । ना पुरुषः गतनयः नीतिभ्रष्ट इति द्वितीयस्य । नागस्य हस्तिनस्तनयः शिशुरिति तृतीयस्य, नागर सुविज्ञ नगरवासित्वादिति भाव इति चतुर्थस्य । मणी इति पञ्चमस्य । नागस्य पन्नगविशेषस्य रमणी यद्वा नगे पर्वते भवा नागी पर्वतजेत्यर्थः सा चासौ रमणी चेति नागरमणी गौरीति षष्ठस्य ।

कामिति । कां युवतीम् आहुः कथयन्ति ? कीदृक् अमङ्गलवती यक्षाणां गतिः सम्बोध्या ? मत्स्यवेधनपरः मत्स्यजीवीत्यर्थः पामरः मूर्खः कीदृक् भवेत् ? वाल्मीकेः वेश्म सद्म कीदृक् ? कः अस्तनम् उरः वक्षःस्थलं धत्ते ? सुरैः देवैः कीदृक् गीः वाक् उच्यते ? योषितः कम्बुरहितं धनरहितं कं न वाञ्छन्ति ? पान्थानां पथिकानां कुलं कीदृक् ? का तमः अन्धकारं हरति ? चक्रस्य सम्बोधनं किम् ? चम्पकशाखिनां चम्पकवृक्षाणां का रम्या कथय, कस्य शब्दः उटजार्थः भवेत् ? बलिवैरिणा कृष्णेन किं क्षिप्रम् पादाभ्यामिति शेषः ? मुररिपोर्विष्णोः आह्वा आह्वानं

अजरामशुभाचारवलिशीलविनोदिता ।
भुजङ्गमनिभासारकलिकालजनोचिता ॥२३॥

गोमूत्रजातिः ।

अ ज रा म शु भा चा र व लि शी ल वि नो दि ता
भु ज ङ्ग म नि भा सा र क लि का ल ज नो चि ता

इति गोमूत्रिकाबन्धः ।

वर्णेनैकेन वा द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ।
उक्तैः सर्वतोभद्रं दुष्करं तदिदं यथा ॥ २४ ॥

सम्बोधनमित्यर्थः काः? श्मशाने का अस्ति? क्ष्मा पृथ्वी पूर्वं कीदृक् भवति स्म, अधुना पुनः कीदृक् वर्त्तते? ॥ २२ ॥

उत्तरमजरेत्यादिगोमूत्रिकाजातिः । अजरां वार्द्धक्यरहितामिति प्रथमस्य, अशुभाचार इति द्वितीयस्य । वलिशो वांड़शवानिति तृतीयस्य, अपि शीतासुतौ लवकुशौ द्विशिष्टमिति चतुर्थस्य । ना पुमानिति पञ्चमस्य । उदिता व्युत्पादिता संस्कृतेति यावदिति षष्ठस्य । भुजङ्गं विटमिति सप्तमस्य, अनि नास्ति इः कामो यस्य तादृशं कामसम्भोगरहितमित्यर्थ इति अष्टमस्य । भा दीप्तिरिति नवमस्य । सार अरयुत इति दशमस्य । कलिकेति एकादशस्य । आलजिति द्वादशस्य । अनः शकटमिति त्रयोदशस्य । अ विष्णो इति चतुर्दशस्य । चितेति पञ्चदशस्य । पूर्वार्द्धं षोड़शस्य । परार्द्धं सप्तदशस्य । पूर्वार्द्धस्यार्थः—अजस्य रघुसुतस्य रामस्य दाशरथेः शुभाचारस्य बलेन शीलेन विनोदिता सन्तोषिता । परार्द्धस्यार्थः—भुजङ्गमनिभानां सर्पसदृशानाम् अतिखलानामित्यर्थः असाराणाम् अन्तःसाररहितानां कलिकालजनानां कलिकालोचितनराणाम् उचिता सन्तोषविधायिनीत्यर्थः ॥ २३ ॥

वर्णेनेति । वर्णेन एकेन द्वाभ्यां वा वर्णाभ्यां सर्वैर्वा सर्वदिग्-

कस्त्यागे धातुरुक्तस्तव रिपुहृदि का भूषणं के स्तनानां
को दुःखी कश्च शब्दो वदति वद शुचं कौ रिपू ख्यातवीर्य्यौ ।
शृङ्गारी कीदृशः का रणशिरसि भयाद्भङ्गमाप्नोति सेना
का दानार्थाभिधायी शिरसि शिरसि कौ युध्यतः संप्रहृत्य ॥ २५ ॥
कीदृक् तोयार्थिनी स्त्री भवति मदकरः प्रायशः को दुराढ्ये
कस्मिन्मन्दायतेऽसौ नियतमुडुपतिः प्रेयसी का मुरारेः ।
विख्यातौ वाहनौ कौ द्रुहिणमुरभिदोः कीदृगाखेटकस्त्री
कीदृङ् नैवाचिराभा समिति गतभयाः के गतौ कश्च धातुः ॥ २६ ॥
खारावौ । इति सर्वतोभद्रजातिः ।

...गैः वर्णैः उत्तरैः सर्वतोभद्रं नाम बन्धः तदिदं यथा तत्त्वतः दुष्करं कर्त्तुमशक्यम् ॥ २४ ॥

क इति । को धातुः त्यागे उक्तः कथितः ? तव रिपोः शत्रोः हृदि मनसि का ? स्तनानां भूषणं के ? दुःखी कः ? कश्च शब्दः शुचं शोकं वदति बोधयति ? वद । ख्यातवीर्य्यौ विख्यातबलौ शत्रू कौ ? शृङ्गारी पुरुषः कीदृशः ? रणशिरसि का सेना भयात् भङ्गम् आप्नोति ? दानार्थाभिधायी कः ? कौ शिरसि शिरसि संप्रहृत्य युध्यतः ? ॥ २५ ॥

तोयार्थिनी जलार्थिनी स्त्री कीदृक् ? कः दुराढ्ये दुष्टधनिनि प्रायशः मदकरः भवति ? असौ उडुपतिश्चन्द्रः कस्मिन् नियतं मन्दायते, मुरारेः कृष्णस्य प्रेयसी का ? द्रुहिणमुरभिदोः ब्रह्मविष्ण्वोः कौ विख्यातौ वाहनौ ? आखेटकस्य व्याधस्य स्त्री कीदृक् ? अचिराभा विद्युत् कीदृक् नैव ? समिति युद्धे गतभयाः अभयाः के ? कश्च धातुः गतौ गत्यर्थप्रतिपादक इत्यर्थः ? ॥ २६ ॥

सर्वोत्तरं खारावौति सर्वतोभद्रजातिः । खा इति एकेन ...न प्रथमस्य, खो खा कस्त्यागे इति वैयाकरणाः । पुनः खा

प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।
मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥ २७ ॥

वद वल्लभ ! सर्वत्र साधुर्भवति कीदृशः ।
गोविन्देनानसि क्षिप्ते नन्दवेश्मनि काभवत् ॥ २८ ॥

हीनरवी ।

इति एकेन वर्णेन दुःखजनकः शब्द इति द्वितीयस्य । हारा इति द्वाभ्यां वर्णाभ्यां तृतीयस्य । हाराभो हाहाकाररवविशिष्ट इति त्रिभिर्वर्णैश्चतुर्थस्य । पुनः हा इति शोकसूचकः शब्द इति एकेन वर्णेन पञ्चमस्य । हः शिवः ऊः कामः तौ वौ हरकामावित्यर्थः यतौ परस्परं वैरिणाविति षष्ठस्य । हावीति मध्यवर्णत्यागेन, हावी विलासविशेषवानित्यर्थ इति सप्तमस्य । हावीरा हा शोचनीयः वीरो यस्याः तथाभूता विपन्नवीरेत्यर्थ इति अष्टमस्य । रा इति रा दाने इति धातोः क्विपि रूपमिति नवमस्य । अवी मेषावित्यर्थः अनयोश्च युद्धं प्रसिद्धमिति दशमस्य । अवीहा अप्सु जलेषु ईहा चेष्टा यस्याः तथोक्तेति एकादशस्य । रा धनमिति द्वादशस्य । राभौ इति त्रयोदशस्य । ई लक्ष्मीरिति चतुर्दशस्य । वी पक्षिणौ हंसगरुडाविति भाव इति पञ्चदशस्य । वीहा विषु पक्षिषु ईहा चेष्टा यस्याः सेति षोडशस्य । वीरा विगता इरा जलं यस्याः सा तथोक्तेति सप्तदशस्य । वीरा इति अष्टादशस्य । हा ओ हाङ्न गताविति ई गताविति चेति ऊनविंशस्य ।

प्रतिलोमेति । प्रतिलोमानुलोमाभ्यां परतः पूर्वतश्चेत्यर्थः उत्तरेण गतागतं भवति, कदाचित् मध्यवर्णविलोपेन उत्तरं भवतीति शेषः तच्च मध्यवर्णविलोपोत्तरम् अनेकप्रकारकं बहुविधम् ॥ २७ ॥

वदेति । हे वल्लभ ! कीदृशो जनः सर्वत्र साधुः भवति, गोविन्देन कृष्णेन अनसि शकटे क्षिप्ते सति नन्दवेश्मनि का अभवत् ? वद ॥ २८ ॥

यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमज्जिका ।
घनान्धकारे निःशङ्कं मोदते केन बन्धकी ॥ २९ ॥

नारिकेलजा ।

असुरसुरनरेन्द्रैरुह्यते का शिरोभिः
तनुरपि शुचिवस्त्रे कातिविस्तारमेति ।
वदति कमलयोनिं सेव्यते केन पुष्पं
मधुरमसृणमृद्वी का भवेदुत्पलस्य ॥ ३० ॥

| | | |
|---|---|---|
| | ना | |
| मा | लि | का |
| | का | |

अत्रोत्तरं दीनरक्षी । दीनान् दुर्गतान् रक्षतीति तथोक्तो जन इति अनुलोमेन प्रथमस्य । क्षीरनदी दुग्धसरिदिति प्रतिलोमेन द्वितीयस्य, आनन्देन दुग्धनिक्षेपपूर्वकमुत्सव आसीदिति भावः ।

यत्नादिति । लेखकैः यत्नात् अन्विष्य का मसिमज्जिका लेखनी ग्राह्या ? बन्धकी दुश्चारिणी स्त्री घनान्धकारे निःशङ्कं यथा तथा केन मोदते आनन्दमनुभवति ? ॥ २९ ॥

अत्रोत्तरं नारिकेलजा । नारिकेलवृक्षपत्रजाता पूर्वं तेनैव लेखनीकरणं प्रचलितमासीदिति भाव इति अनुलोमेन प्रथमस्य । जारकेलिनेति प्रतिलोमेन द्वितीयस्य ।

असुरेति । असुरसुरनरेन्द्रैः शिरोभिः का उह्यते ध्रियते ? का तनुरपि अल्पापि शुचिवस्त्रे धौतवसने अतिविस्तारम् एति प्राप्नोति ? कमलयोनिं ब्रह्माणं वदति, केन पुष्पं सेव्यते ? उत्पलस्य का मधुरमसृणमृद्वी भवेत् ? ॥ ३० ॥

हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद्वराहप्रवरस्य कीदृशम् ।
विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम् ॥ ३१ ॥

दंष्ट्राभम् ।

वसन्तमासाद्य वनेषु कीदृशाः
पिकेन राजन्ति रसालभूरुहाः ।
निरस्य वर्णद्वयमत्र मध्यमं
तव द्विषां कान्त्यतमा तिथिश्च का ॥ ३२ ॥

कान्तगिरा । गतप्रत्यागतजातिः ।

अत्रोत्तरं मालिका कालिने । मालिका पुष्पमालेति अनुलोमेन प्रथमस्य । कालिमिति प्रतिलोमेन द्वितीयस्य । क अल्मिति तृतीयस्य । अलिना भ्रमरेणेति चतुर्थस्य । नालिका मालमिति प्रतिलोमेन पञ्चमस्य ।

हिमांश्विति । कुटिलोज्ज्वलप्रभं हिमांशुखण्डं चन्द्रखण्डं वराहप्रवरस्य वराहश्रेष्ठस्य कीदृशं भवेत् ? पदमध्यसंस्थितं वर्णं विहाय जिनः बुद्धदेवः किं न करोत्येव ? करोति च किम् ? ॥३१॥

अत्रोत्तरं दंष्ट्राभम् । दंष्ट्राभं दशनप्रभमिति प्रथमस्य, मध्यवर्णं त्यक्त्वा दम्भमिति द्वितीयस्य, प्रतिलोमेन भद्रं कल्याणमिति तृतीयस्य ।

वसन्तमिति । वनेषु वसन्तम् आसाद्य प्राप्य रसालभूरुहाः सहकारतरवः कीदृशाः पिकेन कोकिलेन सन्तः राजन्ति ? अत्र मध्यमं वर्णद्वयं निरस्य त्यक्त्वा तव द्विषां शत्रूणां का ? अन्त्यतमा चरमा तिथिश्च का ? ॥ ३२ ॥

अत्रोत्तरं कान्तगिरा । रमणीयवचसेति प्रथमस्य, मध्यवर्ण-

आदौ मध्ये तथान्ते वा वर्द्धन्ते वर्णजातयः।
एकद्वित्र्याद्यो यत्र वर्द्धमानाक्षरं हि तत् ॥ ३३ ॥
किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय।
जनानां लोचनानन्दं तन्वन्ति घनात्यये ॥ ३४ ॥

खञ्जनाः।

उरःस्थलं कोऽत्र विना पयोधरं
बिभर्त्ति सम्बोधय मारुताशनम्।
वदन्ति कं पत्तनसम्भवं जनाः
फलञ्च किं गौडवधूकुचोपमम् ॥ ३५ ॥

नागरङ्गम्।

इयत्यागे कारा बन्धनागार इति द्वितीयस्य, प्रतिलोमेन राजा पौर्णमासीति तृतीयस्य।

आदाविति। यत्र आदौ मध्ये तथा अन्ते वा एकद्वित्र्यादयः वर्णजातयः वर्द्धन्ते, तत् वर्द्धमानाक्षरं नाम बन्ध इति शेषः ॥३३॥

किमिति। अनन्ततया किं ख्यातं प्रसिद्धम्? पादेन व्यङ्गं विकलाङ्गम् आह्वय सम्बोधय? घनात्यये वर्षापगमे के जनानां लोचनानन्दं तन्वन्ति विस्तारयन्ति? ॥ ३४ ॥

अत्रोत्तरं खञ्जनाः। खमाकाशमिति प्रथमस्य, खञ्जेति द्वितीयस्य, खञ्जनाः पक्षिविशेषा इति तृतीयस्य।

उरःस्थलमिति। अत्र जगति कः विना पयोधरम् स्तनमित्यर्थः उरःस्थलं वक्षःस्थलं बिभर्त्ति? मारुताशनं सर्पं सम्बोधय? जनाः पत्तनसम्भवं नगरजातं कं वदन्ति? गौडानां गौडदेशीयानां कुचोपमं स्तनसदृशं फलञ्च किम्? ॥ ३५ ॥

अत्रोत्तरं नागरङ्गम्। ना पुमानिति प्रथमस्य, नागेति

प्रायेण नीचलोकस्य कः करोतीह गर्वताम् ।
आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः ॥ ३६ ॥

शवराः ।

सानुजः काननङ्गत्वा नैकषेयान् जघान कः ।
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ॥ ३७ ॥

राक्षसोत्तमः ।

धत्ते वियोगिनी गण्डस्थलपाण्डुफलानि का ।
वद वर्णौ विधायान्ते सीता हृष्टा कयाभवत् ॥ ३८ ॥

लवलीलया ।

द्वितीयस्य, नागरमिति तृतीयस्य, नागरङ्ग तदाख्यफलमिति चतु-र्थस्य ।

प्रायेणेति । कः प्रायेण नीचलोकस्य गर्वताम् अहङ्कारम् इह करोति ? आदौ वर्णद्वयं दत्त्वा के वनवासिनः भवन्ति, ब्रूहि कथय ॥ ३६ ॥

अत्रोत्तरं शवराः । रा धनमिति प्रथमस्य, पूर्वे वर्णद्वयदाने शवराः व्याधा इति द्वितीयस्य ।

सानुज इति । कः सानुजः काननं गत्वा नैकषेयान् निकषा-त्मजान् राक्षसानित्यर्थः जघान ? मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशः ? वद ॥ ३७ ॥

अत्रोत्तरं राक्षसोत्तमः । राम इति प्रथमस्य, मध्ये वर्णत्रय-दाने राक्षसोत्तम इति द्वितीयस्य ।

धत्ते इति । का वियोगिनी गण्डस्थलपाण्डुफलानि धत्ते ? अन्ते वर्णौ विधाय दत्त्वा सीता कया हृष्टा अभवत् ? ॥ ३८ ॥

अत्रोत्तरं लवली । लवलीति प्रथमस्य, लवस्य सुतस्य लीलया क्रीड़या इति द्वितीयस्य ।

विष्णोः का वल्लभा देवी लोकत्रितयपावनी ।
वर्णमाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाग्वद ॥ ३९ ॥

समानः, इति वर्द्धमानाक्षरजातिः ।

आदितो मध्यतोऽन्ताद्वा हीयन्ते वर्णजातयः ।
एकद्वित्रादयो यत्र हीयमानाक्षरं हि तत् ॥ ४० ॥

वसन्तमासाद्य विकासि राजते
वनेषु किं वल्लभ ! पुष्पमुच्यताम् ।
विहङ्गमं कश्च परिस्फुटाक्षरं
वदन्ति कम्पङ्कजसम्भवं विदुः ॥ ४१ ॥

किंशुकम् ।

विष्णोरिति । का लोकत्रितयपावनी देवी विष्णोः वल्लभा ? आद्यन्तयोर्वर्णौ दत्त्वा कः शब्दः तुल्यवाक् तुल्यार्थबोधकः भवतीति शेषः ? वद ॥ ३९ ॥

अत्रोत्तरं समानः । मा लक्ष्मीरिति प्रथमस्य, आदौ अन्ते च वर्णद्वयदाने समान इति द्वितीयस्य ।

आदित इति । यत्र आदितः मध्यतः अन्तात् वा एकद्वित्रा-दयः वर्णजातयः हीयन्ते, तत् हीयमानाक्षरं नाम बन्धः ॥ ४० ॥

वसन्तमिति । हे वल्लभ ! वसन्तमासाद्य वनेषु किं पुष्पं विकासि राजते, उच्यताम् । कश्च विहङ्गमं पक्षिणं परिस्फुटाक्षरं वदन्ति कथयन्ति ? कं पङ्कजसम्भवं पद्मयोनिं विदुः बुधा इति शेषः ? ॥४१॥

अत्रोत्तरं किंशुकम् । किंशुकं पलाशपुष्पमिति प्रथमस्य, एकेन वर्णेन हीनं शुकमिति द्वितीयस्य, द्वाभ्यां वर्णाभ्यां हीनं कं ब्रह्माण-मिति तृतीयस्य ।

समुद्यते कुत्र न याति पांशुला:
समुद्यते कुत्र भयं भवेज्जलात् ।
समुद्यते कुत्र तवापयात्यरि:
प्रहीनसम्बोधनवाचि किं पदम् ॥ ४२ ॥

हिमकरे ।

तपस्विनोऽत्यन्तमहासुखाशया
वनेषु कस्मै स्पृहयन्ति सत्तमा: ।
इहाद्यवर्णद्वितयं निरस्य भो:
सदा स्थितं कुत्र च सत्त्वमुच्यताम् ॥ ४३ ॥

तपसे ।

पुरुष: कीदृशो वेत्ति प्रायेण सकला: कला: ।

समुद्यते इति । कुत्र कस्मिन् समुद्यते सम्यक् उदयमाने सति पांशुला: रजस्वला: न याति नाभिगच्छति पुरुष इति शेष: ? कुत्र समुद्यते समुन्नते सति जलात् भयं भवेत् ? कुत्र समुद्यते तव अरि: शत्रु: अपयाति अपगच्छति ? प्रहीनस्य निकृष्टस्य जनस्य सम्बोधनवाचि किं पदं भवतीति शेष: ॥ ४२ ॥

अत्रोत्तरं हिमकरे इति । हिमकरे चन्द्रे इति प्रथमस्य, एकवर्णत्यागेन मकरे इति द्वितीयस्य, वर्णद्वयत्यागेन करे इति तृतीयस्य, वर्णत्रयत्यागेन रे इति चतुर्थस्य ।

तपस्विन इति । सत्तमा: साधव: तपस्विन: वनेषु अत्यन्तमहासुखाशया कस्मै स्पृहयन्ति ? इह आद्यवर्णद्वितीयं निरस्य त्यक्त्वा भो: मित्रेति शेष: कुत्र सत्त्वं बलं सदा स्थितम् उच्यताम् ॥ ४३ ॥

अत्रोत्तरं तपसे । तपसे तपश्चरणायेति प्रथमस्य, आद्यवर्णद्वयत्यागेन से विष्णौ इति द्वितीयस्य ।

पुरुष इति । कीदृश: पुरुष: प्रायेण सकला: कला: कामविद्या:

मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥ ४४ ॥

नागरिकः ।

यजमानेन कः स्वर्गहेतुः सम्यग्विचार्य्यते ।
विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥ ४५ ॥

यागविधिः । ह्रीयमानाचराजातिः ।

अन्योन्याचरवर्त्तिन्या चैकान्तरितयाऽथवा ।
शृङ्खलाबन्धः इत्युक्तो ग्रन्थिमान्नागपाशकः ॥ ४६ ॥

पवित्रमतितृप्तिकृत् किमिह किं भटामन्त्रणं
ब्रवीति धरणीधरस्तु किमजीर्णसम्बोधनम् ।
हरिर्वदति को जितो मदनवैरिणा संयुगे
तनोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥४७॥

पयोधरसमयः ।

वेत्ति जानाति ? मध्यवर्णद्वयं त्यक्त्वा कः सुरालयः स्यात् ब्रूहि

अत्रोत्तरं नागरिकः । नागरिकः नगरसम्भव इति प्रथमस्य, मध्यवर्णद्वयत्यागेन नाकः स्वर्ग इति द्वितीयस्य ।

यजमानेनेति । यजमानेन याज्ञिकेन स्वर्गहेतुः कः विचार्य्यते ? आद्यन्तयोः वर्णौ विहाय गोत्वं कुत्र स्थितं वद ॥ ४५ ॥

अत्रोत्तरं यागविधिः । यागविधिर्यज्ञानुष्ठानमिति प्रथमस्य, आद्यन्तवर्णद्वयत्यागेन गवीति द्वितीयस्य ।

अन्योन्येति । अन्योन्याक्षरवर्त्तिन्या अथवा एकान्तरितया वर्णपरम्परयेति शेषः शृङ्खलाकारेण बन्धः ग्रन्थिमान् नागपाशक इति उक्तः कथितः ॥ ४६ ॥

पवित्रमिति । इह जगति पवित्रम् अतितृप्तिकृत् अतिसन्तोष-जनकं किम् ? भटस्य योधस्य आमन्त्रणं सम्बोधनं किम् ? धरणी-

भवति जयिनी काजौ सेनाह्वयाधरभूषणं
वहति किमहिः पुष्पं कीदृक् कुसुम्भसमुद्भवम्।
महति समरे वैरी वीर! त्वया वद किं क्षतः
कमलमुकुले भृङ्गः कीदृक् पिबन्मधु राजते॥ ४८॥

परागरञ्जितः। शृङ्खलाजातिः।

आह्वानं किं भवति हि तरोः कस्यचित् प्रश्नविज्ञाः!
प्रायः कार्य्यं किमपि न कलौ कुर्वते के परेषाम्।

अधरस्तु ब्रवीति किमिति शेषः? अजीर्णसम्बोधनं किम्? हरिः वदति किमिति शेषः? मदनवैरिणा हरेण संयुगे युद्धे कः जितः? ननु भोः कः शिखण्डिनां मयूराणां कुलं तस्य ताण्डवस्य नृत्यस्य आडम्बरं तनोति विस्तारयति? ॥ ४७॥

अत्रोत्तरं पयोधरसमयः। पयः जलमिति प्रथमस्य, योध इति द्वितीयस्य, धर इति तृतीयस्य, रस इति चतुर्थस्य, स विष्णुः इति पञ्चमस्य, मयः दैत्यविशेषः त्रिपुराधिपतिरित्यर्थः इति षष्ठस्य, पयोधरसमयः वर्षाकाल इति सप्तमस्य।

भवतीति। का सेना आजौ युद्धे जयिनी भवति? अधरस्य भूषणम् आहूय सम्बोधय? अहिः सर्पः किं वहति? कुसुम्भसमुद्भवं पुष्पं कीदृक्? हे वीर! महति समरे युद्धे त्वया वैरी शत्रुः किं क्षतः? वद। कमलमुकुले मधु पिबन् भृङ्गः भ्रमरः कीदृक् राजते? ॥ ४८॥

अत्रोत्तरं परागरञ्जितः। परा श्रेष्ठेति प्रथमस्य, रागेति द्वितीयस्य, गरं विषमिति तृतीयस्य, रञ्जं रक्तमिति चतुर्थस्य, जित इति पञ्चमस्य, परागेण कौसुमरजसा रञ्जितः भूषित इति षष्ठस्य।

आह्वानमिति। कस्यचित् तरोः आह्वानं किं भवति हि?

पूर्णं चन्द्रं वहति ननु का पृच्छति स्नानचक्षुः
केनोदन्याजनितमसमं कष्टमाप्नोति लोकः ॥ ४९ ॥

* निरापकारेण ।

का सम्बुद्धिः सुभट ! भवतो ब्रूहि पृच्छामि सम्यक्
प्रातः कीदृग् भवति विपिनं सम्पतद्भिर्विहङ्गैः ।
लोकः कस्मिन् प्रणयति मुदं का त्वदीया च जैत्री
प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥ ५० ॥

वीहारसेविना । एकान्तरितशृङ्खलाजातिः ।

गोष्ठी विदग्धजनवत्यपि शोचनीया
कीदृग् भवेत्तरणिरश्मिषु का सदास्ति ।

हे प्रश्नविदाः ! के जनाः प्रायः परेषां किमपि कार्य्यं न कुर्वते ? ननु भोः का पूर्णं चन्द्रं वहति ? स्नानचक्षुः पृच्छति ? लोकः केन उदन्याजनितं तृष्णाजनितम् असमं कष्टम् आप्नोति ? ॥ ४९ ॥

अत्रोत्तरं नीरापकारेण । अत्र एकान्तरिततया वर्णपरम्परया नीप कदम्ब इति प्रथमस्य, परे इति द्वितीयस्य, राका पौर्णमासीति तृतीयस्य, काण इति चतुर्थस्य, नीरस्य जलस्य अपकारेण हान्येति पञ्चमस्य ।

केति । हे सुभट ! भवतः सम्बुद्धिः का ? ब्रूहि वद, सम्यक् पृच्छामि, प्रातः प्रभाते सम्पतद्भिः विहङ्गैः पक्षिभिः विपिनं वनं कीदृक् भवति ? लोकः कस्मिन् मुदं हर्षं प्रणयति प्रकाशयति ? त्वदीया जैत्री जयसाधनी च का ? कीदृशेन जन्तुना प्राणिना इह लोके प्रायः सुखं स्थितम् ? ॥ ५० ॥

अत्रोत्तरं विहारसेविना । वीरेति प्रथमस्य, रवि कोलाहल-विशिष्टमिति द्वितीयस्य, हासे इति तृतीयस्य, सेनेति चतुर्थस्य, वीहारसेविना वीहारं बौद्धमठं सेवते इति तथोक्तेन ।

गोष्ठीति । विदग्धजनवती विद्वज्जनवती अपि कीदृक् गोष्ठी

दुर्वारदर्पदलितामरनायकापि
कीदृगकारि सुरशत्रुचमूर्गुहेन ॥ ५१ ॥

तारकविरहिता।

|  | क |  |
| --- | --- | --- |
| वि | र | हि |
|  | ता |  |

कीदृक् परैरुपहृतो भवति क्षितीशः
पृच्छत्यनुज इह किं विदितं पवित्रम्।
विच्छिन्नपाणिचरणो जनको यदीयः
कीदृक् परैरभिहितः स पुमान् पुनः स्यात् ॥५२॥

सभा शोचनीया भवेत्? तरणिरश्मिषु सूर्यकिरणेषु का सदा अस्ति? दुर्वारेण दर्पेण अहङ्कारेण दलितः अमरनायकः देवेन्द्रः यया तादृशी सुरशत्रोस्तारकस्य चमूः सेना गुहेन कार्त्तिकेयेन कीदृशी अकारि कृता? ॥ ५१ ॥

अत्रोत्तरं तारकविरहिता। कविरहितेति प्रथमाक्षरद्वयत्यागेन प्रथमस्य, रविकरहेति शेषाक्षरद्वयत्यागेन प्रतिलोमत इति द्वितीयस्य, तारकः असुरराजस्तद्विरहितेति तृतीयस्य।

कीदृगिति। कीदृक् क्षितीशः नृपतिः परैः शत्रुभिः उपहृतः पराभूतः भवति? अनुजः पृच्छति? इह संसारे किं पवित्रं विदितम्? यदीयः जनकः पिता विच्छिन्नपाणिचरणः, स पुमान् परैः पुनः कीदृक् अभिहितः उक्तः स्यात्? ॥ ५२ ॥

व्यङ्गतनयः । नागपाशजातिः ।

भाषाभिश्चित्रितं यत् स्यात्संस्कृतप्राकृतादिभिः ।
सन्तश्चित्रन्तदिच्छन्ति संशुद्धं त्वेकभाषया ॥५३॥

किं न स्यात्कीदृक्त्वं महतोऽपि च तादृशस्य जलराशेः ।
दिनअरकिरणप्फंसण पडिवुड्ढं होइ किं गोसे ॥५४॥

कमलवणम् ।

मत्स्यहितमम्बु कीदृक् पृच्छति रोगी निशासु किं भाति ।
कोऽनङ्गो वदति मृगः खे गम्मइ केरिसा रइणा ॥५५॥

अविसामभमिरेण । संस्कृतप्राकृतजातिः ।

अथोत्तरं व्यङ्गतनयः । अत्र व्यामत्याक्षरपरित्यागेन गतनयः नीतिभ्रष्ट इति प्रथमस्य, नत इति प्रथमाक्षरद्वयत्यागेनान्त्याक्षरत्यागेन च प्रतिलोमत इति द्वितीयस्य, शेषाक्षरत्रयत्यागेन प्रतिलोमतः गव्यमिति तृतीयस्य, व्यङ्गस्य विगताङ्गस्य तनय इति चतुर्थस्य ।

भाषाभिरिति । यत् काव्यमिति भावः संस्कृतप्राकृतादिभिर्भाषाभिः चित्रितं खचितं, सन्तः साधवः तत् चित्रम्, एकभाषया रचितं तु संशुद्धं केवलम् इच्छन्ति वदन्तीति यावत् ॥ ५३ ॥

किमिति । महतोऽपि तादृशस्य जलराशेः किं वस्त्विति शेषः कीदृक्त्वं कीदृशं न स्यात् ? दिनअरेति, दिनकरकिरणस्पर्शेन प्रतिबुद्धं भवति किं प्रभाते ? इति संस्कृतम् ॥ ५४ ॥

अथोत्तरं कमलवणम् । कं जलम् अलवणं लवणशून्यमिति प्रथमस्य, कमलवनमिति द्वितीयस्य ।

मत्स्येति । कीदृक् अम्बु जलं मत्स्येभ्यः हितम् ? रोगी पृच्छति ? निशासु किं भाति राजते ? अनङ्गः कः ? मृगः वदति ? खे आकाशे गम्मइ इत्यादि प्राकृतं, गम्यते कीदृशा रविणेति संस्कृतम् ॥५५॥

प्रायो बिभ्यति कीदृशादरिगजाद्दन्तप्रहीणा गजाः
पृथ्वी सम्प्रति कीदृशा नृपतिना राजन्वती राजते ।
प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कं जले
मज्झसेवलिये घणच्चयदिणे जादं सरो केरिसम् ॥ ५६ ॥

सरटादवताविदवाहिरम् ।

क्षतं कीदृशमङ्गं दन्तभवं कं वदन्ति विद्वांसः ।
अतिलघुवाचि पदं किं केरिसु सुश्रणेसु होइ जणो ॥५७॥

विस्रन्तमण । इति संस्कृतापभ्रंशजातिः ।

अत्रोत्तरम् अविसामभमिरेण । अवि पचिरहितमिति प्रथमस्य, पचिणां मत्स्यभक्षत्वादिति भावः । साम अमो रोगः तेन सहितः तत्सम्बुद्धौ इति द्वितीयस्य, भं नक्षत्रमिति तृतीयस्य, इः काम इति चतुर्थस्य, एण मृग इति पञ्चमस्य, अविसामभमिरेण अविश्रामभ्रमणेनेति षष्ठस्य ।

प्राय इति । दन्तप्रहीणाः क्षीनदन्ताः गजाः कीदृशात् अरिगजात् शत्रुगजात् प्रायः बाहुल्येन बिभ्यति ? कीदृशा नृपतिना राजन्वती पृथ्वी सम्प्रति राजते ? प्रावृषि वर्षाकाले गिरितटी प्रायः कीदृशी भवतीति शेषः ? कः जले कं धत्ते धारयति ? मध्याह्ने इत्यादि, मध्याह्नवेलायां घनात्ययदिने जातं सरः कीदृशमिति संस्कृतम् । घनात्ययदिने शरदीत्यर्थः । अन्यत् सुगमम् ॥ ५६ ॥

अत्रोत्तरं सरटादवताविदवाहिरम् । सरटात् सदन्तादिति प्रथमस्य, अवता रक्षतेति द्वितीयस्य, विदवा दावाग्निरहितेति तृतीयस्य, अहिः नागराजः अं विष्णुमिति चतुर्थस्य ।

क्षतमिति । क्षतं छिन्नम् अङ्गं कीदृशं भवतीति शेषः ? विद्वांसः कं वर्णमिति शेषः दन्तभवं दन्त्यमिति यावत् वदन्ति ? किं

किं सुखमाहुः प्रायः केशविकारश्च का हरेर्दयिता ।
कथमाभा कस्मिन्निशि को लुब्भइ वीरपुलिसाणम् ॥ ५८ ॥
शमलकम्मालम्भो ।

कस्तम्बेरमसुत इति विख्यातः पृच्छति स्फुटं हरिणः ।
अहिणवणअलीजणो असाहुं केण उज्झइ ॥ ५९ ॥
कलभएण । संस्कृतमागधिकम् ।

पदम् अतिलघुवाचि अतिलघुबोधकम् ? केरिश इत्यादि, कीदृशः सुजनेषु भवति जन इति संस्कृतम् ॥ ५७ ॥

अत्रोत्तरं विसत्तमणु । विसम् आमगन्धि विश्रं स्यादामगन्धि यदित्यमर इति प्रथमस्य, तं तकारमिति द्वितीयस्य, अणु इति तृतीयस्य, विसत्तमणु इति विश्वस्तमना इति संस्कृतं चतुर्थस्य ।

किमिति । किं सुखं केशविकारश्च कमिति शेषः आहुः कथयन्ति ? हरेः विष्णोः दयिता स्त्री का ? निशि कस्मिन् आभा कथम् ? को लुब्भइ इत्यादि को रोचते वीरपुरुषाणामिति संस्कृतम् ॥ ५८ ॥

अत्रोत्तरं शमलकम्मालम्भो । शं मङ्गलमिति प्रथमस्य, अलकमिति द्वितीयस्य, मा लक्ष्मीरिति तृतीयस्य, भे नक्षत्रे अलम् अतिशयेन भा इति चतुर्थस्य, समरकर्मारम्भ इति संस्कृतं पञ्चमस्य ।

क इति । कः स्तम्बेरमस्य सुत इति विख्यातः ? हरिणः मृगः स्फुटं पृच्छति ? अहिणवेत्यादि, अभिनवनगरीजनः असाधुं केन त्यजतीति संस्कृतम् ॥ ५९ ॥

अत्रोत्तरं कलभएण । कलभः करिशावक इति प्रथमस्य, एण हरिण इति द्वितीयस्य, *करभयेनेति संस्कृतं करात् राजस्वात् भयेन असाधुं नृपतिं त्यजतीत्यर्थ इति तृतीयस्य ।

कोपारुणं किमरुणाग्रसरस्य पूर्व-
काष्ठाग्रनिष्ठिततनोरुपमानपात्रम् ।
पत्तं खणेण मरणं सअर स्स रखो
पुत्तेहि किं पविसिउण तुरङ्गमत्थम् ॥ ६० ॥

कपिलपणम् ।

कं प्रीणयन्ति जलदाः सैन्यं कीदृक् पलायते समरात् ।
धत्त शिरोधरा किं रुद्दसिरं केरिसं भोदी ॥ ६१ ॥

चातकं कातरं कम् । संस्कृतपैशाचिकम् ।

को वर्णाद्यः क च जलधिसुता कश्च दीर्घादिसंज्ञं
प्राहुर्बुद्धाः कमजयदसौ तार्किकैः के क्रियन्ते ।

कोपेति । कोपेन अरुणं रक्तं किं पूर्वकाष्ठा पूर्वा दिक् तस्याः अग्रे निष्ठिता तनुर्यस्य तथोक्तस्य अरुणाग्रसरस्य सूर्यस्य अथवा अरुणस्य सूर्यस्य अग्रसरः तस्य अनूरोः उपमानपात्रम् ? पत्तमित्यादि, प्राप्तं क्षणेन मरणं सगरस्य राज्ञः पुत्रैः किं प्रविश्य तुरङ्गमार्थ-मिति संस्कृतम् । सगरस्य राज्ञः पुत्रैः तुरङ्गमार्थम् अश्वमेधाया-श्वाहरणार्थं किं प्रविश्य मरणं प्राप्तम् ? ॥ ६० ॥

अत्रोत्तरं कपिलपणम् । कपिलपणं वानरमुखमिति प्रथमस्य, कपिलस्य मुनेः वनमिति द्वितीयस्य ।

कमिति । जलदाः मेघाः कं प्रीणयन्ति ? कीदृक् सैन्यं समरात् पलायते ? शिरोधरा ग्रीवा किं धत्ते ? रुद्दसिरमित्यादि, रुद्रशिरः कीदृशं भवति ? ॥ ६१ ॥

अत्रोत्तरं चातकं कातरं कम् । चातकमिति प्रथमस्य, कातरं भीतमिति द्वितीयस्य, कं शिरः इति तृतीयस्य, चातकं कातरं कं जातगङ्गातरङ्गमिति संस्कृतं चतुर्थस्य ।

क इति । वर्णानाम् आद्यः प्रथमः कः ? जलधिसुता लक्ष्मीः

आमन्त्रो विः कथय विदितं किं पदं हेतुवाचि
जा णच्चेउं महइ महिला सावि वोल्लेइ कीसे ॥ ६२ ॥
अए चम्मारं वादावेहि।
शब्दः कः स्यात्पुरुषवचनं कुण्डलौ कौ स्मरारेः
कामम्भोधेर्हरिरुदहरद्वीवधः पृच्छतीदम्।
हण्डीकुण्डी अणसि ण धरे कीस अह्मारअत्थं
ये पुच्छिल्ला स उण परिहारुत्तरं कीस देइ॥ ६३ ॥
नाही कुम्भार। संस्कृतलौकिकमिति चित्रजातिः।

क च कुत्र तिष्ठतोत्यर्थः? बुधाः कं दीर्घादिसंज्ञं प्राहुः? असौ बुध इति शेषः कम् अजयत्? तार्किकैः के क्रियन्ते? विः पक्षी आमन्त्र्यः सम्बोधनीयः? किं पदं हेतुवाचि हेतुबोधकं विदितं प्रसिद्धं कथय? जा णच्चेउमित्यादि, या नर्त्तितुम् इच्छति महिला सापि जल्पति कथमिति संस्कृतम्। या महिला स्त्री नर्त्तितुम् इच्छति आगच्छति सा अपि निश्चितं कथं जल्पति? ॥ ६२ ॥

अत्रोत्तरम् अए चम्मारं वादावेहि। अः अकार इति प्रथमस्य, ए अशब्दो विष्णुवाचकः तस्मिन्निति द्वितीयस्य, चं चकारमिति तृतीयस्य, मारं कन्दर्पमिति चतुर्थस्य, वादा इति पञ्चमस्य, वे पक्षिन्निति षष्ठस्य, हि इति सप्तमस्य, अए चम्मारं वादावेहि अये चर्म्मारं वादयेति संस्कृतम्। अये इति सम्बोधनं चर्म्मारं मृदङ्गं वादय इति अष्टमस्य।

शब्द इति। कः शब्दः पुरुषवचनः पुंवाचकः स्यात्? स्मरारेः हरस्य कुण्डलौ कौ? हरिः अम्भोधेः समुद्रात् काम् उदहरत् उद्धार? वीवधः भारविशेषः इदं पृच्छति? हण्डीत्यादि, हण्डिकाकुण्डिकाः आनयसि न धरे! कथमस्मदर्थं यं पृच्छेत् स पुनः प्रत्युत्तरं कीदृक् ददातीति संस्कृतम्। अस्मदर्थं हण्डिका-

को निवसइ स्वच्छन्दं सुन्दरि ! गिरिगहणकुञ्जमज्झम्मि ।
सह अज्जुणेण योद्धुं सिहिगमणो केरिसो होइ ॥ ६४ ॥

सरहससवराहवग्गो ।

का हरइ मणं पइणो गुणगणजीवणसलाहणिज्जस्स ।
कत्र चडचडेति सद्दा हुआसना केरिसा होन्ति ॥ ६५ ॥

सरिसवहुआ । इति शुद्धप्राकृतम् ।

कण्डिका: छाडिकाड इति भाषा । कथं न आनयसि ? घर इति सम्बोधनं त्वं घर तदाऽस्यपुरुषेत्यर्थ: । इति यं पृच्छेत् स जन: पुन: प्रत्युत्तरं कीदृक् ददाति ? ॥ ६३ ॥

अत्रोत्तरं नाही कुम्भार । ना पुमानिति प्रथमस्य, अही भुजङ्गौ इति द्वितीयस्य, कं पृथिवीमिति तृतीयस्य, भार इति चतुर्थस्य, नाही कुम्भार नास्ति कुम्भार इति संस्कृतम् । कुम्भकारो नास्तीति कथम् आनयामीति प्रत्युत्तरम् ।

को इति ।—

को निवसति स्वच्छन्दं सुन्दरि ! गिरिगहनकुञ्ज- मध्ये ।
सह अर्जुनेन योद्धुं शिखिगमन: कीदृशो भवतीति संस्कृतम् ॥

अस्यार्थ:, हे सुन्दरि ! क: गिरे: पर्वतस्य यत् गहनं निविडं कुञ्जं तस्य मध्ये स्वच्छन्दं निवसति ? शिखी मयूर: तेन गमनं यस्य स: कार्त्तिकेय इत्यर्थ: अर्जुनेन सह योद्धुं कीदृशो भवति ? ॥ ६४ ॥

अत्रोत्तरं सरहससवराहवग्गो । सरभशशवराहवर्ग इति संस्कृतम् । सरभा: अष्टापदमृगविशेषा: शशा: प्रसिद्धा: वराहा: शूकरा: तेषां वर्ग: समूह इति प्रथमस्य, द्वितीये सरभसशवराहवग इति संस्कृतम् । सरभसा: सवेगा: ये शवरा: किराता: तै: सह आहवे युद्धे गच्छतीति तथोक्त: ।

केति । का हरति मन: पत्युर्गुणगणयौवनश्लाघनीयस्य ।
कथय चटचटेति शब्दा हुताशना: कीदृशा भवन्तीति संस्कृतम् ।

पाणिगाहणणिअंसणु सोहइ केहिं मण्डिअम् ।
साहसुवहु वीर ! पइणोरिउबलं केहिं खण्डिअम् ॥ ६६ ॥
समरङ्गणेहिम् ।

रसिअइ केण उच्चाड़णु किज्जइ
जुअइमाणसु केण उविज्जइ ।
तिसिअ लोअ खणु केण सुहिगाइ
एहु पहु मम भुअणे गिग्धइ ॥ ६७ ॥
वीरसराएण । शुद्धापभ्रंशम् ।

का स्त्री गुणगणयौवनैः श्लाघनीयस्य प्रशंसनीयस्य पत्युः स्वामिनः मनः हरति ? चटत् चटत् इति शब्दो येषां तथाभूताः हुताशनाः अग्नयः कीदृशाः भवन्ति ? ॥ ६५ ॥

अत्रोत्तरं सरिसवहुआ सदृशवधूः सर्षपबहुलाश्चेत्यर्थः । आद्ये सदृशी अनुरूपा वधूः । द्वितीये सर्षपाहुतियुता इत्यर्थः ।

पाणीति । पाणिग्रहणनिवसनं शोभते कैर्मण्डितम् ।
साहसवद्यपि वीर ! प्रतिरिपुबलं कथं खण्डितमिति संस्कृतम् ॥

पाणिग्रहणस्य विवाहस्य निवसनं वस्त्रं कैः मण्डितं रञ्जितं शोभते ? हे वीर ! साहसवदपि साहससम्पन्नमपि प्रतिरिपुबलं शत्रुसैन्यं कथं खण्डितं पराभूतं त्वयेति शेषः ॥ ६६ ॥

अत्रोत्तरं समरङ्गणेहिम् समरञ्जनैरिति समराङ्गणैरिति च संस्कृतम् । समैः अनुरूपैः रञ्जनैः रागकरणैरिति प्रथमस्य, समराङ्गणैः युद्धव्यापारैरिति द्वितीयस्य ।

रसिअइ इति, रसिकानां केन उच्चाटनं क्रियते
युवतिमानसं केन उद्विज्यते ।
तृषितो लोकः क्षणं केन सुखीक्रियते ।
एष प्रश्नो मम भुवने केन गायते ॥ इति संस्कृतम् ॥६७॥

सुअलो मेहं पुच्छइ पुच्छइ मेहोवि तं तहा सुअलम् ।
केण हुआ सअलसुआ केण जणो विसइ पाआलम् ॥६८॥
बलाहकविलेण ।
धवलुज्जलेहिं केहिं सोहइ धरणी मसाणदेसस्स ।
णिरअस्स रक्खणाला केहिं परिवेढिआ होन्ति ॥६९॥
णलकलंकेहिम् । शुद्धमागधिकम् ।

सुगमम् । अत्रोत्तरं णीरसराएण । नीरसरागेणेति संस्कृतम् । नीरसः रसशून्यः यः रागः स्वरविशेषः तेनेति प्रथमस्य, नीरसे रसानभिज्ञे पुंसीति शेषः यः रागः प्रणयः अज्ञानजनित इति भावः तेन इति द्वितीयस्य, नीरे नीरदाने यः सरागः यत्नवान् तेन इति तृतीयस्य, निर्गतो रसो यस्मात् तादृशो यो रागः स्वरः तेनेति चतुर्थस्य ।

सुअलो इति, शूकरो मेघं पृच्छति पृच्छति मेघोऽपि तं तथा शूकरम् ।
केन हताः सगरसुताः केन जनो विशति पातालम् ॥
इति संस्कृतम् ॥६८॥

शूकरः मेघं पृच्छति सगरसुताः केन हताः दग्धा इत्यर्थः ? मेघोऽपि तं शूकरं पृच्छति जनः केन पातालं विशति ?

अत्रोत्तरं बलाहकविलेण । हे वराह ! कपिलेन मुनिनेति प्रथमस्य, हे बलाहक मेघ ! विलेन भूविवरेणेति द्वितीयस्य ।

धवलु इति, धवलोज्ज्वलैः कैः शोभते धरणी श्मशानदेशस्य ।
निरयस्य रक्षपालाः कैः परिवेष्टिता भवन्ति ॥
इति संस्कृतम् ॥६९॥

अत्रोत्तरं णलकलंकेहिम् । नरकरङ्कैः नराणां करङ्कैरस्थिभिरिति प्रथमस्य, नरकस्य रङ्कैः अधमैः अतिनारकिभिरित्यर्थ इति द्वितीयस्य ।

पैरी पुच्छइ ककणे रोचइ कसणो घणो कोह्मिम् ।
सखाइ ण केहिं समत्थन्ति सन्वं णिह्रितं कताद्म्पि ।७०॥

अच्छितपरकोह्मिम् ।

पत्तूण किं भड्अणो णिजदेहदाणं
अवासणं भचति जम्फणिसूअणस्य ।
भोत्तूण खोरतरदुक्खसदाइ पावा
मोहंधआरगहणं लप किं लहन्ति ॥ ७१ ॥

विसमरणम् । शुद्धपैशाचिकम् ।

पैरीति, वैरी पृच्छति गगने रोचते कृष्णो घनः कथम् ।
कस्यानि न कैः समर्थ्यन्ते निह्रितं कतान्यपीति संस्कृतम् ।

वैरी शत्रुः पृच्छति ? कृष्णः श्यामो घनः मेघः गगने आकाशे कथं रोचते राजते ? कृतानि अपि कस्यानि कार्य्याणि सामादीनि कैः जनैः न समर्थ्यन्ते न दृढीक्रियन्ते न समाप्यन्ते इत्यर्थः भक्त-भयादिति भावः ॥ ७० ॥

अत्रोत्तरम् अच्छितपरकोह्मिम् । अच्छितपक्षिभिरिति संस्कृतम् । हे अच्छित शत्रो इति प्रथमस्य, पक्षिभिर्बलाकाभिरिति भाव इति द्वितीयस्य, अच्छितपक्षिभिः शत्रुपक्षिभिरिति तृतीयस्य ।

पत्तूणेति ।——

प्राप्याथ किं भटजनो निजदेहदानादर्द्धासनं भजति जम्भनिषूदनस्य ।
भुक्त्वा च घोरतरदुःखशतानि पापा मोहान्धकारगहनं वद किं लभन्ते ॥

इति संस्कृतम् ।

भटजनः वीरजनः किं प्राप्य निजस्य आत्मनः देहस्य दानात् समरे परित्यागादिति भावः जम्भनिषूदनस्य इन्द्रस्य अर्द्धासनं भजति ? पापाश्च घोरतरदुःखशतानि भुक्त्वा किं मोहान्धकारगहनं लभन्ते ? वद । वसन्ततिलकं वृत्तम् ॥ ७१ ॥

जा णी जाणइ णिद्दे विब्भलि
सा किस वुच्चइ बोल्ल रे सम्भरि ।
जो तिलसरीसव पीड़यि घाणी
कीस भणीज्जइ सोवि जाणी ॥ ७२ ॥

सुतेल्ली । शुद्धलौकिकमिति संशुद्धजातिः ।

एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया ।
येन येन हि माद्यन्ति तद्विदस्तत्तदूह्यताम् ॥ ७३ ॥

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
तृतीयः परिच्छेदः ।

---

अत्रोत्तरं विसमरणम् । विषमरणमिति संस्कृतम् । विषमं घोरं रणमिति प्रथमस्य, विषेण विषभक्षणेन मरणम् आत्महत्यामिति यावदिति द्वितीयस्य ।

जाणी इत्यादि ।——

या न जानाति निद्राविह्वला सा कीदृशी उच्यते वद रे सखि ।
यस्तिलान् सर्षपांश्च पीड़यति घान्या कीदृक् भण्यते सोऽपि ज्ञानी ॥

इति संस्कृतम् ।

या स्त्री निद्रया विह्वला न किमपीति शेषः जानाति, सा कीदृशी उच्यते ? रे सखि ! वद । यः तिलान् सर्षपांश्च घान्या घानीयन्त्रेण पीड़यति तैलनिष्कासनार्थं पेषयति, सोऽपि ज्ञानी ज्ञिल्लो कीदृक् उच्यते ? ॥ ७२ ॥

अत्रोत्तरं सुतेल्ली । सुप्तोत्थितेति सुतैलीति च संस्कृतम् । सुप्तोत्थितेति प्रथमस्य, सुतैलीति द्वितीयस्य, भूरस्याश्रितस्तैलीति शेषः ।

एतावतेति । एतावतापि उदाहरणेनेति शेषः मया प्रश्नानां

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥ १ ॥
सा द्विधार्थी च शाब्दी च विख्याता शब्दशासने ।
आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः ॥ २ ॥
तरुण्या लिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥ ३ ॥
पानीयकुम्भः ।

दिङ्मात्रं प्रदर्शनमात्रं दर्शितं, तद्विदः तदभिज्ञा जनाः येन येन प्रश्नेनेति शेषः वाञ्छन्ति इच्छन्ति, तत्तत् ऊह्यतां प्रदश्र्यतामित्यर्थः ।

इति तृतीयः परिच्छेदः ।

---

व्यक्तीकृत्येति । यत्र स्वरूपार्थस्य स्वाभिधेयार्थस्य गोपनात् कमपि अर्थं व्यक्तीकृत्य प्रकाश्य बाह्यान्तरौ वाच्यव्यङ्ग्यौ अर्थौ कथ्येते प्रकाश्येते सा प्रहेलिका । अनुष्टुब्वृत्तम् ॥ १ ॥

सेति । सा प्रहेलिका शब्दशासने शब्दशास्त्रे आर्थी अर्थवशगा च शाब्दी शब्दगम्या चेति द्विधा द्विविधा भवति । तत्र अर्थस्य विज्ञानात् विशेषेण पर्य्यालोचनात् आर्थी, शब्दविभागतः शब्दभागवशादिति भावः शाब्दी स्यात् ॥ २ ॥

उदाहरति तरुण्या इति । तरुण्या युवत्या कण्ठे आलिङ्गितः आश्लिष्टः नितम्बस्थलं कटिदेशमिति भावः आश्रितः सन्निविष्ट इत्यर्थः कः गुरूणां श्वशुरादीनां सन्निधानेऽपि मुहुः मुहुः पुनः पुनः कूजति अव्यक्तं स्वनतीत्यर्थः ॥ ३ ॥

अत्रोत्तरं पानीयकुम्भः । अत्र स्वरूपार्थस्यैतस्य गोपनं कान्तालिङ्गनरूपप्रकाशनञ्चेति अर्थद्वयप्रकाशनात् आर्थी प्रहेलिकेति बोद्धव्यम् ।

आपाण्डु पीनकठिनं वर्त्तुलं सुमनोहरम्।
करैराकृष्यतेऽत्यर्थं किं हस्तैरपि सस्पृहम् ॥ ४ ॥

पक्वबिल्वफलम्। इत्यार्थी जातिः।

दुर्वारवीर्य्ये! सकोपि त्वयि का प्रसूता
श्यामा सपत्नहृदये सुपयोधरा च।
तुष्टे पुनः प्रभातप्रबुसरोजसूर्य्ये
सैवाद्यवर्णरहिता वद नाम का स्यात् ॥ ५ ॥

शस्त्री।

आपाण्डिति। आपाण्डु पाण्डुवर्णं पीनकठिनं [illegible]
वर्त्तुलं गोलं सुमनोहरं किं वस्त्विति शेषः हस्तैरपि [illegible]
वक्तव्यमित्यपिशब्दार्थः। सस्पृहं करैः हस्तैः आकृष्यते [illegible]
सादरं स्पृश्यते इत्यर्थः ॥ ४ ॥

अत्रोत्तरं पक्वबिल्वफलम्। अत्र कामिनी[illegible] प्रक-
टनमिति आर्थी प्रहेलिका।

दुर्वारेति। हे दुर्वारवीर्य्ये! दुरपनेयपराक्रम! त्वयि सकोप
सक्रोधे सति सपत्नानां शत्रूणां हृदये का सुप[illegible]
रूपं शत्रुरुधिरमिति भावः तद्धारयतीति तथा [illegible]
अपरञ्च सुस्त्री श्यामा कृष्णवर्णा अपरञ्च पीते [illegible]
च सुपयोधरा। [illegible] श्यामा [illegible]
[illegible] प्रसूता? पुनः किन्तु तुष्टे सति [illegible]
सरोजानि [illegible] तेषां सूर्य्ये त्वयीति शेषः सैव का [illegible]
रहिता स्यात्? वद ॥ ५ ॥

अत्रोत्तरं शस्त्री। छुरिकेत्यर्थः। आद्यवर्णराहित्ये स्त्री।
अत्र शब्दस्य विभागात् अर्थान्तरद्योतनमिति शाब्दी जातिः।

सदारिमध्यापि न वैरयुक्ता
नितान्तरक्तापि सितैव नित्यम् ।
यथोक्तवादिन्यपि नैव दूतिका
का नाम कान्तेति निवेदयाशु ॥ ६ ॥

सारिका । शाब्दी जातिः ।

णीरसम्रो उण सो बहुगुणवन्तउ
भमइ निरन्तरु णोच्चल होन्तउ ।
तरु गिज्जइ ण उण फलपत्तु ससु
यो परिआणइ पावइ सोवि जसु ॥ ७ ॥

गुणरुक्ख ।

सदेति । हे कान्त ! सदा अरिमध्यापि शत्रुमध्यगतापि न वैरयुक्ता न शत्रुभावान्विता, नितान्तरक्तापि अत्यनुरागवती अपि नित्यं सितैव शुभ्रवर्णैव यथोक्तवादिनी अपि दूतिका नैव, का नाम इति आशु शीघ्रं निवेदय ? ॥ ६ ॥

अत्रोत्तरं सारिका । अत्र शाब्दप्रहेलिकाकथनमयुक्तं शब्द-विभागराहित्यादिति आर्थीत्वमेवेति सुधीभिर्भाव्यम् ।

नीरसेति ।——

नीरसकः पुनः स बहुगुणवान् भ्रमति निरन्तरं निश्चलो भवन् ।
तरुर्गीयते न पुनः फलपत्रे स्तो यः परिजानाति प्राप्नोति सोऽपि यशः ।

इति संस्कृतम् ।

नीरसकः कठिनः बहुगुणवान् निश्चलो भवन् एकत्र तिष्ठन्नित्यर्थः भ्रमति, स न पुनः तरुः वृक्षः गीयते कथ्यते, यतः तस्य फलपत्रे न स्तः न भवतः, यः एतत् परिजानाति बुध्यते सः यशः प्राप्नोति अपि लभते एवेत्यर्थः ॥ ७ ॥

अत्रोत्तरं गुणरुक्ख इति । गुणवृक्षः मास्तुल इति भाषा । स हि काष्ठमयत्वात् कठिनः, बहुरज्जुयुक्तत्वात् बहुगुणवान् जलयानोपरि-निविष्टः सततं भ्रमतीति बोध्यम् ।

घरि घरि चल्लइ सग्रलपिग्रारी
जीवन्ति होइ वैरग्ररी ।
खण बन्धइ खण मुञ्चइ
खण एक्कली तह जाणह जइ जाइ ण पेल्ली ॥ ८ ॥

पाग्रकसारी । इति प्रहेलिकाजातिः ।

कालसारादिकं हृद्यमजमारादि गूढकम् ।
विदग्धा दुर्विदग्धानां कुर्वते दर्पशान्तये ॥ ९ ॥

घरीति । गृहे गृहे चलति सकलप्रीता
जीवन्ती भवति वैरकरी ।
क्षणेन बध्यते क्षणेन मुच्यते
क्षणेनैकाकिनी तथा जानीथ यदि या न पत्नी ॥

इति संस्कृतम् ॥

गृहे गृहे प्रतिगृहं या चलति तिष्ठति, सकलप्रीता सर्वे एव जनः यामाद्रियते इति भावः जीवन्ती अमृता वैरकरी विरोधकारिणी अपरनाशिनीति यावत् भवति, क्षणेन बध्यते बद्धा तिष्ठतीति भावः क्षणेन मुच्यते बन्धनात् विहीयते, क्षणेन एकाकिनी तिष्ठतीति शेषः या न पत्नी न नारी, यदि तथा जानीथ यूयमिति शेषः तदा वद इति वाक्यशेषः ॥ ८ ॥

अत्रोत्तरं पाशकसारी पाशगुटिका । सा हि गृहे गृहे क्रीड़नार्थं व्यवह्रियते, सर्वप्रीता च जीवन्ती कदापि अपरगुटिकां हन्ति, कदापि अपरगुटिकया बध्यते, कदाचित् ततो निःसरति, कदाचिच्च एकाकिनी तिष्ठतीति बोध्यम् ।

कालेति । विदग्धाः निपुणाः जनाः दुर्विदग्धानाम् अज्ञानां दर्पशान्तये अहङ्कारापनयाय हृद्यं मनोहरं प्रश्नियामिति शेषः कालसारादिकम् कालश्च सारश्च तौ आदौ यत्र तत्, आदिशब्देन रागद्वेषादयो गृह्यन्ते । अजमारादि अजश्च मारश्च तौ अजमारौ

अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः ।
यावत् पतितः स तया तत्क्षणमवधीरितः कस्मात् ॥१०॥
रजस्वला यतः ।

अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ ।
निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥११॥
असारस्तनयो यतः । कालसारजातिः ।

दरं दिवु चूअमउलं पिच्छिअ सहिआरा विरहिणीं सहियम् ।
णमिओ कंकेल्लितरु चूओ चलणाहओ कुटो ॥ १२ ॥

गम्भ मन्मथौ तौ आटौ यत्र तत्, गूढकं गुप्तं वस्त्विति शेषः कुर्वते रचयन्ति वस्तुविशेषमिति शेषः ॥ ९ ॥

अनुनेतुमिति । दयितः कान्तः अनुनेतुं कोपं शमयितुं सरागचरणायाः लाक्षारक्तचरणायाः मानिन्याः चरणे यावत् पतितः, तावत् स दयितः तया कान्तया तत्क्षणं कस्मात् अवधीरितः अवज्ञातः ? ॥ १० ॥

अत्रोत्तरं रजस्वला यतः । यतः सा रजस्वला ऋतुमतीत्यर्थः । ऋतुमतीं मां मा स्पृशेति ऋतुकालरूपहृद्यवस्तु द्योत्यते ।

अवलोक्येति । वध्वाः स्तनौ गुञ्जाफलविभूषितौ अवलोक्य व्याधकुटुम्बिनी व्याधकुटुम्बिनी निःश्वस्य कुतः कस्मात् रोदितुं लग्ना प्रवृत्ता ? ॥ ११ ॥

अत्रोत्तरम् असारस्तनयो यत इति । यतः तनयः पुत्रः असारः असमर्थ इत्यर्थः पुत्रस्य गजादिहननेन तन्मुक्ताफलाहरणायाक्तेः गुञ्जाफलेन तरुणी मम वधूः कुचावलङ्करोतीति दुःखं रोदनहेतुरिति असारत्वाहृद्यत्वं सारस्य च हृद्यत्वमिति द्योत्यते ।

दरेति । दरं दृष्ट्वा चूतमुकुलं प्रेक्ष्य सखीभिर्विरहिणीं सखीम् । नमितः कङ्केलितरुश्चूतश्चरणाहतः कथमिति संस्कृतम् ॥ १२ ॥

पिच्छन्तमणिमिसच्छं पिच्छिअ वहुआए झत्ति भिक्खअरम् ।
दंसिअ कआइ सीसे किदे दो जाइकुसुमाइं ॥ १२ ॥

इति कालसारादिच्छन्दजातिः ।

रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः ।
नरकशिरा जगदखिलं चिरमव्यादसमरुक्पाणिः ॥ १४ ॥

सर्वाभिः दरम् ईषत् चूतस्य आम्रस्य मुकुलं दृष्ट्वा शिरोऽभिमर्षौ सखीं प्रेक्ष्य कङ्केलितरुः अशोकः नमितः प्रणामेनादृतः चूतः आम्रतरुः चरणेन आहतः कथम् ?

अत्रोत्तरं सहृदयगम्यं रागद्वेषरूपं बोध्यं तथाहि अशोक-कुसुमोद्गमे अस्याः कान्तः समेष्यतीति स्थितेस्तं प्रति प्रणतिरिति रागः, चूतमुकुलस्य अत्युद्दीपकत्वात् तं प्रति द्वेष इति भावः ।

पिच्छन्तमिति ।——

प्रेक्षन्तमनिमिषाक्षं प्रेक्ष्य वधूकया झटिति भिक्षाचरम् ।
दर्शयित्वा कया च शीर्षे कृते द्वे जातीकुसुमे ॥ इति संस्कृतम् ॥१३

कयाचित् वधूकया नार्या अनिमिषाक्षं निर्निमेषनयनं यथा तथा प्रेक्षन्तम् अवलोकयन्तं भिक्षाचरं भिक्षुकं प्रेक्ष्य दृष्ट्वा झटिति शीघ्रं द्वे जातीकुसुमे दर्शयित्वा शीर्षे शिरसि कृते । अत्र जातीकुसुम-योरुच्चतरस्थाने निवेशनात् मम भर्तृपितृकुले अतिमहती उज्ज्वले च तस्मान्नाहं त्वद्योग्या, त्वं कथं मां कामयसे इति भावः सूचितः । तदत्रापि स्वकुलयो रागः भिक्षुके द्वेषश्चेति रागद्वेषौ द्योत्येते ।

रवीति । रविसुतेन तदाख्येन अथवा रवेः कस्यचित् महा-पुरुषस्य सुतेन पुत्रेण कृतः संस्थापितः गोकर्णः तदाख्यस्थानं यस्य तथोक्तः गोकर्णतीर्थाश्रित इत्यर्थः श्रुतेर्विषयः शब्दः गुणः यस्य तत् श्रुतिविषयगुणमाकाशम् अम्बरं वसनं यस्य तथाभूतः दिगम्बर इति यावत् वनं जलम् आत्मा स्वरूपं यस्याः सा वनात्मा गङ्गा तस्याः धरः गङ्गाधर इत्यर्थः नरकशिराः नरकपालधारीत्यर्थः

कुम्भेनसूप्रीनयनाश्रयाग्रदग्धोन्मदा दर्दुरहर्षकाले ।
स्वजन्मभक्षप्रियभोजनाय नृत्यन्ति भीमानुजगोजभाजः ॥१५

इत्यक्षमारादिगूढजातिः ।

वाताश्शीतिररिभ्रोऽरं वो हरतान्महासुरीदयितः ।
वीड्व्राड्ढानीका वार्वाहार्भोऽसमस्थानाः ॥ १६ ॥

इति पदगूढजातिः ।

नास्ति समः यस्याः सा असमा अतुल्या विषमेत्यर्थः या रुक् रोगः शूलमित्यर्थः सा पाणौ यस्य तथोक्तः शूलधर इति यावत् शम्भुः अखिलं समस्तं जगत् चिरम् अव्यात् रक्षतु ॥ १४ ॥

अत्र अजः न जायते इत्यजः शम्भुः गूढः दुर्बोधत्वादिति भावः ।

कुम्भेनेति । दर्दुराणां भेकानां, भेके मण्डूकदर्दुरावित्यमरः । हर्षकाले वर्षाकाले इत्यर्थः भीमानुजः अर्जुनः स चासौ गोजः भूरुहश्चेति भीमानुजगोजः अर्जुनवृक्ष इत्यर्थः तं भजन्ते आश्रयन्तीति तथोक्ताः स्वेभ्यः जन्म येषां ते स्वजन्मानः स्वापत्यानि तेषां भक्षाः भक्षकाः, सर्पा इत्यर्थः प्रियाणि भोजनानि येषां ते मयूरा इत्यर्थः कुं पृथिवीं भरन्तीति कुम्भाः पर्वताः तेषाम् इनः स्वामी हिमालय इत्यर्थः तस्मात् सूः उत्पत्तिर्यस्याः सा पार्वतीत्यर्थः तस्याः प्रीणातीति तथोक्तः कुम्भेनसूप्रीः शम्भुरित्यर्थः तस्य नयने नेत्रे तृतीये इति भावः यः आश्रयाशः अग्निः तेन दग्धः भस्मीकृतः मदनः इत्यर्थः तेन उन्मादः उल्लासः येषां तादृशाः सन्तः नृत्यन्ति । अत्र मारवर्षामयूरार्जुनवृक्षाणां नामानि गोपितानीति मारादि गूढं बोध्यम् ॥ १५ ॥

वातेति । वातं वायुम् अश्नाति वातात् पन्नगः शेषनाग इत्यर्थः शीतिः शयनं यस्य तथोक्तः अरिभ्रः चक्रधरः विशिष्टा या ईड्वा स्तुतिः तस्यां व्रजति गच्छतीति वीड्व्राट् विशेषेण स्तुत्यः यानं

दयावान् प्रयतः शुद्धः प्रबुद्धः कमलेक्षणः ।
पापापहस्त्रिभुवनं बुद्धः पायादपायतः ॥ १७ ॥

न सज्जति क्वचिद्दोषे प्रीणाति जगतां मनः ।
य एकः स परं श्रीमांश्चिरं जयति सज्जनः ॥ १८ ॥

इति पादगूढजातिः ।

दृष्टस्त्वया सखि ! ब्रूहि रोदयित्वा गतोऽद्य माम् ।
भद्रे ! कल्याणिनी भूयाः प्राचीं पश्य विनिर्म्मलाम् ॥ १९ ॥

वाहनम् श्रोकः पक्षिविशेषः गरुड इत्यर्थः यस्य तथाभूतः वार्वाहाभः नवनीरदनिभः श्यामः क्षिप्तशकटः महासुरी महादेवी या ई लक्ष्मीस्तस्याः दयितः कान्तः विष्णुरित्यर्थः वः युष्माकम् अघम् अशुभम् अरं शीघ्रं हरतात् हरतु । अत्र पदानि गूढानि ॥ १६ ॥

दयावानिति । दयावान् दयालुः प्रयतः संयतेन्द्रियः शुद्धः पूतात्मा । प्रबुद्धः प्रकृष्टज्ञानः कमलेक्षणः पद्मचक्षुरित्यर्थः पापापहः पापनाशकः बुद्धः शौद्धोदनिः त्रिभुवनम् अपायतः नाशात् पायात् रक्षतु । अत्र बुद्धः पायादपायत इति चतुर्थपादः पूर्वेषु त्रिषु पादेषु गूढोऽस्तीति पादगूढा जातिरिति बोध्यम् ॥ १७ ॥

नेति । यत्र एकः क्वचिदपि दोषे न सज्जति, जगतः मनः प्रीणाति आनन्दयति, स श्रीमान् सज्जनः परं केवलं चिरं जयति सर्वोत्कर्षेण वर्त्तते । अत्रापि चिर जयति सज्जन इति चतुर्थपादाक्षराणि पूर्वेषु त्रिषु पादेषु गोपितानीति पादगूढत्वम् ॥ १८ ॥

दृष्ट इति । हे सखि ! अद्य मां रोदयित्वा गतः स मे कान्त इति शेषः त्वया दृष्टः, ब्रूहि वद इदानीं किं करोमीति शेषः । हे भद्रे ! साध्वि ! कल्याणिनी स्वस्थचित्ता भूयाः भव प्राचीं पूर्वां दिशं विनिर्मलां विकसितां पश्य अवलोकय । नायिकायास्तत्सख्याश्च उक्तिप्रत्युक्ती । अत्र यथा प्राची स्वभर्त्तुः सूर्यस्यागमने रात्रौ

दाहिणपवणुव्विग्गा संमीलइ लोअणाइ पहिअवहू ।
णिउणसही अङ्गुलीए कण्णविवरे ठक्केइ ॥ २० ॥

अर्थगूढजातिः ।

स्तुतिनिन्दा तदर्थत्वाद् द्व्यर्थमर्थद्वयोदयात् ।
निह्नवात् कथितस्यापि शब्दव्याजादपह्नुतिः ॥ २१ ॥
बहुदोषो गुणध्वंसी गोहन्ता जनपीडकः ।
करोतु विरथो लोकमस्तमाप्तमहोदयम् ॥ २२ ॥

विष्णोः स्तुतिनिन्दे ।

विरहिणी सती प्रातस्तदुदयेन पुनर्विकाससमाप्नोति तथा त्वमपि पुनः स्वकान्तागमे सुखमाप्स्यतीति भावार्थस्य गूढत्वमिति बोध्यम् ॥ १९ ॥

दाहिणेति ।——

दक्षिणपवनोद्विग्ना सम्मीलयति लोचने पथिकवधूः ।
निपुणसखी अङ्गुल्या कर्णविवरं ठक्कयति ॥ इति संस्कृतम् ॥ २० ॥

काचित् पथिकवधूः विरहिणीत्यर्थः दक्षिणपवनेन मलयसमीरणेन उद्विग्ना व्याकुलिता सती लोचने नेत्रे सम्मीलयति तस्याश्च निपुणा सुविज्ञा सखी अङ्गुल्या कर्णविवरं कर्णच्छिद्रं ठक्कयति रुद्धयति आच्छादयतीत्यर्थः । अत्र नायिकाया नेत्रनिमीलनात् मरणाशङ्कया कर्णविवरात् प्राणवायुविनिर्गमनिवारणार्थं तत्सख्या कर्णविवररोधः कृत इति भावार्थस्य गूढत्वं सुधीभिर्विभाव्यम् ॥ २० ॥

स्तुतीति । स्तुतिश्च निन्दा च यत्र सा स्तुतिनिन्दा नाम जातिः तदर्थत्वात् स्तुतिनिन्दापरत्वात् ज्ञेयेति शेषः अर्थद्वयोपादानात् उभयार्थप्रकृत्वात् द्व्यर्थं तदाख्यं जातिरिति भावः कथितस्यापि शब्दव्याजात् शब्दच्छलात् निह्नवात् गोपनात् अपह्नुतिर्नाम जातिर्ज्ञेयेति शेषः ॥ २१ ॥

बहुदोष इति । बहवः दोषाः यस्य स बहुदोषः अथच बहवः दोषः भुजाः यस्य सः बहुबाहुरित्यर्थः, तथाच भगवद्गीतायामर्जुन-

सततमर्च्छितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः।
इह कलिकाले कुपतिर्जगतस्त्व परमदुःखकरः॥२३॥

राज्ञः स्तुतिनिन्दे। इति स्तुतिनिन्दाजातिः।

प्रसन्नवदनः श्रीमानयं लब्धगुणोदयः।
करप्रचारसुभगो राजा नन्दयति प्रजाः॥ २४॥

चन्द्रभूपतौ।

वाक्यम्। तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते इति। गुणध्वंसी गुणनाशकः अथच त्रिगुणातीतः। गोहन्ता गोवधकारी अथच गां पृथ्वीं हन्ति गच्छति अवतारकरूपेणेति भावः तथोक्तः भूभारहरणार्थमवतारं गच्छन्नित्यर्थः, जनानां पीड़कः अथच पापिनां दण्डयितेत्यर्थः जनार्दन इति यावत्, विरथः रथशून्यः अथ च विः पक्षी गरुड़ इति यावत् रथो यस्य तथाभूतः हरिरिति यावत्, लोकं जगत् अस्तमाप्तः विनष्टः सर्वान् उदयो यस्य तादृशम् अथच अटयं लोकं दुर्जनमित्यर्थः अस्तं प्राप्तविनाशं करोतु आप्तमष्टः अक्षोतृपय इति कर्त्तृविशेषणमस्मिन् पक्षे वेदितव्यम्॥ २२॥

सततमिति। इह अस्मिन् कलिकाले सततं मर्च्छितजनानां पूज्यजनानां वत्सलः प्रियः बहूनि भयानि यस्यां तथाभूता या पापक्रिया पापकार्य्यं तस्याः परिभ्रष्टः विहीनः कुपतिः पृथिवीपतिस्त्वं जगतः परं केवलं अदुःखकरः सुखकरः। अथच सततम् अर्च्छितजनानां दुर्जनानां वत्सलः बहुभयः पापक्रियया भयङ्करपापानुष्ठानेन परिभ्रष्टः सदाचारादिति भावः कुपतिः कुत्सितप्रभुः त्वं जगतः परमं यत् दुःखं तस्य करः कर्त्ता॥ २३॥

प्रसन्नेति। प्रसन्नं वदनं यस्य तथोक्तः श्रीमान् अथश्रीमान् शोभनश्च लब्धः गुणानाम् उदयः अन्यत्र लब्धगुणः प्राप्तोत्कर्षः उदयो यस्य तथोक्तः करस्य राजभागधेयस्य प्रचारे प्रकटने सुभगः अक्लेशकर इति यावत् अन्यत्र कराणां किरणानां प्रचारेण

विनायकार्पितप्रीतिर्देवो गङ्गां बभार यः ।
सर्वदो माधवः स त्वामव्यादव्यर्थविक्रमः ॥ २५ ॥

शङ्करवासुदेवौ । द्व्यर्थजातिः ।

शीत्कारं जनयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किमु मिलितो नहि नहि सखि ! हैमनः पवनः॥२६

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥२७॥

अपह्नुतिजातिः ।

विकासेन सुभगः मनोहरः राजा चन्द्रश्च प्रजाः लोकान् नन्दयति रञ्जयति ॥ २४ ॥

विनायकेति । विनायके गणाधिपे अन्यत्र वीनां पक्षिणां नायके अधिपतौ गरुड़े इति यावत् अर्पिता अर्पिता प्रीतिर्येन तथोक्तः यः देवः गङ्गां सुरधुनीम् अन्यत्र अगं पर्वतं गोवर्द्धनं गां पृथिवीञ्च बभार दधार, सः अव्यर्थविक्रमः सफलशक्तिः उमाधवः शङ्करः सर्वदा त्वाम् अव्यात् रक्षतु अन्यत्र सर्वदः सर्वाभीष्टप्रदः माधवः विष्णुः त्वाम् अव्यादित्यन्वयः ॥ २५ ॥

शीत्कारमिति । शीत्कारं जनयति, अधरं व्रणयति क्षतं करोतीत्यर्थः, रोमाञ्चं तनोति विस्तारयति । इति नायिकया कयाचिदुक्ते नागरिकः कोऽपीति शेषः मिलितः किमु ? यः तव शीत्कारादिहेतुरिति भावः इति सख्या उक्ते, हे सखि ! नहि नहि नैवं नैव नागरिकः मिलित इति शेषः हैमनः हैमन्तः पवनः वायुरिति नायिकया अपह्नुतमिति अपह्नुतिजातिः ॥ २६ ॥

रुचिरेति । रुचिरं मनोहरं स्वरः वर्णः पदं पदविन्यासश्च यस्याः तादृशी रसभाववती रसिका भावुका चेत्यर्थः जगतां मनः हरति । इति केनचित् उक्ते कथिते तत् तदा तरुणी युवतिः

स्वरेषु बिन्दुयुक्तेषु हलां यद्दवबोधनम्।
तद्बिन्दुमदिति प्राहुः केचिद्बिन्दुमतीमिति॥ २८

मानसी नाभसीत्याद्याः बुधाद्यौ न्यासतो हि याः।
बाहुल्येनाप्रयोगात्तु नेह तासां प्रदर्शनम्॥ २९॥

त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः।
अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः॥३०॥

इति बिन्दुमज्जातिः।

किम् इति प्रश्नकारिणोक्ते नहि नहि मधुरमीवस्य मनोहर-स्वभावस्य मनोहरस्वभाववर्णनचतुरस्येति यावत् बाणस्य कवेरिति शेषः वाणी वाक् जगन्मनः हरतीति शेष इति पूर्ववक्त्रा स्वाभिप्राया-दङ्करः कृत इत्यत्रापि अपह्नुतिजातिः॥ २७॥

स्वरेष्विति। बिन्दुयुक्तेषु हलानां व्यञ्जनानां यत् अवबोधनं प्रतीतिः, तत् बिन्दुरनुस्वारो विद्यतेऽस्मिन्निति बिन्दुमत् बिन्दु-युक्तम् इति केचित् बिन्दुमतीमिति च प्राहुः कथयन्ति॥ २८॥

मानसीति। मानसी नाभसी इत्याद्याः याः बुधाद्यौ न्यासतः कथिता इति शेषः ताः बाहुल्येन प्रायशः अप्रयोगाः प्रयोगाभाव-वत्य इत्यर्थः तस्मात् इह ग्रन्थे तासां मानसीप्रभृतीनां प्रदर्शनं न अस्तीति शेषः॥ २९॥

त्रिनयनेति। त्रिनयनस्य हरस्य चूडारत्नं शिरोमणिः सिन्धोः समुद्रस्य मित्रं सखा, कुमुद्वतीनां कुमुदिनीनां दयितः कान्तः घुसृणेन कुङ्कुमेन अरुणं रक्तं यत् तरुण्याः युवत्याः वदनं मुखं तदुपमः अयं चन्द्रः उदयति। आर्य्यावृत्तम्॥ ३०॥

बिन्दुयुक्ताः स्वरा आदौ लेखनीयाः तद्यथा।——

f :....ˎ ी o:o f o:o f o ` : ी : .ु ृ :ो • f •o: ।

अ. .ुoo f • .ु .ृ .ी .ु...ु .ीoo o ीo•::: ।

क्रियादिकं पदे यत्र पदसाधनकौशलात्।
स्फुटं न लक्ष्यते तत्स्यात् क्रियागुप्तादिकं यथा॥ ३१॥
राजन्नवघनश्यामनिस्त्रिंशाकर्षदुर्जयः।
आकल्पं वसुधामेतां विद्विषो द्य रणे बहून्॥ ३२॥
पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः।
सहकारद्रुमारम्यां वसन्ते काममपि श्रियम्॥ ३३॥

इति क्रियागुप्तजातिः।

न करोतु नाम रोषं न वदतु परुषं न हन्तु वा शत्रून्।
रक्षयति महीमखिलां तथापि धीरस्य वीरस्य॥ ३४॥

एतद्दर्शनेन ह्रस्वानां योजनेन विन्दुमत् वृत्तं भवतीत्येवं सर्वत्र वेदितव्यम्।

क्रियादिकमिति। यत्र पदानां सन्धानस्य योजनस्य कौशलात् क्रियादिकं स्थितं स्फुटं न लक्ष्यते तत् क्रियागुप्तादिकं यथा स्यात्॥ ३१॥

राजन्निति। हे राजन्! त्वं घनवत् श्यामो यः निस्त्रिंशः असिः तस्य आकर्षेण दुर्जयः सन् आकल्पम् आप्रलयम् एतां वसुधाम् अव रक्ष तथा रणे बहून् विद्विषः शत्रून् द्य छिन्धि दो अवखण्डने इत्यस्मात् कर्त्तरि लोट्। अत्र अव द्य इति क्रियाद्वयं गुप्तं बोध्यम्॥ ३२॥

पुंस्कोकिलेति। एते सहकारद्रुमाः चूततरवः वसन्ते पुंस्कोकिलकुलस्य आरवैः कूजितैः नितान्तं रम्याः कामपि श्रियम् अगुः प्रापुः। अत्र अगुरिति क्रिया गुप्ता॥ ३३॥

नेति। रोषं न करोतु नाम, परुषं निष्ठुरं न वदतु, शत्रून् वा न हन्तु अयमिति शेषः, तथापि अस्य वीरस्य धीः बुद्धिः अखिलां समग्रां महीं पृथिवीं रक्षयति। अत्र धीरिति कर्तृपदं गुप्तम्॥ ३४॥

शरदिन्दुकुन्दधवलं नगनिलयरतं मनो हरं देवम् ।
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ २५ ॥

कर्तृगुप्तम् ।

शीत्कारासारसंवाही सरो अवनमारुतः ।
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ २६ ॥

सुभग ! तवाननपङ्कजदर्शनसञ्जातनिर्भरप्रीतेः ।
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः ॥ २७ ॥

कर्मगुप्तम् ।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ।
दुर्वारा मानसं हंसाः गमिष्यन्ति घनागमे ॥ २८ ॥

शरदिति । यैः जनैः अनिशं सुकृतं पुण्यं कृतं तेषामेव मनः शरदिन्दुकुन्दधवलं शरच्चन्द्रकुन्दकुसुमशुभ्रं नगनिलयरतं पर्वतावासगतं देवं हरं प्रसादयति । अत्र मन इति कर्तृपदं गुप्तम् ॥ २५ ॥

शीत्कारेति । शीत्काराणाम् आसारः धारासम्पातः तं वहतीति तथाभूतः, पान्थस्त्रीणां विरहिणीनामित्यर्थः निःश्वासैः मांसल इव परिपुष्ट इव अवनमारुतः वेगवान् वायुः सरः सरोवरं प्रक्षोभयति कम्पयति । अत्र सर इति कर्मपदं गुप्तम् ॥ २६ ॥

सुभगेति । हे सुभग ! तव आननपङ्कजस्य मुखकमलस्य दर्शनात् सञ्जाता निर्भरा अत्यन्ता प्रीतिः यस्य तादृशस्य कस्य पुण्यवतः रमणीयः दिवसः शं मङ्गलं कुर्वन् अयति गच्छति ? अत्र शमिति कर्मपदं गुप्तम् ॥ २७ ॥

पूतीति । घनागमे वर्षाकाले पूतिपङ्कमये दुर्गन्धकर्दमपूर्णे कासारे सरसि दुष्टं वाः जलं तेन कलुषितवारिणीत्यर्थः अत्यर्थं दुःखिताः अमी हंसाः मानसं गमिष्यन्ति । अत्र दुर्वारा वारयितुमशक्या इत्यापाततः प्रतीतेः करणस्य गूढत्वं बोध्यम् ॥ २८ ॥

अहं महानसायातः कल्पितो नरकस्तव।
मया मांसादिकं भुक्तं भीमं जानीहि मां वक! ॥३९॥

करणगुप्तम्।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी।
ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यकामया॥ ४०॥

प्रशस्त्यायुक्तमार्गस्य तव सम्मानिताश्रिताः।
स्पृहयन्ति न के नाम गुणरत्नालय! प्रभो!॥ ४१॥

सम्प्रदानगुप्तम्।

शिलीमुखैस्त्वया वीर! दुर्वारैर्निर्जितो रिपुः।

अहमिति। अहं महानसा महता अनसा शकटेन, अनः शकटतातयोरिति कोषः। आयातः आगतः तव नरकः दुःखदस्थानविशेषः कल्पितः विधिनेति शेषः। हे वक! मया मांसादिकं त्वदर्थमाहृतमिति भावः भुक्तं मां भीमं जानीहि। अत्र महानसायात इत्यस्य महानसात् आयात इत्यर्थप्रतीतेः करणस्य गुप्तत्वमिति बोध्यम्॥ ३९॥

अम्भोरुहेति। कामिनी वाप्याः दीर्घिकायाः पयसि स्नात्वा भक्तिसम्पन्ना सती सौभाग्यकामया पतिवाल्लभ्याभिलाषेण अये इः कामः तस्मै अम्भोरुहं पुष्पं ददाति। अत्र अये इति आपाततः सम्बोधनप्रतीतेः सम्प्रदानस्य गुप्तत्वं बोध्यम्॥ ४०॥

प्रशस्त्या इति। हे गुणरत्नानाम् आलय! प्रभो! उक्तमार्गस्य उपदिष्टशिष्टाचारस्य तव प्रशस्त्यै मङ्गलाय सम्मानिताः सम्मानं श्रिताः प्राप्ताः मानवीया इत्यर्थः के नाम जनाः न स्पृहयन्ति नाकाङ्क्षन्ति? सर्वे एव स्पृहयन्तीत्यर्थः। अत्र प्रशस्त्यायुक्तमार्गस्येत्यस्य आपाततः एकपदत्वप्रतीतेः सम्प्रदानगुप्तत्वं बोध्यम्॥ ४१॥

शिलीमुखैरिति। हे वीर! त्वया दुर्वारैः शिलीमुखैः शरैः

विभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ४२ ॥
सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम् ।
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ ४३ ॥

अपादानगुप्तम् ।

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्तरोपितप्रीतिरस्ति सा कमलालया ॥ ४४ ॥
विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः ।
तथाहि भस्म पादाभ्यां निर्वाणं हन्त्ययं जनः ॥४५॥

अधिकरणगुप्तम् । कारकगुप्तजातिः ।

निर्जितः रिपुः यस्य: कुसुमाकुले वनेऽपि अलिनः भ्रमरात् अत्यन्तं विभेति । अत्रात्यन्तमलिन इत्यस्यापाततः एकपदत्वप्रतीतेरपादानस्य गूढत्वम् ॥ ४२ ॥

सरसीति । अयं जनः सरसीतः सरोवरात् अम्भोजसुरभि पद्मसुगन्धं स्वच्छं निर्मलम् एकान्तशीतलम् अतिशीतं दर्पकारकं बलकरमित्यर्थः कं जलं यद्वा कन्दर्पकारकं कामोद्दीपकं जलमिति शेषः उद्धृत्य पिबति । अत्र सरसीतोयमिति आपातत एकपदत्वप्रतीतेरपादानस्य गूढत्वम् ॥ ४३ ॥

येति । या कटाक्षच्छटापातैः मानवं पवित्रयति शोधयति सम्पन्नं करोतीति भावः सा कमलालया लक्ष्मीः कान्ते भर्तरि ए अः विष्णुः तस्मिन् रोपिता अर्पिता प्रीतिः प्रणयो यया तथाभूता अस्ति । अत्र एकान्ते इति एकपदत्वप्रतीतेरधिकरणस्य गुप्तत्वम् ॥४४॥

विपद्येति । निरूष्मणः उष्मरहितस्य निरभिमानस्येत्यर्थः सर्वस्यैव विपदि अमानता मानं प्रति अवहेला सिद्धा निश्चिता, तथाहि तमेवार्थं आलोच्य अयं जनः पादाभ्यां निर्वाणं भस्म हन्ति ताडयति । अत्र विपद्येति अधिकरणस्य गूढत्वम् ॥ ४५ ॥

तूणीव मधुमासेऽस्मिन् सहकारद्रुमञ्जरी ।
इयमुन्निद्रमुकुलैः भाति न्यस्तशिलीमुखा ॥ ४६ ॥

प्राप्तमदो मधुमासः प्रबला रुक् प्रियतमो विदूरस्थः ।
असतीयं सन्निहिता हा हतशीला सखी नियतम् ॥ ४७ ॥

सम्बन्धगुप्तजातिः ।

सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्या वचस्तथापि त्वमसत्यं वेत्सि न क्वचित् ॥ ४८ ॥

तूणीवेति । अस्मिन् मधुमासे चैत्रमासे इयं सहकारद्रोः चूततरोः मञ्जरी उन्निद्रमुकुला प्रस्फुटितमुकुला सती उन्निद्रमुकुलेति पाठेऽपि स एवार्थः । एः इः कामः तस्य न्यस्तशिलीमुखा निहितशरा तूणीव भाति राजते । न्यस्तशिलीमुखा उपविष्टभ्रमरेति सहकारद्रुमञ्जरीत्यस्यापि विशेषणम् । अत्र उन्निद्रमुकुलैरिति अपृथक्पदत्वप्रतीतेः सम्बन्धगूढत्वम् ॥ ४६ ॥

प्राप्तेति । मदः मधु मद्यं प्राप्तं मासचन्द्रस्य प्रबला रुक् पीड़ा, उद्दीपकत्वमित्यर्थः प्रियतमः कान्तः अस्याः इति शेषः विदूरस्थः अतिदूरवर्त्ती प्रियतमोऽपि दूरस्थ इत्यपि पाठः । इयम् असती मत्सखीति शेषः सन्निहिता, हा इति खेदे सखी अहमिति शेषः नियतं निश्चितं हतशीला दुःशीला जातेति शेषः मयि सन्निहितायामस्या दुःशीलतायां सत्यां सर्वे मामेव दूषयन्तीति मम हतशीलत्वमिति भावः । अत्र मधुमास इति प्रथमान्तप्रतीतेः सम्बन्धगूढत्वम् ॥ ४७ ॥

सर्वज्ञेनेति । हे सर्वज्ञानाम् इन प्रभो ! त्वया अविज्ञातम् ईदृशं किञ्चिदपि मिथ्या वचः न अस्ति, तथापि त्वं क्वचिदपि असत्यं न वेत्सि । अत्र सर्वज्ञेनेति तृतीयान्तप्रतीतेरामन्त्र्यपदस्य गूढत्वम् ॥ ४८ ॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥ ४९ ॥

आमन्त्रितगुप्तजातिः ।

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति ।
रुष्टेनापि त्वया वीर ! शम्भुनारिः समः कृतः ॥ ५० ॥
नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती ॥ ५१ ॥

समासगुप्तजातिः ।

नितान्तस्वच्छहृदयं सखि ! प्रेयान् समागतः ।

कमले इति । हे अले भ्रमर ! कमले नित्यं मधूनि पिबतः तव कं सुखं भविष्यति न सन्देहः, अत्र सन्देहो नास्तीत्यर्थः । किन्तु दोषाकरोदये चन्द्रोदये कष्टं कमलस्य सङ्कुचितत्वादिति भावः । कमले कमले इत्यापाततः वीप्साप्रतीतेरामन्त्र्यपदस्य गूढत्वम् ॥४९॥

विषादीति । हे वीर ! त्वया रुष्टेनापि कुपितेनापि अरिः शत्रुः शम्भुना हरेण समः कृतः तथाच तव अरिः विषादी विषण्णः पक्षे विषं कालकूटम् अत्तीति तथोक्तः, सदारः सस्त्रीकः पक्षे सपार्वतीकः अगं पर्वतं राज्यच्युतत्वादिति भावः पक्षे कैलासं हिमवन्तं वा न मुञ्चति न त्यजति । यद्वा सदा रोगं पीडां दुःखमित्यर्थः न मुञ्चतीत्यपि शत्रुपक्षे अर्थः सङ्गच्छते । अत्र विषादीति सदार इति च समासगूढत्वम् ॥ ५० ॥

नित्यमिति । देवैर्नित्यम् आराधिता सेविता नित्यं मा लक्ष्मीर्यस्यां सा देवैराराधिता चेति वा मण्डलाग्रं पद्मं गदां शङ्खं चक्रं बिभ्रती कंसस्य द्विषतः कृष्णस्य तनुः मूर्त्तिः जयति सर्वोत्कर्षेण वर्त्तते । अत्र नित्यमिति समासस्य गूढत्वम् ॥ ५१ ॥

नितान्तेति । हे सखि ! नितान्तस्वच्छम् अतिनिर्मलं हृदयं

त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५२ ॥

कलिकालमियन्तावदग्रस्थस्य मुनेरपि ।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५३ ॥

लिङ्गगुप्तजातिः ।

प्रमोदं जनयन्त्येव सदारा: गृहमेधिनः ।
यदि धर्मश्च कामश्च भवेतां सङ्गतावुभौ ॥ ५४ ॥

सुब्वचनगुप्तम् ।

कस्मात्त्वं दुर्बलासीति सख्यस्त्वां परिपृच्छति ।
त्वयि सन्निहिते तासु दद्यात् किं कथयोत्तरम् ॥ ५५ ॥

यस्य तादृशः अयं प्रेयान् प्रियतमः समागतः, यः चिराद्दर्शनेन या प्रीतिः अनुरागः तया त्वां समालिङ्ग्य रंस्यते विहरिष्यति। अत्र नितान्तस्वच्छहृदयमिति क्लीबत्वभ्रमेण पुंस्त्वस्य गूढत्वम् ॥५२॥

कलिकेति । इयं तावत् शशिखण्डानुकारिणी चन्द्रखण्डसदृशी अग्रस्थस्य वकस्य कलिका कोरकः, कलिका कोरकः पुमानित्यमरः । अत्र जगति मुनेरपि तपस्विनोऽपि मानसम् अतिशयेन खण्डयति क्षोभयति उद्दीपकत्वादिति भावः। अत्र कलिकालमिति लिङ्गस्य गूढत्वम् ॥ ५३ ॥

प्रमोदमिति। राः धनं सदा गृहमेधिनः गृहस्थस्य प्रमोदम् आनन्दं जनयन्त्येव। यदि धर्मश्च कामश्च उभौ सङ्गतौ धनेनेति शेषः भवेताम्। अत्र सदारा गृहमेधिन इति प्रथमाबहुवचनान्त-प्रतीतेः रा इति प्रथमैकवचनस्य गूढत्वम् ॥ ५४ ॥

कस्मादिति। त्वं कस्मात् दुर्बला असीति सख्यः तां कान्तां परिपृच्छति पुनः पुनरतिशयेन वा पृच्छन्तीति यङ्लुगन्तस्य लटि अन्तिविभक्तेरूपमिदम्। त्वयि सन्निहिते सति तासु सखीषु किम् उत्तरं दद्यात् इति शेषः कथय ॥ ५५ ॥

**भिन्नवचनगुप्तम् । वचनगुप्तजातिः ।**

**अन्योऽप्यर्थः स्फुटो यत्र मात्रादिष्वुतकेष्वपि ।**
**प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ॥ ५६ ॥**

**महाशयमतिस्वच्छं नीरं सन्तापशान्तये ।**
**खलावासादतिश्रान्ताः समाश्रयत हे जनाः ॥ ५७ ॥**

**तुषारधवलः स्फूर्जन्महामणिधरोऽनघः ।**
**नागराजो जयत्येकः पृथिवीधरणक्षमः ॥ ५८ ॥**

**मात्राच्युतजातिः ।**

**सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।**

अन्य इति । यत्र येषु मात्रा स्वरवर्णा आदयो येषां तानि च्युतानि येषां तेषु आदिबिन्दुविसर्गादयो गृह्यन्ते । अन्यः द्वितीयोऽपि अर्थः स्फुटः स्पष्टः प्रतीयते, तज्ज्ञाः तद्विदः जनाः तत् इत्तं मात्राच्युतकादिकं मात्राच्युतकं बिन्दुच्युतकं विसर्गच्युतकमित्यादि विदुः जानन्ति ॥ ५६ ॥

महाशयमिति । हे खले शस्यादिरक्षणार्थमनावृते स्थाने वासात् पक्षे खलस्य दुर्जनस्य आवासात् आश्रयात् अतिश्रान्ता जनाः महाशयं विस्तृतं पक्षे सदाशयसम्पन्नम् अतिस्वच्छम् अतिनिर्मलं पक्षे अपापं नीरं जलं मात्राच्युतौ नरं सन्तापशान्तये समाश्रयत ॥ ५७ ॥

तुषारेति । तुषारवत् धवलः पक्षे तुषारेण धवलः श्वेतः स्फूर्जन् दीप्यमानः यः महामणिः महारत्नं तस्य धरतीति धरः पक्षे स्फूर्जतां महतां मणीनां धरः आकर इत्यर्थः अनघः निर्मलः एकः एकलः पृथिव्या धरणे क्षमः शक्तः उभयत्र समानमेतत् । नागराजः शेषः मात्राच्युतौ नगराजः हिमालयः जयति सर्वोत्कर्षेण वर्त्तते ॥ ५८ ॥

सुश्यामेति । शोभना श्यामा, शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च

कस्यैषा नगभूः प्रीतिं भुजङ्गस्य करोति न ॥ ५९ ॥

यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः ।
तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥ ६० ॥

बिन्दुच्युतकजातिः ।

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम् ।
विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥ ६१ ॥

सुलभोगतया । तप्तकाञ्चनवर्णाभा सा श्यामा परिकीर्तित इत्युक्त-लक्षणा चन्दनवती चन्दनालङ्कृता तिलकभूषिता तिलकशोभिता एषा अनङ्गस्य कामस्य भूः स्थानं कान्ता कस्य भुजङ्गस्य कामिनः प्रीतिं न करोति ? न जनयति ? अपि तु सर्वस्यैवेत्यर्थः । अत्र नङ्गभूरि-त्यस्य बिन्दुच्युतौ नगभूरिति पाठे नगभूः पर्वतभूमिरित्यर्थः अस्मिन् पक्षे श्यामा तृणभूयस्त्वादिति भावः ॥ ५९ ॥

यथेति । अयं मे मम बकुलद्रुमः बकुलवृक्षः यथा सन्तः प्रसवाः फलपुष्पाणि यस्य तथोक्तः स्निग्धः छायाबाहुल्यादिति भावः सति उत्कृष्टे मार्गे पथि विहिता कृता स्थितिरवस्थानं येन तथाभूतः तथा सर्वेषाम् आश्रयः सेवनीय इति भावः । सत्यं निश्चितम् अस्तीति शेषः । अत्र बिन्दुच्युतौ अयमेव कुलद्रुम इति पाठे अयमेव जनः सत्प्रसवः सुसन्तानः स्निग्धः सर्वत्रस्नेहवान् सन्मार्गे सदाचारे कृत-स्थितिः तथा सर्वेषां जनानाम् आश्रयः उपकर्त्तेति यावत् अतएव सत्यं कुलद्रुमः वंशेषु तरुवत् उन्नत इति यावत् ॥ ६० ॥

महीरुह इति । एते महीरुहः वृक्षाः कलापिनां मयूराणां विहङ्गानां पक्षिणां हृद्यैः मनोज्ञैः स्निग्धैः विरुतैः रवैः नीरवाहाय मेघाय स्वागतानीव सुखेन आगतं भवतेति प्रश्नवाक्यानीव कुर्वते । अत्र हृद्यैः कलापिनामित्यत्र विसर्गच्युतौ हृद्यैकलापिनामिति पाठे हृद्यं मनोज्ञम् एकम् अद्वितीयं लपन्तीति तथोक्तानां पक्षिणां मयूराणामिति भावः ॥ ६१ ॥

अगस्त्यस्य मुनेः शापात् ब्रह्मस्यन्दनमास्थितः ।
महासुः खात् परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६२ ॥

विसर्गच्युतकजातिः ।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारः नदीनः केन सेव्यते ॥ ६३ ॥
सुशीलः स्वर्णगौराभः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६४ ॥

अक्षरच्युतकजातिः ।

अगस्त्यस्येति । ब्रह्मस्यन्दनं ब्राह्मणवाहनम् आस्थितः महासुः महाप्राणः नहुषः अगस्त्यस्य मुनेः शापात् खात् आकाशात् परिभ्रष्टः सन् सर्पतां गतः प्राप्तः । अत्र महासुः खादित्यस्य विसर्गच्युतौ महासुखात् स्वर्गसुखात् परिभ्रष्ट इत्यर्थः ॥ ६२ ॥

महानपीति । महानपि अतिविस्तृतोऽपि पक्षे उदारोऽपि, सुधीरोऽपि अतिगभीरोऽपि पक्षे सुपण्डितोऽपि बहुरत्नयुतोऽपि नानारत्नाकरोऽपि पक्षे बहुधनसम्पन्नोऽपि सन् विरसः विस्वादः क्षारमयत्वादिति भावः पक्षे कर्कशः कुपरिवारः पृथिवीवेष्टितः पक्षे कुत्सितपरिजनः नदीनाम् इनः स्वामी समुद्र इत्यर्थः दीन इत्यस्य नकारस्य अक्षरस्य च्युतौ दीनः व्ययकुण्ठ इत्यर्थः केन जनेन सेव्यते ? न केनापीत्यर्थः ॥ ६३ ॥

सुशील इति । सुशीलः शोभनचरितः स्वर्णगौराभः हेमकान्तिरित्यर्थः पूर्णचन्द्रनिभाननः चन्द्रवदनः सुगतः बुद्धदेवः हृदि संस्थितः सन् कस्य प्रीतिं न तनोति न विस्तारयति ? सर्वस्यैवेत्यर्थः । अत्र सुगत इत्यस्य मध्यवर्णस्य गकारस्य अक्षरस्य लोपे सुत इति पाठे तथाविधः सुतः पुत्रः कस्य प्रीतिं न तनोतीत्यन्वयः ॥ ६४ ॥

तनोतु ते यस्य फणी गरुत्मान्
पाणौ सुरारिर्दयिता च शय्या ।
नाभ्यां स्फुरन् भद्रमशुभ्रदेहः
पद्मा गतिश्चक्रमसौ विरिञ्चिः ॥ ६५ ॥

हरः क्षयी तापकरः सुरेशः
शान्तो हरिर्गोत्ररिपुर्विवस्वान् ।
चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य
लक्ष्म्या हृतः पातु विधिर्जगन्ति ॥ ६६ ॥

स्थानच्युतकजातिः ।

भिक्षवो रुचिराः सर्वे सुरसाश्च जनप्रियाः ।

तनोत्विति । यस्य शय्या फणी शेषनागः, गतिर्वाहनं गरुत्मान् गरुडः, पाणौ हस्ते चक्रं सुदर्शनमिति यावत्, दयिता कान्ता पद्मा लक्ष्मीः, नाभौ स्फुरन् कमलोद्भवः विधाता विरिञ्चिरिति वा पाठः । असौ अशुभ्रः कृष्णः देहः यस्य तथोक्तः सुरारिः कृष्णः ते तव भद्रं शुभं तनोतु विस्तारयतु । अत्र यो येनान्वेति तस्य अयथा-स्थाने विन्यस्तत्वात् स्थानच्युतकत्वम् ॥ ६५ ॥

हर इति । हरः शम्भुः द्विजिह्वाश्रितः पन्नगभूषण इत्यर्थः, चन्द्रः क्षयी क्षयरोगग्रस्तः, विवस्वान् सूर्यः तापकरः असह्यतेजा इत्यर्थः, सुरेशः इन्द्रः गोत्ररिपुः पर्वतशत्रुः अथच कुलशत्रुः, विधिः ब्रह्मा शान्तः संयतेन्द्रियः सम्भोगाक्षम इति भावः इति हेतोः उपेक्ष्य अनर्हत्वेनेत्यर्थः एतानिति शेषः लक्ष्म्या हृतः हरिः जगन्ति पातु रक्षतु । अत्रापि अन्वेतव्यानां पदानामयथास्थानपातित्वेन स्थानच्युतकत्वम् ॥ ६६ ॥

भिक्षव इति । मगधे मगधदेशे सर्वे जनाः भिक्षवः श्वेतवस्त्राः

क्षमायामतिसम्पन्ना दृश्यन्ते मगधे परम् ॥ ६७ ॥
सत्यशीलो दयोपेतो दाता शुचिरमत्सरः ।
जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ ६८ ॥

व्यञ्जनच्युतजातिः ।

स्फोटयित्वाक्षरं किञ्चित् पुनरन्यस्य दानतः ।
यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥ ६९ ॥
सदागतिहतोच्छ्रायस्तमसो वश्यतां गतः ।
अस्तमेष्यति दीपोऽयं विधुरेकः शिवे स्थितः ॥ ७० ॥

रुचिराः मनोज्ञाः सुरसाः रसिकाः जनप्रियाः लोकरञ्जनाः क्षमायां पृथिव्याम् अतिसम्पन्नाः अत्यन्तधनशालिनः परं केवलं दृश्यन्ते । अत्र भिक्षव इत्यस्य भकारं व्यञ्जनं त्यक्त्वा इक्षव इति पाठे इक्षवः मिष्टरसविशेषा इत्यर्थः सुरसाः सुष्ठु रसशालिनः अतिसम्पन्नाः अतिप्रचुरा इत्यर्थः । अन्यत् सुगमम् ॥ ६७ ॥

सत्येति । सत्यशीलः सत्यभाषणरतः दयोपेतः दयावान् दाता दानशीलः शुचिः विशुद्धचरितः अमत्सरः अन्यशुभद्वेषरहितः जिनः बुद्धदेवः उच्चैः उन्नतं पदम् उत्तमां गतिमिति यावत् अभीप्सता अभिलषता जनेन सर्वात्मना सर्वप्रकारेण सेव्यः । अत्र जिन इत्यस्य जकारं व्यञ्जनं हित्वा इन इति पाठे इनः प्रभुरित्यर्थः । अन्यत् सुगमम् ॥ ६८ ॥

स्फोटयित्वेति । किञ्चित् किमपि अक्षरं स्फोटयित्वा ध्वंसयित्वा पुनः अन्यस्य अक्षरस्य दानतः दानात् यत्र अपरोऽर्थः भवेत् तत् च्युतदत्ताक्षरं च्युतं दत्तञ्च अक्षरं यस्मिन् तथोक्तं नाम स्यादिति शेषः ॥ ६९ ॥

सदेति । सदा गत्या गमनेन हतः उच्छ्रायः औन्नत्यं यस्य तथाभूतः [illegible] तमसः

पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा ।
करोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ ७१ ॥
इति च्युतदत्ताक्षरजातिः ।

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
चतुर्थः परिच्छेदः ।

समाप्तः ।

---

अन्धकारस्य वश्यतां गतः दशवर्त्ती अयम् एक एव शिवे स्थितः दीपः उज्ज्वलप्रभः विभुः अस्तम् एष्यति गमिष्यति । अत्र दीप इत्यस्य पकारं त्यक्त्वा तत्स्थाने नकारे दत्ते दीन इति पाठे दीनो दुःखित इत्यर्थ इति च्युतदत्ताक्षरत्वम् ॥ ७० ॥

पूर्णेति । पूर्णचन्द्रवत् मुखं यस्याः पक्षे पूर्णचन्द्र एव मुखं यस्या-स्तथोक्ता रम्या मनोज्ञा निर्मलम् अम्बरं वसनं यस्याः पक्षे निर्मलम् अम्बरम् आकाशं यस्यां तथोक्ता कामिनी कस्य जनस्य स्वान्तं मनः एकान्तमदनातुरं नितान्तकामासक्तं न तनोति ? न करोति ? सर्व-स्यैवेत्यर्थः । अत्र कामिनीत्यस्य ककारं छित्वा तत्स्थाने यकारं दत्त्वा यामिनीति पाठे च्युतदत्ताक्षरत्वम् । एकान्तमदनोत्तरमिति पाठान्तरम् ॥ ७१ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्येण कृता
विदग्धमुखमण्डनव्याख्या समाप्ता ।

---

# रतिमञ्जरी ।



नत्वा सदाशिवं देवं नागराणां मनोहरम् ।
रचिता जयदेवेन सुबोधा रतिमञ्जरी ॥ १ ॥
रतिशास्त्रं कामशास्त्रं तस्य सारं समाहृतम् ।
सुप्रबन्धं सुसंक्षिप्तं जयदेवेन भण्यते ॥ २ ॥
पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥ ३ ॥
भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥ ४ ॥

नत्वेति । नागराणां नगरवासिनां मनोहरं सदाशिवं देवं नत्वा जयदेवेन सुबोधा रतिमञ्जरी रचिता । अनुष्टुब्वृत्तम् ॥१॥

रतिशास्त्रमिति । रतिशास्त्रं कामशास्त्रं तस्य रतिशास्त्रस्य समाहृतं संगृहीतं सुसंक्षिप्तं संक्षेपेण कथितं सुप्रबन्धं शोभनप्रस्तावसमन्वितं सारं जयदेवेन भण्यते कथ्यते । अनुष्टुब्वृत्तम् ॥२॥

पद्मिनीति । स्त्रीपुंसोः जातिलक्षणं प्रत्येकं चतुर्विधमिति ज्ञेयः तत्र स्त्रीजातिश्चतुर्विधा, पद्मिनी, चित्रिणी, शङ्खिनी तथा हस्तिनी । पुंजातिश्च तथा शशः, मृगः, वृषः, अश्वश्च । अनुष्टुब्वृत्तम् ॥ ३ ॥

भवतीति । कमले इव नेत्रे यस्याः तथोक्ता पद्मपलाशलोचना, नासिकायां क्षुद्रं रन्ध्रं छिद्रं यस्याः तथाविधा, अविरलं संश्लिष्ट-

भवति रतिरसज्ञा नातिखर्वा न दीर्घा
तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणसमेता चित्रिणी चित्रवक्त्रा॥ ५॥

दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा॥ ६॥

मित्यर्थः कुचयोः युग्मं यस्याः तथोक्ता, चारवः शोभनाः केशाः यस्याः तादृशी, कृशाङ्गी नातिस्थूला नातिकृशेति यावत्, मृदु कोमलं मधुरमित्यर्थः वचनं शोभनं शीलञ्च यस्याः तथोक्ता, गीतेषु वाद्येषु च अनुरक्ता अनुरागिणी, सकलासु ततुषु अङ्गेषु सुवेशो यस्याः तथोक्ता, पद्मस्येव गन्धो यस्याः तादृशी स्त्री पद्मिनी भवति। मालिनीवृत्तं, ननमययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्॥ ४॥

भवतीति। रतिरसज्ञा सुरतास्वादज्ञा नातिखर्वा नातिह्रस्वाकृतिः न दीर्घा न आयतदेहा, तिलकुसुममिव शोभना नासा यस्याः तथोक्ता, स्निग्धे नीलोत्पले इव अक्षिणी यस्याः तादृशी, घनाभ्यां सान्द्राभ्यां कठिनाभ्यां कुचाभ्याम् आढ्या युक्ता, सुन्दरी सुरूपा, बद्धशीला विनयवती, सकलैः गुणैः शिल्पदयादाक्षिण्यादिभिः समेता युक्ता, चित्रवक्त्रा मनोहरवदना स्त्री चित्रिणी भवति। मालिनीवृत्तम्॥ ५॥

दीर्घेति। या दीर्घातिदीर्घे अत्यायते इत्यर्थः नयने यस्याः तथोक्ता, कामोपभोगे सुरतव्यापारे रसिका रसवती, गुणैर्दयादिभिः शीलैः विनयादिभिश्च युक्ता, रेखात्रयेण विभूषितः अलङ्कृतः कण्ठदेशः यस्याः तादृशी, सम्भोगे यः केलिः क्रीडाविशेषः तत्र रसिका

स्थूलाधरा स्थूलनितम्बभागा

स्थूलाङ्गुली स्थूलकुचा सुशीला।

कामोत्सुका गाढरतिप्रिया या

नितान्तभोक्त्री करिणी मता सा ॥ ७ ॥

शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्।

वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥ ८ ॥

पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी।

शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी ॥ ९ ॥

बाला च तरुणी प्रौढा वृद्धा भवति नायिका।

विचक्षणा, वरसुन्दरी श्रेष्ठसुन्दरी, सा शङ्खिनी किलेतिप्रसिद्धौ शङ्खिनीति प्रसिद्धेत्यर्थः। वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति लक्षणात् ॥ ६ ॥

स्थूलेति। या स्थूलः अधरः यस्याः तथोक्ता, स्थूलः नितम्बभागः यस्याः सा, स्थूला अङ्गुलयः यस्याः तथोक्ता, स्थूलौ कुचौ स्तनौ यस्याः तथाभूता, सुशीला विनयवती, कामोत्सुका भोगाभिलाषिणी, गाढा दृढा रतिः सुरतं प्रिया यस्याः तथाविधा तथा नितान्तभोक्त्री सततभोगरता, सा करिणी हस्तिनी मता। उपजातिवृत्तम् ॥ ७ ॥

शशके इति। पद्मिनी शशके पुंसि तुष्टा, चित्रिणी मृगं मृगाख्यं पुरुषं रमते रमणार्थं कामयते इत्यर्थः। शङ्खिनी वृषभे तुष्टा, हस्तिनी हयम् अश्वाख्यं पुरुषं रमते। अनुष्टुब्वृत्तम् ॥ ८ ॥

पद्मिनीति। पद्मिनी पद्मगन्धा पद्मगन्धवती, चित्रिणी मीनगन्धा मत्स्यगन्धवती, शङ्खिनी क्षारगन्धा लवणगन्धवती, हस्तिनी मदगन्धा मदगन्धवती भवतीति शेषः। अनुष्टुब्वृत्तम् ॥९॥

बालेति। नायिका बाला मुग्धा, तरुणी युवतिः प्रौढा

गुणयोगेन रक्तस्था नारी वश्या भवेत्तदा ॥ १० ॥
आ षोडशाद् भवेद् बाला तरुणी त्रिंशता मता ।
पञ्चपञ्चाशता प्रौढ़ा भवेद् वृद्धा ततः परम् ॥ ११ ॥
फलमूलादिभिर्बाला तरुणी रतियोगतः ।
प्रमदानादिभिः प्रौढ़ा वृद्धा च दृढ़ताड़नात् ॥ १२ ॥
बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी ।
प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥ १३ ॥

प्रगल्भा, वृद्धा चेति चतुर्विधेति शेषः । गुणयोगेन वश्याः बाह्यो गुणः शोभावेशादिः तद्योगेन तदनुसारेण रक्तस्था, तदा नारी वश्या भवेत् । अनुष्टुब्वृत्तम् ॥ १० ॥

आ षोडशादिति । आ षोडशात् षोडशवर्षपर्यन्तम् अभिविधावाङ् । केचित्तु मर्यादायामाङित्युक्त्वा पञ्चदशवर्षपर्यन्तमिति व्याचख्युः । बाला भवेत्, त्रिंशता षोडशादारभ्य त्रिंशद्वर्षपर्यन्तमित्यर्थः तरुणी मता, पञ्चपञ्चाशता त्रिंशदारभ्य पञ्चपञ्चाशद्वर्षपर्यन्तवयस्केत्यर्थः प्रौढ़ा भवेत्, ततः परं वृद्धा भवतीति शेषः । अनुष्टुब्वृत्तम् ॥ ११ ॥

फलेति । बाला मुग्धा स्त्री फलमूलादिभिः, तरुणी रतियोगतः सुरतव्यापारात्, प्रौढ़ा प्रमदानादिभिः, वृद्धा दृढ़ताड़नात् सम्भोगव्यापारे इति भावः वश्या भवतीति शेषः । अनुष्टुब्वृत्तम् ॥१२॥

बालेति । बाला स्त्री प्राणदा प्राणदायिनी प्रोक्ता कथिता बालासम्भोगस्यायुष्करत्वादिति भावः । तरुणी प्राणहारिणी, तरुणीसम्भोगस्य बलक्षयकरत्वादिति भावः । प्रौढ़ा वृद्धत्वं करोति, प्रौढ़ासम्भोगस्य जराजनकत्वादिति भावः । वृद्धा मरणम् आदिशेत् जनयेत्, वृद्धासम्भोगस्य मृत्युजनकत्वादिति भावः । अनुष्टुब्वृत्तम् ॥१३॥

अङ्गुष्ठे चरणे च गुल्फनिलये जानुद्वये वस्तिके
नाभौ वक्षसि अक्षयोर्निगदिता कण्ठे कपोलेऽधरे।
नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवा-
मूर्द्धाधश्चलनक्रमेण कथिता चान्द्री कला पक्षयोः ॥१४॥
सीमन्ते नयनेऽधरे च गलके कक्षस्तटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गण्डके।
गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धिक्षीणतया समं शशिकला पक्षद्वये योषिताम् ॥१५॥
शुक्लपक्षे वसेद्वामे पादाङ्गुलिकनिष्ठके।
शुक्लप्रतिपदादौ च कृष्णे चाधः प्रलम्बते ॥ १६ ॥

अङ्गुष्ठे इति। पक्षयोः शुक्लकृष्णयोः कथिता निरूपिता चान्द्री कला चन्द्रसम्बन्धी कामविशेषः ऊर्द्धाधश्चलनक्रमेण शुक्ले ऊर्द्ध्वचलनेन कृष्णे अधश्चलनेनेत्यर्थः वामभ्रुवां रमणीनाम् अङ्गुष्ठे, चरणे, गुल्फनिलये गुल्फस्थाने, जानुद्वये, वस्तिके नाभ्यधोभागे, नाभौ, वक्षसि, अक्षयोः, कण्ठे, कपोले गण्डे, अधरे, नेत्रे, कर्णयुगे, ललाटफलके, मौलौ शिरसि च निगदिता उक्ता। शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥१४॥

सीमन्त इति। पक्षद्वये शुक्लकृष्णयोः असौ शशिकला चन्द्रकला वृद्धिक्षीणतया शुक्ले वृद्ध्या कृष्णे क्षीणतया च समं समभावेनेत्यर्थः योषितां नारीणां सीमन्ते केशे, नयने, अधरे, गलके कण्ठे, वक्षस्तटे उरसि, चूचुके कुचाग्रे, नाभौ, श्रोणितटे नितम्बे, मनोभवगृहे योनौ, जङ्घातटे, गण्डके कपोले, गुल्फे, पादतले चरणतले, तदङ्गुलितटे तस्य चरणस्य अङ्गुलिदेशे, अङ्गुष्ठे वृद्धाङ्गुलौ च तिष्ठति। शार्दूलविक्रीडितं वृत्तम् ॥१५॥

शुक्लेति। [illegible] वामे वामभागे योषितामिति शेषः, शुक्ल-

पुंसः सव्ये स्त्रिया वामे शुक्ले कृष्णे विपर्य्ययः ।
एतानि कामस्थानानि ज्ञेयानि नागरैः सदा ॥ १७ ॥
बलयुक्ता यदा नारी विपरीतरतिर्भवेत् ।
सञ्चाल्य तु कलास्थानं रन्तव्या कामिनी तदा ॥ १८ ॥
नेत्रे कण्ठे कपोले च हृदि पार्श्वद्वयेऽपि च ।
ग्रीवायां नाभिदेशे च कामी चुम्बति कामिनीम् ॥१९॥
मुखे जङ्घे नितम्बे च जघने मदनालये ।
स्तनयुग्मे सदाप्रीतिः कामी चुम्बति कामिनीम् ॥२०॥
प्रेम्णा स्त्रियं समालिङ्ग्य शीत्कारं मुखचुम्बनम् ।

प्रतिपदादौ च पादाङ्गुलिकनिष्ठके वसेत् शशिकलेति शेषः, कृष्णे कृष्णपक्षे अधः प्रलम्बते च । अनुष्टुब्वृत्तम् ॥१६॥

पुंस इति । शुक्ले शुक्लपक्षे पुंसः पुरुषस्य सव्ये दक्षिणे, स्त्रियाः वामे शशिकला वसेदिति शेषः, कृष्णे विपर्य्ययः पुंसः वामे, स्त्रियाः दक्षिणे शशिकला वसेदित्यर्थः । एतानि पूर्वोक्तानि सीमन्तादीनि कामस्थानानि नागरैः कामिभिः सदा ज्ञेयानि वेद्यानि । अनुष्टुब्वृत्तम् ॥१७॥

बलेति । यदा बलयुक्ता बलवती नारी विपरीतरतिः वैपरीत्येन रतं कुर्वाणा पुरुषायितमाचरन्तीत्यर्थः भवेत्, तदा कलास्थानं क्रीडास्थानं भगमित्यर्थः सञ्चाल्य सम्मर्द्य सदा कामिनी रन्तव्या ॥१८॥

नेत्रे इति । कामी कामिनीं नेत्रे कण्ठे कपोले हृदि पार्श्वद्वये ग्रीवायां नाभिदेशे च चुम्बति । अनुष्टुब्वृत्तम् ॥१९॥

मुखे इति । सदाप्रीतिः सर्वदानुरागी कामी कामिनीं मुखे जङ्घे नितम्बे जघने मदनालये योनौ स्तनयुग्मे च चुम्बति । अनुष्टुब्वृत्तम् ॥ २० ॥

प्रेम्णेति । प्रेम्णा प्रणयेन स्त्रियं समालिङ्ग्य समाश्लिष्य शीत्-

कण्ठासक्तं पुनः कृत्वा गाढालिङ्गनमाचरेत् ॥ २१ ॥
विघृत्य हस्तौ जघनोपविष्टः शीत्कृत्य वक्त्रे च मुदा प्रचुम्ब्य ।
भगे च लिङ्गं स्तनमर्दनञ्च दत्त्वापि कृत्वा प्ररमेच्च कामी ॥२२॥
केतक्यग्रनखं कृत्वा नखांस्त्रीन् पञ्च चैव वा ।
पृष्ठे च जघने योनौ दत्त्वा कामी रमेत् स्त्रियम् ॥२३॥
नखरोमाञ्चितं कृत्वा दन्तेनाधरपीडनम् ।
ग्रीवामाकृष्य यत्नेन योनौ लिङ्गेन ताडनम् ॥ २४ ॥
लिङ्गप्रवेशनं कृत्वा धृत्वा गाढप्रयोगतः ।
पार्श्वद्वयेन सम्पीड्य निष्कृपं ताडयेद्भगम् ॥ २५ ॥

कारं सुखचुम्बनं कृत्वा पुनः कण्ठासक्तं गाढालिङ्गनं कण्ठमासज्य दृढमालिङ्गनम् आचरेत् । अनुष्टुब्वृत्तम् ॥ २१ ॥

विघृत्येति । कामी हस्तौ विघृत्य गृहीत्वा कामिन्या इति शेषः जघने उपविष्टः सन् शीत्कृत्य शीत्कारं कृत्वा मुदा आनन्देन वक्त्रे वदने च प्रचुम्ब्य भगे लिङ्गं दत्त्वा स्तनमर्दनञ्च कृत्वा प्ररमेच्च प्रकर्षेण रमणं कुर्य्याच्च । उपजातिवृत्तम् ॥ २२ ॥

केतकीति । कामी केतक्या अग्रमिव नखं कृत्वा पृष्ठे जघने योनौ च त्रीन् पञ्च वा नखान् दत्त्वा स्त्रियं रमेत् । अनुष्टब्वृत्तम् ॥ २३ ॥

नखेति । नखेन नखक्षतेन रोमाञ्चितं लोमहर्षं दन्तेन अधर-पीडनं दन्तच्छददंशनं कृत्वा ग्रीवाम् आकृष्य यत्नेन लिङ्गेन योनौ ताडनं कर्त्तव्यमिति शेषः ॥ २४ ॥

लिङ्गेति । गाढप्रयोगतः दृढप्रयोगेन धृत्वा स्त्रियमिति शेषः लिङ्गप्रवेशनं भगे इति शेषः कृत्वा पार्श्वद्वयेन सम्पीड्य समाश्लिष्य निष्कृपं निष्ठुरं यथा तथा भगं योनिं ताडयेत् ॥ २५ ॥

समालिङ्ग्य स्त्रियं गाढ़ं स्तनयुग्मे च मर्दनम् ।
योनौ नाभौ च संमर्द्य निष्ठुरं लिङ्गताड़नम् ॥ २६ ॥
केशं करेण संगृह्य दृढ़ं सन्ताड़येद्भगम् ।
वदने चुम्बनं कृत्वा भगं हस्तेन मर्दयेत् ॥ २७ ॥
कुचं करेण संमर्द्य पीड़येदधरं दृढम् ।
रमणं पद्मबन्धेन पद्मिनीरतिमादिशेत् ॥ २८ ॥
सीत्कारं चुम्बनं पीड़ां गले हस्ते च चुम्बनम् ।
चणे चणे स्तने हस्तं चित्रिणीरतिमादिशेत् ॥ २९ ॥
स्त्रीपुंसयो स्तथान्योन्यं भगे लिङ्गे च चुम्बनम् ।
रमणन्तु तथा गाढ़ं शङ्खिनीरतिमादिशेत् ॥ ३० ॥

समालिङ्ग्येति । स्त्रियं गाढ़ं समालिङ्ग्य स्तनयुग्मे मर्दनं तथा योनौ नाभौ च संमर्द्य निष्ठुरं यथा तथा लिङ्गेन ताड़नं कर्त्तव्यमिति शेषः ॥ २६ ॥

केशमिति । करेण केशं संगृह्य भगं दृढ़ं यथा तथा सन्ताड़येत् । वदने चुम्बनं कृत्वा हस्तेन भगं मर्दयेत् ॥ २७ ॥

कुचमिति । करेण हस्तेन कुचं स्तनं समर्द्य अधरं दृढ़ं पीड़येत् दशेत् । पद्मबन्धेन रमणं पद्मिन्या रतिम् आदिशेत् कथयेत् ॥ २८ ॥

सीत्कारमिति । सीत्कारं, चुम्बनं, गले कण्ठे पीड़ाम् आश्लेषमित्यर्थः, हस्ते चुम्बनं तथा चणे चणे स्तने हस्तं चित्रिणीरतिं चित्रिण्याः रतिम् आदिशेत् कथयेत् ॥ २९ ॥

स्त्रीति । स्त्रीपुंसयोः अन्योन्यं परस्परं भगे लिङ्गे च चुम्बनं तथा गाढ़ं रमणं शङ्खिन्याः रतिम् आदिशेत् कथयेत् ॥ ३० ॥

वेधं करेण संरुद्ध्य सुदृढं गजबन्धनम् ।
भगं करेण संताड्य हस्तिनीरतिमादिशेत् ॥ २१ ॥
कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुगन्धि च ।
अलोमकं सुविस्तीर्णं पञ्चैतद् भगमुत्तमम् ॥ २२ ॥
शीतलं निम्नमत्युच्चं गोजिह्वासदृशं परम् ।
इत्युक्तं कामशास्त्रज्ञैर्भगदोषचतुष्टयम् ॥ २३ ॥
मुषलं वंशकरीरं द्विविधं लिङ्गलक्षणम् ।
स्थूलं मुषलमित्युक्तं दीर्घं वंशकरीरकम् ॥ २४ ॥
स्त्रीजितो गायकश्चैव नारीसङ्गपरः सुखी ।
सकुङ्कुलशरीरश्च स श्रीमान् शशको मतः ॥ २५ ॥

वेधमिति । करेण वेधं संरुद्ध्य पुनः करेण भगं सन्ताड्य सम्मोद्य सुदृढं गजबन्धनं हस्तिन्याः रतिम् आदिशेत् ॥ २१ ॥

कूर्मेति । कूर्मस्येव पृष्ठं यस्य तत् गजस्य स्कन्ध इव उन्नतमिति शेषः गजस्कन्धं पद्मगन्धम् अतएव सुगन्धि शोभनगन्धवत् अलोमकं अल्पलोमयुतं सुविस्तीर्णं सुविशालञ्च एतत् पञ्च पञ्चविधमित्यर्थः उत्तमं भगम् आहुरिति शेषः ॥ २२ ॥

शीतलमिति । शीतलं सततशीतं निम्नं नतम् अत्युच्चम् अत्युन्नतं परम् अन्यत् गोजिह्वासदृशम् इति हेतोः कामशास्त्रज्ञैः भगस्य दोषचतुष्टयं शीतत्वादिदोषचतुष्कम् उक्तम् ॥ २३ ॥

मुषलमिति । मुषलं वंशकरीरञ्च इति द्विविधं लिङ्गस्य लक्षणम् । तत्र स्थूलं लिङ्गं मुषलं दीर्घं लिङ्गं वंशकरीरकम् उक्तम् ॥ २४ ॥

स्त्रीति । स्त्रीजितः स्त्रीवशः गायकः सङ्गीतपटुः नारीसङ्गपरः तत्परः सततस्त्रीसङ्गकाम इत्यर्थः सुखी सुखासक्तः सकुङ्कुलं शरीरं लिङ्गावयवः यस्य तादृशः श्रीमान् सश्रीकः पुमानिति शेषः शशकः मतः कथितः ॥ २५ ॥

श्रेष्ठस्तु धार्म्मिकः श्रीमान् सत्यवादी प्रियंवदः ।
अष्टाङ्गुलशरीरश्च रूपयुक्तो मृगो मतः ॥ ३६ ॥
उपकारपरो नित्यं स्त्रीजितः श्लेषणः सुखी ।
दशाङ्गुलशरीरश्च मनस्वी वृषभो मतः ॥ ३७ ॥
काष्ठतुल्यवपुर्धृष्टो मिथ्यावाक्यश्च निर्भयः ।
द्वादशाङ्गुललिङ्गश्च दरिद्रश्च हयो मतः ॥ ३८ ॥
न रमन्ते यदा नार्य्यस्तुष्टा वा रमते यथा ।
नानाबन्धांस्तथा वक्ष्ये रन्तव्याः कामिभिः स्त्रियः ॥३९॥
पद्मासनो नागपदो लतावेष्टोऽर्द्धसम्पुटः ।

श्रेष्ठ इति । श्रेष्ठः सर्व्वजनप्रशंसनीयः धार्म्मिकः धर्म्मशीलः श्रीमान् धनसम्पन्नः सत्यवादी प्रियंवदः मधुरभाषी अष्टाङ्गुलं शरीरं लिङ्गस्येति भावः यस्य तादृशः रूपयुक्तः सुदर्शन इत्यर्थः पुमानिति शेषः मृगः मतः कथितः ॥ ३६ ॥

उपकारेति । उपकारपरः परोपकारनिरतः नित्यं सततं स्त्रीजितः स्त्रैणः श्लेषणः सौम्यस्वभावः सुखी भोगसुखासक्तः दशाङ्गुलं शरीरं लिङ्गस्येति भावः यस्य तथाभूतः मनस्वी प्रशस्तमनाः पुमान् वृषभः मतः कथितः ॥ ३७ ॥

काष्ठेति । काष्ठेन तुल्यं वपुः शरीरं यस्य तथाभूतः कठिनाकृतिरित्यर्थः धृष्टः प्रगल्भः मिथ्यावाक्यः मिथ्यावादी निर्भयः द्वादशाङ्गुलं लिङ्गं यस्य तथाभूतः दरिद्रः निर्धनः पुमान् हयः मतः कथितः ॥ ३८ ॥

नेति । यदा नार्य्यः न रमन्ते न रतिं कर्त्तुम् इच्छन्ति तदा तुष्टा प्रीता सती यथा रमते, यैरुपायैः कामिभिः स्त्रियः रन्तव्याश्च तथा बन्धान् उपायविशेषान् वक्ष्ये कथयिष्यामि ॥ ३९ ॥

तांश्च बन्धानाह द्वाभ्यां पद्मासन इत्येताभ्याम् । पद्मासनः

कुलिशः सुन्दरश्चैव तथा केशर एव च ॥ ४० ॥
हिल्लोलो नरसिंहोऽपि विपरीतस्तथापरः।
क्षुद्वारो धेनुकश्चैव उत्कण्ठश्च ततः परः।
सिंहासनो रतिनागो विद्याधरस्तु षोडश ॥ ४१ ॥
हस्ताभ्याञ्च समालिङ्ग्य नारीं पद्मासनोपरि।
रमेद्गाढ़ं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥ ४२ ॥
पादौ स्कन्धयुगे हस्तौ क्षिपेल्लिङ्गं भगे लघु।
प्ररमेत्कामुको नारीं बन्धो नागपदो मतः ॥ ४३ ॥
बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा रमेत् स्त्रियम्।
लघु लिङ्गं ताड़येद्योनौ लतावेष्टोऽयमुच्यते ॥ ४४ ॥
स्त्रीपादावन्तरीक्षे तु किञ्चिद्भूमौ च जानुनी।

नागपदः लतावेष्टः अर्द्धसम्पुटः कुलिशः सुन्दरः केशरः हिल्लोलः नरसिंहः विपरीतः क्षुद्वारः धेनुकः उत्कण्ठः सिंहासनः रतिनागः विद्याधरः एते षोड़श बन्धा इति शेषः ॥ ४० ॥ ४१ ॥

हस्ताभ्यामिति। पद्ममिव आसनं पद्मासनं तदाख्य उपवेशनविशेषः तस्य उपरि हस्ताभ्यां नारीं समालिङ्ग्य गाढ़ं समाकृष्य रमेत् अयं बन्धः रमणप्रकार इति यावत् पद्मसंज्ञकः पद्मासनाख्यः ॥४२॥

पादावित्ति। स्कन्धयुगे स्कन्धद्वये कामिन्या इति शेषः पादौ चरणौ हस्तौ च दत्त्वेति शेषः भगे योनौ लघु क्षिप्रं लिङ्गं क्षिपेत् प्रवेशयेत्, इत्थं कामुकः नारीं यत् प्ररमेत् प्रकर्षेण रमेत्, अयं बन्धः नागपदः मतः कथितः ॥ ४३ ॥

बाहुभ्यामिति। बाहुभ्यां पादयुग्माभ्यां पादाभ्याञ्च स्त्रियं वेष्टयित्वा समाकृष्य स्त्रियं रमेत्, लघु द्रुतं योनौ लिङ्गं ताड़येत् प्रवेशयेत्, अयं बन्धः लतावेष्टः उच्यते ॥ ४४ ॥

स्त्रीति। अन्तरीक्षे ऊर्द्धमित्यर्थः स्त्रियाः पादौ भूमौ च

स्तनयोर्मर्दनं पीडा बन्धोऽयमर्कसम्पुटः ॥ ४५ ॥
स्त्रीपादद्वयमास्फाल्य हठाल्लिङ्गस्य ताडनम् ।
योनिमापीडयेत्कामी बन्धः कुलिशसंज्ञकः ॥ ४६ ॥
नारीपादद्वयं स्वामी धारयेदूर्द्ध्वदेशतः ।
कुचौ धृत्वा पिबेद्वक्त्रं बन्धोऽयं रतिसुन्दरः ॥ ४७ ॥
स्त्रिया अङ्के समापीड्य दोर्भ्यां गात्रस्य मर्दनम् ।
पुनः प्रपीडयेद्योनिं बन्धः केशरसंज्ञकः ॥४८॥
हृदि कृत्वा स्त्रियाः पादौ कराभ्यां धारयेत् नरौ ।
यथेष्टं ताडयेद् योनिं बन्धो हिल्लोलसंज्ञकः ॥ ४९ ॥
पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।

जानुनी निजे इति शेषः किञ्चित् कृत्वेति शेषः स्तनयोर्मर्दनं पीडा पीडनं सम्प्रेषणमिति यावत्, अयं बन्धः अर्कसम्पुटः ॥ ४५ ॥

स्त्रीति । स्त्रियाः पादद्वयम् आस्फाल्य संमर्द्य हठात् सहसा लिङ्गस्य कर्त्तरि षष्ठी लिङ्गेनेत्यर्थः ताडनं कृत्वेति शेषः कामी वह योनिम् आपीडयेत् संमर्दयेत्, अयं बन्धः कुलिशसंज्ञकः कुलिशाख्यः ॥ ४६ ॥

नारीति । स्वामी नार्य्याः पादद्वयम् ऊर्द्ध्वदेशतः उपरि स्वस्कन्धे इति शेषः धारयेत्, ततश्च कुचौ धृत्वा वक्त्रं वदनं पिबेत्, अयं बन्धः रतौ रमणे सुन्दरः तदाख्यः ॥ ४७ ॥

स्त्रिया इति । स्त्रियाः अङ्के समापीड्य दोर्भ्यां भुजाभ्यां गात्रस्य मर्दनं कृत्वेति शेषः पुनः योनिं प्रपीडयेत्, अयं बन्धः केशरसंज्ञकः केशराख्यः ॥ ४८ ॥

हृदीति । स्त्रियाः पादौ हृदि कृत्वा कराभ्यां हस्ताभ्यां नरौ स्त्रीपुंसौ स्त्रिया इति शेषः धारयेत्, ततश्च योनिं यथेष्टं यथाकामं ताडयेत्, अयं बन्धः हिल्लोलसंज्ञकः हिल्लोलाख्यः ॥ ४९ ॥

पादाविति । पादौ सम्पीड्य संमर्द्य स्त्रियाः गाढं वेशनं

हस्तयोर्वेष्टनं गाढं बन्धो नृसिंहसंज्ञकः॥ ५० ॥
पादमेकमुरः कृत्वा द्वितीयं कटिसंस्थितम्।
नारीञ्च सुरमेत्कामी विपरीतस्तु बन्धकः॥ ५१ ॥
पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताडयेत्।
बाहुभ्यां ताडयेद्गाढं चुद्गारो बन्ध एव सः॥ ५२ ॥
सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत् पुनः।
यल्लिङ्गं चालयेद् योनौ बन्धोऽयं धेनुकः स्मृतः॥ ५३ ॥
नारीपादौ च हस्तेन धारयेद् गलके पुनः।
स्तनार्पितकरो कामी बन्धश्चोत्कण्ठसंज्ञकः॥ ५४ ॥
स्वयं जङ्घाद्वयं बाह्वौ कृत्वा योषित्पद्द्वयम्।

कृत्वेति शेषः योनौ हठात् लिङ्गस्य प्रवेशनम्, अयं बन्धः नृसिंहसंज्ञः नृसिंहाख्यः॥ ५० ॥

पादमिति। एकं पादम् उरः वक्षोदेशे द्वितीयं पादं कटिसंस्थितं स्त्रिया इति शेषः कृत्वा कामी यत् नारीं सुरमेत् सुखेन रमेत्, अयं बन्ध एव बन्धकः विपरीतः॥ ५१ ॥

पार्श्वोपरीति। पार्श्वयोः उपरि पदौ कृत्वा लिङ्गेन योनौ ताडयेत् बाहुभ्याञ्च गाढं ताडयेत्, अयं बन्धः चुद्गारः कथित इति शेषः॥ ५२ ॥

सुप्तामिति। सुप्तां निद्रितां स्त्रियं समालिङ्ग्य स्वयं सुप्तः स्त्रियाः पार्श्वे सम्मीलितनयनः सन् रमेत् पुनः पुनः योनौ लिङ्गं चालयेत्, अयं बन्धः धेनुकः स्मृतः॥ ५३ ॥

नारीति। कामी स्तनयोः अर्पितकरः दत्तहस्तः सन् नार्य्याः पादौ तथा गलके कण्ठे हस्तेन धारयेत्, अयं बन्धः उत्कण्ठसंज्ञकः उत्कण्ठाख्यः॥ ५४ ॥

स्वयमिति। कामी जनः स्वयं जङ्घाद्वयं बाह्वौ कृत्वा योषितः

स्तनौ धृत्वा रमेत् कामी बन्धः सिंहासनो मतः ॥५५॥
पीड़येदूरुयुग्मेन कामुकः कामिनीं यदि ।
रतिनागः समाख्यातः कामिनीनां मनोहरः ॥५६॥
नार्य्याश्चोरुयुगं धृत्वा कराभ्यां ताड़येत् पुनः ।
रमयेन्निर्भरं कामी बन्धो विद्याधरो मतः ॥ ५७ ॥
स्त्रियमानीय यत्नेन विधृत्य चरणद्वयम् ।
वशं नयति यः कामी रतिशास्त्रविचक्षणः ॥ ५८ ॥
रतिशास्त्रं समाकर्ण्य बन्धान् पद्मादिषोड़श ।
नानाविधरतिं कुर्य्यात् कामिनीं कामुको जनः ॥५९॥
सर्व्वशास्त्रार्थविज्ञेन जयदेवेन धीमता ।

कान्तायाः पदद्वयं स्तनौ च धृत्वा यत् रमेत्, अयं बन्धः सिंहासनः मतः ॥ ५५ ॥

पीड़येदिति । यदि कामुकः ऊरुयुग्मेन कामिनीं पीड़येत् तदासौ बन्धः कामिनीनां मनोहरः रतिनागः समाख्यातः कथितः ॥५६॥

नार्य्या इति । कामी जनः नार्य्याः ऊरुयुगं कराभ्यां धृत्वा पुनः ताड़येत् प्रहरेत् तथा निर्भरं गाढ़ं रमयेत्, अयं बन्धः विद्याधरः मतः कथितः ॥ ५७ ॥

स्त्रियमिति । यः कामी यत्नेन स्त्रियम् आनीय चरणद्वयं तदीयमिति शेषः विधृत्य उत्तोल्य वशं नयति प्रापयति, स रति-शास्त्रेषु विचक्षणः पण्डितः ॥ ५८ ॥

रतीति । कामुको जनः रतिशास्त्रं तथा पद्मादिषोड़श बन्धान् समाकर्ण्य सम्यक् विदित्वेति भावः कामिनीं नानाविधा रतिः रमणं यस्यां तादृशीं कुर्य्यात् नानाप्रकारेण रमयेदित्यर्थः ॥ ५९ ॥

मञ्जरी रतिशास्त्रस्य कृता नीता समाप्ततम् ॥ ६० ॥

इति श्रीजयदेवेन विरचिता रतिमञ्जरी समाप्ता ।

---

## जगन्नाथाष्टकम् ।

---

कदाचित् कालिन्दीतटविपिनसङ्गीतकपरो
मुदाभिरीनारीवदनकमलास्वादमधुपः ।
रमाशम्भुब्रह्मामरपतिगणेशार्च्चितपदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ १ ॥
भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितले
दुकूलं नेत्रान्ते सहचरिकटाक्षेण विदधत् ।

सर्वेति । सर्वशास्त्रार्थविज्ञेन धीमता जयदेवेन रतिशास्त्रस्य मञ्जरी कृता समाप्ततां नीता च ॥ ६० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
रतिमञ्जरी व्याख्या समाप्ता ।

---

कदाचिदिति । कालिन्द्याः यमुनायाः तटेषु यत् विपिनं वनं वृन्दावनमिति यावत् तस्मिन् यत् सङ्गीतकं तत्परः, मुदा आनन्देन आभीरीनारीणां गोपाङ्गनानां वदनान्येव कमलानि तेषाम् आस्वादे मधुपः भ्रमरः, रमया लक्ष्म्या शम्भुना हरेण ब्रह्मणा विधात्रा अमरपतिना देवेन्द्रेण गणेशेन च अर्च्चिते पूजिते पदे यस्य तथाभूतः, जगन्नाथस्वामी प्रभुः जगत्पतिः कदाचित् मे मम नयनपथगामी नेत्रगोचरो भवतु । शिखरिणीछन्दसस्मिन् प्रबन्धे । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ १ ॥

भुजे इति । सव्ये दक्षिणे भुजे वेणुं, शिरसि शिखिपिच्छं

सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ २ ॥
महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्ते सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ३ ॥
कृपापारावारः सजलजलदश्रेणिरुचिरो
रमावाणीरामस्फुरदमलपद्मेक्षणमुखः ।
सुरेन्द्रैराराध्यः श्रुतिमुखगणोद्गीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ४ ॥

मयूरपिच्छं, कटितटे दुकूलं पीतं वसनमिति यावत्, नेत्रान्ते नयनप्रान्ते सञ्चरतीति सञ्चारि यत् कटाक्षं तेन विदधत् विशेषेण दधानः सदा सततं श्रीमति वृन्दावने या वसतिः अवस्थानं तया लीलापरिचयः क्रीड़ापरिचयः यस्य तादृशः, जगन्नाथस्वामीत्यादि ॥२॥

महाम्भोधेरिति । महाम्भोधेः महासमुद्रस्य तीरे तटे कनकरुचिरे काञ्चनोज्ज्वले नीलशिखरे नीलाचलशिरसि प्रासादान्ते मन्दिरमध्ये बलिना बलवता सहजेन सोदरेण बलभद्रेण सह वसन्, सुभद्रा मध्यस्था यस्य तादृशः उभयोर्मध्ये सन्निवेशितसुभद्र इत्यर्थः, सकलानां सुराणां देवानां सेवायाः अवसरं ददातीति तथोक्तः, जगन्नाथस्वामीत्यादि ॥ ३ ॥

कृपेति । कृपापारावारः दयासागरः, सजलानां जलपूर्णानां जलदानां मेघानां या श्रेणिः तद्वत् रुचिरः मनोहरः, रमया लक्ष्म्या वाण्या सरस्वत्या रामेण बलभद्रेण च स्फुरन्ति अमलानि निर्मलानि पद्मानीव ईक्षणानि नयनानि यत्र तादृशं मुखं यस्य तथाभूतः, सुरेन्द्रैः इन्द्रादिभिः आराध्यः सेव्यः, श्रुतिमुखगणैः वेदमुख-

परं ब्रह्मापीतत्कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रमानन्दी राधासरसवपुरानन्दनसुखी
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ५ ॥
रथारूढ़ो गच्छन् पथि मिलितभूदेवपटल-
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसदयो
जगन्नाथस्वामी नयनपथगामी भवतु मे । ६ ॥
न चेच्छेयं राज्यं न च कनकमाणिक्यविभवं
न याचेऽहं रम्यां सकलजनकाम्यां वरवधूम् ।

वर्णैः उच्चैःस्वरेण गीतं कीर्त्तितं चरितं यस्य यथाभूतः, जगन्नाथ-स्वामीत्यादि ॥ ४ ॥

परमिति । परं ब्रह्मापि परमात्मापि ईषत् कुवलयदले इव नीलोत्पलपत्रे इव उत्फुल्ले विकसिते नयने यस्य तथोक्तः, नीलाद्रौ नीलाचले निवासी, अनन्तस्य शेषनागस्य शिरसि निहितचरणः अर्पितपदः, रमानन्दी लक्ष्म्याः आनन्ददायी, राधयाः सरसेन प्रेम-पूर्णेन वपुषा शरीरेण यत् आनन्दनं क्रीड़नं तेन सुखी, जगन्नाथ-स्वामीत्यादि ॥ ५ ॥

रथारूढ़ इति । रथारूढ़ः रथमास्थितः, पथि गच्छन् मिलि-तानां सङ्गतानां भूदेवपटलानां विप्रवर्गाणां स्तुतिप्रादुर्भावं स्तवावलीं प्रतिपदं पदे पदे उपाकर्ण्य श्रुत्वा सदयः सानुकम्पः, दयासिन्धुः कृपासागरः, सकलजगतां बन्धुः, सिन्धुसदयः समुद्रं प्रति दयावान्, जगन्नाथस्वामीत्यादि । ६ ॥

न चेति । अहं राज्यं न च कनकमाणिक्यविभवं स्वर्णरत्न-सम्पदं न च इच्छेयं, रम्यां सकलजनकाम्यां सर्वजनस्य ईप्सीयां वरवधूम्

सदा काले कामः प्रथमपठितोद्गीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ७ ॥
हर त्वं संसारं द्रुततरमसारं सुरपते !
वर त्वं भोगीशं सततमपरं नीरजपते ! ।
अहो दीनानाथो निहितमचले निश्चितमिदं
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८ ॥
जगन्नाथाष्टकं पुण्यं यः पठेत् प्रयतः शुचिः ।
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ॥ ९ ॥

इति जगन्नाथाष्टकं सम्पूर्णम् ।

उत्तमां कान्तां न च याचे नैव प्रार्थये, सदा काले सर्वस्मिन् समये कामः अभिलाषः ममेति शेषः यत् प्रथमपठितम् उद्गीतम् उच्चै-र्गीतं चरितं यस्य तथाभूतः, जगन्नाथस्वामीत्यादि ॥७॥

हर त्वमिति । हे सुरपते ! देवेन्द्र ! त्वम् असारं संसारं द्रुततरम् अतिशीघ्रं हर नाशय, हे नीरजपते ! पद्मिनीकान्त ! त्वं सततम् अपरम् अन्यं भोगीशं धनवन्तं वर कृतिस्थैः न मम तत्र वाञ्छनेति भावः । अहो खेदे अहं दीनानाथः दीनः दरिद्रः अनाथः अनाश्रयश्च अचले नीलपर्वते निश्चितम् इदं निहितम् आश्रितं मयेति शेषः । यद्वा अहो दीनाः जनाः ! इदम् अचलं स्थिरं नयनमिति शेषः निश्चितं निहितम् एकाग्रतामापादितं जगन्नाथदर्शनार्थमिति भावः । अतः नाथः जगन्नाथस्वामीत्यादि ॥८॥

जगन्नाथेति । यः प्रयतः संयतः शुचिः सन् पुण्यं पवित्रं जगन्नाथाष्टकं पठेत् स सर्वपापेभ्यः विशुद्धः आत्मा यस्य तादृशः सन् विष्णुलोकं गच्छति । अनुष्टुब्वृत्तम् ॥९॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
जगन्नाथाष्टकव्याख्या समाप्ता ।

# यमुनाष्टकम् ।

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिपिष्टपा नृलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ १ ॥

मलापहारिवारिपूरिभूरिमण्डितामृता
भृशप्रपातकप्रपञ्चनातिपण्डितानिशा ।
सुनन्दनन्दिनाङ्गरागरागरञ्जितोदका
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ २ ॥

मुरारीति । मुरारेः कृष्णस्य कायवत् मूर्त्तिवत कालिम्ना श्यामत्वेन ललामं सुन्दरं यत् वारि जलं तस्य धारिणी, तृणीकृतं तुच्छीकृतं त्रिपिष्टपं सुरलोकः यया तथोक्ता, नृलोकस्य मानवलोकस्य शोकहारिणी दुःखनाशिनी, मनसः अनुकूलं रमणीयं यत् कूलं तटः तस्मिन् यः कुञ्जपुञ्जः लतादिपिहितोदरस्थानसमूहः तेन धूतः अपनीतः दुर्मदः दुरहङ्कारः यया सा, कलिन्दस्य सूर्य्यस्य नन्दिनी यमुना सदा नः अस्माकं मनोमलं मानसं पापं धुनोतु नाशयतु । अस्मिन् प्रबन्धे पञ्चचामरं वृत्तं, प्रमाणिका पदद्वयं वदन्ति पञ्चचामरमिति, प्रमाणिका जरौ लगाविति च तल्लक्षणात् ॥ १ ॥

मलेति । मलापहारिणा पापापहेन वारिणा पुनातीति मलापहारिवारिपूः रः कामः तस्य भूः कामप्रसविनीत्यर्थः इर्विस्मयः तेन मण्डितानि भूषितानि विस्मयजनकानीत्यर्थः अमृतानि जलानि यस्याः तथोक्ता । भृशमतिशयेन प्रपातः प्रवहनं येषां तथाभूतानां कानां जलानां प्रपञ्चने विस्तारे अतिपण्डिता अतिपटीय-

लसत्तरङ्गसङ्गधूतभूतजातपातका
नवीनमाधुरीधुरीणभक्तजातचातका ।
तटान्तवासदासहंससंस्रुताङ्घ्रि कामदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ३ ॥

विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरे यदीयनीरचारुता ।
प्रवाहसाहचर्य्यपूतमेदिनीनदीनदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ४ ॥

सीत्यर्थः, अनिशा अविरतगामिनीत्यर्थः, मुकुन्देन अमुपलेन नन्दतीति तथोक्तेन बलरामेणेत्यर्थः अङ्गरागस्य मधुपानजनितस्येति भावः रागेण प्रभया रञ्जितानि उदकानि जलानि यस्याः तथोक्ता ॥२॥

लसदिति । लसतां प्रसरतां तरङ्गाणां सङ्गेन धूतानि अपनीतानि भूतजातानां प्राणिसमूहानां पातकानि यया तथाभूता, नवीना या माधुरी मधुरता श्यामत्विमजनितेति भावः तया धुरीणं श्रेष्ठम् अत्यन्तमित्यर्थः भक्तजातं भक्तसमूहः चातकः पक्षिविशेष इव यस्याः तादृशी चातका यथा नवीनमेघदर्शने प्रीतिमनुभवन्ति तथा भक्ता एतद्दर्शने इति भावः। अङ्घ्रि दिवसे तटान्तवासेन दासैरीषभूतैरित्यर्थः हंसैः संस्रुता सङ्गता, कामदा अभीष्टपूरणी ॥ ३ ॥

विहारेति । विहाररासे सुरतास्वादे यः खेदः श्रमः तस्य भिनत्तीति भेदः अपहारक इत्यर्थः धीरस्य तीरमारुतः तटवायुः यस्याः तथोक्ता । यदीयानां तत्सम्बन्धिनां नीराणां जलानां चारुता मनोहारित्वं गिरां वाचाम् अगोचरे गता अनिर्वचनीयेत्यर्थः । प्रवाहाणां स्रोतसां साहचर्य्येण सङ्गेन पूताः पवित्रीकृताः मेदिन्याः नदीनदाः यया तथाभूता ॥ ४ ॥

तरङ्गसङ्गसैकतान्तरान्विता सदासिता
शरन्निशाकरांशुमञ्जुमञ्जरीसभाजिता ।
भवार्चनाप्रचारुणाम्बुनाधुना विशारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ५ ॥

जलान्तकेलिकारिचारुराधिकाङ्गरागिणी
स्वभर्त्तुरन्यदुर्लभाङ्गतागतांशभागिनी ।
स्वदत्तसुप्तसप्तसिन्धुभेदनातिकोविदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ६ ॥

तरङ्गेति । तरङ्गाणां सङ्गो यस्मिन् तादृशं तरङ्गसङ्गतमित्यर्थः सैकतान्तरस्य पुलिनविशेषस्य आन्तिकं सान्निध्यं यस्याः तथोक्ता, सदा सर्वस्मिन् समये असिता कृष्णा। शरन्निशाकरः शारदश्चन्द्रः तस्य अंशुमञ्जुः मयूखखण्डा एव मञ्जर्यः मुक्ताः ताभिः सभाजिता अलङ्कृता । भवस्य शम्भोः संसारस्य वा अर्चनायां पूजायां परितृप्तिकरणे वा प्रचारुणा अतिमनोहरेण अम्बुना जलेन अधुना विशारदा निपुणा ॥५॥

जलान्तेति । जलान्ते जलमध्ये केलिकारिणी जलक्रीड़ाकारिणीत्यर्थः चारुः सुन्दरी या राधिका तस्याः अङ्गरागः विद्यते अस्यां तथाभूता । स्वभर्त्तुः समुद्रस्य अन्यासां नदीनामिति भावः दुर्लभं यत् अङ्गं तस्य भावः तां गतः प्राप्तः यः अंशः तद्भागिनी समुद्रजलस्य श्यामलत्वं प्रसिद्धं अस्यास्तु तत्सङ्गेन तादृशश्यामलत्वं जातमिति भावः। स्वदत्ते स्वेन कृते इति यावत् सुप्तानां निश्चलानामिति भावः सप्तानां सिन्धूनां समुद्राणां भेदने जागरणे चापल्यकरणे इति भावः अतिकोविदा अतिविचक्षणा स्वजलसम्पातेनैव तेषां तरङ्गचापल्यं नोचेत् तेषां स्वतो निश्चलभाव इति भावः ॥ ६ ॥

जलच्युताच्युताङ्गरागलम्पटालिशालिनी
विलोलराधिकाकचान्तचम्पकालिमालिनी।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा॥ ७॥

सदैव नन्दनन्दकेलिशालिकुञ्जमञ्जुला
तटोत्थफुल्लमल्लिकाकदम्बरेणुसूज्ज्वला।
जलावगाहिनां नृणां भवाब्धिसिन्धुपारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा॥ ८॥

इति श्रीशङ्कराचार्य्यविरचितं यमुनाष्टकं
सम्पूर्णम्।

जलेति। जलेषु तत्क्रीडास्विति भावः च्युताः भ्रष्टाः अच्युतस्य कृष्णस्य ये अङ्गरागाः तेषु लम्पटाः लुब्धाः ये अलयः भ्रमराः तैः शालते शोभते इति तथोक्ता, विलोलाश्चञ्चलाः राधिकायाः कचान्तेषु केशपाशेषु याः चम्पकालयः चम्पकसमूहाः तासां माला विद्यते अस्यां तादृशी, सदा अवगाहनाय अवतीर्णेभ्यः भर्तृभ्यः स्वामिभ्यः भृत्येभ्यः दासेभ्यश्च नारं जलं ददातीति तथोक्ता॥७॥

सदेति। सदैव नन्दं नन्दयतीति नन्दनन्दः कृष्णः तस्य केलिभिः शालन्ते शोभन्ते इति तथोक्ताः ये कुञ्जाः तैः मञ्जुला मनोहारिणी, तटोत्थानां तीरजातानां फुल्लमल्लिकानां कदम्बानाञ्च रेणुभिः परागैः मोदन्ते हृष्यन्ति शोभन्ते इति यावत् तादृशानि जलानि यस्याः तथाभूता, जलावगाहिनां नृणां मानवानां भवाब्धिः संसारसागर एव सिन्धुः समुद्रः तस्य पारदा उद्धारकारिणी॥ ८॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
यमुनाष्टकव्याख्या समाप्ता।

---

# उद्धवसन्देशः।

सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानैः
लक्ष्मीवत्तां दधति मथुरापत्तने दत्तनेत्रः।
कृष्णः क्रीड़ाभवनवलभीमूर्ध्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीम् ॥ १ ॥

श्वासोल्लासैरथ तरलितस्थूलनालीकमालः
कुर्वन् पूर्णा नयनपयसां चक्रवालैः प्रणालीः।
स्मारं स्मारं प्रणयनिविड़ां वल्लवीकेलिलक्ष्मीं
दीर्घोत्कण्ठाजटिलहृदयस्तत्र चिन्तायितोऽभूत् ॥२॥

सान्द्रीभूतैरिति। पुष्पितानां सञ्जातपुष्पाणां नवानां विटपिनां तरूणां सान्द्रीभूतैः घनीभूतैः वितानैः विस्तारैः लक्ष्मीवत्तां श्रियमित्यर्थः दधति मथुरापत्तने मधुपुर्य्यां दत्तनेत्रः दत्तदृष्टिः कृष्णः क्रीड़ाभवनस्य केलिसदनस्य वलभी शिरोगृहं तस्या मूर्ध्नि शिरसि उपरीत्यर्थः विद्योतमानः विराजन् तरलहृदयः चञ्चलमनाः सन् सद्यः तत्क्षणं गोकुलारण्यस्य वृन्दावनस्य मैत्रीं सौहृद्यं दध्यौ चिन्तयामास। मन्दाक्रान्तावृत्तमस्मिन् प्रबन्धे। मन्दाक्रान्ताम्बुधि-रसनगैर्मो भनौ गौ ययुग्ममिति तल्लक्षणात् ॥ १ ॥

श्वासोल्लासैरिति। अथ चिन्तानन्तरं तत्र मधुपुर्य्यां श्वासानां दीर्घनिःश्वासानाम् उल्लासैः स्फुरणैः तरलिता चञ्चलिता स्थूला नालीकानां कमलानां माला यस्य तथोक्तः, प्रणयेन निविड़ां घनीभूतां वल्लवीनां गोपीनां केलिलक्ष्मीं विहारश्रियं स्मारं स्मारं पुनः पुनः स्मृत्वा नयनपयसां नेत्रजलानां चक्रवालैः मण्डलैः सम्पूर्णै-

अन्तःस्वान्ते क्षणमथ परामृश्य पाराभिलाषी
कष्टाम्भोधेर्भवनशिखरे कुट्टिमान्तर्निविष्टः ।
सोत्कण्ठोऽभूदभिमतकथां शंसितुं कंसभेदी
नेदिष्ठाय प्रणयलहरीबद्धवागुद्धवाय ॥ ३ ॥

त्वं सर्वेषां मम गुणनिधे ! बान्धवानां प्रधानं
त्वत्तो मन्त्रैः श्रियमविचलां यादवाः साधयन्ति ।
इत्याश्वासादभिमतविधौ कामये त्वां नियोक्तुं
न्यस्तः साधीयसि सफलतामर्थभारो हि धत्ते ॥४॥

रित्यर्थः, चक्रवाकन्तु मराळमित्यमरः । प्रणालीः जलनिर्गममार्गान् पूर्णाः कुर्वन्, दीर्घया महत्या उत्कण्ठया जटिलं हृदयं यस्य तथाभूतः सन्, चित्रार्पितः चित्रपुत्तलिकाप्रायः निस्तब्ध इति यावत् अभूत् ॥ २ ॥

अन्तरिति । अथानन्तरं भवनशिखरे अट्टोपरि कुट्टिमान्तर्निविष्टः बद्धभूमिनिषण्णः कंसभेदी कृष्णः अन्तःस्वान्ते अन्तर्मनसि क्षणं परामृश्य मन्त्रयित्वा कष्टाम्भोधेः शोकसागरस्य पाराभिलाषी, प्रणयलहर्य्या प्रेमतरङ्गेण बद्धा रुद्धा वाक् यस्य तादृशः वक्तुमशक्त इति यावत्, नेदिष्ठाय निकटवर्त्तिने उद्धवाय अभिमतकथाम् इष्टवचनं शंसितुं कथयितुं सोत्कण्ठः समुत्सुकः अभूत् उद्धवमुवाचेति भावः ॥ ३ ॥

त्वमिति । हे गुणनिधे ! त्वं मम सर्वेषां बान्धवानां मध्ये प्रधानं श्रेष्ठः, यादवाः यदुवंशीयाः त्वत्तः तव सकाशात् मन्त्रैः प्राप्तैरिति शेषः अविचलाम् अचञ्चलां श्रियं लक्ष्मीं साधयन्ति लभन्ते । इति आश्वासात् साहसात् अभिमतविधौ इष्टानुष्ठाने त्वां नियोक्तुं कामये इच्छामि । हि यतः साधीयसि अतिसाधौ न्यस्तः अर्पितः अर्थभारः कार्य्यभारः सफलतां धत्ते सफलो भवतीत्यर्थः । अत्र

संरम्भेण क्षितिपतिगिरां लम्भिते गर्वितानां
वृन्दारण्यान्मयि मधुपुरीं गान्दिनीनन्दनेन।
वल्लव्यस्ता विरहदहनज्वालिकामण्डलीनाम्
अन्तर्लीनाः कथमपि सखे! जीवितं धारयन्ति ॥५॥
प्राणेभ्यो मे प्रणयवसतिर्मित्र! तत्रापि राधा
धातुः सृष्टौ मधुरिमधराधारणाद्द्वितीया।
वाचोयुक्तिस्तवकितपदैरद्य सेयं सखीनां
गाढाश्वासैर्विधुरविधुरं प्राणभारं बिभर्त्ति ॥ ६ ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥ ४ ॥

संरम्भेणेति। हे सखे! गान्दिनी अक्रूरस्य माता तस्या नन्दनेन पुत्रेण अक्रूरेणेत्यर्थः मयि गर्वितानाम् अहङ्कारपूर्णानां क्षितिपतेः कंसस्य गिरां वाचां संरम्भेण क्रोधेन तद्वाक्यश्रवणजनितेनेति भावः, संरम्भः सम्भ्रमे कोपे इत्यमरः। वृन्दारण्यात् मधुपुरीं लम्भिते नीते सति ताः वल्लव्यः गोप्यः विरहदहनस्य विच्छेदाग्नेः ज्वालिकामण्डलीनां शिखासमूहानाम् अन्तर्लीनाः अन्तर्गताः नितरां विरहार्त्ता इत्यर्थः कथमपि जीवितं धारयन्ति ॥ ५ ॥

प्राणेभ्य इति। हे मित्र! तत्रापि वल्लवीनां मध्येऽपि मधुरिमा माधुर्य्यमेव धरः पर्व्वतः तस्य आधारणात् सम्यक् धारणात् धातुः विधातुः सृष्टौ अद्वितीया निरुपमेति यावत् राधा मे मम प्राणेभ्यः प्राणान् अपेक्ष्येत्यर्थः यवर्थे पञ्चमी। प्रणयवसतिः प्रणयस्थानं प्राणापेक्षयापि प्रियतमेत्यर्थः। अद्य इदानीं सा इयं राधा वाचोयुक्तिभिः स्तवकितानि गुच्छितानि पदानि सुप्तिङन्तरूपाणि येषु तैः सखीनां गाढाश्वासैः दृढतराश्वासवचनैरित्यर्थः विधुरविधुरम्

गत्वा नन्दीश्वरशिखरिणो मेखलां रत्नभूतां
त्वं वल्लीभिर्वलयितनगां वल्लवाधीशपत्नीम् ।
तां दष्टाङ्गीं विरहफणिना प्राणयन् प्रीणयार्त्तां
वार्त्तामन्द्रध्वनिभिरथ मे मन्त्रिचूड़ामणीन्द्र ! ॥ ७ ॥

तिष्ठन्त्येते जगति बहवस्त्वद्विधानां विधातुं
चेतःपूर्त्तिं ननु जनपदा मूर्त्तिभिर्मे सनाथाः ।
भूयोभूयः प्रियसख ! अपि तुभ्यमव्याजतोऽहं
भूरन्या मे हृदि सुखकरी गोष्ठतः कापि नास्ति ॥ ८ ॥

अतिकष्टेनेत्यर्थः प्राणभारं भारभूतान् प्राणानित्यर्थः बिभर्त्ति धारयति ॥ ६ ॥

गत्वेति । हे मन्त्रिचूड़ामणीन्द्र ! मन्त्रिशिरोमणिश्रेष्ठ ! नन्दीश्वरस्य शिखरी कैलासपर्वतः तस्य रत्नभूतां मेखलां नितम्बभूमिं वल्लीभिः लताभिः वलयिताः वेष्टिताः नगाः वृक्षाः, शैलवृक्षौ नगावगावित्यमरः । यस्याः तथाभूतां वल्लवाधीशस्य गोपराजस्य पत्नीं नन्दालयमिति यावत् गत्वा अथ अनन्तरं त्वं मे मम वार्त्ता संवादः तस्या मन्द्राः गम्भीराः मधुरा इति यावत् मे ध्वनयः शब्दाः तैः विरहफणिना विच्छेदभुजङ्गेन दष्टाङ्गीं दष्टदेहाम् अतएव आर्त्तां कातरां तां राधां प्राणयन् जीवयन् प्रीणय आह्लादय ॥ ७ ॥

तिष्ठन्तीति । हे प्रियसख ! एते ये मम मूर्त्तिभिः सनाथाः युक्ताः बहवः जनपदाः देशाः त्वद्विधानां तव सदृशानां चेतःपूर्त्तिं चित्तप्रसादं विधातुं जगति तिष्ठन्ति । अहम् अव्याजतः अकापट्येन भूयः भूयः पुनः पुनः तुभ्यं शपे दिव्यं करोमीत्यर्थः यथा मे मम हृदि सुखकरी गोष्ठतः गोकुलात् अन्या भूः कापि न अस्ति ॥ ८ ॥

मद्विश्लेषज्वलनपटलीज्वालया जर्जराङ्गाः
सर्वे तस्मिन्निधनपदवीं शाखिनोऽप्याश्रयिष्यन्।
गोपीनेत्रावलिविगलितैर्भूरिभिर्वाष्पवारां
पूरैस्तेषां यदि निरवधिर्नाभिषेकोऽभविष्यत्॥९॥
आत्मक्लेशैरपि न हि तथा मेरुतुल्यैर्व्यथन्ते
वल्लव्यस्ताः प्रियसख! यथा मद्व्यथालेशतोऽपि।
दुर्वारां मे विरहविहितां निह्नुवानस्तदार्त्तिं
प्रेमग्रन्थिं त्वमतिपृथुलं तासु विख्यापयेथाः॥१०॥
भ्रातर्नन्दीश्वरगिरिमितो यास्यतस्ते विदूरं
पन्थाः श्रीमानयमकुटिलः कथ्यते पथ्यरूपः।

मदिति। तस्मिन् गोकुले सर्वे शाखिनोऽपि तरवोऽपि का कथा सचेतसामिति भावः मम विश्लेषः विच्छेद एव ज्वलनपटली अग्निचयः तस्या ज्वालया शिखया जर्जराणि अङ्गानि येषां तथाभूताः सन्तः निधनपदवीं मृत्युपथम् आश्रयिष्यन् अगमिष्यन्, यदि तेषां शाखिनां गोपीनां नेत्रावलिभ्यः नयनराजिभ्यः विगलितैः विनिर्गतैः भूरिभिः प्रभूतैः वाष्पवाराम् अश्रुजलानां पूरैः प्रवाहैः निरवधिः अविरतः अभिषेकः न अभविष्यत्॥९॥

आत्मक्लेशैरिति। हे प्रियसख! ताः वल्लव्यः गोपाङ्गनाः मम व्यथालेशतः ईषन्मात्रीयदुःखादपि यथा व्यथन्ते क्लिश्यन्ति, मेरुतुल्यैः सुमेरुपर्वतसदृशैः बहुभिरपीति भावः आत्मक्लेशैः तथा न हि व्यथन्ते इति वाक्यशेषः। तत् तस्मात् त्वं मे मम दुर्वारां दुरपनेयां विरहविहितां विरहजनिताम् आर्त्तिं पीड़ां निह्नुवानः गोपायन् सन् तासु वल्लवीषु अतिपृथुलम् अतिमहान्तं प्रेमग्रन्थिं दुरपनेयं प्रेमाणमिति यावत् ममेति शेषः विख्यापयेथाः विज्ञापयेथाः॥१०॥

प्रीये सद्यस्त्वयि निपतिते गोकुलानन्दसिन्धौ
सन्तस्तुष्टे सुहृदि हि निजां तुष्टिमेवामनन्ति ॥११॥
अग्रे गौरीपतिमनुसरेः पत्तनान्तर्वसन्तं
गोकर्णाख्यं व्यसनजलधौ कर्णधारं नराणाम् ।
यस्याभ्यर्णे सह रविजया सङ्गमो जङ्गमानाम्
आविष्कुर्वन्नभिमतधुरां धीर ! सारस्वतोऽस्ति ॥१२॥
आरूढस्ते नयनपदवीं तन्वि ! धन्यासि सोऽयं
गोपीनन्दीकरणमुरलीकाकलीकः कलावान् ।
इत्यालापस्फुरितवदनैर्यत्र नारीकदम्बैः
दृग्भङ्गीभिः प्रथममथुरासङ्गमे चुम्बितोऽस्मि ॥१३॥

भ्रातरिति । हे भ्रात ! इतः अस्मात् प्रदेशात् विदूरम् अति-दूरवर्त्तिनं नन्दीश्वरगिरिं नन्दीश्वराख्यपर्वतं यातः गमिष्यतः ते तव अकुटिलः सरलः पथ्यरूपः सुखदः श्रीमान् मनोहरः अयं पन्थाः कथ्यते मयेति शेषः । त्वयि गोकुलमेव आनन्दसिन्धुः आनन्दसागरः तस्मिन् निपतिते प्रविष्टे इति अहं सद्यः तत्क्षणं प्रीये प्रीतिमनुभवामीत्यर्थः । हि यतः सन्तः साधवः सुहृदि तुष्टे सति निजामेव तुष्टिं सन्तोषम् आमनन्ति मन्यन्ते ॥ ११ ॥

अग्रे इति । नराणां व्यसनजलधौ दुःखार्णवे कर्णधारं नाविकं पत्तनान्तर्वसन्तं नगरमध्ये तिष्ठन्तं गोकर्णाख्यं गौरीपतिम् अग्रे अनुसरेः अनुगच्छेः, हे धीर ! यस्य गोकर्णस्य अभ्यर्णे समीपे जङ्गमानां प्राणिनाम् अभिमतधुरां मनःप्रीतिमिति भावः आविष्कुर्वन् जनयन् रविजया यमुनया सह सारस्वतः सङ्गमः यमुनासरस्वतीसङ्गम इत्यर्थः अस्ति ॥ १२ ॥

आरूढ इति । हे तन्वि ! कृशाङ्गि ! गोपीनां नन्दीकरणी मुरलीकाकली वंशीसूक्ष्मस्वरः यस्य तादृशः कलावान् चतुःषष्टि-

तस्मादन्तर्विरचितपरानन्दपूराददूरां
याहि प्रीत्या सपदि पदवीमम्बिकाकाननस्य ।
यत्रानन्दोत्सवमकरवं सर्पतः सर्पतोयात् ।
नन्दं विद्याधरमपि पुरा मोचयन् वल्लवीनाम् ॥१४॥
भूयोभिस्त्वं किल कुवलयापीड़दन्तावघातैः
एतां निम्नोन्नतपरिसरां स्यन्दने वर्त्तमानः ।
मुञ्चोत्तुङ्गां मिहिरदुहितुर्धीर ! तीरान्तभूमिं
मन्दाक्रान्तां न खलु पदवीं साधवः शीलयन्ति ॥१५॥

विद्यानिपुणाः सः अयं कृष्णः ते तव नयनपदवीं दृष्टिपथम् आरूढः, तत् तस्मात् धन्या पुण्यवती असि । यत्र दूतीत्थम् आलापेन स्फुरितम् उल्लासितं मदनं येषां तथाभूतैः नारीकदम्बैः रमणीगणैः दृग्भङ्गीभिः दृष्टिविभ्रमैः प्रथममथुरागमने प्रथमं मथुरायामुपस्थितौ चुम्बितः पीतः असि ॥ १३ ॥

तस्मादिति । अन्तर्विरचितः परः महान् आनन्दपूरः आनन्द-समूहः यत्र तादृशात् तस्मात् प्रदेशात् सपदि शीघ्रम् अदूरां सन्नि-हिताम् अम्बिकाकाननस्य पदवीं प्रीत्या प्रसादेन याहि गच्छ । यत्र पुरा पूर्वं सर्पतः प्रसर्पतः सर्पतोयात् कालियह्रदादिति यावत् विद्याधरमपि नन्दं मोचयन् उद्धरन् वल्लवीनां गोपीनाम् आनन्दो-त्सवम् अकरवं कृतवानस्मि ॥ १४ ॥

भूयोभिरिति । हे धीर ! त्वं स्यन्दने रथे वर्त्तमानः रथारूढः सन्निति शेषः भूयोभिः बहुतरैः कुवलयापीड़स्य कंसकुञ्जरस्य दन्तावघातैः दन्ताघातैः निम्नाः नताः उन्नताश्च परिसराः प्रदेशाः यस्याः तादृशीम् उत्तुङ्गाम् उन्नताम् एतां मिहिरदुहितुः कालिन्द्याः तीरान्तभूमिं किल निश्चितं शीघ्रमिति यावत् मुञ्च त्यज । साधवः मन्दाक्रान्तां मन्देन मृदुना आक्रान्तां पदवीं मार्गम् असदाचरितपद्धतिमिति भावः न

मुञ्चासव्ये विहगरुचिरं किञ्चिदस्मादुदञ्चं
राजत्तीरं नवसुमनसां राजिभिस्तीर्थराजम् ।
यत्रापूर्वं किमपि कलयाञ्चक्रतुर्मत्प्रभावाद्
आभीराणां कुलमपि तथा गान्दिनीनन्दनोऽपि ॥१६॥

यज्वानस्ते यदपि भवतो विप्रिया हेलनान्मे
नम्रास्तेषां तदपि भवनद्वाररथ्यां जिहीथाः ।
गायन्तीनां मदनुचरितं तत्र विप्राङ्गनानाम्
आलोकाय स्पृहयसि न चेदीक्षणैर्वञ्चितोऽसि ॥१७॥

तद्विख्यातं स्फुटविटपिनां मण्डलेनाभिपूर्णं
तूर्णं गच्छेरुपपुरि पुरः कोटिकाख्यं प्रदेशम् ।

खलु नैव शोचयन्ति नैवानुसरन्तीत्यर्थः। अत्र मन्दः कुवलयापीड इति भावः ॥ १५ ॥

मुञ्चेति। असव्ये दक्षिणे अस्मात् प्रदेशात् किञ्चित् उदञ्चम् उत्तरवर्तिनं विहगरुचिरं नानापक्षिकूजितमनोहरं नवसुमनसां नवीनकुसुमानां राजिभिः समूहैः राजत् तीरं यस्य तादृशं तीर्थराजं ... व्रज। यत्र तीर्थराजे आभीराणां गोपानां कुलं तथा गान्दिनीनन्दनः अक्रूरोऽपि मम प्रभावात् किमपि अपूर्वं कलयाञ्चक्रतुः ॥ १६ ॥

यज्वान इति। यदपि यद्यपि ते यज्वानः याज्ञिकाः मे मम हेलनात् अवज्ञानात् भवतः विप्रियाः अप्रीतिकरा इत्यर्थः, तदपि नम्रः सन् तेषां यज्वनां भवनद्वारस्य रथ्यां पन्थानं जिहीथाः उत्तरेः ... पुण्यत्वादिति भावः। तत्र मम अनुचरितं कीर्तिमित्यर्थः गायन्तीनां विप्राङ्गनानां याज्ञिकपत्नीनाम् आलोकाय न स्पृहयसि चेत्, तदा ईक्षणैः नयनैः वञ्चितोऽसि, द्रष्टव्यस्य दर्शनाभावा-दिति भावः ॥ १७ ॥

यत्र प्राप्ते मयि विकिरती नेत्रमुद्यानपाली
शालीनापि प्रकटितभुजामूलमल्पं जहास ॥१८॥
इत्थं क्रान्त्वा पुरपरिसरान् याहि सट्टीकराख्यं
पट्टीभूतं भ्रमरनृपतेः पुष्पितारण्यमारात् ।
श्रीदामानं सुभग! गरुडीकृत्य यत्राधिरूढः
क्रीड़ाकारी दधदुरुभुजान् द्वादशाहं वसामि ॥ १९ ॥
मुग्धे ! श्यामः कलयति युवा पश्य मामेव न त्वाम्
इत्युल्लासैरहमहमिकां सर्वतः कुर्वतीभिः ।
यानालम्बी सरलनयनालोकमैत्रीभराणां
ग्रामीणाभिर्युवतिभिरहं यत्र पात्रीकृतोऽस्मि ॥ २० ॥

तटिति । स्फुटविटपिनां विकसिततरूणां मण्डलेन निचयेन अभिपूर्णं व्याप्तम् उपपुरि पुरीसमीपे पुरः अग्रतः विख्यातं तं कोटिकाख्यं कोटिकसंज्ञं प्रदेशं तूर्णं शीघ्रं गच्छेः, यत्र मयि प्राप्ते उपस्थिते सति उद्यानपाली मालिनी शालीनापि सलज्जापि नेत्रं विकिरती अर्पयन्ती सती प्रकटितम् आविष्कृतं भुजामूलं बाहुमूलं यस्मिन् तत् यथा तथा अल्पम् ईषत् जहास ॥ १८ ॥

इत्थमिति । इत्थम् अनेन क्रमेण पुरपरिसरान् नगरविभागान् क्रान्त्वा अतिक्रम्य आरात् अदूरे सट्टीकराख्यं सट्टीकरसंज्ञं पुष्पितारण्यं कुसुमितकाननं भ्रमरनृपतेः भ्रमरराजस्य पट्टीभूतम् अभिषेकीभूतं प्रदेशमिति शेषः याहि गच्छ । हे सुभग ! प्रियतम ! यत्र अहं क्रीड़ाकारी क्रीड़ासक्तः श्रीदामानं गरुडीकृत्य अधिरूढः सन् उरुभुजान् महान्तं भुजं दधत् द्वादशाहं द्वादश दिवसान् वसामि । ॥ १९ ॥

मुग्धे इति । हे मुग्धे ! युवा श्यामः मामेव कलयति पश्यति, त्वां न, पश्यति इतीत्थम् उल्लासैः सर्वतः सर्वथा अहमहमिकां

मुञ्चन् मध्ये बहुलबहुलं काननस्योपशल्यं
तस्योत्तुङ्गं ह्रदपरिसरं दक्षिणे कालियस्य ।
फुल्लाभिस्त्वं पिहितमिहिरोद्द्योतमन्तर्लताभिः
धीराध्वानं विमलसरसीराजिभाजं भजेथाः ॥ २१ ॥
वल्लीचित्रं व्रज मृगहरं तं व्रजस्योपशल्ये
कल्ये क्रीडावनविहरणोत्कण्ठया गच्छतो मे ।
यत्रोद्भूतकलवलयितैर्वेणुगीतैर्मृगाणां
तूर्णं राजी रजनिविरहव्याकुलानामहारि ॥ २२ ॥

परस्परस्पर्द्धाम्, अहमहमिका तु सा स्यात् यः परस्परं भवत्यहङ्कार इति कोषः, कुर्वतीभिः ग्रामीणाभिः ग्रामवासिनीभिः युवतिभिः यत्र यानाकम्पो यानाक्रुद्धः अङ्ग सरलानां नयनानाम् आलोकस्य दर्शनस्य मैत्रीभराणाम् आनन्दातिशयानामित्यर्थः पात्रीकृतः अस्मि ॥२०॥

मुञ्चन्निति । हे धीर ! काननस्य वनस्य मध्ये ग्रामे बहुलबहुलम् अनेकमित्यर्थः उपशल्यं ग्रामान्तं, ग्रामान्त उपशल्यं स्यादित्यमरः । दक्षिणे तस्य उत्तुङ्गं कालियस्य ह्रदपरिसरं ह्रदप्रदेशं मुञ्चन् त्यजन् अतिक्रामन्नित्यर्थः त्वं फुल्लाभिर्विकसिताभिः लताभिः अन्तः अभ्यन्तरे पिहितः आवृतः मिहिरस्य सूर्य्यस्य उद्द्योतः आलोकः यस्मिन् तादृशं विमलाः सरसीराजीः भजति इति तथोक्तम् अध्वानं मार्गं भजेथाः गच्छेः ॥ २१ ॥

वल्लीति । व्रजस्य गोपकुलस्य उपशल्ये प्रान्ते वल्लीभिः लताभिः चित्रं मनोज्ञम् अतएव मृगहरं मृगाणां प्रीतिकरमिति यावत् तं प्रदेशमिति शेषः व्रज गच्छ । यत्र कल्ये प्रभाते क्रीडावने यत् विहरणं विहारः तस्मिन् या उत्कण्ठा औत्सुक्यं तया गच्छतः मे मम उद्भूता उद्गच्छता कलेन मधुरस्वरेण वलयितैः वेष्टितैः पूर्णैरित्यर्थः वेणुगीतैः वंशीसङ्गीतैः रजन्यां विरहः विच्छेदः ममेति भावः तेन

आनम्राणां हसितमुकुलैः फुल्लगण्डस्थलानां
दूराद् दृष्टिं स्फुटसुमनसां स्यन्दने मुञ्चतीनाम्।
ते वैदग्धीपरिमलकिरो यत्र सीमन्तिनीनां
सस्रुर्बाणावलिविलसिता रुद्धलक्ष्याः कटाक्षाः ॥२३॥
एष श्रीमान् प्रवसति रथी माधवो राधिकायाः
प्रेमस्थूलस्फुरणकुटिलालोकभङ्गीविलासः।
इत्यौत्सुक्याद्दरयुवतिभिः स्मारितोद्दामनर्मा
घर्माम्भोभिर्वृततनुरहं यत्र चित्रायितोऽस्मि ॥ २४ ॥

व्याकुलानां ललनानां राजिः हन्त तूर्णम् अहारि हृतः आकृष्टेति यावत् ॥ २२ ॥

आनम्राणामिति। यत्र प्रदेशे आनम्राणां यौवनभरात् नताङ्गानामिति यावत् हसितमुकुलैः मन्दहास्यैरिति भावः फुल्लं विकसितं गण्डस्थलं यासां तथाभूतानां स्फुटसुमनसां सुव्यक्तहृष्टमनसां दूरात् स्यन्दने रथे दृष्टिं मुञ्चतीनां ददतीनां सीमन्तिनीनां नारीणां ते वैदग्ध्याः शिक्षाशिताया परिमलं सौरभं भावमिति यावत् किरन्तीति तथोक्ताः बाणावलिः शरपरम्परा तद्वत् विलसितमिव विलसितं स्फुरणं येषां तादृशाः रुद्धलक्ष्याः बद्धशरव्याः कटाक्षाः कटाक्षशरा इति भावः सस्रुः पेतुरित्यर्थः ॥ २३ ॥

एष इति। रथी श्रीमान् राधिकायाः प्रेम्णः स्थूलस्फुरणः वृद्धिं कुर्वन्नित्यर्थः कुटिलः आलोकस्य दृष्टेः भङ्गीविलासः भङ्ग्या स्फुरणं यस्य तथाभूतः एषः माधवः कृष्णः प्रवसति मथुरां गच्छति इति हेतोः औत्सुक्यात् दरयुवतिभिः स्मारितम् उद्दामम् उत्कटं नर्म क्रीडा यस्य तथाभूतः अहं यत्र घर्माम्भोभिः स्वेदजलैः वृता व्याप्ता तनुः यस्य तादृशः तत्तद्भावापन्नत्वेन अज्ञातसत्त्वोदयादिति भावः चित्रायितः चित्रार्पित इव स्तम्भितः अस्मि ॥ २४ ॥

लीलास्वप्नो मम विजयते यत्र नागेन्द्रभोगे
श्रीराधाङ्कीकृतपदयुगाम्भोजसंवाहनस्य ।
तत्र क्षीराम्बुधिपरिमलस्पर्द्धने बद्धहस्ते
ग्रामे कामं ध्वजवति भजे बद्धविश्रामसौख्यम् ॥२५॥

सोऽयं दध्नां मथननिनदाक्रान्तदिक्चक्रवालो
घोषस्तोषं तव जनयिता योजनद्वन्द्वचुम्बी ।
दिव्येनालं निखिलजगतीं सर्पिषा तर्पयन्ती
भ्रातर्भूम्ना विलसति विधेर्गोमयी यत्र सृष्टिः ॥ २६ ॥

लीलेति । यत्र नगेन्द्रस्य पर्वतस्य गोवर्द्धनस्येति यावत् अयं नागेन्द्रः स चासौ भोगश्चेति नागेन्द्रभोगः पर्वतप्रदेशः तस्मिन् यद्वा नागेन्द्रः शेषनागः तस्य भोगः देहः तस्मिन् अनन्तनागदेहभूते इत्यर्थः श्रीराधया अङ्कीकृतं स्वीकृतं पदयुगाम्भोजस्य पादपद्मयुगलस्य संवाहनं यस्य तथाभूतस्य मम लीलास्वप्नः विहारनिद्रा विजयते सर्वोत्कर्षेण वर्त्तते, क्षीराम्बुधेः क्षीरसागरस्य परिमलं स्पर्द्धते इति तथोक्ते गोपानां सर्वदा क्षीरव्यवहारित्वादिति भावः बद्धहस्ते बद्धौ हस्तौ अञ्जलिरिति भावः यत्र तथोदयेति शेष तथाभूते ध्वजवति प्रसिद्धे इति भावः तत्र ग्रामे गोकुले इत्यर्थः कामं सम्यक् बद्धं नियतं विश्रामसौख्यं अवस्थानजनितं सुखं भजे प्राप्नोमि ॥ २५ ॥

स इति । हे भ्रातः ! दध्नां मथननिनदेन विलोडनध्वनिना आक्रान्तं पूरितं दिशां चक्रवालं मण्डलं येन तथाभूतः योजनद्वन्द्वचुम्बी क्रोशाष्टकव्यापीत्यर्थः सोऽयं घोषः शब्दः तव तोषम् आनन्दं जनयिता उत्पादयिष्यतीत्यर्थः, दिव्येन अपूर्वेन अलं निष्प्रयोजनं अपूर्वो न कर्त्तव्य इत्यर्थः, यत्र सर्पिषा घृतेन निखिलजगतीं तर्पयन्ती तोषयन्ती विधेः विधातुः गोमयी गोप्रचुरेत्यर्थः सृष्टिः भूम्ना बाहुल्येन अतिशयेनेत्यर्थः विलसति विराजते ॥ २६ ॥

कक्षां लक्षावधिभिरभितः काशरीभिः परीतां
तां सच्छत्रव्रजविजयिनीं शाल्मलाख्यां भजेथाः ।
वीथ्यां वीथ्यां पृथुकनिकरा यत्र मित्रानुवेलं
खेलन्तस्तामनुविदधते विक्रमान् मे क्रमेण ॥२७॥
दूरादेष प्रणयति पुरा लब्धसाहारनामा
प्रेमानन्दं तव नयनयोरौपनन्दो निवासः ।
जङ्घालेन क्षितिपतिपुरीं स्यन्दनेनानुविन्दन्
यत्राहारं प्रियमकरवं हारि हैयङ्गवीनम् ॥ २८ ॥
गोपेन्द्रस्य व्रजपरिसरे लब्धतुष्टिर्लभेथाः
तां विख्यातां कलितमहिलापाकहेलां रहेलाम् ।

कक्षामिति । हे मित्र ! अभितः समन्तात् लक्षावधिभिः लक्षसंख्याभिरित्यर्थः काशरीभिः माहिषीभिः परीतां व्याप्तां सच्छत्राणां सच्छत्रयुक्तानां व्रजानां गोकुलवासिनामित्यर्थः विजयिनीं विजयसाधनीं शाल्मलाख्यां तां कक्षां भजेथाः गच्छेः, यत्र वीथ्यां वीथ्यां पङ्क्त्यां पङ्क्त्यां पृथुकनिकराः बालकवृन्दानि अनुवेलं प्रतिवेलं खेलन्तः क्रीडन्तः सन्तः मे मम तान् विक्रमान् तत्तत्कर्माणीति भावः क्रमेण यथाक्रमम् अनुविदधते अनुकुर्वन्ति ॥ २७ ॥

दूरादिति । एषः लब्धं साहार इति नाम येन तथोक्तः उपनन्दस्य कस्यचित् गोपपतेः अयम् औपनन्दः निवासः वसतिस्थानं दूरात् तव नयनयोः प्रेमानन्दं पुरा प्रणयति प्रणेष्यतीत्यर्थः जनयिष्यतीति यावत्, पुरायोगे भव्ये लट् । यत्र जङ्घालेन प्रजविनेत्यर्थः स्यन्दनेन रथेन क्षितिपतिपुरीं राजपुरीम् अनुविन्दन् गच्छन् अयं हारि मनोहरं हैयङ्गवीनम् अतएव प्रियम् आहारम् अकरवं कृतवानस्मि । मम आहारेणैवास्य निवासस्य साहारसंज्ञेति बोध्यम् ॥ २८ ॥

यामासाद्य प्रहितमुरलीकाकलीदूतिकोऽहं
सायं गोपीकुलमकरवं सामि नेपथ्यनद्धम् ॥ २९ ॥
यत्र प्रीतानहमकरवं मित्रभावेन ग्रावान्
हारं हारं विदितसमयो वल्लवीनां दधीनि ।
शाखिव्रातः स खलु वलितः प्रीतधाराभिधस्ते
देशः क्लेशं पथिषु रथिनो दारयिष्यत्युदारम् ॥ ३० ॥
सोऽयं रथ्यानटनपटुलैः सेव्यमानो मरुद्भिः
कम्राशोकोत्तमसुमनसां निर्भरामोदधारी ।

गोपेन्द्रस्येति । व्रजपरिसरे गोकुलप्रदेशे कल्पतरुः प्राप्स्यत्येषः यत्र गोपेन्द्रस्य नन्दस्य तां विख्यातां सुप्रतिष्ठां वलिता कृता अखिलानां नारीणां चारुर्मनोज्ञा क्रीडा विलासः यस्यां तथाभूतां रङ्गशालाम् आवासं लभेथाः अनुसरेः । यां रङ्गशालाम् आसाद्य अधिष्ठाय अहं प्रहिता प्रेषिता मुरलीकाकली वंशीकलनिनाद एव दूती येन तथाभूतः सन् सायं सन्ध्याकाले गोपीकुलं गोपाङ्गनावृन्दं सामि अर्द्धं यथा तथा नेपथ्यनद्धं वेशभूषितम् अकरवं कृतवानस्मि सायं मदीयवेणुरवं श्रुत्वा गोपाङ्गनाः स्वं स्वं प्रसाधनमसमाप्यैव मत्समीपमाजग्मुरिति भावः ॥ २९ ॥

यत्रेति । यत्राहं विदितसमयः ज्ञातदधिमन्थनसमयः सन् वल्लवीनां गोपीनां दधीनि हारं हारं पुनः पुनः हृत्वा ग्रावान् पाषाणान् मित्रभावेन प्रीतान् अकरवं कृतवानस्मि । यत्र स खलु वलितः प्रफुल्ल इति यावत् शाखिव्रातः वृक्षसमूहः तथा प्रीतधाराभिधः प्रीतधाराख्यः देशः पथिषु रथिनः रथारूढस्य ते तव उदारं महान्तं क्लेशं दारयिष्यति नाशयिष्यति ॥ ३० ॥

स इति । रथ्यानां वर्त्मनाम् अटने भ्रमणे पटुलाः चपलाः तैः मरुद्भिः वायुभिः सेव्यमानः कम्राणां कमनीयानाम् अशोकस्य

पीयूषेण स्फुरितवसतिस्त्वामुदञ्चद्गुरुश्रीः
लोकातीतः किल मदयिता वल्लवेन्द्रस्य लोकः ॥३१॥

पश्यन्तीनां चकितचकितं लब्धसङ्गं वताङ्के
मामुत्तुङ्गव्यसनविसरैः काममुन्मादितानाम् ।
तासां विद्युत्सरलवपुषां वल्लवीनां प्रपातात्
विद्युत्कारीं कथयति जनो दक्षिणां यस्य कक्षाम् ॥३२॥

यत्राक्रूरः प्रणयनिबिडोत्कण्ठया कुण्ठितात्मा
रङ्गं गोष्ठाङ्गणमनुसरन् मामलोकिष्ट बन्धुम् ।
तद्बाष्पाम्भःकुलपरिचयारब्धजृम्भैः कदम्बैः
सा संवीता विलसति तटी यत्र सौयात्रिकाख्या ॥३३॥

उत्तमसुमनसाम् उत्फुल्लकुसुमानां निर्भरः यः आमोदः सौरभं तस्य धारी, पीयूषेण अमृतेन स्फुरिता वसतिर्यस्य तथाभूतः, उदञ्चन्ती उद्गच्छन्ती गुर्वी श्रीर्यस्य तथाभूतः लोकातीतः अलौकिकः वल्लवेन्द्रस्य गोपेन्द्रस्य लोकः त्वां मदयिता किल अवश्यमेव आह्लादयिष्यति ॥३१॥

पश्यन्तीनामिति । जनः लोकः यस्य देशस्य दक्षिणां कक्षां विभागं वत इति खेदे अङ्के क्रोडे लब्धः सङ्गः स्थितिः येन तादृशं मां चकितचकितं पश्यन्तीनाम् उत्तुङ्गैः महद्भिः व्यसनविसरैः आसक्ति-प्रसरैः कामं सम्यक् उन्मादितानां विद्युदिव तरलं चञ्चलं वपुः शरीरं यासां तथाभूतानां तासां वल्लवीनां गोपीनां प्रपातात् अभ्यागमनात् विद्युत्कारीं सौदामनीमाकरामिति यावत् कथयति, वल्लवीनां विद्युतामिव समुज्ज्वलकान्तित्वादिति भावः ॥ ३२ ॥

यत्रेति । यत्र अक्रूरः प्रणयेन प्रेम्णा निबिडा घना या उत्कण्ठा तया कुण्ठितः सङ्कुचितः आत्मा यस्य तथोक्तः रङ्गं रङ्ग-भूमिभूतं गोष्ठाङ्गणं गोष्ठचत्वरम् अनुसरन् सन् बन्धुं सुहृदं माम् अलोकिष्ट अद्राक्षीत् । यत्र च तस्य अक्रूरस्य बाष्पाम्भसाम् अश्रु-

धावद्बालावलिकरतलप्रोच्छलद्बालधीनां
यत्रोत्तुङ्गस्फटिकपटलस्पर्द्धिदेहद्युतीनाम् ।
प्रायं प्रायं नवतृणशिखां मुञ्चतीनां वलन्ते
वत्सालीनां चटुलचटुलं शश्वदाटीकनानि ॥ २४ ॥
आभीरीणां नयनसरणीसङ्गमादेव तासां
सद्यो मोट्टायितमधुरिमोल्लासभङ्गीविधाता ।
पीठीभूतो मम परिमलोद्गारगोष्ठीगरीयान्
यत्रास्थानीमनु विजयते पाण्डरो गण्डशैलः ॥ २५ ॥

जवानाम् आनन्दजनितानामिति भावः कुलेन यः परिचयः सम्पर्कः तेन आरब्धा लब्धा जृम्भा विकाशो यैः तथाभूतैः कदम्बैः नीपतरुभिः संवीता युक्ता सौगन्धिकाख्या सौगन्धिकनाम्नी सा प्रसिद्धा तटी तटभूमिः विलसति विशेषेण स्फुरति ॥२३॥

यत्रेति । यत्र उत्तुङ्गम् उन्नतं यत् स्फटिकपटलं स्फटिकमणिनिचयः तस्य स्पर्द्धिनी अनुकारिणी देहस्य द्युतिः कान्तिर्यासां तथाभूतानां शुभ्रावयवानामित्यर्थः धावन्तीनाम् अनुगच्छन्तीनां बालावलीनां शिशुवृन्दानां करतलेभ्यः प्रोच्छलन्तः प्रभ्रश्यन्तः बालधयः पुच्छाः यासां तथोक्तानां नवतृणशिखां नूतनतृणाग्रं प्रायं प्रायं पुनः पुनराघ्राय मुञ्चतीनां त्यजन्तीनां वत्सावलीनां गोशिशूनां चटुलचटुलम् अतिचपलं यथा तथा शश्वत् पुनः पुनः आटीकनानि प्रोल्ल-[illegible]गतया वलन्ते प्रसरन्ति ॥ २४ ॥

आभीरीणामिति । यत्र आभीरीणां गोपाङ्गनानां नयनानां सरणयः पद्धतयः तत्सङ्गमादेव गोपाङ्गनानयनविक्षेपसम्पर्कादेवेत्यर्थः तासाम् आभीरीणां सद्यः झटिति यत् मोट्टायितं, तद्भावभाविते चित्ते वल्लभस्य कथादिषु । मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकामित्युक्तलक्षणं तस्य मधुरिमा माधुर्य्यं च यः उल्लासः तस्य या भङ्गी विशेषः तस्य विधाता जनयिता उद्दीपक इति यावत्

रेणुर्नायं प्रसरति गवां धूमधारा कृशानोः
वेणुर्नासौ गहनकुहरे कीचको रोरवीति ।
पश्योन्मत्ते ! रविरभिययौ नाधुनापि प्रतीचीं
मा चापल्यं कलय कुचयोः पत्रवल्लीं तनोमि ॥२६॥

दूरे वंशीध्वनिरुदयते हन्त मा धाव तावत्
धून्वेदानीमपि नहि गवां लक्ष्यते धूलिलेखा ।
अस्ति द्वारे गुरुरपि ततो लज्जितां स्तम्भयन्ती
नीवीं नीवीं त्वमिह तरसा याहि गेहान्तरालम् ॥२७॥

मम पीठीभूतः पीठासनस्वरूपः परिमलोद्गारस्य सौरभविस्तारस्य या गोष्ठी समाजः समूह इति यावत् तथा गरीयान् अतिमहान् पाण्डुरः श्वेतः गण्डशैलः स्थूलोपलविशेषः आस्थानीं गोष्ठसमाजम् अनु पश्चात् गोष्ठसमाजसन्निधावित्यर्थः विजयते सर्वोत्कर्षेण वर्त्तते ॥२५॥

अतः परं द्वादशभिः कुलकं वर्णयति रेणुरित्यादि । अयं गवां धेनूनां रेणुः धूलिः न प्रसरति नोत्तिष्ठति, कृशानोः अग्नेः धूमधारा धूमनिचयः इयमिति शेषः । गहनकुहरे काननमध्ये असौ वेणुः वंशीरवः न भवतीति शेषः, कीचकः वेणुविशेषः रोरवीति पुनः पुनः स्वनति, वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरः । हे उन्मत्ते ! पश्य अवलोकय, असौ रविः सूर्य्यः अधुनापि प्रतीचीं पश्चिमां दिशं न अभिययौ नास्तं गत इति भावः । चापल्यम् अधैर्य्यं मा कलय न कुरु, कुचयोः स्तनयोः पत्रवल्लीं पत्रलतां तनोमि विरचयामि । कस्याश्चित् प्रसाधिकायाः कामपि गोपाङ्गनां सन्ध्यायां कृष्णान्तिकगमनोत्सुकां प्रति वचनमिदम् ॥ २६ ॥

दूरे इति । वंशीध्वनिः दूरे उदयते उद्गच्छति, हन्त खेदे, तावत् मा धाव, न गच्छ । इदानीमपि गवां धून्वा धूम्रवर्णा धूलिलेखा नहि लक्ष्यते गोधूलिसमयोऽपीदानीं न वर्त्तते इति भावः ।

आप्रत्यूषादपि सुमनसां वीथिभिर्ग्रथ्यमाना
धत्ते नासौ सखि ! कथमहो वैजयन्ती समाप्तिम् ।
धिन्वन् गोपीनयनशिखिनो व्योमकक्षां जगाहे
सोऽयं मुग्धे ! निबिड़धवलो धूलिचक्राम्बुवाहः ॥२८॥

अस्मिन् भूयोविसृमरवपुःसौरभे सौरभेयी-
धूलीजालैः शबलितशिरोमालतीचक्रवाले ।
अन्तर्गोष्ठं प्रविशति हरौ हन्त कस्या न चेतः
तृष्णां धत्ते जरति ! मुखरे ! किं वृथा रारटीसि ॥२९॥

द्वारे गुरुः गुरुजनोऽपि अस्ति, ततः तस्मात् त्वम् इह अस्मिन् समये हे चौरे ! मत्ते ! लम्बितां नीवीं वसनग्रन्थिं स्तम्भयन्ती अपसार-यन्तीति यावत् तरसा शीघ्रं गेहान्तरालं गृहाभ्यन्तरं याहि ॥२७॥

आप्रत्यूषादिति । हे सखि ! आ प्रत्यूषादपि प्रभातसमयादपि सुमनसां पुष्पाणां वीथिभिः राजिभिः ग्रथ्यमाना असौ वैजयन्ती माला कथं न समाप्तिं धत्ते न समाप्तिं गच्छति, अहो आश्चर्यम् । हे मुग्धे ! सोऽयं निबिड़धवलः घनश्वेतः धूलिचक्राम्बुवाहः रजो-राशिमेघः गोपीनां नयनान्येव शिखिनः मयूराः तान् धिन्वन् प्रीणयन् निर्वापयन्निति यावत् दिवसे कृष्णविच्छेदजनितानां नेत्राग्नीनां सन्ध्यासमये तदुपागमाशया तासां तदग्निज्वालाविरामादिति भावः । व्योमकक्षाम् अन्तरीक्षविभागं जगाहे अध्यारुरोहेत्यर्थः ॥ २८ ॥

अस्मिन्निति । भूयसा बाहुल्येन विसृमरं विस्तारं गच्छत् वपुषः शरीरस्य सौरभं यस्य तथोक्ते सौरभेयीनां गवां धूलिजालैः रजश्चयैः शबलितं चित्रितं शिरसः मालतीचक्रवालं मालतीमाल्यं यस्य तादृशे अस्मिन् हरौ कृष्णे अन्तर्गोष्ठं गोष्ठाभ्यन्तरं प्रविशति सति कस्याः नायिकायाः चेतः चित्तं तृष्णां तदालिङ्गनलौलुप्यं न धत्ते न धारयति हन्त खेदे । हे मुखरे वाचाले ! जरति वृद्धे ! वृथा निरर्थकं किं कथं रारटीषि पुनः पुनः कटूक्तीः कथयसि ॥२९॥

मा मन्दाक्षं कुरु गुरुजनाद्देहलीं गेहमध्यात्
एहि क्रान्त्वा दिवसमखिलं हन्त विश्लेषतोऽसि ।
एष स्मेरो मिलति मृदुले ! बल्लवीचित्तहारी
हारी गुञ्जावलिभिरलिभिर्लीढगन्धो मुकुन्दः ॥४०॥

शौरिर्गोष्ठाङ्गणमनुसरन् शिञ्जितैरेव मुग्धः
किङ्किण्यास्ते परिहर दृशोस्ताण्डवं मण्डिताङ्गि ! ।
आरान्नीतैः कलपरिमिलन्माधुरीकैः कुरङ्गे
लब्धे सद्यः सखि ! विवशतां वागुरां कस्तनोति ॥४१॥

मेति । गुरुजनात् मन्दाक्षं लज्जां मा कुरु, गेहमध्यात् देहलीं द्वारपिण्डिकां द्वारदेशमिति यावत् एहि आगच्छ, हन्त खेदे विश्लेषतः विच्छेदात् अखिलं दिवसं क्रान्तासि, हे मृदुले कोमलाङ्गि ! स्मेरः स्मितवदनः बल्लवीनां गोपीनां चित्तहारी मनोहारी हारी गुञ्जावलिभिः हारी मालावान् अलिभिः भ्रमरैः लीढः स्पृष्टः गन्धो यस्य तथाभूतः एषः मुकुन्दः कृष्णः मिलति इतः आगच्छतीत्यर्थः ॥४०॥

शौरिरिति । हे मण्डिताङ्गि भूषितावयवे ! शौरिः कृष्णः गोष्ठाङ्गणं गोष्ठचत्वरम् अनुसरन् प्रचरन् सन् ते तव किङ्किण्याः क्षुद्रघण्टिकायाः शिञ्जितैरेव मुग्धः हृत इत्यर्थः दृशोः नयनयोः ताण्डवं नर्त्तनं भङ्गीविशेषमिति यावत् परिहर परित्यज किङ्किणीशिञ्जनैरेव कृष्णस्त्वया हृतः तत् कथं पुनः कटाक्षनिक्षेप इति भावः । हे सखि ! कलेन मधुरस्वरविशेषेण परिमिलन्ती संसृजन्ती माधुरी माधुर्य्यं येषु तादृशैः गीतैः कुरङ्गे मृगे सद्यः सपदि विवशताम् अधीनतां लब्धे नीते सति कः आरात् समीपे वागुरां बन्धनयन्त्रं तनोति विस्तारयति ? न कोऽपीत्यर्थः । अत्र लब्धे इत्यत्र नीते इति पाठः समीचीनः लभधातोर्द्विकर्मकत्वाभावादिति चिन्त्यम् । अत्र दृष्टान्तालङ्कारः तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥ ४१ ॥

यान्त्या लीलोद्भटकलतुलाकोटि सद्यस्त्वयासौ
लब्धा चन्द्रावलि! सखि! कुतः शब्दभेदाख्यविद्या।
पश्योपेन्द्रः सदनपदवीं बल्लवेन्द्रस्य मुञ्चन्
अन्तर्भिन्नो मुहुरिह यया सम्भ्रमाद् बभ्रमीति ॥४२॥

श्वासोत्कम्पं वसति वसतेर्वत्सलो द्वारि देवो
वल्लीस्तोमैः क्षणमिह मुखाम्भोजलक्ष्मीं विधेहि।
दूराच्चेतोमणिमपहरन्नेष भव्याङ्गि! दिव्यो
विब्बोकस्ते मुरविजयिनो वक्रपाती बभूव ॥ ४३ ॥

यान्त्येति। हे सखि! चन्द्रावलि! लीलया विलासेन उद्भटः उत्कटः कलः मधुरास्फुटध्वनिर्यस्याः तादृशी तुलाकोटिः नूपुरं यस्मिन् तद् यथा तथा यान्त्या गच्छन्त्या त्वया असौ शब्दभेदाख्यविद्या शब्देन भिनत्तीति शब्दभेदः आख्या संज्ञा यस्याः तथोक्ता शब्दप्रयोगेणैव लक्ष्यभेदिनी विद्या कुतः कस्मात् सकाशात् लब्धा प्राप्ता शिक्षितेति यावत् त्वयेति शेषः। पश्य अवलोकय, उपेन्द्रः कृष्णः बल्लवेन्द्रस्य गोपेन्द्रस्य नन्दस्य सदनपदवीं गृहमार्गं मुञ्चन् त्यजन् यया शब्दभेदाख्यविद्यया नूपुरनादेनेति भावः अन्तर्भिन्नः मनसि विद्धः सन् इह गोष्ठे सम्भ्रमात् कातर्य्यात् बभ्रमीति पुनः पुनःभ्रमतीत्यर्थः ॥ ४२ ॥

श्वासेति। हे भव्याङ्गि! चार्वङ्गि! देवः कृष्णः वत्सलः प्रेमवान् सन् वल्लीस्तोमैः लतापुञ्जैः उपच्छिततनुरिति शेषः श्वासेन सत्त्वोद्गमजनितेनेति भावः उद्गतः कम्पो यस्मिन् तत् यथा तथा वसतेः गृहस्य, वसती रात्रिवेश्मनोरित्यमरः। द्वारि द्वारदेशे वसति तिष्ठति, इह क्षणं क्षणं मुखाम्भोजलक्ष्मीं मुखकमलश्रियं विधेहि मुखकमलविकाशेनैनमनुगृहाणेति यावत्, एषः ते तव दिव्यः मनोज्ञः विब्बोकः गर्वजनितावहेलनं विब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादर

यष्टिर्भूमौ लुठति तरसा स्रंसते पश्य वंशी
कंसारातेः स्खलनममलं शृङ्गमङ्गीकरोति ।
दूरान्नन्दः कलयति पुरो ह्रेपयामुं न राधे !
वन्दे देवि ! स्थगय चपलापाङ्गभङ्गीवितानम् ॥४४॥
तिष्ठन् गोष्ठाङ्गणभुवि मुहुर्लोचनान्तं विधत्ते
जातोत्कण्ठस्तव सखि ! हरिर्देहलीवेदिकायाम् ।
मिथ्यामानोन्नतिकवलिते ! किं गवाक्षार्पिताक्षी
स्वान्तं हन्त ग्लपयसि बहिः प्रीणय प्राणनाथम् ॥४५॥

इति दर्पणः । दूरात् अतिशयेनेत्यर्थः चेतोमथि चित्तम् अपहरन् सुरविजयिनः कृष्णस्य वशंगतो बभूव कृष्णं प्रति पपातेति भावः ॥४३॥

यष्टिरिति । हे राधे ! पश्य अवलोकय कंसारातेः कृष्णस्य यष्टिः हस्तदण्डः भूमौ लुठति, तरसा झटिति वंशी स्रंसते हस्तात् स्खलतीत्यर्थः, अमलं निर्मलं शृङ्गं स्खलनम् अङ्गीकरोति हस्तात् भ्रश्यतीत्यर्थः, नन्दः दूरात् कलयति आगच्छतीत्यर्थः, पुरः अग्रतः अमुं कृष्णं न ह्रेपय न लज्जय, हे देवि ! वन्दे त्वां प्रणमामीत्यर्थः, चपलम् अपाङ्गभङ्गीवितानम् अपाङ्गभङ्गीविस्तारं स्थगय शमय ॥ ४४ ॥

तिष्ठन्निति । हे सखि ! जातोत्कण्ठः त्वद्दर्शनोत्सुक इति यावत् हरिः गोष्ठस्य अङ्गणभुवि चत्वरभूमौ तिष्ठन् तव देहली-वेदिकायां द्वारभूमिवेदिकायां मुहुः पुनः पुनः लोचनान्तं नयन-निक्षेपमित्यर्थः विधत्ते करोतीत्यर्थः, हे मिथ्यामानस्य उन्नत्या उदयेन कवलिते आक्रान्ते वृथामानगर्विते ! इत्यर्थः, गवाक्षे अर्पिते अक्षिणी नयने यया तथाभूता सती किं कथं स्वान्तं मनः ग्लपयसि ग्लानिं नयसि, हन्त खेदे बहिः स्थितमिति शेषः प्राणनाथं प्रीणय ॥४५॥

पश्य व्रीडां सकपटमसौ तन्वती नः पुरस्तात्
द्वारे गौरी न सरति मुहुः शौरिणाकारितापि ।
आकृष्टाया गहनकुहरे वेणुविद्याविनोदैः
जानात्यस्याः पुनरनुपमं विक्रमं कुञ्जवीथी ॥४६॥
इत्थं साचिस्मितरुचिभृतां यत्र सन्ध्यानुबन्धे
मामुद्दिश्य स्मरपरिमलं बिभ्रतीनामदभ्रम् ।
पौनःपुन्याद्विविधहृदयोत्तुङ्गभावानुषङ्गी
लीलाजल्पः कुवलयदृशां प्रेमपूर्णः पुरासीत् ॥ ४७ ॥

द्वादशभिः कुलकम् ।

पश्येति । मुहुः पुनः पुनः शौरिणा कृष्णेन आकारितापि आहूतापि दृग्भङ्ग्येति भावः, हूतिराकारणाह्वानमित्यमरः । असौ गौरी गौरवर्णा स्त्री गौरीनाम्नी काचित् गोपी वा नः अस्माकं पुरस्तात् अग्रतः सकपटं सव्याजं व्रीडां लज्जां तन्वती प्रकटयन्ती द्वारे न सरति द्वारदेशेऽपि नागच्छतीत्यर्थः पुनः किन्तु कुञ्जवीथी निकुञ्जश्रेणी वेणुविद्यायाः वंशीविद्यायाः विनोदैः पाटवैरिति भावः गहनकुहरे काननाभ्यन्तरे आकृष्टायाः अस्याः गौर्याः अनुपमम् असमं विक्रमं प्रेमचातुर्य्यमिति भावः जानाति ॥ ४६ ॥

इत्थमिति । पुरा मामुद्दिश्य साचिस्मितेन कुटिलाल्पहसितेन या रुचिः कान्तिः तां बिभ्रतीति तथोक्तानां सन्ध्यानुबन्धे सन्ध्यासमये अदभ्रं बहुलम्, अदभ्रं बहुलम् बह्वित्यमरः । स्मरपरिमलं कामावेशमिति यावत् बिभ्रतीनां कुवलयदृशां नीलोत्पलाक्षीणां पौनःपुन्यात् विविधानां हृदयस्य उत्तुङ्गानां भावानाम् अनुषङ्गी सम्पर्कशाली विविधाशयपूर्ण इति भावः प्रेमपूर्णः इत्थं लीलाजल्पः विलासालापः आसीत् ॥ ४७ ॥

दामाकृष्टिद्विगुणितकरावद्यविद्योतितानां
घर्माम्भोभिर्दरवलयितस्मेरगण्डस्थलानाम् ।
भालोपान्तप्रचलदलकश्रेणिभाजां मदीयैः
कीर्त्तिस्तोमैर्मुखरितमुखाम्भोजलक्ष्मीभराणाम् ॥ ४८ ॥
हेलाचञ्चद्वलयरणितग्रन्थितैर्मन्थनीनां
ध्वानोन्मिश्रैर्मसृणमसृणं मथ्नतीनां दधीनि ।
गीतैस्तासां कुवलयदृशां यत्र रात्रेर्विरामे
प्रेमोत्तानैर्मम समजनि स्वप्नलीलासमाप्तिः ॥ ४९ ॥

युग्मकम् ।

दामेत्यादि । यत्र गोकुले रात्रेः विरामे अवसाने दाम्नां मन्थनदण्डसञ्चालनार्थरज्जूनाम् आकृष्ट्या आकर्षणेन द्विगुणितैः द्विरावृत्तैः करैः अवद्यम् अनिन्द्यं यथा तथा विद्योतितानां विशेषेण शोभितानां, घर्माम्भोभिः मन्थनश्रमजनितस्वेदजलैः दरवलयितानि ईषद्युक्तानि स्मेराणि विकस्वराणि गण्डस्थलानि यासां तथोक्तानां, भालोपान्तेषु ललाटप्रान्तेषु प्रचलन्त्यः याः अलकानां चूर्णकुन्तलानां श्रेणयः ताः भजन्ते इति तथोक्तानां, मदीयैः मत्सम्बन्धिभिः कीर्त्तिस्तोमैः कीर्त्तिसमूहैः मुखरितः वाचालितः मुखाम्भोजानां लक्ष्मीभरः सौन्दर्यातिशयः यासां तथाविधानां, हेलया विलासेन चञ्चतां चलतां वलयानां रणितेन रणच्छब्देन ग्रन्थितैः युक्तैः मन्थनीनां मन्थनदण्डानां ध्वानोन्मिश्रैः ध्वनियुतैः मसृणमसृणम् अतिसुकोमलं यथा तथा दधीनि मथ्नतीनां विलोडयन्तीनां तासां कुवलयदृशां नीलोत्पलाक्षीणां गोपीनामिति शेषः प्रेमोत्तानैः प्रेमोन्नतैः गीतैः मम स्वप्नलीलासमाप्तिः निद्राव्यपगमः समजनि सञ्जातः ॥ ४८ ॥ ४९ ॥

निर्माय त्वं वितर फलकं हारि कंसारिमूर्त्या
वारं वारं दिशसि यदि मां माननिर्वाहणाय ।
यत् पश्यन्ती भवनकुहरे रुद्धकर्णान्तराहं
साहङ्कारा प्रियसखि ! सुखं यापयिष्यामि यामम् ॥५०॥
सन्ति स्फीता व्रजयुवतयस्त्वद्विनोदानुकूला
रागिण्यग्रे मम सहचरी न त्वया घट्टनीया ।
दृष्ट्वाभ्यर्णे शठकुलगुरुं त्वां कटाक्षार्धचन्द्रान्
भ्रूकोदण्डे घटयति जवात् पश्य संरम्भिणीयम् ॥५१॥

निर्मायेति । हे प्रियसखि ! यदि त्वं मां माननिर्वाहणाय मानावलम्बनाय वारं वारं दिशसि उपदिशसि, तदा कंसारिमूर्त्त्या कृष्णप्रतिकृतेः हारि मनोहरं फलकं निर्माय प्रस्तुत्य वितर देहि कृष्णमूर्त्तिं फलके चित्रयित्वा मह्यं समर्पयेत्यर्थः येनाहं तद्विच्छेदे विनोदं लभे इति भावः । यत् फलकं पश्यन्ती भवनकुहरे स्वगृहमध्ये रुद्धं कर्णयोरन्तरं छिद्रं यया तादृशी अहं तद्वेणुनिनादश्रवणं मा भूदिति धियेति भावः साहङ्कारा सगर्वा मानिनीत्यर्थः सती सुखं यामं प्रहरमात्रकालं न तु ततः परमपीति भावः यापयिष्यामि अतिवाहयिष्यामि ॥ ५० ॥

सन्तीति । तव विनोदाय सन्तोषाय अनुकूलाः समर्था इति यावत् स्फीताः बहव इति यावत् व्रजयुवतयः सन्ति, किन्तु रागिणी अनुरागवती कोपना च मम सहचरी त्वया अग्रे न घट्टनीया न कोपनीयेति भावः पश्य इयं संरम्भिणी कोपना शठानां धूर्त्तानां कुलगुरुं कुलाचार्य्यं त्वाम् अभ्यर्णे अन्तिके दृष्ट्वा जवात् वेगात् सहसेत्यर्थः भ्रूकोदण्डे भ्रूकार्मुके कटाक्षा एव अर्द्धचन्द्राः तदाख्यशराः तान् घटयति योजयति ॥ ५१ ॥

मा भूयस्त्वं वद रविसुतातीरधूर्त्तस्य वार्त्तां
गन्तव्या मे न खलु तरले ! दूति ! सीमापि तस्य ।
विख्याताहं जगति कठिना यत् पिधत्ते मदङ्गं
रोमाञ्चोऽयं सपदि पवनो हैमनस्तत्र हेतुः ॥ ५२ ॥
कामं दूरे वसतु पटिमा चारुछन्दे ! तवायं
राज्यं स्वामिन् ! विरचय मम प्राङ्गणं मा प्रयासीः ।
हन्त क्लान्ता मम सहचरी रात्रिमेकाकिनीयं
नीता कुञ्जे निखिलपशुपीनागरोज्जागरेण ॥ ५३ ॥

मेति । हे तरले चपले ! दूति ! त्वं रविसुतायाः यमुनायाः तीरे यो धूर्त्तः शठः कृष्ण इति भावः तस्य वार्त्तां भूयः पुनः मा वद न कीर्त्तय । तस्य सीमापि सान्निध्यमपि न खलु नैव मे मम कर्त्तरि षष्ठी गन्तव्या न कदापि तत्समीपं गमिष्यामीत्यर्थः । अहं जगति कठिना निठुरा विख्याता । ननु कठिनायास्ते कथं तत्स्मरणेन रोमाञ्च इत्यमाह यदिति, अयं रोमाञ्चः यत् मम अङ्गं सपदि झटिति पिधत्ते आच्छादयति, हैमनः हैमन्तः पवनः वायुः तत्र रोमाञ्चे हेतुः कारणम् ॥ ५२ ॥

काममिति । हे चारुछन्दे ! तव अयं पटिमा चातुर्यं कामं सम्यक् दूरे वसतु तिष्ठतु, त्वं चातुर्य्येण केवलं मां रुणंसि, तव सहचरी ज्ञातः, अतोऽहमितो गच्छामीति भावः । इति कृष्णस्योक्तिः । हे स्वामिन् नाथ ! मम प्राङ्गणं चत्वरं राज्यं विरचय मम चत्वरे अपि राजेव व्यवहरेति भावः, मा प्रयासीः न गच्छ, हन्त खेदे, हे निखिलपशुपीनागर ! सर्वगोपीलम्पट ! इयं मम सहचरी सखी एकाकिनी कुञ्जे उज्जागरेण कदा त्वमागन्तासीति निद्रापरित्यागेन रात्रिं नीता अतिवाहितवती अत्र कर्त्तरि क्तप्रत्ययश्चिन्त्यः । निखिलपशुपीनागरेत्यनेन अन्यनारीष्वासक्तो मत्सख्याममादरः कृत इति व्यज्यते ॥ ५३ ॥

मेदिन्यां ते लुठति दयिता मालती म्लानपुष्पा
तिष्ठन् द्वारे रमणि ! विमनाः खिद्यते पद्मनाभः ।
त्वं चोन्निद्रा क्षपयसि निशां रोदयन्ती वयस्या
माने कस्ते नवमधुरिमा तन्नु नालोकयामि ॥ ५४ ॥

मद्वक्त्राम्भोरुहपरिमलोन्मत्त सेवानुबन्धे
पत्युः कृष्णभ्रमर ! कुरुषे किन्तरामन्तरायम् ।
तृष्णाभिस्त्वं यदि कलरुतव्यग्रचित्तस्तदाग्रे
पुष्पैः पाण्डुच्छविमविरलैर्याहि पुन्नागपुञ्जम् ॥ ५५ ॥

अत्रायान्तं चलमपि हरिं लोकयन्ती बलिष्ठां
त्वामालम्ब्य प्रियसखि ! घने नास्मि कुञ्जे निलीना ।

मेदिन्यामिति । हे रमणि ! म्लानानि पुष्पाणि यस्याः तथाभूता दयिता प्रिया ते तव मालती मालतीमाला मेदिन्यां लुठति, विमनाः पद्मनाभः कृष्णः द्वारे तिष्ठन् खिद्यते क्लिश्यति । त्वञ्च उन्निद्रा त्यक्तनिद्रा सती वयस्याः सखीः रोदयन्ती निशां क्षपयसि यापयसि । अतः माने ते तव कः नवमधुरिमा नवीनं माधुर्य्यं तन्नु मधुरिमाणं न आलोकयामि न पश्यामि ॥ ५४ ॥

मदिति । हे मम वक्त्राम्भोरुहपरिमलेन मुखपद्मसौरभेण उन्मत्त ! कृष्णभ्रमर ! पत्युः स्वामिनः सेवानुबन्धे परिचर्य्यानुष्ठाने मत्कर्त्तव्ये इति भावः किन्तरां कथम् अन्तरायं विघ्नं कुरुषे ? यदि तृष्णाभिः मत्स्पृहाभिरिति भावः उपलक्षितः, कलरुते मधुरनिनादे वेणुरवे इति भावः व्यग्रचित्तः समासक्तमनाः भवसीति शेषः मदभिलाषेण वेणुं वादयसीति भावः, तदा अग्रे अविरलैः घनैः पुष्पैः पाण्डुच्छविं पाण्डुरकान्तिं पुन्नागपुञ्जं पुन्नागाख्यकाननं याहि । अहमपि पतिं ईक्षित्वा शीघ्रं तत्र गमिष्यामीति भावः ॥ ५५ ॥

अत्रेति । हे प्रियसखि ! अत्र आयान्तम् आगच्छन्तम् अतएव

मध्याकुण्ठे ! हृदयनिहिताद्‌ध्य पीताम्बराणि
यत्नो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्ठाः ॥५६॥
मां पुष्पाणामवचयमिषाद् दूरमानीय कुञ्जं
स्मित्वा धूर्त्तः किमिति रभसादुच्चकैर्गायसि त्वम् ।
मद्‌भ्रामन्त्रं रचय मुधा तन्वि ! गीतं तनोमि
स्फीतं वृन्दावनभुवि मुहुः कृष्णसारोत्सवाय ॥ ५७ ॥
वारं वारं व्रजसि सलिलच्छद्मना पद्मबन्धोः
पुत्रीं प्रातस्तव सखि ! रसः पुण्डरीकेक्षणेऽसौ ।

चन्द्रमपि चक्षुरपि हरिं कृष्णं लोकयन्ती पश्यन्ती अहं वञ्चितां वल्लवतरां त्वाम्‌ अथ च अभिनेत्र आश्रित्य घने निविडे कुञ्जे निलीना पतिता न अपि कृष्णदर्शनेनाखिरत्वात् निलीनत्वसम्भवे त्वदवलम्बनमेव ममालीनत्वहेतुरिति भावः। हे मुग्धे ! अद्य इदानीं हृदयनिहितात् अस्मात् पीताम्बरात् कृष्णात् अन्यः अपरः ते तव कुचपरिचये स्तनवक्षे यत्नः प्रभवः न अस्तीति शेषः। अतएव मत्पुरः ममाग्रतः मा व्यथिष्ठाः व्यथां मा कुर्वित्यर्थः। नायिकाद्दूतीं प्रत्युक्तिः ॥ ५६ ॥

मामिति। धूर्त्तस्त्वं पुष्पाणाम् अवचयस्य चयनं तस्य मिषात् व्याजात् मां दूरं कुञ्जम् आनीय स्मित्वा ईषत् हसित्वा रभसात् हर्षात् उल्लासादिति यावत् किमिति कथम् उच्चकैः गायसि ? हे तन्वि ! कृशाङ्गि ! मुधा निरर्थकम् अन्तः शङ्कां न रचय न कुरु, अहं वृन्दावनभुवि कृष्णसाराणाम् मृगाणाम् उत्सवाय उल्लासाय मुहुः पुनः पुनः स्फीतम् उच्चैरित्यर्थः गीतं तनोमि करोमि। कस्याश्चित् गोप्याः कृष्णस्य चोक्तिप्रत्युक्ती ॥ ५७ ॥

वारमिति। हे सखि ! सलिलच्छद्मना जलानयनच्छलेन वारं वारं पुनः पुनः पद्मबन्धोः सूर्यस्य पुत्रीं यमुनां व्रजसि गच्छसि

चेतःकाम्या भवति विशदा सारसाली न वा मे
ते न क्षीरं मुहुरभिलषाम्यच्युतं रक्तपद्मम् ॥ ५८ ॥
पश्याम्यन्तर्विहितवसतिं त्वामरालाङ्गनानां
अत्र वीवि ! स्पृहयसि कथं कृष्णकण्ठग्रहाय ।
साधु ब्रूषे सखि ! मदकलो मां शिखण्डोज्ज्वलोऽयं
कुञ्जे दृष्ट्वा भुजगदमनोद्दामदर्पोऽभ्युपैति ॥ ५९ ॥

तव पुण्डरीकेक्षणे पुण्डरीकाणां सिताम्भोजानां, पुण्डरीकं सिताम्भोजमित्यमरः । यमुनाजातानामिति भावः ईक्षणे दर्शने अथ पुण्डरीकेक्षणे कृष्णे असौ रसः अनुरागः ख्यातः विदितः । विशदा विकस्वरा सारसाली पद्मराजिः मे मम न वा नैव *के तथापि न चेतसः मनसः काम्या स्पृहणीया, केवलं क्षीरं रक्ता पद्मा लक्ष्मीर्येन तादृशम् अच्युतं कृष्णं मुहुः पुनः पुनः अभिलषामि कामये । गोप्योक्तिप्रत्युक्ती ॥ ५८ ॥

पश्यामीति । हे वीवि भक्ते ! त्वाम् अरालाङ्गनानां कुटिलनारीणाम् अन्तर्मध्ये विहिता वसतिर्यया तथोक्तां कुटिलरमणीमध्ये गताामिति भावः, पश्यामि वितर्कयामि, अत्र कथं कृष्णस्य कण्ठग्रहाय कण्ठालिङ्गनाय स्पृहयसि आकाङ्क्षसि ? यद्वा हे कलम मराल हंसस्वरूपेत्यर्थः हंसानां क्षीरप्रियत्वादिति कृष्णसाम्यमिति बोध्यम् अङ्गनानां नारीणाम् अन्तः मध्ये विहितवसतिं कृतावस्थानं क्षीरवासमित्यर्थः त्वां पश्यामि, अत्र कण्ठग्रहाय कथं स्पृहयसि क्षीरप्रियस्त्वं क्षीरग्रहणादेव निवर्तस्व, पुनः कण्ठाश्लेषं याचसे कथमिति भावः । हे सखि ! साधु सम्यक् ब्रूषे कथयसि, अयं शिखण्डोज्ज्वलः मयूरपिच्छधरः मदकलः मदोद्धतः भुजगस्य कालियस्य दमनेन उद्दाम, उद्भटः दर्पो यस्य तथाभूतः कृष्णः कुञ्जे माम् अभ्युपैति अभिधावमानतीत्यर्थः । गोप्योक्तिप्रत्युक्ती ॥५९॥

बाले ! चन्द्रावलि ! न हि बहिर्भूय भूयः प्रदोषे
गेहात् तृष्णावति ! कुरु पुरः कृष्णवर्त्मावलोकम् ।
सर्वस्यान्तर्जडिमदमने पावके नाद्य लब्धे
मुग्धे ! सिद्धिं मम रसवती प्रक्रिया न प्रयाति ॥६०॥
हस्तेनाद्य प्रियसखि ! लसत्पुष्कराभेन दूरात्
कृष्णेनाहं मदकलदृशा कम्पिताङ्गी विकृष्टा ।
नीचैर्जल्प भ्रमति पुरतो भ्रान्तचित्ते ! गुरुस्ते
कालिन्दीपुलिनविपिने दीप्रदन्तीश्वरेण ॥ ६१ ॥

बाल इति । हे बाले मुग्धे ! तृष्णावति स्पृहावति ! चन्द्रावलि ! भूयः पुनः गेहात् सद्मनात् बहिर्भूय बहिर्निःसृत्य प्रदोषे रजनीमुखे पुरः अग्रतः कृष्णवर्त्मावलोकम् अग्न्यवलोकनं कृष्णस्य मार्गावलोकनं न हि कुरु । हे मुग्धे ! सर्वस्य अन्तर्जडिमा आन्तरं जाड्यं शैत्यं पक्षे अज्ञानं तस्य दमने शमयितरि पावके अग्नौ पापपक्षे नाशिनि कृष्णे इति भावः अद्य लब्धे सति मम रसवती प्रक्रिया अनुरागव्यापारः सिद्धिं न प्रयाति न अपितु सिद्धिं गच्छति अद्य अग्निप्रवेशः कृष्णलाभो वा ममाभीष्ट इति भावः ॥ ६० ॥

हस्तेनेति । हे प्रियसखि ! अद्य मदकले दृशौ यस्य तादृशेन मदविकस्वरचक्षुषा कृष्णेन दूरात् लसत् विकसत् यत् पुष्करं पद्मं तस्येव आभा यस्य तथाभूतेन विकसितकमलनिभेनेत्यर्थः हस्तेन अहं विकृष्टा अतएव कम्पिताङ्गी कम्पमानावयवा जातास्मीति शेषः । हे भ्रान्तचित्ते ! नीचैः मन्दं मन्दं जल्प वद, ते तव गुरुः श्वशुरादिः पुरतः अग्रतः भ्रमति, कृष्णम् कालिन्द्याः यमुनायाः पुलिनविपिने सैकतान्तःकानने दीप्रदन्तीश्वरेण उद्धतगजराजेन आकृष्टेत्यन्वयः । कृष्णेन कृष्णवर्णेन मदकलचक्षुषा मदमत्तनयनेनेति च दीप्रे तस्य विशेषणम् ।

वृन्दारण्ये मम विदधिरे निर्भरोत्कण्ठितानि
क्रीडोल्लासैः सपदि हरिणा हा मया किं विधेयम् ।
ज्ञातं धूर्ते ! स्पृहयसि मुहुर्नन्दपुत्राय तस्मै
मा शङ्किष्ठाः सखि ! मम रसो दिव्यसारङ्गतोऽभूत् ॥६२॥
इत्थम्भूता बहुविधपदारम्भगम्भीरगर्भा
कर्णानां मे स्फुटतरतया कोटिभिः पातुमिष्टा ।
आसीत्तासां प्रियसख ! पुरा यत्र कल्याणवाचां
प्रेमोल्लासप्रकटनपरा कर्मठा नर्मगोष्ठी ॥ ६३ ॥

चतुर्दशभिः कुलकम् ।

अत्रापह्नुतिरलङ्कारः । तदुक्तं दर्पणे । गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वाऽन्ययेत् साऽपह्नुतिरिति ॥६१॥

वृन्दारण्य इति । वृन्दारण्ये हरिणा सपदि झटिति क्रीडोल्लासैः विहारानन्दैः मम निर्भरोत्कण्ठितानि अत्यौत्सुक्यानि विदधिरे कृतानि, हा खेदे, मया किं विधेयं कर्त्तव्यम् ? हे धूर्ते ! ज्ञातं विदितं तस्मै नन्दपुत्राय मुहुः पुनः पुनः स्पृहयसि ? हे सखि ! मा शङ्किष्ठाः शङ्कां मा कुरु, मम दिव्यसारङ्गतः दिव्यात् कृष्णसारात् दिव्ये कृष्णसारे वा रसः अनुरागः अभूत् । अत्र हरिणा कृष्णेन हरिणा मृगा वेति अर्थद्वयस्य विदधिरे इति कर्मणि कर्त्तरि च निर्भरोत्कण्ठिता इति प्रथमायां द्वितीयायाञ्च सम्भवात् श्लेषालङ्कारः पूर्ववदपह्नुतिश्चेत्यनयोः संसृष्टिः ॥ ६२ ॥

इत्थमिति । हे प्रियसख ! पुरा पूर्वं यत्र कल्याणवाचां मधुरभाषिणीनां तासां गोपाङ्गनानाम् इत्थम्भूता बहुविधेन पदानामारम्भेण प्रयोगेण गम्भीरः दुरवगाहः गर्भः अभिप्राय इति यावत् यस्याः तथाभूता स्फुटतरतया स्पष्टतरतया कर्णानां कोटिभिः कोटिकोटिकर्णैरिति यावत् पातुं सादरं श्रोतुमिति भावः इष्टा

केयं श्यामा स्फुरति सरले ! गोपकन्या किमर्थं
प्राप्ता सख्यं तव मृगयते निर्मितासौ वयस्या ।
आलिङ्गामुं मुहुरिति तथा कुर्वती मां विदित्वा
नारीवेशं ह्रियमुपययौ मानिनी यत्र राधा ॥ ६४ ॥
यत्रोत्तुङ्गाः करपरिचयं शश्वदासेदिवांसो
भूयांसो मे विमलहृदयां कल्पिता मण्डलीभिः ।
बन्धायोद्यत्तरलतरसां तर्णकानां निखाताः
कीलाः कूलस्थलवलयिनो भान्ति पद्माकराणाम् ॥ ६५ ॥

अभिमता कर्मठा कार्य्यसाधनी प्रेमृणाम् उल्लासस्य उत्कृष्टतायाः प्रकटने प्रकाशः तत्परा तत्प्रवणा नर्मगोष्ठी रहस्यलीलासमाजः आसीत् ॥ ६२ ॥

केयमिति । इयं का श्यामा श्यामाङ्गी स्फुरति राजते ? हे सरले मुग्धे ! गोपकन्या इयमिति शेषः, किमर्थम् अत्र स्फुरतीति शेषः ? प्राप्ता आगता तव सख्यं मृगयते कामयते त्वया सह सख्याभिलाषिणी इति आगतेति भावः । असौ वयस्या सखी निर्मिता कृता मयेति शेषः, तर्हि अमुं तद्धः पुनः पुनः आलिङ्ग इति यस्या उक्तौ सतीति शेषः नारीवेशं स्त्रीवेशधारिणं मां विदित्वा तथा कुर्वती आलिङ्गन्तीत्यर्थः मानिनी राधा यत्र ह्रियं लज्जाम् उपययौ प्राप ॥ ६४ ॥

यत्रेति । यत्र उद्यत् उदयं गच्छत् तरलं चञ्चलं तरः वेगः येषां तथाभूतानां तर्णकानां वत्सानां बन्धाय पद्माकराणां सरसां कूलस्थलवलयिनः तटस्थलमण्डलिनः उत्तुङ्गाः उन्नताः शश्वत् निरन्तरं मे मम करपरिचयं हस्तसम्बन्धम् आसेदिवांसः प्राप्तवन्तः भूयांसः बहवः विमलहृदयां निर्मलचित्तानां मण्डलीभिः कल्पिताः रचिताः निखाताः प्रोताः कीलाः शङ्कवः भान्ति राजन्ते ॥ ६५ ॥

नो जानीमः कठिनविधिना मद्विधानां कपाले
गोपालीनां किल विलिखिता कीदृशी वर्णलेखा ।
यः सन्ध्यायां सुमुखि ! मिलितो गोकुले राजदूतः
सोऽयं कर्णे निभृतनिभृतं माधवं वावदीति ॥ ६६ ॥

एष ख्याता व्रजनरपतेराज्ञया गोकुलेऽस्मिन्
बाले ! प्रातर्नगरगतये घोषणामातनोति ।
दुष्टं भूयः स्फुरति च बलाद्दीक्षणं दक्षिणं मे
तेन स्वान्तं स्फुटति चटुलं हन्त भाव्यं न जाने ॥ ६७ ॥

प्रातर्यातां नरपतिपुरे तथ्यमाकर्ण्य शौरेः
आयामाय प्रियसखि ! मया यामिनी प्रार्थिताभूत् ।

नो इति । हे सुमुखि ! कठिनविधिना निष्ठुरेण विधात्रा मद्विधानां गोपालीनां गोपाङ्गनानां कपाले कीदृशी वर्णलेखा अक्षरपङ्क्तिः विलिखिता किल, नो जानीमः, कथमित्याशङ्क्य इत्याह य इति, यः राजदूतः अक्रूरः इति भावः सन्ध्यायां गोकुले मिलितः समागतः, सोऽयं कर्णे माधवं कृष्णं निभृतनिभृतं मन्दं मन्दं वावदीति पुनः पुनर्वदति ॥ ६६ ॥

एष इति । हे बाले मुग्धे ! एष ख्याता राजकिङ्करः व्रजनरपतेः गोकुलेन्द्रस्य नन्दस्य आज्ञया प्रातः प्रभाते अस्मिन् गोकुले नगरगतये राजधानीगमनाय घोषणाम् आतनोति ददाति । दुष्टं मे मम दक्षिणम् ईक्षणं नयनं भूयः पुनः पुनः बलात् स्फुरति स्पन्दते च, तेन हेतुना चटुलम् अधीरं स्वान्तं मनः स्फुटति विदीर्यते हन्त खेदे भाव्यं किं भविष्यति इति न जाने ॥ ६७ ॥

प्रातरिति । हे प्रियसखि ! प्रातः प्रभाते नरपतिपुरे मथुरायां शौरेः कृष्णस्य यातां तथ्यं सत्यम् आकर्ण्य श्रुत्वा मया यामिनी

पश्य क्षिप्रं प्रथितलघिमा यामिनीयं प्रभाता
जायन्ते हि प्रचुरतमसो नानुकूलाः परेषु ॥ ६८ ॥
यावद् व्यक्तिं न किल भजते गान्दिनेयानुबन्धः
तावन्नत्वा सुमुखि ! भवतीं किञ्चिदभ्यर्थयिष्ये ।
पुष्पैर्यस्या मुहुरकरवं कर्णपूरान् मुरारेः
सेयं फुल्ला गृहपरिसरे मालती पालनीया ॥ ६९ ॥
नावैषि त्वं पतितमशनिं मूर्ध्नि निर्मीयमाणा-
मेनां कस्ते सखि ! शिखरिणीं हन्त पाता हतासि ।

रजनिः आयामाय दैर्घ्याय अप्रभाताय प्रार्थिता अभूत् । पश्य अवलोकय इयं प्रथितः विस्तृतः प्रकटित इत्यर्थः लघिमा लाघवं यया तादृशी यामिनी रजनी प्रभाता, हि तथाहि प्रचुरं प्रभूतं तमः तिमिरम् अज्ञानञ्च येषां तादृशाः जनाः परेषु अन्येषु अनुकूलाः न जायन्ते न परोपकृतमाचरन्तीत्यर्थः । सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ६८ ॥

यावदिति । गान्दिनेयस्य अक्रूरस्य अनुबन्धः उद्योगः कृष्णं नीत्वा गमनमिति भावः यावत् व्यक्तिं प्रकटं न किल भजते नैव प्राप्नोति यावत् कृष्णोऽक्रूरेण मधुरां न नीयते इति भावः, तावत् हे सुमुखि ! भवतीं नत्वा किञ्चित् अभ्यर्थयिष्ये प्रार्थयिष्ये । किमित्याह पुष्पैरिति, यस्याः मालत्याः पुष्पैः मुहुः पुनः पुनः मुरारेः कृष्णस्य कर्णपूरान् कर्णभूषणानि अकरवं कृतवती अस्मि सा इयं गृहपरिसरे गृहप्राङ्गणे फुल्ला विकासिनी मालती पालनीया रक्षणीया त्वयेति शेषः, अहं कृष्णे अक्रूरेण हृतवति एव प्राणान् मोक्ष्यामीति भावः ॥ ६९ ॥

नेति ! हे सखि ! त्वं मूर्ध्नि शिरसि पतितम् अशनिं वज्रं न अवैषि न जानासि, ते तव निर्मीयमाणां परिपोष्यमाणाम्

तूर्णं मुग्धे ! बहिरनुसर प्राङ्गणं गेहमध्यात्
अध्यारूढो जिगमिषुरसौ स्यन्दनं नन्दसूनुः ॥ ७० ॥
आसीदार्य्ये ! पशुपपटलीमन्तरा नान्तरायः
प्रापुः पापा न च विकलतां पादभङ्गैस्तुरङ्गाः ।
ध्वस्तो नाभूदयमपि मनाक् स्यन्दने चक्रबन्धः
सत्यं गन्ता मधुपुरमसौ हन्त किं केशिहन्ता ॥ ७१ ॥
आरादग्रे कलय नृपतेर्दूत ! निर्धूतलज्जा
सज्जा तन्वी किमपि विषमं साहसं कर्त्तुमिच्छुः ।
यानाद्यावद्विसृजसि पुरश्चन्द्रहासं न कृष्णं
हस्तात्तावद्विसृजति सखी चन्द्रहासं न कृष्णम् ॥ ७२ ॥

एनां त्रिशिरिर्षीं मल्लिकां कः माता मारयिष्यति ? हन्त खेदे हतासि विनाशं गतासि, हे मुग्धे ! तूर्णं शीघ्रं गेहमध्यात् वहिः प्राङ्गणम् अनुसर आगच्छ, असौ नन्दसूनुः कृष्णः जिगमिषुः गन्तुमिच्छुः स्यन्दनं रथम् अध्यारूढः अधितष्ठौ ॥ ७० ॥

आसीदिति । हे आर्य्ये ! साधुशीले ! पशुपपटलीं गोपवृन्दमन्तरा मध्ये गोकुलमध्ये इत्यर्थः अन्तरायः विघ्नः कश्चिदिति शेषः न आसीत् येन गमनव्याघात इति भावः । पापाः तुरङ्गाः रथाश्वाः पादभङ्गैः विकलतां गतिराहित्यं न प्रापुः, अयमपि स्यन्दने रथे चक्रबन्धः चक्रयोगः मनाक् ध्वस्तः विनष्टः न अभूत्, हन्त खेदे असौ केशिहन्ता कृष्णः सत्यं मधुपुरं किं गन्ता गमिष्यति ? ॥ ७१ ॥

आरादिति । हे नृपतेर्दूत ! राजकिङ्कर ! आरात् समीपे अग्रे पुरतः कलय पश्य, इयं तन्वी निर्धूतलज्जा विलज्जा सती किमपि विषमं साहसम् आत्महत्यारूपमिति भावः कर्त्तुम् इच्छुः सज्जा सज्जिता भवतीति यावत्, यावत् त्वं पुरः अग्रतः यानात् यानात् चन्द्रहासं चन्द्र इव हासो यस्य तथाभूतं कृष्णं न विसृ-

मुग्धे ! पश्य क्षणमपि हरिं नैवमुन्मीलयन्ती
मोहेन त्वं विरचय मुहुर्नात्मनो वञ्चनानि ।
शृण्वन् काकूत्करमपि पुरो हन्त सीमन्तिनीनां
क्रूरस्तूर्णं विनुदति रथं दूरमक्रूरनामा ॥ ७३ ॥
पश्य क्षामोदरि ! तव मुखालोकजन्मा हि शोको
वारं वारं हरिनयनयोर्बाष्पमन्तस्तनोति ।
धावद्वाजिस्फुरदुरुखुरोत्तानितानां वितानो
धूलीनान्तु श्रयति विसरन्नेष मिथ्याकलङ्कम् ॥ ७४ ॥

जसि न त्यजसि, तावत् षष्ठी दृश्यमिति शेषः हस्तात् कृष्णं कृष्णवर्णं चन्द्रहासम् असिं न विसृजति न त्यजति, कृष्णविरहे प्राणान् त्यक्तुमियमसिं हस्ते चकार तत्त्वं रथात् कृष्णम् अवरोहयेति भावः ॥ ७२ ॥

मुग्धे इति । हे मुग्धे ! नेत्रम् उन्मीलयन्ती सती क्षणमपि हरिं पश्य अवलोकय, त्वं मोहेन अज्ञानेन आत्मनः वञ्चनानि हरिदर्शनाभावजनितान् विप्रलम्भानित्यर्थः मुहुः पुनः न विरचय न कुरु, हरिदर्शनाभावेनात्मानं न वञ्चयेत्यर्थः । हन्त खेदे अक्रूरनामा क्रूरः निष्ठुरो जनः सीमन्तिनीनां नारीणां काकूत्करं करुणोक्तिसमूहान् शृण्वन्नपि पुरः अग्रतः तूर्णं शीघ्रं रथं दूरं विनुदति चालयति ॥७३॥

पश्येति । हे क्षामोदरि कृशोदरि ! पश्य तव मुखालोकात् मुखदर्शनात् जन्म यस्य तादृशः शोकः वारं वारं हरेः कृष्णस्य नयनयोः अन्तः मध्ये बाष्पं तनोति विस्तारयति हि तव मुखदर्शनेन शोकात् कृष्णः अश्रुपूर्णः भवतीत्यर्थः । धावतां वाजिनाम् अश्वानां स्फुरद्भ्यः प्रसरद्भ्यः उरुभ्यः महद्भ्यः खुरेभ्यः उत्तानितानाम् उत्थितानां धूलीनाम् एषः वितानः विस्तारः विसरन् प्रसरन् सन् मिथ्याकलङ्कं श्रयति लभते । वास्तवं तव मुखदर्शनजेन शोकेनास्य नयन-

कृष्णं मुष्णन्नकरुण ! बलाद्गोपनारीवधार्थी
मा मर्य्यादां यदुकुलभुवां भिन्धि रे गान्दिनेय ! ।
इत्युक्ता मम मधुपुरे यात्रया यत्र तासां
विस्रस्तानां परिववलिरे वल्लवीनां विलापाः ॥ ७५ ॥

द्वादशभिः कुलकम् ।

यस्माद्गौराहरणकपटप्राप्तगोपालनारी-
गूढक्रीडावसतिनिविडच्छायकुञ्जोपगूढः ।
यत्रादूरे विलसति महान् बद्धरोलम्बसद्मा-
पद्मामोदस्नपितपवनः पावनाख्यस्तडागः ॥ ७६ ॥

वारिसङ्गमः न तु अम्बुरोत्थितरजःसङ्गेन, वाष्पलोकास्तु रजो-
योगेनैवास्य नेत्रवारिसङ्गम इति रजांस्येव कलङ्कयन्तीति भावः ॥७४॥

कृष्णमिति । रे अकरुण गान्दिनेय गान्दिनीसुत अक्रूर !
बलात् गोपनारीणां वधार्थी सन् कृष्णं मुष्णन् अपहरन् यदुकुल-
भुवां यदुवंशीयानां महात्मनामिति भावः मर्य्यादां स्थितिं शिष्टाचार-
मित्यर्थः मा भिन्धि न नाशय । मम मधुपुरे यात्रया यत्र गोकुले
इतीत्थम् उक्ताः महान्तः विस्रस्तानां व्याकुलानां तासां वल्लवीनां
गोपीनां विलापाः खेदवचनानि परिववलिरे प्रसस्रुः ॥७५॥

यस्मादिति । यत्र अदूरे सन्निधौ यस्मात् सततं गौराहरणकपटेन
गवाहरणच्छलेन प्राप्तानाम् आगतानां गोपालनारीणां गोपाङ्गनानां
गूढा या क्रीडा विहारः तस्याः वसतिः स्थानं निविडा घना छाया
यस्य तादृशं यत् कुञ्जं लतादिपिहितस्थानं तेन उपगूढः आलिङ्गितः
वेष्टित इत्यर्थः महान् बद्धं रोलम्बानां भ्रमराणां सद्म वेश्म आश्रयः
येषु तादृशानां पद्मानाम् आमोदेन स्नपितः पूरितः पवनो यस्य
यथाभूतः पावनाख्यः पावननामा तडागः सरोवरं विलसति
विस्फुरति ॥ ७६ ॥

लीलाक्रान्तैर्मुरविजयिनः सर्वतः पादपातै-
र्वैलक्षण्यं किमपि जगतामन्तराकर्षि नीताः ।
एते नन्दीश्वरपरिसरा नेत्रवीथीं भजन्तो
तीव्रं मातः ! किमपि दहनं चेतसि ज्वालयन्तः ॥७७॥
अस्ति प्रेम्णां त्वयि परिमलो मांसलः कंसशत्रोः
अद्य श्वो वा स तव भविता हारिहारानुकारी ।
दम्भोलीनामपि सुवदने ! गर्भनिर्भेददक्षैः
एभिः कामं किमु विलपितैर्बान्धवान् दन्दहीषि ॥७८॥
मा कार्पण्याद्विरचय वृथा बाष्पमोक्षं हताशे !
कृष्णाश्लिष्टां तनुमनुपमां स्वेच्छया न त्यजामि ।

लीलेति । हे मातः ! लीलया विलासेन आक्रान्तैः युक्तैः सविलासैरित्यर्थः मुरविजयिनः कृष्णस्येत्यर्थः पादपातैः चरणविक्षेपैः सर्वतः समन्तात् जगताम् अन्तराकर्षि मनोहरं किमपि वैलक्षण्यं वैचित्र्यं नीताः एते नन्दीश्वरपरिसराः नन्दीश्वराख्यपर्वतप्रदेशाः तीव्रं दारुणं किमपि अनिर्वचनीयं दहनम् अग्निं चेतसि ज्वालयन्तः सन्तः नेत्रवीथीं दृष्टिपथं भजन्तो प्राप्नुवन्ति मादृशामिति शेषः ॥७७॥

अस्तीति । हे सुवदने ! त्वयि कंसशत्रोः कृष्णस्य प्रेम्णां मांसलः महान् परिमलः सौरभम् अस्ति त्वामत्यर्थं कृष्णः प्रीणातीति भावः, अतः सः कृष्णः अद्य श्वो वा परदिने वा तव हारिहारानुकारी मनोहरहारसदृशः कण्ठाश्लेषीति भावः भविता । दम्भोलीनां वज्राणामपि गर्भनिर्भेददक्षैः अन्तर्दलनक्षमैरित्यर्थः वज्रविदारणैरित्यर्थः एभिर्विलपितैः विलापवचनैः किमु कथं बान्धवान् मादृशजनान् कामं सम्यक् दन्दहीषि पुनः पुनर्दहसि ? ॥७८॥

मेति । हे हताशे दुराशे ! कार्पण्यात् दैन्यात् वृथा बाष्पमोक्षम् अश्रुवर्षणं मा विरचय न कुरु, कृष्णेन आश्लिष्टाम् आलि-

व्यालस्तीव्रो विरहदहनादाप्तजन्मा बलान्मे
मर्मोन्माथी लघुतरमिमां पातयन् दन्दहीति ॥७९॥
कारुण्याब्धौ क्षिपसि जगतीं हा किमेभिर्विलापैः
धेहि स्थैर्यं मनसि यदभूरध्वगे बद्धरागा ।
स्मृत्वा वाणीमपि यदि निजां स व्रजं नाभिजिहीते
धूर्त्तोऽस्माकं त्रिजगति ततस्तन्वि ! निर्दोषताभूत् ॥८०॥
स्वायं गत्वा मधुरिपुरितो गोकुलादस्मदीयः
काले रंस्ये सुखमिति मया हन्त मानो व्यधायि ।
का जानीते यदिह खलताचातुरीदीक्षितेन
निक्षेप्तव्यं शिरसि कुलिशं गान्दिनीनन्दनेन ॥ ८१ ॥

छिताम् अतएव अनुपमाम् असहर्षीं तनुं शरीरं अपेक्ष्या न त्यजामि । किन्तु विरहदहनात् विच्छेदानलात् आप्तं लब्धं जन्म येन तथाभूतः तीव्रो दारुणः व्यालः मे मम मर्मोन्माथी मर्मभेदी सन् बलात् इमां तनुं लघुतरं क्रूततरं पातयन् दन्दहीति पुनः पुनर्दहति ॥ ७९ ॥

कारुण्याब्धाविति । हा इति खेदे, हे तन्वि ! एभिर्विलापैः जगतीं पृथ्वीं किं कथं कारुण्याब्धौ करुणासागरे दुःखाम्बुधावित्यर्थः क्षिपसि ? सर्वानेव जनान् कथं दुःखयसीत्यर्थः । मनसि स्थैर्यं सुस्थिरतां धेहि आश्रय । यत् यतः अध्वगे पथिके बद्धरागा जातानुरागा अभूः, पथिकप्रेमपाशमोहयो गतिरिति भावः । सः धूर्त्तः यदि निजां वाणीं शीघ्रमहं मथुरामण्डलात् आगमिष्यामि त्वं मा विषादमेवंरूपामिति भावः स्मृत्वा व्रजं गोकुलं न अभिजिहीते न आगच्छति ततः तदा त्रिजगति अस्माकं निर्दोषता अभूत् । वयं निर्दोषाः परं स एव जगति दोषी भविष्यतीत्यर्थः ॥८०॥

स्वायमिति । अस्मदीयः अयं मधुरिपुः कृष्णः इतः अस्मात् गोकु-

न क्षोदीयानपि सखि ! मम प्रेमगन्धो मुकुन्दे
क्रन्दन्तीं मां निजसुभगताख्यापनाय प्रतीहि ।
खेलद्वंशीवलयिनमनालोक्य तद्वक्त्रबिम्बं
ध्वस्तालम्बा यदहमहह प्राणकीटं बिभर्मि ॥ ८२ ॥
आशापाशैः सखि ! नवनवैः कुर्वती प्राणबन्धं
जात्या भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्
उत्फुल्लास्ते मम किल बलान्मर्म निर्मूलयन्ति ॥८३॥

स्यात् क कुत्र गन्ता भविष्यति ? न क्वापीत्यर्थः । काले सुखं रंस्ये विहरिष्यामि अनेनेति शेषः इति धियेति शेषः यथा नागः व्याधिक्षतः हन्त खेदे । इह जगता दौर्जन्यं तेन वा चातुरी वञ्चना तस्यां दीक्षितः निपुणः तेन गान्दिनीनन्दनेन अक्रूरेण विरचि कुलिशं वज्रं निक्षेप्स्यमिति यत् तत् का जानीते ? न क्वापीत्यर्थः ॥८१॥

नेति । हे सखि ! मुकुन्दे कृष्णे मम क्षोदीयानपि स्वल्पोऽपीत्यर्थः प्रेमगन्धः प्रेमलेश इत्यर्थः न अस्तीति शेषः । तर्हि कथं क्रन्दसीत्याह क्रन्दन्तीमिति, निजसुभगताख्यापनाय स्वस्य सौभाग्यप्रकटनाय मां क्रन्दन्तीं प्रतीहि जानीहि, यत् यतः खेलद्वंशीवलयिनं विहरद्वेणुभूषितं तत् वक्त्रबिम्बं मुख-मण्डलम् अनालोक्य अहह ध्वस्तालम्बा अनाथेत्यर्थः अहं प्राण-कीटं कीटभूतम् अतितुच्छमिति भावः प्राणं बिभर्मि धारयामि अहह इति खेदे ॥ ८२ ॥

आशेति । हे सखि ! जात्या भीरुः स्वभावजातिरित्यर्थः अहं पुनः नवनवैः आशापाशैः दुराशारज्जुभिः प्राणबन्धं प्राणानां निरोधं कुर्वती सती कति वासराणि कियतो दिवसान् क्षयिष्ये यापयिष्यामि ? अत्र वासराणीति बहुवचनं क्षयिष्ये इति च क्रियापदं चिन्त्यम् । एते उत्फुल्लाः विकसिताः वृन्दावनविटपिनः वृन्दारण्यतरवः तान्

सा विश्राम्यन्मनसिजधनुर्विभ्रमोद्बोधविद्या
चिल्लीवल्लिभ्रमिमधुरिमोद्दामसम्पद्भिरिष्टा ।
एतामार्त्तिं मम शमयिता स्मेरताशङ्कराङ्गी
प्रेमोत्तुङ्गा किमु मुरभिदो भङ्गुरापाङ्गभङ्गी ॥८४॥
कामं दूरे सहचरि ! वरीवर्त्ति यत् कंसवैरी
नेदं लोकोत्तरमपि विपद्दुर्दिनं मे दुनोति ।
आशाकीलो हृदि किल हृतः प्राणरोधी तु यो मे
सोऽयं पीड़ां निविड़वड़वावह्नितीव्रस्तनोति ॥८५॥

विबाधान् कारयन्तः सन्तः मम मर्म बलात् निर्मूलयन्ति निध्वंसयन्ति किल ॥ ८३ ॥

सेति । विश्राम्यतः उद्यमरहितस्येति भावः मनसिजधनुषः कामकार्मुकस्य विभ्रमस्य विस्फुरणस्य उद्बोधे उज्जृम्भणे विद्या, चिल्लीनां भिल्लीकीटानां वल्लिषु लतासु या भ्रमिः भ्रमणं स्फुरणमिति यावत् तद्वत् मधुरिमा मनोज्ञत्वं यस्याः तथाभूता, उद्दामाः उद्भटाः याः सम्पदः श्रियः ताभिरिष्टा अभिलषिताः अनुपमशोभा इति भावः, स्मेरतया मन्दहासेन शङ्करं शुभकरं सुन्दरमिति यावत् अङ्गम् अवयवः व्यापार इति भावः यस्याः तथाभूता, प्रेमोत्तुङ्गा प्रेमपूर्णेत्यर्थः मुरभिदः कृष्णस्य भङ्गुरा कुटिला अपाङ्गभङ्गी मम एताम् आर्त्तिं मनः सन्तापं किमु शमयिता शमयिष्यति किम् ? ॥८४॥

काममिति । हे सहचरि ! कंसवैरी कृष्णः दूरे कामं स्वच्छन्दं यत् वरीवर्त्ति अतिशयेन वर्त्तते, इदं लोकोत्तरम् अलौकिकम् अत्यन्तमित्यर्थः अपि विपद्दुर्दिनं व्यसनरूपं मेघाच्छन्नदिनं मे मम न दुनोति तापयति मम इति शेषः । मे कर्मणि षष्ठी वा । यस्तु किल मे मम प्राणरोधी प्राणापगमप्रतिबन्धकः आशाकीलः कृष्णः पुनः प्राप्यते इति दुराशाशङ्कुः हृदि हृतः निःक्षिप्तः भवेति शेषः,

तव स्फीताधरमधुभरे शीतलोत्सङ्गसङ्गे
सौन्दर्य्येणोल्लिखितवपुषि स्फारसौरभ्यपूरे।
नर्मारम्भस्फुटितवचःकन्दले नन्दसूनो
मोदिष्यन्ते मम सखि! कदा हन्त पञ्चेन्द्रियाणि॥८६॥
भिन्दन्नक्ष्णोः कलुषतां श्यामलः श्यामलाभिः
लिम्पन्तीभिर्गिरिपरिसरं माधुरीणां छटाभिः।
आविर्भावी गुरुतरचमत्कारभाजः कदा मे
खेलन्नग्रे निखिलकरुणानन्दनो नन्दसूनुः॥८७॥

सोऽयम् आशाकोषः निविडः घनः यः वडवावह्निः वाडवानलः तद्वत् तीव्रः दारुणः सन् पीडां सन्तापं तनोति विस्तारयति॥८५॥

तवेति। हे सखि! हन्त खेदे, मम पञ्च इन्द्रियाणि चक्षुरादीनि स्फीतः प्रवृद्धः अधरस्य मधूनां भरः अतिशयो यस्य तथोक्ते, शीतलः तापोऽपह इति भावः उत्सङ्गे क्रोडे सङ्गः यस्य तादृशे, सौन्दर्य्येण उल्लिखितम् उल्लासितं वपुः शरीरं यस्य तथाभूते, स्फारः उत्कटः सौरभ्यस्य पूरः प्रवाहः अतिशय इत्यर्थः यस्य तथाविधे, नर्मारम्भे कौतुकारम्भे स्फुटितं विकसितां नीतं वचसां कन्दलं नवाङ्कुरः येन तथोक्ते विहारसमये नवनवरससंवलितविदग्धभाषिणीति भावः, नन्दसूनौ कृष्णे कदा मोदिष्यन्ते प्रमोदं लप्स्यन्ते इत्यर्थः॥८६॥

भिन्दन्निति। कदा निखिलानां जगतां करुणया आनन्दनः आनन्दजननः श्यामलः नन्दसूनुः कृष्णः श्यामलाभिः कृष्णाभिः गिरिपरिसरं पर्वतप्रदेशं लिम्पन्तीभिः माधुरीणां मधुराङ्गप्रभाणां छटाभिः विस्तारैः अक्ष्णोः नयनयोः कलुषताम् आविलतां भिन्दन् अपनयन् नयने रञ्जयन्नित्यर्थः गुरुतरं निविडं चमत्कारं भजते

आनम्रायां मयि निजमुखालोकलक्ष्मीप्रसादं
खेदश्रेणीविरचितमनोलाघवायां विधेहि ।
सेवा भाग्ये यदपि न विभो ! योग्यता मे तथापि
वारं वारं तव करुणतापूरमेवं ब्रवीमि ॥ ८८ ॥

क्रीडातल्पे निहितवपुषः कल्पिते पुष्पजालैः
स्मित्वा स्मित्वा प्रणयरभसात् कुर्वतो नर्मभङ्गीः ।
विन्यस्यन्ती तव किल मुखे पूगफालीं विधास्ये
कुब्जद्रोण्यामहमिह कदा देव ! सेवाविनोदम् ॥ ८९ ॥

इति तथोक्तायां मे मम रूपे खेदम् विहरन् आविर्भावो आशि-
र्भविष्यतीत्यर्थः ॥ ८७ ॥

आनम्रायामिति । हे विभो ! खेदश्रेणीभिः विलापपर-
म्पराभिः विरचितं प्रकटितं मनसः लाघवं यया तथाभूतायाम्
आनम्रायां प्रणिपतितायां मयि निजमुखस्य आलोकलक्ष्मीः दर्शन-
श्रीः तया प्रसादम् अनुग्रहं विधेहि कुरु प्रणताकै मह्यं दर्शनं
देहीति भावः । यदपि यदि च मे मम भाग्ये सेवा तवेति शेषः न
अस्तीति शेषः, तथापि मे मम योग्यता अस्तीति शेषः । किमिति
पुनः पुनरेवं विलपसीत्याह वारमिति, तव करुणतापूरं दयाराशिं
वारं वारं पुनः पुनः स्मृत्वेत्यर्थः एवं ब्रवीमि कथयामि ॥ ८८ ॥

क्रीडातल्पे इति । हे देव ! कदा अहम् इह कुब्जद्रोण्यां
निकुञ्जदेशे पुष्पजालैः कुसुमनिचयैः कल्पिते रचिते क्रीडातल्पे
विहारशय्यायां निहितवपुषः निषण्णस्य स्मित्वा स्मित्वा मन्दं मन्दं
हसित्वा प्रणयरभसात् प्रेमावेशात् नर्मभङ्गीः कौतुकतरङ्गान्
कुर्वतः तव मुखे पूगफालीं गुवाकखण्डं विन्यस्यन्ती अर्पयन्ती सती
सेवाविनोदं सेवया क्रीडितं विधास्ये करिष्यामि ॥ ८९ ॥

इत्थं सख्यः पशुपरमणीमण्डलीनां विलापैः
भूयोभूयः करुणकरुणैरद्य कोणान्तरस्थं ।
उदस्राक्षा त्यजति पथिको रुद्धकर्णः कराभ्यां
दूरात् पान्थावलिरपि सखे ! यस्य सीमोपकण्ठम् ॥९०॥

चतुर्दशभिः कुलकम् ।

युक्तं शृङ्गीकनकनिकरालिङ्गिताङ्गैस्तुरङ्गैः
दृष्ट्वा नन्दीश्वरतटभुवि स्यन्दनं ते मिलन्तम् ।
मामायान्तं स्फुटमुपगतं सन्निधातव्यमारात्
धावन्तीभिस्तरलतरलं राधिकायाः सखीभिः ॥९१॥

गोपालीनामपि वपुरलङ्कारलीलां दधानो
येषां नव्यः किसलयगणो रागिणं माञ्चकार ।

इत्थमिति । हे सखे ! इत्थम् उच्चैः विस्तृतैः पशुपरमणीमण्डलीनां गोपाङ्गनासमूहानां करुणकरुणैः अतिशोकोद्दीपकैर्विलापैः अद्य इदानीं भूयोभूयः पुनः पुनः कोणान्तरस्थ व्याप्तावकाशस्य यस्य गोकुलस्य सीमोपकण्ठं सीमासान्निध्यं पान्थावलिरपि पथिकनिवहोऽपि परितः सर्वतः उदस्राक्षा उद्गताश्रुः अतएव कराभ्यां रुद्धकर्णो सन् दूरात् त्यजति ॥ ९० ॥

युक्तमिति । शृङ्गीषु विषाणेषु कनकनिकरेण स्वर्णसमूहेन आलिङ्गितानि भूषितानि अङ्गानि येषां तैः तुरङ्गैः अश्वैः युक्तं ते तव स्यन्दनं रथं नन्दीश्वरस्य पर्वतस्य तटभुवि मिलन्तं सङ्गच्छमानं दृष्ट्वा स्फुटं स्पष्टं माम् उपगतम् आयान्तम् आरात् दूरात् तरलतरलम् अतिचपलं यथा तथा धावन्तीभिः राधिकायाः सखीभिः सन्निधातव्यम् उपस्थातव्यम् ॥ ९१ ॥

गोपालीनामिति । हे प्राज्ञ ! येषां वृन्दावनविटपिनां नव्यः

भ्राम्यद्भृङ्गावलिषु भवता तेषु शस्ताशिषां मे
वृन्दं वृन्दावनविटपिषु प्राज्ञ ! विज्ञापनीयम् ॥८२॥

मत्ता वंशीनिनदमधुभिस्तूर्णमास्तर्णकानां
या मुञ्चन्त्यः प्रणयमभितः सस्नुरस्रप्लुताक्ष्यः ।
तासामुच्चैर्मम परिपठन् कामतो नामधेयं
क्षेमं पृच्छेस्त्वमथ निचये नीचिकैर्नैचकीनाम् ॥ ८३ ॥

डिम्भव्यूहं हृतवति विधौ तत्तदाभस्तदाहं
स्तन्यं यासां मधुरमधयं वत्सरं वत्सलानाम् ।
वारं वारं मम नतिगणान् विप्र ! विज्ञापयेथा
नम्रस्तासां जरठपशुपीमण्डलीनां पदेषु ॥ ८४ ॥

अभिनवः किसलयगणः पल्लवसमूहः गोपालीनां गोपाङ्गनानां वपुषः चक्रस्य अलङ्कारलीलां दधानः सन् मामपि रागिणं तासु अनुरागवन्तं चकार, भ्राम्यन्त्यः भृङ्गावलयः भ्रमरपङ्क्तयः येषु तथोक्तेषु तेषु वृन्दावनविटपिषु भवता मे मम शस्ताशिषां प्रशंसितानाम् आशिषां वृन्दं समूहः विज्ञापनीयम् ॥ ८२ ॥

मत्ता इति । अथानन्तरं याः वंशीनिनदमधुभिः मनोहरैर्वेणुरवै-रित्यर्थः मत्ताः अतएव तर्णकानां वत्सानां प्रणयं मुञ्चन्त्यः त्यजन्त्यः तूर्णगाः सत्वरं मत्समीपगामिन्य इत्यर्थः अश्रुभिर्बाष्प-वारिभिः प्लुताक्ष्यः आर्द्रनयनाः अभितः समन्तात् सस्नुः समा-जग्मुः, त्वं तासां नैचिकीनाम् उत्तमानां गवां निचये वृन्दे कामतः स्वेच्छातः मम नामधेयम् उच्चैः परिपठन् कीर्त्तयन् नीचकैः शनैः शनैः क्षेमं कुशलं पृच्छेः ॥ ८३ ॥

डिम्भव्यूहमिति । हे विप्र ! विधौ ब्रह्मणि डिम्भव्यूहं वत्स-समूहं हृतवति सति अहं तदा तत्तदाभः तत्तद्वत्सरूपः सन्

आमोदं मे मधुर! दधिरे मामहंपूर्विकाभिः
दूरे यान्तं कुसुमितवनालोकनाय स्पृशन्तः।
श्रीदामाद्याः प्रियसहचरा हन्त मन्नामतस्ते
पौनःपुन्यान्निपुण! भवता तुङ्गमालिङ्गनीयाः ॥९५॥
हत्वा रङ्गस्थलभुवि मया धीर! कंसं नृशंसं
काकुन्मिश्रैः प्रपथगतकैर्गोकुलं प्रेषितस्य।
आनम्रस्त्वं चरणयुगलं वल्लवेन्द्रस्य कामं
नामग्राहं मम गुणनिधे! वन्दमानो दधीयाः ॥ ९६ ॥

वत्सरं व्याप्तौ द्वितीया, संवत्सरं व्याप्येत्यर्थः वत्सलानां स्नेह-वतीनां यासां मधुरं स्तन्यं स्तनक्षीरम् अधयम् अपिबं त्वं नम्रः सन् तासां जरठानां वृद्धानां पशुपीमल्लिकानां गवामित्यर्थः। पशुपीमल्लिकानां गोपाङ्गनावृन्दानामित्येवार्थः शब्दार्थसिद्धः परमत्र तादृश्यं श्लोकार्थस्यावक्रतेर्गवामित्यर्थः अतः स तु असमीचीन एव शब्दाप्रतिपाद्यत्वात् तदत्र जरठपशुमीमल्लिनीनामिति पाठः सङ्गच्छते इति सुधीभिश्चिन्त्यम्। पदेषु वारं वारं मम नतिगणान् प्रणामनिचयान् विज्ञापयेथाः ॥ ९४ ॥

आमोदमिति। हे निपुण! हे मधुर! कुसुमितस्य वनस्य आलोकाय दर्शनाय दूरे यान्तं गच्छन्तं माम् अहंपूर्विकाभिः अहमग्रे स्पृशामि अहमग्रे स्पृशामीत्येवंस्पर्द्धाभिरित्यर्थः स्पृशन्तः श्रीदामाद्याः प्रियसहचराः मे मम आमोदं दधिरे जनयामासुः, हन्त खेदे भवता ते मन्नामतः ममनाम्ना अत्र स्पृष्टानालिङ्गतोऽस्मि-धायेति भावः पौनःपुन्यात् पुनः पुनः तुङ्गं गाढं यथा तथे-त्यर्थः आलिङ्गनीयाः ॥ ९५ ॥

हत्वेति। हे गुणनिधे धीर! त्वम् आनम्रः अवनतः सन् मया रङ्गस्थलभुवि सभामध्ये हत्वर्थः नृशंसं निष्ठुरं कंसं हत्वा

तां वन्देथा मम सविनयं नामतः क्षामगात्रीम्
आक्रोशन्तीं खलनरपतिं साङ्गुलीभङ्गमुच्चैः ।
अन्तश्चिन्ताविलुलितमुखीं हा मदेकप्रसूतिं
सर्वाङ्गैस्त्वं कलितवसुधालम्बमम्बां यशोदाम् ॥ ९७ ॥
या निःश्वासोष्मवलयिनं हारवं मुञ्चमाना
खेदोदग्रं मम गुणकथामन्तरेणान्तरेण ।
क्षामीभूता क्षितिपतिपुरीवर्त्म विन्यस्तनेत्रा
वाष्पोद्गारस्नपितवसना वासराणि क्षिपन्ती ॥ ९८ ॥

काकुभिः काकुपूर्णैरित्यर्थः शपथशतकैः साम्प्रतं तात त्वया गम्यतामहं अत्र कार्य्यजातं समाधाय शीघ्रं तव सकाशं यदि न गमिष्यामि तदा मम एवमेव स्यादित्येवं बहुशपथैः गोकुलं प्रेषितस्य व्रजेन्द्रस्य नन्दस्य चरणयुगलं मम नामग्राहं नाम स्पृष्ट्वा कृष्णस्त्वां प्रणमतीत्येवमभिधायेति भावः कामं सम्यक् वन्दमानः दवीयाः धारयेः ॥९६॥

तामिति । त्वं मम नामतः कृष्णस्त्वां प्रणमतीति स्वनाम आख्यायेति भावः क्षामगात्रीं कृशाङ्गीं साङ्गुलीभङ्गं यः मत्प्राणधनेन मामवञ्चयत् तस्य सर्वनाशो भवत्वेवमभिधाय अङ्गुलीभङ्गेन सहितं यथा तथा उच्चैः खलनरपतिं दुष्टनृपं कंसमिति भावः आक्रोशन्तीम् अभिशपन्तीम् अन्तश्चिन्तया विलुलितं विपर्यस्तं मुखं यस्याः तथोक्तां हा इति खेदे अहमेव एका प्रसूतिः पुत्रः यस्याः ताम् अम्बां मातरं यशोदां सर्वाङ्गैः कलितः स्वीकृतः वसुधाया आलम्बः आश्रयो यस्मिन् कर्म्मणि यथा तथा सविनयं वन्देथाः प्रणमेः ॥ ९७ ॥

येति । या यशोदा निःश्वासानां दीर्घश्वासानामिति भावः उष्मणः उदयः तस्य वलयं मण्डलम् अस्ति यस्मिन्निति तथोक्तं, मम गुणकथाम् अन्तरेण

मन्नेपथ्यस्तवकितभवदीक्षणेनाकुलानां
तुङ्गातङ्कोत्तरलितमनःकल्पनाजल्पभाजाम् ।
तिष्ठन्नासां पथि नयनयोर्निःशलाकं गतानां
सन्देशं मे लघु लघु सखे ! हारिणं व्याहरेथाः ॥१०१॥

त्रिभिः कुलकम् ।

यः कालिन्दीवनविहरणोद्दामकामः कलावान्
वृन्दारण्यानरपतिपुरं गान्दिनीयेन नीतः ।

शापतापैः यन्त्रितात्मा समाकुलितचित्तः अतएव बद्धाञ्जलिः सन् क्लेशेन दुःखेन परिणमन्ती जायमाना या विक्रिया अङ्गविकृतिर्यासां विकृताङ्गदर्शनेन तव तासामनभिरूपता न वेदितव्येति भावः तथो- क्तानां तासां प्रियाणां गोपाङ्गनानाम् अन्तिकम् अनुसरेः अनु पश्चात् याहीत्यर्थः । ननु तव दोषे कथं दोषिण इव मम शङ्कितत्वमाह भर्त्तुरिति, हि यतः कुशलाः निपुणा अपि भृत्याः भर्त्तुः प्रभोः दोषात् दुष्यन्ति दोषं लभन्ते । दुष्टस्य प्रभोर्भृत्या अपि दुष्टा इति भावः, हन्तेति खेदसूचकमव्ययम् ॥ १०० ॥

मदिति । हे सखे ! मम नेपथ्येन परिच्छदेन स्तवकितः अलङ्कृतः यो भवान् तस्य वीक्षणेन दर्शनेन आकुलानां चकितानां, तुङ्गा महती या आतङ्का किमयं व्याहरतीत्येवं शङ्केत्यर्थः तया उत्तरलितं चञ्चलितं यत् मनः तस्य कल्पनया यो जल्पः अन्योन्या- लापः तं भजन्ते इति तथाभूतानां, गतानां समुपस्थितानाम् आसां प्रियाणां नयनयोः पथि निःशलाकं निर्बाधं तिष्ठन् सन् मे मम हारिणं मनोहारिणं मनःप्रीतिकरमित्यर्थः सन्देशं वाचिकं लघु लघु शनैः शनैः व्याहरेथाः कथय ॥ १०१ ॥

य इति । कालिन्द्याः यमुनायाः वनविहरणे उद्दामः उत्कटः कामः अभिलाषो यस्य तथाभूतः कलावान् चतुःषष्टिकलाविद्या-

कुर्वन् दूत्यं प्रणयसचिवस्तस्य गोपेन्द्रसूनोः
देवीनां वः सपदि सविधं लब्धवानुद्धवोऽस्मि ॥ १०२ ॥

तापोच्चश्वसितपटलीदूयमानाधरश्रीः
मुक्तक्रीड़ो धवलिमधुराडिण्डिरश्यामगण्डः ।
स्मारं स्मारं गुणपरिचयं हन्त वः क्लान्तचेताः
सोऽयं कान्तः किमपि सरलाः सुन्दरं सन्दिदेश ॥१०३॥

कच्चिद्भीतं न भजत मुहुर्दानवेभ्यः पुरावत्
कल्याणं वः सरलहृदयाः ! कच्चिदुल्लासीति ।
कच्चिद् यूयं स्मरथ सरसं तत्र चित्तानुकूलं
कुञ्जे कुञ्जे कृतमथ मया तच्च सेवाप्रपञ्चम् ॥ १०४ ॥

निपुणः यः गान्दिनीयेन अक्रूरेण वृन्दारण्यात् नरपतिपुरं मथुरानगरं नीतः, तस्य गोपेन्द्रसूनोः कृष्णस्य प्रणयसचिवः नर्मसचिवः दूत्यं कुर्वन् सपदि सहसा देवीनां वः युष्माकं सविधं समीपं लब्धवान् प्राप्तवान् उद्धवः उद्धवनामा अस्मि भवामि ॥१०२॥

तापेति । हे सरलाः ! तापेन विरहजनितेनेति भावः उच्चानि उद्गतानि यानि श्वसितानि दीर्घश्वासाः तेषां पटलीभिर्वृन्दैः दूयमाना क्लिश्यमानेति यावत् अधरस्य श्रीः यस्य तथाभूतः मुक्तक्रीड़ः क्रीड़ारहितः धवलिमधुरायां धवलताभारे डिण्डिर इव फेन इव श्यामः क्षीणः गण्डो यस्य तथोक्तः, डिण्डिरोऽब्धिकफः फेन इत्यमरः । सः युष्माकं गुणपरिचयं स्मारं स्मारं पुनः पुनः स्मृत्वा क्लान्तचेताः व्यथितचित्तः सोऽयं कान्तः किमपि अनिर्वचनीयं यथा तथा सुन्दरं सन्दिदेश हन्तेति खेदे ॥ १०३ ॥

कच्चिदिति । हे सरलहृदयाः ! यूयं पुरावत् पूर्वमिव दानवेभ्यः कच्चित् मुहुः भीतिं न भजत ? न प्राप्नुत ? वः युष्माकं कल्याणं मङ्गलं

सोत्कण्ठं मे चरति हृदयं श्यामले ! कोमलानि
प्रेमोत्तुङ्गाञ्चितपरिचितान्यद्य ते जल्पितानि ॥१११॥
पद्मे ! पद्मस्तुतमुखि ! लतासद्मनि व्याजनिद्रां
लब्धे लुब्धा मयि मुरलिकां हर्तुकामा त्वमासीः ।
धृत्वा पाणौ मुहुरथ मया कञ्चुकं मुञ्चता ते
यत् प्रारब्धं किमपि तदिदं स्वान्तमन्तः पिनष्टि ॥११२॥
व्यस्ताङ्गी मे सुरभिणि भुजस्तम्भयोरन्तराले
भूयोभिस्त्वं रहसि ललिते ! केलिभिर्लालितासि ।
अन्तश्चिन्ताविधुरमधुना पांशुपुञ्जे लुठन्ती
हन्त म्लाना रचयसि कथं प्राणसन्धारणानि ॥ ११३ ॥

महाकीर्त्तिः तस्याः विश्वं समानि वल्गनानि, प्रेमृणा उत्तुङ्गम् उच्चतम् उच्चाञ्चितमिति यावत् यत् चितं तेन परिचितानि सम्पृक्तानि ते तव कोमलानि मधुराणि जल्पितानि आलापान् सोत्कण्ठं यथा तथा चरति ॥ १११ ॥

पद्मे इति । हे पद्मेन स्तुतं प्रशंसितं यद्वा पद्मवत् स्तुतं मुखं यस्याः तादृशि पद्मे ! लतासद्मनि लतागृहे मयि व्याजनिद्रां छद्मनिद्रां लब्धे गते सति त्वं लुब्धा सती मे मुरलिकां हर्तुकामा आसीः । अथ अनन्तरं मुहुः पुनः पुनः ते तव पाणौ धृत्वा कञ्चुकं कञ्चुलिकां मुञ्चता मया यत् प्रारब्धम् आचरितमित्यर्थः तदिदं किमपि अन्तः स्वान्तम् अन्तःकरणं पिनष्टि व्यथयतीत्यर्थः ॥ ११२ ॥

व्यस्ताङ्गीति । हे ललिते ! त्वं रहसि विजने मे मम सुरभिणि भुजस्तम्भयोः अन्तराले वक्षसीत्यर्थः व्यस्ताङ्गी पातिताङ्गी सती भूयोभिः केलिभिः क्रीडाभिः लालिता मोदितासि, अधुना अन्तश्चिन्तया विधुरं व्याकुलं यथा तथा पांशुपुञ्जे रजोनिचये लुठन्ती

यः सेवाभिर्मुहुरुदयिनीं तव भद्राङ्गि ! भद्रे !
नीतस्ताभिर्निशि निशि मनःकर्षिणीभिस्त्वयासीत् ।
स प्रेष्ठस्ते नवपरिचयादिङ्गितस्यानभिज्ञैः
कृष्णस्तूष्णीं पुरपरिजनैः सेव्यमानो दुनोति ॥११४॥

सोढव्यं ते कथमपि बलाच्चक्षुषी मुद्रयित्वा
तीव्रोत्तापं हतमनसिजोद्दामविक्रान्तचक्रम् ।
द्वित्रैरेव प्रियसखि ! द्वित्रैः सेव्यतां देवि ! शैब्ये !
यास्यामि त्वत्प्रणयचटुलभ्रूयुगाडम्बराणाम् ॥११५॥

अतएव म्लाना मलिना सती कथं प्राणसन्धारणानि रचयसि करोषि ? हन्त खेदे ॥ ११२ ॥

य इति। हे भद्राङ्गि चार्वङ्गि ! भद्रे ! तत्र वृन्दावने निशि निशि ताभिः मनःकर्षिणीभिः सेवाभिः यः त्वया उदयिनीं समृद्धि-मित्यर्थः मुदं नीतः प्रापितः, आसीत् स ते तव प्रेष्ठः प्रियतमः कृष्णः नवपरिचयात् नूतनसम्बन्धात् इङ्गितस्य हृदयाशयस्य, इङ्गितं हृद्गतो भावः इत्यमरः। अनभिज्ञैः अविदितगूढाशयैरित्यर्थः पुरपरिजनैः नगरपरिवारैः तूष्णीं सेव्यमानः परिचर्य्यमाणः सन् दुनोति सन्त-पति ॥ ११४ ॥

सोढव्यमिति। हे शैब्ये ! देवि ! कथमपि अतिकष्टेन बलात् चक्षुषी मुद्रयित्वा निमील्य ते तव कर्त्तरि षष्ठी, तीव्रः दुःसह इति भावः उत्तापः सन्तापः यत्र तादृशं हतमनसिजस्य दुर्विनीतकामस्य उद्दामम् उत्कटं विक्रान्तचक्रं विक्रमसमूहः सोढव्यम्। हे प्रिय-सखि! द्वित्रैरेव दिनैः तव प्रणयेन प्रेम्णा चटुलं चञ्चलं यत् भ्रूयुगं तस्य आडम्बराणां विलसितानां सेव्यतां याच्यतामिति भावः यास्यामि गमिष्यामि ॥ ११५ ॥

इत्थं तासामनुनयकलापेशलः क्लेशहारी
सन्देशं मे कुवलयदृशां कर्णपूरं विधाय ।
त्वं मच्चेतोभवनवलभीप्रौढपारावतीं तां
राधामन्तःक्लमकवलितां सम्भ्रमेणाजिहीथाः ॥११६॥

सा पल्यङ्के किसलयदलैः कल्पिते तत्र सुप्ता
गुप्ता नीरस्तवकितदृशां चक्रवालैः सखीनाम् ।
द्रष्टव्या ते कृशिमकलिताकण्ठनालोपकण्ठ-
स्पन्देनान्तर्वपुरनुमितप्राणसङ्गा वराङ्गी ॥ ११७ ॥

इत्थमिति । अनुनयकलायां अनुरञ्जनक्रियायां पेशलः कोमलः सुचतुरः अतएव क्लेशहारी दुःखापनोदकः सन् मे मम सन्देशं तासां कुवलयदृशां नीलोत्पलाक्षीणाम् इत्थम् अनेन प्रकारेण कर्णपूरं विधाय कृत्वा त्वं मम चेतः चित्तमेव भवनं तस्य वलभी आधारदारु तस्यां प्रौढा प्रगल्भा पारावती कपोती तां सतत मच्चित्तभवनवलभ्यां स्थितामिति यावत् अन्तःक्लमेन आन्तरसन्तापेन कवलिताम् अभिभूतां तां राधां सम्भ्रमेण गौरवेण आजिहीथाः समागच्छ ॥ ११६ ॥

सेति । सा वराङ्गी चार्वङ्गी तत्र वृन्दावने किसलयदलैः पल्लवपर्णैः कल्पिते रचिते पल्यङ्के मञ्चे सुप्ता नीरस्तवकितदृशाम् अश्रुपूर्णनयनानां सखीनां चक्रवालैः वृन्दैः गुप्ता रक्षिता सेवितेति यावत् कृशिम्ना कार्श्येन कलिता युक्ता कृशीभूतेत्यर्थः कण्ठनालस्य उपकण्ठस्पन्देन अन्तर्वपुषि शरीरमध्ये अनुमितः प्राणानां सङ्गः यस्याः कण्ठागतप्राणेति यावत् ते तव कर्त्तरि षष्ठी द्रष्टव्या बहिर-चेष्टेति भावः ॥ ११७ ॥

सख्युर्वंशीमुखमतमुरीकृत्य दूरीभविष्णोः
धत्ते प्राणाननुपदविपद्दिग्धचित्तापि साध्वी।
लुप्तच्छाया मुहुरसुमनाः क्षौणिपृष्ठे लुठन्ती
एकापेक्षं विलसति गते माधवे माधवीयम्॥ ११८॥

मालां मैत्रीविदुर! मदुरःसङ्गसौरभ्यसभ्यां
वासन्तीभिर्विरचितमुखीं पञ्चवर्णां गृहाण।
आरूढायाः परिणतिदशां तादृशीं सारसाक्ष्याः
साक्षादेतत्परिमलमृते कः प्रबोधे समर्थः॥ ११९॥

सख्युरिति। एका अपेक्षा यस्मिन् तत् तदेकापेक्षमिति यावत् अन्यानिरपेक्षमिति भावः विलसति विचरति तयेति भावः माधवे कृष्णे गते मथुरामिति शेषः इयं साध्वी सुशीला साध्वी राधा दूरीभविष्णोः प्रवत्स्यत इति यावत् सख्युर्ममेति शेषः वंशीमुखमतं श्रीमुखाभिप्रायं शीघ्रमागमिष्यसि त्वं मा खिद्यस्वेति मत्कृतप्रबोधवचनाभिप्रायमिति भावः उरीकृत्य अङ्गीकृत्य अनुपदं प्रतिक्षणं विपदा सन्तापजनितयेति भावः दिग्धं चित्तं यस्याः तथाभूता अतएव लुप्तच्छाया कान्तिशून्यावयवा असुमनाः दुःस्थचित्ता मुहुः पुनः पुनः क्षौणिपृष्ठे लुठन्ती प्राणान् धत्ते धारयति॥ ११८॥

मालामिति। हे मैत्रीविदुर सौहृद्याभिज्ञ! मम उरसा वक्षःस्थलेन यः सङ्गः तेन यत् सौरभ्यं सौगन्ध्यं तेन सभ्यां सभ्यजनोचितामिति भावः रम्यामिति पाठान्तरं, वासन्तीभिर्नवमल्लिकाभिः विरचितं मुखं प्रारम्भः यस्याः तथाभूतां पञ्चवर्णां पञ्चविधवर्णपुष्पगुम्फितामिति यावत् मालां गृहाण। साक्षात् एतस्याः मालायाः परिमलं सौरभम् ऋते विना कः तादृशीं परिणतिदशां चरमदशाम् आरूढायाः प्राप्तायाः सारसाक्ष्याः कमलाक्ष्याः प्रबोधे प्राणधारणे प्राणरक्षायां समर्थः? न कोऽपीत्यर्थः॥ ११९॥

माल्यामोदव्यतिकरबहिर्बोधितायाः सबाष्पं
नेत्रद्वन्द्वं दिशि दिशि मुहुर्विक्षिपन्त्या विलक्ष्यम्।
तस्याः प्रोद्यत्पुलककलिकादन्तुरायाः पुरस्तात्
मन्दं मन्दं विनयमसृणस्त्वं विनम्रो जिहीथाः ॥१२०॥
धृत्वा मालां किशलयततेरञ्चले न्यञ्चदङ्गो
भ्रूसंज्ञाभिः सपदि सचिवीकृत्य तस्या वयस्याः।
दूत्यं स्वस्य प्रणयहृदयस्त्वं निवेद्यानवद्यं
धीमन्! सख्यो मम कथयितुं वाचिकं प्रक्रमेथाः ॥१२१॥
यः सर्वस्मात्तव किल गुरुस्त्वञ्च यस्यासि धीरे!
प्राणेभ्यस्त्वं प्रणयवसतिर्यस्य यः स्यात्तवापि।

माल्येति। त्वं विनम्रः अवनतः विनयेन मसृणः कोमलः सन्
माल्यस्य यः आमोदव्यतिकरः सौरभसम्बन्धः तेन बहिर्बोधितायाः
बाह्यज्ञानं प्राप्तायाः दिशि दिशि सबाष्पं साश्रु विलक्ष्यं शून्य-
मिलक्ष्यं नेत्रद्वन्द्वं नयनयुगलं मुहुः पुनः पुनः विक्षिपन्त्याः, प्रोद्यन्ती
विकसन्ती या पुलककलिका रोमाञ्चाङ्कुरः तया दन्तुरायाः व्याप्तायाः
तस्याः राधायाः पुरस्तात् अग्रतः मन्दं मन्दं जिहीथाः गच्छ ॥१२०॥

धृत्वेति। हे धीमन् प्राज्ञ! त्वं मालां धृत्वा किशलयततेः
पल्लवनिचयस्य तदीयशयनभूतस्येति भावः अञ्चले प्रान्ते न्यञ्चत्
निम्नीदत् अङ्गं यस्य तथाभूतः सन् सपदि झटिति तस्याः राधायाः
वयस्याः सहचरीः भ्रूसंज्ञाभिः भ्रूभङ्गिभिरिति भावः सचिवी-
कृत्य सहायीकृत्य प्रणयं प्रणयपूर्णमिति यावत् कर्त्तरि अनुमत्यव्ययः।
हृदयं यस्य तथाभूतः सन् स्वस्य अनवद्यम् अनिन्द्यं दूत्यं निवेद्य
सख्यः मम वाचिकं सन्देशं कथयितुं प्रक्रमेथाः आरभस्व ॥१२१॥

य इति। हे देवि! यः सर्वस्मात् गुरुजनादिति शेषः अवज्ञे-
यश्चासौ। सर्वं गुरुजनमपेक्ष्येत्यर्थः तव गुरुः पूज्यः किल, त्वञ्च यस्य

स त्वां धृत्वा मनसि विधुरे हन्त सन्तप्यमानः
कृष्णस्तृष्णाचटुलचटुलं देवि ! सन्देदिग्धीति ॥१२२॥
नीते शोषं विरहरविणा सर्वतो हृत्तडागे
जाने कण्ठस्थलविलुठितप्राणमीनासि तन्वि ! ।
दूरे सम्प्रत्यविरलसुहृन्मारुतैर्वारितोऽहं
तृष्णाम्भोधौ विलसदमृतालङ्घितः किं करिष्ये ॥१२३॥
नायं स्वप्नो निशि निशि भवेद्यत् त्वया सङ्गतिर्मे
पद्मामोदं विधुमुखि ! निराबाधमास्वादयामि ।
किन्तु ज्ञातं त्वयि विजयते काचिदाकृष्टिविद्या
यां शंसन्ती हरसि तरसा मामदूराद्यदूनाम् ॥१२४॥

असि गुरुरिति शेषः, त्वं यस्य प्राणेभ्योऽपि प्रणयवसतिः प्रणयपात्रं, यस्य तथापि स्यात् प्राणेभ्योऽपि प्रणयवसतिरिति शेषः, हे धीरे ! स कृष्णः विधुरे कातरे मनसि त्वां धृत्वा सन्तप्यमानः सन्तपन् तृष्णया लालसया चटुलचटुलम् अतिचञ्चलं सन्देदिग्धीति पुनः पुनः सन्दिग्धि ॥ १२२ ॥

नीते इति । हे तन्वि ! विरहरविणा विच्छेदसूर्येण हृत्तडागे हृदयसरसि सर्वतः सर्वथा शोषं नीते सति कण्ठस्थले विलुठिताः प्राणा एव मीनाः मत्स्याः यस्याः तथाभूता असि इति जाने मन्ये । सम्प्रति दूरे अविरलैः घनैः सुहृन्मारुतैः बन्धुपवनैः वारितः प्रतिबद्धः अतएव तृष्णाम्भोधौ तृष्णासागरे विलसद्भिः अमृतैः जलैः आलङ्घितः आप्लावितः अहं किं करिष्ये ॥ १२१ ॥

नायमिति । हे विधुमुखि ! चन्द्रवदने ! निशि निशि अयं स्वप्नः निद्रा न भवेत् प्रतिरात्रं मे निद्रा नास्तीत्यर्थः, यद्दिष्ट्यायं येन स्वप्नेनेत्यर्थः त्वया मे मम सङ्गतिः सङ्गमः स्यादिति शेषः । पद्म अरविन्द निराबाधं बाधाशून्यमित्यर्थः आमोदं निरामयस्थि-

लब्धान्दोलः प्रणयरभसादेष ताम्रोष्ठि ! नम्रः
प्रह्लादयन्तीं किमपि भवतीं याचते नन्दसूनुः ।
प्रेमोद्दामप्रमदपदवीसाक्षिणी शैलकुञ्जे
द्रष्टव्या ते कथमपि न सा माधवी कुञ्जवीथी ॥१२५॥

विन्दन् वंशीस्फुरितवदनो शैलवीथीमकस्मात्
अन्तर्बाधाकवलितधियो धातुभिर्धूमलोऽहम् ।
क्रीडाकुञ्जे लुठितवपुषः श्रान्तमानन्दधारा-
कल्लोलैस्ते रहसि सहसोत्फुल्लमुल्लासयिष्ये ॥ १२६ ॥

स्वयं आस्वादयामि भृङ्गे । किन्तु त्वयि काचित् आकर्षिविद्या आकर्षणीविद्या विजयते सर्वोत्कर्षेण वर्त्तते इति ज्ञातं विदितं यां विद्यां शंसन्ती जपन्ती सती त्वं तरसा बलेन यदूनां यदुवंशीयानाम् अदूरात् सान्निध्यात् मां हरसि ॥ १२४ ॥

लब्धान्दोल इति । हे ताम्रोष्ठि रक्तौष्ठि ! लब्धान्दोलः लब्धचाञ्चल्यः अधीरचित्त इति, यावत् एषः नन्दसूनुः कृष्णः नम्रः अवनतः सन् प्रह्लादयन्तीं भवतीं प्रणयरभसात् प्रेमकोपात् किमपि याचते प्रार्थयते । प्रेम्णा उद्दामः उत्कटः यः प्रमदः उल्लासः तस्य पदव्याः पथः उद्भवमार्गस्येत्यर्थः साक्षिणी साक्षाद्द्रष्ट्री शैलकुञ्जे या माधवी वासन्ती कुञ्जवीथी निकुञ्जश्रेणी अस्तीति शेषः सा कथमपि ते तव कर्त्तरि षष्ठी न द्रष्टव्या इतीति शेषः ॥१२५॥

विन्दन्निति । वंशीस्फुरितवदनः वेणुविभूषितमुखः वेणुं वादयन्नित्यर्थः अकस्मात् शैलवीथीं इरिमार्गं विन्दन् गच्छन् धातुभिर्गैरिकादिभिर्धूमलः कृष्णलोहिताङ्ग इत्यर्थः, धूम्रधूमलौ कृष्णलोहिते इत्यमरः । अहम् अन्तर्बाधा अन्तःसन्तापः तेन कवलिता आक्रान्ता धीर्यस्याः तथाभूतायाः क्रीडाकुञ्जे लुठितवपुषः लुण्ठितकलेवरायाः ते तव रहसि विजने श्रान्तं वपुरिति शेषः आनन्दधाराणां कल्लोलैः

प्रेमोत्कर्षादहमधिवहन् वाष्पधारामकाण्डे
गण्डोत्सङ्गे स्मरपरिभवैः पाण्डुरे दत्तचुम्बः ।
कुर्वन् कण्ठग्रहविलसितं नन्दयिष्यामि सत्यं
सान्द्रेण त्वां सहचरि ! परिष्वङ्गरङ्गोत्सवेन ॥ १२७ ॥

इत्थं तीव्रव्यसनजलधेः पारसीमामिवासां
सन्देशैर्मे धृतगरिमभिर्दर्शयन् दूरदर्शी ।
भूयः कुर्वन् कुवलयदृशां तत्र चित्तानुकूलं
कालं कञ्चित् त्वमतुलमते ! गोकुलान्तर्नयेथाः ॥१२८॥

गोपेन्द्रस्य व्रजभुवि सखे ! केवलं यात्रया ते
नार्थः सिध्येन्मम बहुमतः किन्तु वार्त्तं तवैव ।

ततश्च उत्फुल्लम् उल्लसितं सहसा उल्लासयिष्ये निरतिशयानन्दं प्रापयिष्यामीत्यर्थः ॥ १२६ ॥

प्रेमोत्कर्षादिति । हे सहचरि ! अहं प्रेम्णः उत्कर्षात् अतिशयात् अकाण्डे सहसा वाष्पधाराम् अश्रुधाराम् अधिवहन् स्रावयन् स्मरपरिभवैः कामोद्रेकैः पाण्डुरे गण्डस्य उत्सङ्गे प्रदेशे त्वदीये इति शेषः दत्तचुम्बः कृतचुम्बनः कण्ठग्रहविलसितं कण्ठाश्लेषव्यापारं कुर्वन् सान्द्रेण गाढेन परिष्वङ्गरङ्गोत्सवेन आलिङ्गनरसोल्लासेन त्वां सत्यं नन्दयिष्यामि ॥ १२७ ॥

इत्थमिति । हे अतुलमते महाप्राज्ञ ! दूरदर्शी विचक्षणस्त्वम् इत्थम् एवम्भूतैः मे मम धृतगरिमभिः गुर्वर्थप्रतिपादकैः मे मम सन्देशैः आसां गोपाङ्गनानां तीव्रस्य व्यसनजलधेः विच्छेदाम्बुधेः पारसीमामिव दर्शयन् भूयः पुनः तत्र कुवलयदृशां नीलोत्पलनयनानां तासां चित्तानुकूलं मनःप्रीतिकरं कुर्वन् गोकुलान्तः गोकुलमध्ये कञ्चित् कालं नयेथाः अतिवाहयेः ॥ १२८ ॥

गोपेन्द्रस्येति । हे सखे ! गोपेन्द्रस्य नन्दस्य व्रजभुवि गोकुले

प्रेमोल्लासं परिकलयता गोपसीमन्तिनीनां
स्मर्तव्या मे सपदि भवता भारतीसारतेयम् ॥१२९॥
गोष्ठक्रीड़ोल्लसितमनसो निर्व्यलीकानुरागात्
कुर्वाणस्य प्रथितमथुरामण्डले ताण्डवानि।
भूयोकृपाश्रयपदसरोजन्मनः स्वामिनोऽयं
तस्योद्दामं वहतु हृदयानन्दपूरं प्रबन्धः॥ १३० ॥
श्रीदामाद्यैः शिशुसहचरैर्बाल्यखेलामकार्षीत्
गोपालीभिः सह युवतिभी रासकेलिं चकार।
दुष्टान् दैत्यानपि बहुतरान् हेलया यो जघान
स श्रीकृष्णस्तरुणकरुणस्तारयेद्वो भवाब्धिम् ॥ १३१ ॥
इत्युद्धवसन्देशाख्यप्रबन्धः समाप्तः।

---

ते तव वाञ्छया प्रस्थानेन केवलं मम बहुमतः स्वार्थः सिध्येत् इति न, किन्तु तवैव वाढ़म् स्वार्थं सिध्येदिति शेषः। तथाच गोपसीमन्तिनीनां गोपीनां प्रेमोल्लासं परिकलयता परिपश्यता भवता सपदि मे मम इयं भारतीसारता वाचां सारत्वं स्मर्त्तव्या। गोपाङ्गनानां प्रेमोल्लासदर्शनेन चरितार्थता कृपार्थसिद्धिस्तवेति भावः॥ १२९॥

गोष्ठेति। निर्व्यलीकानुरागात् अकपटप्रणयात् गोष्ठे या क्रीड़ा विहारः तया उल्लसितं मनो यस्य तादृशस्य, प्रथितं विस्तृतं यत् मथुरामण्डलं तस्मिन् ताण्डवानि नर्त्तनानि कुर्वाणस्य भूयोकृपायां प्रभूतश्रियाम् आश्रयं पदसरोजन्म पादपद्मं यस्य तथाभूतस्य तस्य स्वामिनः कृष्णस्य अयं प्रबन्धः उद्दामं हृदयानन्दपूरं वहतु जनयतु॥ १३०॥

श्रीदामाद्यैरिति। यः श्रीदामाद्यैः शिशुभिः बालकैः सहचरैः बाल्यखेलाम् अकार्षीत्, युवतिभिः गोपालीभिः गोपाङ्गनाभिः

# काशीस्तोत्रम् ।

---

सत्यज्ञानानन्दतीर्थं प्राप्तोऽहं यत्प्रसादतः ।
तं गुरुं परमं हंसं विश्वेश्वरमजं भजे ॥ १ ॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिञ्च भैरवम् ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥२॥
अखण्डः सच्चिदानन्दः शिवो देवो महेश्वरः ।
तस्य तां परमां शक्तिं काशीं स्तौमि सदुक्तिभिः ॥३॥

यश्च रासकेलिं रासोत्सवं चकार, दुष्टान् बहुतरानपि दैत्यान् हेलया अवलीलया जघान हतवान्, तरुणा महती करुणा दया यस्य तथोक्तः दयानिधिरित्यर्थः सः श्रीकृष्णः वः युष्माकं भवाब्धिं संसारसागरं तारयेत् ॥ १२ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्येण कृता
उद्धवसन्देशव्याख्या समाप्ता ।

---

सत्येति । अहं यस्य प्रसादतः प्रसादात् अनुग्रहादित्यर्थः सत्यं ज्ञानम् आनन्दः सत्यज्ञानानन्दः परमात्मा तस्य तीर्थं क्षेत्रं काशीमित्यर्थः प्राप्तः, तं गुरुम् आचार्यं परमं हंसं परमयोगिनमित्यर्थः अजम् अनादिमित्यर्थः विश्वेश्वरं भजे वन्दे । अनुष्टुब्-वृत्तमितरेषु ॥ १ ॥

विश्वेशमिति । विश्वेशं विश्वेश्वरं माधवं ढुण्ढिं गणेशं दण्डपाणिं भैरवं काशीं गुहां ज्ञानवापीमित्यर्थः गङ्गां भवानीम् अन्नपूर्णां मणिकर्णिकाञ्च वन्दे प्रणमामि ॥ २ ॥

अखण्ड इति । देवो महेश्वरः शिवः अखण्डः पूर्णः सच्चिदा-

श्यामां षोड़शवार्षिकीं सकरुणां मूर्त्तिं दधानां वरं
हस्ताभ्यामभयञ्च विश्वजननी विद्येति या गीयते ।
या दृष्टा स्मरणं गतापि सततं या कीर्त्तिता संस्तुता
या स्पृष्टा प्रणता श्रुता प्रकुरुते नृणां परं मङ्गलम् ॥४॥
भूमिष्ठापि न यात्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थापि या
या बद्धा भुवि मुक्तिदा स्युरमृतं यस्यां मृता जन्तवः ।
या नित्यं त्रिजगत्पवित्रतटिनीतीरे सुरैः सेव्यते
सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ॥५॥

अन्दः परमात्मा तस्य देवस्य परमां महतीं शक्तिं काशीं सदुक्तिभिः शोभनवचनैः स्तौमि ॥ ३ ॥

श्यामामिति । श्यामां श्यामवर्णां, शीतकाले भवेदुष्णा उष्णकाले च शीतला । नवयौवनसम्पन्ना या स्त्री श्यामेति गीयते इत्युक्तलक्षणां वा, षोड़शवार्षिकीं षोड़शवर्षीयां सकरुणां सदयां मूर्त्तिं हस्ताभ्यां वरम् अभयञ्च दधाना या विश्वजननी विद्या इति गीयते कीर्त्यते, या दृष्टा स्मरणं गता, सततं कीर्त्तिता संस्तुता, स्पृष्टा या प्रणता वन्दिता, श्रुता च नृणां परं मङ्गलं प्रकुरुते जनयति ॥ ४ ॥

भूमिष्ठेति । या भूमिष्ठापि अत्र जगति न भूः, या अधःस्थापि अधोवर्त्तिनी अपि त्रिदिवतः स्वर्गात् अपि उच्चैः उन्नता, या भुवि बद्धापि एकत्र स्थितापि मुक्तिदा जनानां बन्धमोचनीत्यर्थः यस्यां मृताः जन्तवः प्राणिनः अमृतं स्युः लभन्ते इत्यर्थः, अत्रास्तिः सकर्मक इति चिन्त्यम् । या नित्यं सततं त्रिजगतां पवित्रं यत् तटिनीतीरं गङ्गातीरं तत्र स्थितेति शेषः सुरैः देवैः सेव्यते आराध्यते, त्रिपुरारेः हरस्य राजनगरी राजधानी सा काशी अपायात् जगत् पायात् रक्षेत् । युग्मकमिदम् । शार्दूलविक्रीड़ितं वृत्तं

पूर्वजन्मशतकोटिसञ्चितं
पापराशिमतुलं विनाशयेत् ।
काशिका परपदप्रकाशिका
दर्शनश्रवणकीर्त्तनादिभिः ॥ ६ ॥

यः काशीं स्तौति मेधावी यः काशीं हृदि धारयेत् ।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः ॥ ७ ॥
वाराणसीति काशीति महामन्त्रमिमं जपन् ।
यावज्जीवं त्रिसन्ध्यं तु जन्तुर्जातु न जायते ॥ ८ ॥
यस्तु काशीति काशीति द्विस्त्रिर्जपति पुण्यवान् ।
अपि सर्वपवित्रेभ्यः स पवित्रतरो महान् ॥ ९ ॥

सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ५ ॥

पूर्वेति । दर्शनश्रवणकीर्त्तनादिभिः परपदस्य परमपदस्य कैवल्यस्येति भावः प्रकाशिका जनयित्री काशिका पूर्वजन्मनां शतकोटिषु सञ्चितम् अतुलं पापराशिं विनाशयेत् । रथोद्धतावृत्तं, रात् परैर्नरलगै रथोद्धतेति तल्लक्षणात् ॥ ६ ॥

य इति । यः मेधावी बुद्धिमान् काशीं स्तौति, यः काशीं हृदि धारयेत्, तेन तीव्रं कठोरं तपः तप्तं चरितं, तेन क्रतुकोटिभिः कोटिकोटियज्ञैः इष्टम् । इतः पद्यत्रयम् अनुष्टुव्वृत्तम् ॥ ७ ॥

वाराणसीति । यावज्जीवं त्रिसन्ध्यं जन्तुः जीवः वाराणसीति काशीति इमं महामन्त्रं जपन् जातु कदाचित् न जायते न पुनर्जन्म लभते इत्यर्थः ॥ ८ ॥

यस्त्विति । यस्तु पुण्यवान् जनः काशीति काशीति मन्त्रमिति शेषः द्विस्त्रिः द्विवारं त्रिवारं वेत्यर्थः जपति, स सर्वपवित्रेभ्यः अपि महान् पवित्रतरः ॥ ९ ॥

मुने ! न मे प्रियस्तद्वद्दीक्षितो मम पूजकः ।
यादृक् प्रियतरः सत्यं काशीस्तवनलालसः ॥ १० ॥
वरं काशीपुरीवासो मासोपवसनादिभिः ।
विचित्रच्छत्रसुच्छायं राज्यं नान्यत्र कामये ॥ ११ ॥
काशीवासी च्युतकशः पुल्कशोऽपि
श्रेष्ठो राजन् ! मुक्तिकन्यावृतो यत् ।
अन्यत्रस्थः सार्वभौमः स्वधर्मी
न स्याच्छ्रेयान् गर्भवासैकयोग्यः ॥ १२ ॥
जड़ेषु सर्वेष्वपि मज्जमाने-
ष्वियं चिदानन्दमयी न मज्जति ।
स्वयं निमग्ना कथमुद्धरेत्परान्
लोके च वेदे च विचार्य्यमेतत् ॥ १३ ॥

मुने इति । हे मुने ! सत्यं काशीस्तवनलालसः वाराणसी-स्तुतिपरः जनः यादृक् मम प्रियतरः, दीक्षितो व्रती मम पूजकः तद्वत् मे मम न प्रियः ॥ १० ॥

वरमिति । मासोपवसनादिभिरपि काशीपुर्य्यां वासो वरं मनाक्प्रियः इत्यर्थः, किन्तु अन्यत्र स्थाने विचित्रेण छत्रेण सुच्छायं शोभनच्छायासमन्वितं राज्यं न कामये नाभिलषामीत्यर्थः ॥ ११ ॥

काशीति । हे राजन् ! काशीवासी च्युतकशः क्षुधार्त्तोऽपि पुल्कशोऽपि म्लेच्छजातिविशेषोऽपि यत् अतः मुक्तिरेव कन्या तया वृतः, अतः श्रेष्ठः । अन्यत्रस्थः काशीव्यतिरिक्तस्थानवर्त्ती स्वधर्मी स्वधर्मरतः सार्वभौमः सम्राडपि गर्भवासस्य एकयोग्यः पुनर्जन्मभागी अतएव श्रेयान् श्रेष्ठः न स्यात् । शालिनीवृत्तं मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ १२ ॥

जड़ेष्विति । सर्वेषु जड़ेषु अचेतनपिण्डेषु मज्जमानेषु काष-

सर्ववाङ्मनसातीतं भावाभावविवर्जितम् ।
चिन्मात्रं यत्परं ब्रह्म पञ्चक्रोशात्मकं हि तत् ॥१४॥
तदेतत् क्षेत्रमापूर्य स्थितं सर्वगमप्यहो ।
अनुग्रहार्थं लोकानामिति वेदविदो विदुः ॥ १५ ॥
शम्भोः शक्तिरियं काशी तदभिन्ना परा चितिः ।
शिव एव हि जानाति काशिकायाः परं सुखम् ॥१६॥
शिवस्यापि परं सौख्यं काशिका वेत्ति तत्परा ।
निर्विशेषा च शुद्धा च जड़ा चेति त्रिधा मता ॥१७॥
क्षेत्ररूपा जड़ा काशी मोचयेत्सर्वदेहिनः ।
मूर्त्तिरूपा तु या काशी शुद्धा सा चिन्मयी सती ॥१८॥

सागरे इति भावः इयं चिदानन्दमयी काशी न मज्जति न विलयं गच्छति । तथाहि स्वयं निमग्ना निमज्जनप्रवणा कथं परान् अन्यान् उद्धरेत् ? न कथमपीत्यर्थः, लोके च वेदे च एतत् विचार्य्य विचारणीयम् । इतोऽष्टसु अनुष्टुब्वृत्तम् ॥ १३ ॥

सर्वेति । सर्वेषां वाङ्मनसयोः अतीतम् अगोचरं, भावाभावाभ्यां सत्तासत्ताभ्यां विवर्जितं विरहितं चिन्मात्रं ज्ञानमात्रं यत् परं ब्रह्म, तत् हि तदेव पञ्चक्रोशात्मकं क्रोशपञ्चकमितं स्थानमिति शेषः काशीति यावत् ॥ १४ ॥

तदिति । तत् परमं ब्रह्म सर्वगमपि सर्वव्यापकमपि लोकानाम् अनुग्रहार्थम् एतत् क्षेत्रं स्थानम् आपूर्य्य विशेषेण व्याप्य स्थितमिति वेदविदः विदुः । अहो आश्चर्य्यम् ॥ १५ ॥

शम्भोरिति । इयं काशी शम्भोः शक्तिः सामर्थ्यरूपेत्यर्थः परा चितिः परमं ज्ञानं तथा काश्या अभिन्ना परमज्ञानरूपा काशीत्यर्थः शिव एव काशिकायाः परं सुखं जानाति ॥ १६ ॥

शिवस्येति । काशिकापि तत्परा शिवपरायणा अतएव शिवस्य

पूर्णरूपा स्वमाहात्म्यं स्वयमेव विचारयेत् ।
निर्विशेषा तु मुक्तानां शिवस्य च परा गतिः ॥१९॥
कोटिजन्मसहस्रेषु तपोध्यानसमाधिभिः ।
प्रसादितो शिवो येन स एव वेत्ति काशिकाम् ॥२०॥

यस्याः प्रसादादहमेव शम्भुः
जानामि शम्भुं सकलात्मभूतम् ।
स्मरामि शम्भुं प्रणवं शिवञ्च
शिवप्रियां तां प्रणमामि काशीम् ॥ २१ ॥

परं सौख्यं परमानन्दमयमित्यर्थः वेत्ति जानाति, सा काशी निर्विशेषा विशेषरहिता च सर्वेषां समेत्यर्थः शुद्धा च पवित्रा च जड़ा अचेतना प्रकृतिश्च इति त्रिधा त्रिप्रकारा मता कथिता ॥१७॥

चेतेति । चेतरूपा आधारस्वरूपिणी जड़ा काशी सर्वान् देहिनः मोचयेत् मुक्तिं नयेत्, मूर्त्तिरूपा साकारेत्यर्थः या काशी सा शुद्धा चिन्मयी ज्ञानमयी सती ॥ १८ ॥

पूर्णेति । पूर्णरूपा काशी स्वयमेव स्वस्य माहात्म्यं विचारयेत् विचारयितुं शक्नुयात् नापर इति भावः । निर्विशेषा तु काशी मुक्तानां लब्धमोक्षाणां शिवस्य च परा गतिः ॥ १९ ॥

कोटीति । येन कोटिजन्मसहस्रेषु तपसा ध्यानेन समाधिना चित्तैकाग्रतया शिवः प्रसादितः तोषितः, स एव काशिकां वेत्ति जानाति नापर इति शेषः ॥ २० ॥

यस्या इति । यस्याः काश्याः प्रसादात् अहमेव शम्भुः शिवः सन् सकलानाम् आत्मभूतं शम्भुं जानामि, शम्भुं शङ्करं प्रणवम् ओङ्काररूपं शिवं स्मरामि च, तां शिवप्रियां काशीं प्रणमामि । उपजातिवृत्तम् ॥ २१ ॥

प्रकाशयेत् याशु परात्मतत्त्वं
प्रकाशतेऽस्यामिति याथ काशी।
चिन्मात्ररूपापि च गीयते या
तां ब्रह्मविद्यां प्रणमामि काशीम् ॥ २२ ॥

यस्यां वसन् जन्तुरुपैति धर्मं
भुक्तिं च विश्वेश्वरमार्यसङ्गम्।
गङ्गां सुविद्यां परमां गतिं च
सा काशिका मेऽस्तु गतिर्मुमुक्षोः ॥ २३ ॥

सर्वाणि तीर्थानि वसन्ति यस्यां
वेदाः सदेवाः मुनयश्च मुक्तौ।
विभूषिता या परया द्युनद्या
सा काशिका मेऽस्तु गतिर्मुमुक्षोः ॥ २४ ॥

प्रकाशयेदिति। या काशी शीघ्रं परात्मतत्त्वं प्रकाशयेत् बोधयेत्, यस्यां यस्यामित्यर्थः प्रकाशते परात्मतत्त्वमिति वा, या च चिन्मात्ररूपा ज्ञानस्वरूपिणी गीयते च, तां ब्रह्मविद्यां काशीं प्रणमामि। उपजातिवृत्तम् ॥ २२ ॥

यस्यामिति। जन्तुर्जीवः यस्यां वसन् धर्मं भुक्तिं भोगं काममिति यावत् विश्वेश्वरम् आर्यसङ्गं साधुसङ्गं गङ्गां शोभनां विद्यां परमां गतिञ्च उपैति प्राप्नोति, सा काशिका मुमुक्षोः मोक्तुमिच्छोः मे मम गतिः अस्तु भवतु। इन्द्रवज्रावृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥ २३ ॥

सर्वाणीति। यस्यां सर्वाणि तीर्थानि पुण्यक्षेत्राणि वेदाः श्रुतयः सदेवाः मुनयश्च मुक्तौ मुक्त्यर्थं वसन्ति, या परया महत्या द्युनद्या सुरधुन्या विभूषिता च, सा काशिका मुमुक्षोर्मे मम गतिरस्तु। उपजातिवृत्तम् ॥ २४ ॥

शवः शिवः स्यादशिवोऽपि यस्याम्
अभद्रमुक्तं मरणञ्च भद्रम् ।
दरिद्रोऽपि श्रीपतितुल्य आस्ते
तां काशिकां को न भजेत् सुबुद्धिः ॥ २५ ॥

विरक्तियोगादिभवा हि विद्या
सुदुर्लभा नास्ति कलौ विमुक्तिः ।
यस्यां मृतस्तां समुपैति जन्तुः
शिवप्रसादादिति निश्चितं हि ॥ २६ ॥

अतः सदा सैव निषेवितव्या
मुमुक्षुभिः शङ्करराजधानी ।

शव इति । यस्यां शवः मृतदेहः अशिवोऽपि अमङ्गलोऽपि शिवः स्यात्, अभद्रम् अमङ्गलम् उक्तं मरणञ्च भद्रं मङ्गलं स्यात्, दरिद्रो दारिद्र्ययुक्तोऽपि श्रीपतितुल्यः लक्ष्मीपतिसमः आस्ते भवति, कः सुबुद्धिः तां काशिकां न भजेत् ? सर्व एव भजेदित्यर्थः । उपजातिवृत्तम् ॥ २५ ॥

विरक्तीति । विरक्तिः संसारेषु विरागः योगः जीवब्रह्मणो-रैक्यचिन्तनं तौ आदी येषां तेषां भवा उत्पादिनी विद्या ज्ञानमिति यावत् सुदुर्लभा दुष्प्रापेत्यर्थः, अतः कलौ विमुक्तिः न अस्ति लोकानां पापबाहुल्येन तद्विद्याराहित्यात् विद्यां विना च मुक्त्यसम्भवादिति भावः । किन्तु यस्यां काश्यां मृतः जन्तुः शिवस्य प्रसादात् तां मुक्तिं समुपैति सम्यक् लभते तादृशज्ञानविगमेऽपीति शेषः । इति निश्चितं हि निर्णीतं खलु शास्त्रकारैरिति शेषः । उपजातिवृत्तम् ॥ २६ ॥

अत इति । अतः कारणात् मुक्तिसाधनत्वादिति भावः मुमुक्षुभिः

स्वधर्मनिष्ठैः कलिकाल एका
ध्येया च वन्द्या परिकीर्त्तनीया ॥ २७ ॥
ये पुण्यशीलाः परिकीर्त्तयन्ति
काशीं सदैव प्रणमन्ति भक्त्या ।
तेषामहम्पादरजो बिभर्मि
शोचामि नित्यं दयया तदन्यान् ॥ २८ ॥
वसन्ति पापा न हि काशिकायां
वसन्ति चेदत्र मृतिर्न्न जायते ।
मृतिर्भवेच्चेन्न हि यातनाक्षयः
तथापि चान्ते परिमुच्यतेऽसौ ॥ २९ ॥

मुक्तिकामिभिः शैव शङ्करस्य हरस्य राजधानी काशी सदैव निषेवितव्या आराध्या । स्वधर्मनिष्ठैः स्वधर्मरतैः जनैः कलिकाले एका केवला सा काशी ध्येया वन्द्या परिकीर्त्तनीया च । उपजातिवृत्तम् ॥ २७ ॥

ये इति । ये पुण्यशीलाः सदैव काशीं भक्त्या परिकीर्त्तयन्ति प्रणमन्ति च, अहं तेषां पादरजः पदधूलीं बिभर्मि धारयामि, तदन्यान् तेभ्यः अन्यान् जनान् दयया नित्यं शोचामि एते वराकाः वृथा कालं नयन्तीति शोककारणमिति भावः । इन्द्रवज्रावृत्तम् ॥२८॥

वसन्तीति । पापाः जनाः काशिकायां न हि वसन्ति, चेत् यदि वसन्ति तदा अत्र मृतिः मरणं तेषामिति शेषः न जायते न भवति, चेत् यदि मृतिः मरणं भवेत् तदापि यातनाक्षयः न हि नैव भवेदिति शेषः । तथापि यातनाभोगेऽपि अन्ते यातनाभोगान्ते असौ पापी जनः परिमुच्यते मुक्तो भवति । उपेन्द्रवज्रावृत्तम्, उपेन्द्रवज्रा प्रथमे लघौ सा[illegible] तज्जचणात् ॥ २९ ॥

आदौ काश्यां धर्ममार्गेण वासः
पापत्यागः काशिमाहात्म्यदृष्टिः ।
देहं गेहं पुत्रमित्रादि यस्य
सर्वं तुच्छं सोऽधिकारी महात्मा ॥ ३० ॥
वासः काश्यां सज्जनानां प्रसङ्गो
गङ्गास्नानं पापकर्मारुचिश्च ।
पुण्ये प्रीतिः स्वेच्छया लाभसौख्यं
दानं शक्त्या न प्रतिग्राह्यमन्नम् ॥ ३१ ॥
अष्टावेते यस्य सन्त्येव योगा
योगाभ्यासैस्तस्य किं काशिकायाम् ।
एवं ज्ञात्वा यो वसेत् काशिकायां
सद्यो मुक्तोऽसौ भवेन्नैव चान्यः ॥ ३२ ॥

आदाविति । यस्य आदौ धर्ममार्गेण स्वधर्मानुष्ठानेन वासः स्थितिः, पापानां कर्मणां त्यागः अननुष्ठानं, काशिमाहात्म्यस्य दृष्टिर्ज्ञानं, तथा गेहं देहं पुत्रमित्रादि सर्वं वस्त्विति शेषः तुच्छं हेयत्वेन परिचितमिति भावः, सः महात्मा काश्याम् अधिकारी । शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥३०॥

वास इति । काश्यां वासः, सज्जनानां प्रसङ्गः प्रकर्षेण सङ्गतिः, गङ्गास्नानं, पापकर्मसु अरुचिः अननुरागः, पुण्ये पुण्यकर्मणि प्रीतिः अनुरागः, स्वेच्छया लाभे अर्थप्राप्तौ सौख्यं सुखमन्यतिः, शक्त्या यथाशक्तीत्यर्थः दानम्, अन्नं न प्रतिग्राह्यम् अन्नस्य प्रतिग्रहराहित्य- मित्यर्थः, यस्य एते अष्टौ काशीवासादयः पूर्वोक्ताः योगाः व्यापारा इति यावत् सन्त्येव विद्यन्ते एव, तस्य काशिकायां योगाभ्यासैः जीवब्रह्मणोरैक्यचिन्तनस्य अभ्यासैः किं ? न किमपि प्रयोजनमित्यर्थः

काश्यां कृतातिपापस्य दारुणा रुद्रयातना ।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥ २३ ॥
तस्मात् पापं न कर्त्तव्यं मनागपि विभोः पुरे ।
जातं यत्तत् प्रमादेन प्रायश्चित्तेन नश्यति ॥ २४ ॥
स्थापनं शिवलिङ्गादेः पञ्चक्रोशी प्रदक्षिणा ।
स्नानं दानं दया खेदः प्रायश्चित्तं महत् स्मृतम् ॥२५॥
पापमेव हि कर्त्तव्यं मतिरस्ति यदीदृशी ।

पूर्वोक्ताष्टविधयोगेनैव तस्य योगित्वादिति भावः एवं ज्ञात्वा यो जनः काशिकायां पुर्य्यां वसेत् असौ सद्यः सपदि मुक्तः भवेत्, अन्यः अपरः न च मुक्तो भवेदिति शेषः । युग्मकम् । शालिनीवृत्तम् ॥ २१ ॥ २२ ॥

काश्यामिति । काश्यां कृतम् अतिपापम् उत्कटं दुश्चरितं महापातकादीति भावः येन तस्य दारुणा अतितीव्रा रुद्रयातना रुद्रगणक्रियमाणा यातना स्यादिति शेषः, अहो खेदे, रुद्रपिशाचत्वं रुद्राणां कोपेन जनितं पिशाचधर्मित्वमिति भावः नरकेभ्योऽपि दुःसहम् असहनीयमित्यर्थः । इतो द्वापञ्चाशत्पर्य्यन्तेषु अनुष्टुब्वृत्तम् ॥२३॥

तस्मादिति । तस्मात् दुःसहयातनानिदानत्वादिति भावः विभोः शङ्करस्य पुरे काश्यां मनागपि स्वल्पमपि पापं न कर्त्तव्यम् । यच्च प्रमादेन अनवधानेन जातं तत् पापं प्रायश्चित्तेन शुद्धिजनकव्यापारेण नश्यति ॥२४॥

स्थापनमिति । शिवलिङ्गादेः आदिपदेन तदर्च्चनादीनां परिग्रहः । स्थापनं प्रतिष्ठापनमित्यर्थः, पञ्चक्रोशी प्रदक्षिणा पञ्चक्रोशमितायाः काश्याः प्रदक्षिणीकरणमित्यर्थः, स्नानं, दानं, दया प्राणिष्विति शेषः, खेदः कथमेतद् दुष्कृतं मया कृतमित्यनुतापः, महत् प्रायश्चित्तं स्मृतम् ॥ २५ ॥

पापमिति । पापमेव कर्त्तव्यं मयेति शेषः, यस्य ईदृशी मतिः

सुखेनान्यत्र कर्त्तव्यं मही ह्यस्ति महीयसी ॥ २६ ॥
यथा कामातुरो जन्तुरेकां रक्षति मातरम् ।
तथा पापकृता काशी रक्षितव्या मुमुक्षुणा ॥ २७ ॥
काश्यां मृतानां मुक्तिः स्यान्न वेति विवदन्ति ये ।
नरकं यान्ति ते पापाः काकाः श्वभ्रा भवन्त्यथ ॥२८॥
तस्मात् सर्वं परित्यज्य श्रोतव्याः काशिसत्कथाः ।
न विना श्रवणं पुण्यं पापं वा वेत्ति कोऽपि हि ॥२९॥
काश्यां वासः सतां सङ्गो गङ्गाम्भः शिवपूजनम् ।

अस्ति, तेन जनेन सुखेन अन्यत्र अन्येषु स्थानेष्वित्यर्थः कर्त्तव्यं पाप-मिति शेषः, हि यतः मही पृथिवी महीयसी अतिमहती अस्ति ॥ २६ ॥

यथेति । कामातुरः जन्तुः जीवः यथा एकां केवलां मातरं रक्षति न अभिगच्छतीत्यर्थः कामातुरेण सर्वा एव नारी गम्यते केवला जननी नेति भावः । तथा मुमुक्षुणा पापकृतापि काशी रक्षितव्या काश्यां पापं न कर्त्तव्यमिति भावः । अन्यत्र तु कृतं पापं वाराणस्यां विनश्यति । वाराणस्यां कृतं पापं वज्रलेपो भवि-ष्यतीति वचनादिति भावः ॥ २७ ॥

काश्यामिति । ये जनाः काश्यां मृतानां जन्तूनां मुक्तिः स्यात् न वा इति विवदन्ति विचारयन्ति, ते पापाः नरकं यान्ति, अथ नरकभोगानन्तरं काकाः श्वभ्राश्च भवन्ति ॥२८॥

तस्मादिति । तस्मात् सर्वं परित्यज्य काशिकायाः सत्कथाः श्रोतव्याः, हि यतः कोऽपि श्रवणं काशीमाहात्म्यस्येति शेषः विना पुण्यं पापं वा किं न वेत्ति न जानाति । काशीमाहात्म्यश्रवणेनैव पापपुण्यज्ञानं जायते इति भावः ॥ २९ ॥

काश्यामिति । काश्यां वासः, सतां साधूनां सङ्गः, गङ्गाम्भः

ध्यानं नारायणस्यैतत्सारात्सारं विदुर्बुधाः ॥ ४० ॥
कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।
कलौ भागीरथी गङ्गा दानं कलियुगे महत् ॥ ४१ ॥
गङ्गा विश्वेश्वरः काशी जागर्त्ति त्रितयं यतः ।
तत्र नैश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् ॥४२॥
न विश्वेशसमं लिङ्गं न काशीसदृशी पुरी ।
मणिकर्णिसमं तीर्थं नास्ति ब्रह्माण्डगोलके ॥ ४३ ॥
काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः ।
तथापि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका ॥४४॥

गङ्गाजलं, शिवपूजनं तथा नारायणस्य ध्यानम्, एतत् सर्वं सारात् सारं बुधाः पण्डिताः विदुः जानन्ति ॥४०॥

कलाविति । कलौ विश्वेश्वरः देवः, कलौ वाराणसी पुरी, कलौ भागीरथी भगीरथस्यानीता गङ्गा एतेन शङ्खासुरनीतायाः गङ्गाया व्यावृत्तिः । कलियुगे दानं महत् महाप्रयोजनकमेतत् सर्वमिति यावत् ॥४१॥

गङ्गेति । यतः यत्र गङ्गा विश्वेश्वरः काशी एतत् त्रितयं जागर्त्ति विद्यते इति भावः, तत्र नैश्रेयसी लक्ष्मीः मुक्तिसम्पद् लभ्यते जनैरिति शेषः, अत्र विषये किं चित्रम् आश्चर्यम् ॥४२॥

नेति । ब्रह्माण्डगोलके जगन्मण्डले विश्वेशेन विश्वेश्वरेण समं तुल्यं लिङ्गं न, काशीसदृशी पुरी नगरी न, मणिकर्णिसमं तीर्थं न अस्ति ॥४३॥

काश्यामिति । काश्याम् अनेकानि बहूनि लिङ्गानि अपरप्रतिष्ठितानीति शेषः, काश्यां अनेकशः अनेकानि तीर्थानि सन्तीति शेषः । तथापि तेषां पूज्यत्वेऽपीत्यर्थः विश्वेशः सेव्यः, मणिकर्णिका

यथा भूमितले विप्र! पुर्य्यः सन्ति सहस्रशः ।
तथा काशी न मन्तव्या कापि लोकोत्तरा त्वियम् ॥४५॥
अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि हि ।
काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः ॥४६॥
तीर्थार्थं न बहिर्गच्छेद्देवार्थं वा कदाचन ।
सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके ॥ ४७ ॥
शशकैर्मशकैः काश्यां यत्पदं हेलयाप्यते ।
तत्पदं नाप्यतेऽन्यत्र योगयुक्त्यापि योगिभिः ॥४८॥

च ज्ञातव्या, अपरलिङ्गापेक्षया विश्वेश्वरस्य अपरतीर्थापेक्षया मणिकर्णिकायाश्च प्राधान्यमिति भावः ॥ ४४ ॥

यथेति । हे विप्र ! भूमितले यथा सहस्रशः पुर्य्यः नगर्य्यः सन्ति, काशी नगरी तथा न मन्तव्या, इयन्तु कापि अनिर्वचनीया लोकोत्तरा अलौकिकीत्यर्थः ॥ ४५ ॥

अन्यानीति । अन्यानि मुक्तिक्षेत्राणि मुक्तिस्थानानि अयोध्यादीनि, अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारावती चैव सप्तैता मोक्षदायिका इत्युक्तानि काशीप्राप्तिकराणि हि, तथाच अयोध्यादीनि परम्परया मुक्तिसाधनानि, काशी तु साक्षान्मुक्तिसाधनीति भावः । काशीं प्राप्य विमुच्येत विमुक्तो भवति लोक इति शेषः अन्यथा तीर्थकोटिभिः न ॥४६॥

तीर्थार्थमिति । तीर्थार्थं तीर्थपर्य्यटनार्थं देवार्थं देवदर्शनार्थं वा कदाचन बहिः काश्या इति शेषः न गच्छेत् । अत्र अविमुक्तके काश्यां सर्वाणि तीर्थानि देवाश्च वसन्ति ॥४७॥

शशकैरिति । शशकैः मृगविशेषैः चतुष्पदोपलक्षणमिदं, मशकैः पतङ्गोपलक्षणमिदं, हेलया अनायासेनेत्यर्थः काश्यां यत् पदं मुक्तिरित्यर्थः आप्यते लभ्यते, अन्यत्र योगिभिः योगयुक्त्यापि योगानुष्ठानेऽपि तत् पदं न आप्यते न लभ्यते ॥४८॥

मध्यमेश्वरमारभ्य यावद् देहलिविघ्नपम्।
सूत्रं संस्थाप्य तद् दिक्षु भ्रामयेन्मण्डलाकृति ॥४९॥
तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम्।
काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता ॥५०॥
पूर्वतो जाह्नवी पश्चात् पाशपाणिर्गणेश्वरः।
असीवरणयोर्मध्ये शुभा वाराणसी मता ॥५१॥
विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम्।
अविमुक्तमिति प्रोक्तमन्तर्गृहमथो शृणु ॥५२॥

मध्यमेश्वरमिति। मध्यमेश्वरं नाम स्थानमिति शेषः आरभ्य देहलिविघ्नपं देहलीगणेशं नाम स्थानं यावत् सूत्रं संस्थाप्य तत् सूत्रं दिक्षु चतसृषु दिक्षु शेषः मण्डलाकृति मण्डलाकारेणेति भावः. भ्रामयेत् वेष्टयेत् ॥ ४९ ॥

तत्रेति। तत्र भ्रामणे या रेखा जायते, तस्याः रेखायाः मध्ये यत् उत्तमं क्षेत्रं स्थानं, वेदाः श्रुतयः तत् काशीति विदुः जानन्ति, तत्र मुक्तिः प्रतिष्ठिता नियतं स्थितेत्यर्थः ॥५०॥

पूर्वत इति। पूर्वस्यां दिशि जाह्नवी गङ्गा, पश्चात् पश्चिमायां दिशि पाशपाणिः पाशहस्तः गणेश्वरः गणपतिः प्रतिष्ठित इति शेषः, असीवरणयोः दक्षिणे असी, उत्तरस्यां वरणेति तयोर्मध्ये शुभा वाराणसी मता कथिता ॥५१॥

विश्वेश्वरादिति। विश्वेश्वरात् विश्वेश्वरस्थानादित्यर्थः चतुर्दिक्षु धनुःशतयुगोन्मितं चतुर्हस्तं धनुः तस्य शतयुगेन द्विशतेनेत्यर्थः हस्तानामष्टशतकेनेत्यर्थः क्रोशेनेति यावत् उन्मितं परिमितं स्थानम् अविमुक्तमिति प्रोक्तं कथितम्। अथो अनन्तरम् अन्तर्गृहम् अन्तःपुरमित्यर्थः काश्या इति शेषः शृणु ॥५२॥

गोकर्णेशः पश्चिमे पूर्वतश्च
गङ्गामध्यश्चोत्तरे भूरिभूतः।
ब्रह्मेशानो दक्षिणे सम्प्रदिष्टः
तत्तु प्रोक्तं भवनं विश्वभर्त्तुः ॥५३॥

इत्थं चतुर्विधं क्षेत्रं प्रशस्तञ्चोत्तरोत्तरम्।
पञ्चक्रोशात्मकं लिङ्गं यो वेद स परः शिवः ॥५४॥

य इदं काशिकास्तोत्रं भक्त्या सङ्कीर्त्तयेत्सदा।
स सर्वपापनिर्मुक्तः सद्यो मोक्षमवाप्नुयात् ॥५५॥

गुणानामेकदेशोऽयं काशिकायाः प्रकीर्तितः।

गोकर्णेश इति। पश्चिमे गोकर्णेशः, पूर्वतः पूर्वस्यां दिशि गङ्गामध्यं गङ्गाया मध्यभागः, उत्तरे भूरिभूतः तदाख्यप्रदेश इत्यर्थः, दक्षिणे ब्रह्मेशानः तदाख्यः सम्प्रदिष्टः सम्यक् निर्णीतः, तत्तु स्थानं विश्वभर्त्तुः विश्वेश्वरस्य भवनम् अन्तर्गेहं प्रोक्तं कथितम्। शालिनीवृत्तम् ॥ ५३ ॥

इत्थमिति। इत्थं चतुर्विधं काशीवाराणसीविमुक्तान्तर्गेहभेदेनेति भावः क्षेत्रम् उत्तरोत्तरं परात् परं प्रशस्तं श्रेष्ठं, प्रथमं काशी, तत्र वाराणसी, तत्राविमुक्तं, तत्रान्तर्गेहमिति परं परं प्राशस्त्येन कीर्त्तितमिति यावत्, इत्थं पञ्चक्रोशात्मकं लिङ्गं चिह्नं यो जनः वेद जानाति, स परः शिवः परमशिवः भवतीत्यर्थः। इतोऽनुष्टुव्वृत्तम् ॥ ५४ ॥

य इति। यः इदं काशिकास्तोत्रं सदा भक्त्या सङ्कीर्त्तयेत्, स सर्वेभ्यः पापेभ्यः निर्मुक्तः निर्गतः सन् सद्यः झटिति मोक्षम् अवाप्नुयात् लभेत ॥५५॥

गुणानामिति। काशिकायाः अयं गुणानाम् एकदेशः प्रकी-

तेन प्रीयातु भगवान् विश्वेशः काशिकाप्रियः ॥५६॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामकृष्णतीर्थपाद-
किङ्करशिष्यश्रीसत्यज्ञानानन्दतीर्थयति-
विरचितं काशीस्तोत्रं
सम्पूर्णम् ।

---

## आत्मबोधः ।

---

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्षोऽयमात्मबोधो विधीयते ॥१॥
बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥२॥

स्तुतिः कथितः मयेति शेषः । तेन गुणैकदेशकीर्त्तनेन काशिकायाः प्रियः भगवान् विश्वेशः प्रीयात् प्रसीदतु मयेति शेषः ॥५६॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
काशीस्तोत्रव्याख्या समाप्ता ।

---

तपोभिरिति । तपोभिः कृच्छ्रचान्द्रायणादिभिः क्षीणपापानां विनष्टकलुषाणां शान्तानां जितेन्द्रियाणां वीतरागिणां विगतवासनानां मुमुक्षूणाम् अपेक्षः ईप्सनीयः अवबोधनीय इति यावत् अयम् आत्मबोधः आत्मज्ञानजनकः प्रबन्धविशेष इत्यर्थः विधीयते प्रणीयते क्रियते इत्यर्थः मयेति शेषः । अनुष्टुप्वृत्तमस्मिन् प्रबन्धे ॥१॥

बोध इति । बोधः हि ज्ञानमेव अन्येभ्यः साधनेभ्यः उपायेभ्यः ल्यबर्थे पञ्चमी, अन्यानि साधनानि अपेक्ष्येत्यर्थः साक्षात् मोक्षस्य

अविरोधितया कर्म नाविद्यां विनिवर्त्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥३॥
परिच्छन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेऽंशुमानिव ॥४॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥५॥
संसारः स्वप्नतुल्योऽहि रागद्वेषादिसङ्कुलः ।
स्वप्नकाले सत्यवद्भाति प्रबोधेऽसत्यवद्भवेत् ॥६॥

एकम् अद्वितीयं साधनं कारणम् । पाकस्य वह्निवत् वह्निं विना यथा पाकस्य न सिद्धिः, तथा ज्ञानं विना मोक्षः न सिध्यति न भवतीत्यर्थः ॥२॥

अविरोधितयेति । कर्म अविरोधितया अप्रतिबन्धकत्वेन अविद्यां न विनिवर्त्तयेत् न निवारयेत्, विद्या ज्ञानम् एव तेजस्तिमिरसङ्घवत् तेजो यथा तिमिरचयं हन्ति तथा अविद्यां निहन्ति नाशयतीत्यर्थः ॥३॥

परिच्छन्न इति । अज्ञानात् परिच्छिन्न इव आवृत इव आत्मा तस्य अज्ञानस्य नाशे सति केवलः निरवच्छिन्नः अनावृत इति भावः सन् मेघापाये अंशुमानिव सूर्य्य इव स्वयं प्रकाशते हि, अज्ञानापगमे एव आत्मज्ञानं भवतीति भावः ॥४॥

अज्ञानेति । ज्ञानम् अज्ञानेन कलुषम् आविलम् आच्छन्नं जीवं ज्ञानाभ्यासात् ज्ञानानुशीलनात् विनिर्मलं विशेषेण पूतं कृत्वा स्वयं जलं कतकरेणुवत् नश्येत् तिरोहितं स्यात्, यथा कतकरेणुः कलुषितं जलं निर्मलं कृत्वा स्वयमपि नश्यति तथा ज्ञानं जीवं निर्मलं कृत्वा तस्मिन् स्वयं निभृतं तिष्ठतीति निष्कर्षः ॥ ५ ॥

संसार इति । रागद्वेषादिसङ्कुलः संसारः स्वप्नतुल्यः हि स्वप्न-

तावत्सत्यं जगद्भाति शुक्तिका रजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥७॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥८॥
यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशादेकवद्भवेत् ॥९॥

सदृश एव । स्वप्नकाले निद्रासमये सत्यवत् भाति स्वप्नदृष्टविषय इति शेषः, किन्तु प्रबोधे जागरणे असत्यवत् मिथ्याभूतः भवेत् ॥६॥

तावदिति । तावत् जगत् शुक्तिका रजतं यथा शुक्तिका यथा रजतं प्रतीयते तथा सत्यं भाति सत्यत्वेन प्रतीयते इत्यर्थः । यावत् सर्वाधिष्ठानं सर्वस्यापि अद्वयम् अद्वितीयं ब्रह्म न ज्ञायते न प्रतीयते । ब्रह्मज्ञाने सति जगत् असत्यं प्रतीयते इति भावः ॥ ७ ॥

सच्चिदात्मनीति । सच्चिदात्मनि नित्यज्ञान-रूपे नित्ये अच्युते अनुस्यूते अन्तर्यामिनि विष्णौ विश्वव्यापके परमात्मनि विविधाः सर्वाः व्यक्तयः प्रपञ्चाः हाटके काञ्चने कटकादिवत् प्रकल्पिताः । यथा यथा कटककुण्डलादयोऽलङ्काराः कल्पनामात्राः वस्तुतः हाटकान्येव तथा सर्वे विविधाः पदार्थाः कल्पनात्मिका एव वस्तुतः आत्मनो विकारा एवेति भावः ॥८॥

यथेति । हृषीकेशः हृषीकाणाम् इन्द्रियाणाम् ईशः अधिष्ठाता इत्यर्थः विभुः परमात्मा आकाशो यथा नाना उपाधिषु पदार्थेषु गतः । यथाकाशः घटाकाशः पटाकाशः इत्यादिभेदेन विविधतां गतः तथा ईश्वरोऽपीति भावः । तद्भेदात् तस्य उपाधेर्भेदात् वैचित्र्यात् भिन्नवत् भाति, तस्य उपाधेर्नाशात् एकवत् एक एवेत्यर्थः भवेत् । यथा घटादीनां नाशे तत्तदुपाधिक आकाश आकाश एव तथा परमात्मा तत्तदुपाधीनां नाशात् स एवाद्वितीय इति भावः ॥९॥

नानोपाधिवशादेवं जातिनामाश्रयादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥१०॥
पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥११॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥१२॥

नानेति । तोये जले रसवर्णादीनां भेदवत् जातिनामाश्रयादयः एवं नानोपाधिवशात् आत्मनि आरोपिताः प्रकल्पिताः । जलस्य मधुरत्वलवणत्वाम्लत्वादिकं वर्णाश्रयसङ्गवशात् यथा जायते तथा आत्मनः व्यक्तिविशेषसङ्गेन जातिनामाश्रयाणां भेदात् विभेद इति भावः ॥१०॥

पञ्चीति । शरीरं पञ्चीकृतेभ्यः महाभूतेभ्यः क्षित्यादिभ्यः सम्भवतीति तथोक्तं, पञ्चीकरणं यथा प्रथमं सूक्ष्माः पञ्चतन्मात्राः सृष्टाः ततः तन्मात्रायाः क्षितेरर्द्धम् अपां तेजसां मरुतां व्योम्नाञ्च सूक्ष्माणाम् अष्टममष्टममंशं समादाय क्षितिः पञ्चीकृता, एवम् अपामर्द्धम् अन्येषां चतुर्णामष्टममष्टममंशं समादाय आपः पञ्चीकृताः, तेजसश्चार्द्धम् अन्येषाञ्चाष्टममष्टममंशं समादाय तेजः पञ्चीकृतम् । मरुतोऽर्द्धम् अन्येषां चतुर्णामष्टममष्टममंशमादाय मरुत् पञ्चीकृतः । व्योम्नश्चार्द्धमन्येषां चतुर्णामष्टममष्टममंशं समादाय व्योम पञ्चीकृतम् । एतान्येव स्थूलानि महाभूतानि उच्यन्ते, एभिश्च सृष्टिरिति पौराणिकाः । कर्मणा शुभाशुभकर्मजनिता पूर्वेणेति यावत् सञ्चितं प्रारब्धं सुखदुःखानां भोगस्य आयतनम् आधारभूतम् उच्यते ॥११॥

पञ्चेति । पञ्चभिः प्राणैः प्राणापानोदानसमानव्यानैः मनसा बुद्ध्या दशभिः इन्द्रियैः चक्षुःकर्णनासिकाजिह्वात्वग्वाक्पाणिपादपायूपस्थैः समन्वितम् अपञ्चीकृतैः पूर्वोक्तपञ्चीकरणरहितैः भूतैः

अनाद्यविद्या निर्वाच्या कारणोपाधिरुच्यते।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥१३॥
पञ्चकोशादियोगेन तत्तन्मय इव स्थितः।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥१४॥
वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघाततः।
आत्मानमान्तरं शुद्धं विविच्यात्तण्डुलं यथा ॥१५॥
सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते।
बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥१६॥

पञ्चतन्मात्राभिरित्यर्थः इत्थम् उत्पन्नं सूक्ष्माङ्गं सूक्ष्मशरीरं भोग-साधनं हेतुभूतम् एतैर्विना भोगनाभावादिति भावः ॥१२॥

अनादीति। अनादिरविद्या मूलप्रकृतिः कारणं सत्त्वरज-स्तमोरूपम् उपाधिर्यस्याः सा कारणाख्येत्यर्थः निर्वाच्या निर्वक्तुं शक्या। उपाधित्रितयात् सत्त्वरजस्तमोमयात् गुणत्रयादित्यर्थः अन्यम् अतिरिक्तमित्यर्थः आत्मानं परमात्मानम् अवधारयेत् निश्चिनुयात् ॥१३॥

पञ्चेति। नीलवस्त्रादिभिर्योगेन स्फटिको यथा शुद्धात्मा केवलः ईश्वरः पञ्चकोशादियोगेन पञ्चविधाः कोशाः अन्नमयानन्दमयादि-रूपाः तेषां योगेन सङ्गेन तत्तन्मय इव स्थितः न तु वस्तुतस्तत्तन्मय इति भावः ॥१४॥

वपुरिति। वपुषः शरीरस्य तुषादिभिः तुषादिरूपैः कोशैः पूर्वोक्तैरिति भावः युक्तम् आन्तरम् अन्तर्यामिनं शुद्धम् आत्मानं युक्त्या योगेन अवघाततः चित्तैकाग्र्येण तण्डुलं यथा विविच्यात् अवधारयेत्। यथा तण्डुलं तुषादिभिर्युक्तं बहिरप्रकाशं पश्चात्-तदपनयनेन निर्मलं दृश्यते तथा अन्तर्यामी आत्मा बाह्यकोशाद्या-वरणापगमेन विशुद्धः प्रकाशते इति भावः ॥१५॥

सदेति। सदा सर्वस्मिन् काले सर्वगतोऽपि आत्मा सर्वत्र न

देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥१७॥

व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥१८॥

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्त्तन्ते सूर्य्यालोकं यथा जनाः ॥१९॥

देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि ।
अध्यास्यतेऽविवेकेन गगने नीलतादिवत् ॥२०॥

अवभासते प्रकाशते । स्वच्छेषु निर्मलेषु वस्तुषु प्रतिबिम्बवत् बुद्धौ एव अवभासेत प्रकाशेत ॥ १६ ॥

देहेति । देहेन्द्रियमनोबुद्धिरूपाभ्यः प्रकृतिभ्यः विलक्षणं विभिन्नं तद्वृत्तिसाक्षिणं तासु देहादिषु प्रकृतिषु वृत्तिरवस्थानं यस्य तादृशः साक्षी तत्तद्देहादिप्रकृतीनां कार्य्यदर्शीत्यर्थः तम् आत्मानं राजवत् सदा विद्यात् जानीयात् । यथा राजा स्वयं किमपि न करोति किन्तु अन्यकृतं कार्य्यं पश्यति तथा आत्मा स्वयं न किञ्चिदपि करोति किन्तु प्रकृतेः कार्य्यद्रष्टेति भावः ॥ १७ ॥

व्यापृतेति । यथा अभ्रेषु मेघेषु धावत्सु चलत्सु शशी चन्द्रः धावन् दृश्यते प्रतीयते इति यावत् तथा आत्मा व्यापृतेषु स्वस्वकार्य्यं निर्वहत्सु इन्द्रियेषु चक्षुरादिषु व्यापारीव तत्तत्कार्य्यकर इव अविवेकिनाम् अवभासते इति शेषः ॥१८॥

आत्मेति । देहेन्द्रियमनोधियः देहिकानि इन्द्रियाणि मनः धीश्चेत्यर्थः जनाः सूर्य्यालोकमिव आत्मचैतन्यम् आश्रित्य स्वकीयार्थेषु स्वेषु स्वेषु कार्य्येषु वर्त्तन्ते प्रवर्त्तन्ते ॥ १९ ॥

देहेति । अविवेकेन विवेकरहितेन जनेन गगने नीलतादिवत् अमले निर्मले सच्चिदात्मनि ईश्वरे देहेन्द्रियगुणान् देहेन्द्रियगुणरूपाणीत्यर्थः कर्माणि अध्यास्यते आरोप्यते । यथा गगने वास्तवं

अज्ञानान्मानसोपाधेः कर्त्तृत्वादीनि चात्मनि ।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादिर्यथाम्भसः ॥२१॥
रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः ॥२२॥
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।
स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः ॥२३॥
आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।

नीलतादिकं नास्ति तथापि लोका गगनस्य नीलत्वमाचक्षन्ति, तथा निष्कर्मणोऽपि आत्मनः कर्मशालित्वं कल्प्यते इति भावः ॥ २० ॥

अज्ञानादिति । अम्भसः जलस्य चलनादिः कम्पनादिः अम्बुगते सलिलप्रतिबिम्बिते चन्द्रे यथा, मानसोपाधेः मनोरूपेन्द्रियस्य कर्त्तृत्वादीनि अज्ञानात आत्मनि कल्प्यन्ते आरोप्यन्ते । यथा वस्तुतश्चन्द्रो जले प्रतिबिम्बं गतः न चलति, जलस्य कम्पनादिवशात् तस्य चाञ्चल्यं प्रतीयते, तथा मनसः कार्य्यकारित्वेऽपि अज्ञानात् परमात्मनि कार्य्यकारित्वमवबुध्यते इति भावः ॥ २१ ॥

रागेति । बुद्धौ सत्यां विद्यमानायां रागः विषयानुरागः इच्छा सुखं दुःखादि च प्रवर्त्तते कार्य्यं करोतीत्यर्थः । सुषुप्तौ सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्येवंरूपा ह्यनुभूयमाना निद्राया अवसाने भवति सा प्रगाढ़निद्रेति भावः तस्यां तस्याः बुद्धेः नाशे व्यपगमे तत् रागेच्छासुखदुःखादि न अस्ति न भवति, तस्मात् बुद्धेस्तु बुद्धेरेव रागेच्छासुखदुःखादीति शेषः आत्मनः न, रागेच्छादिकोधर्म इति भावः ॥ २२ ॥

प्रकाश इति । अर्कस्य सूर्य्यस्य प्रकाशः, तोयस्य जलस्य शैत्यं शीतलत्वम्, अग्नेः उष्णता यथा स्वभावः, तथा आत्मनः सच्चिदानन्दनित्यनिर्मलता स्वभावः ॥ २३ ॥

आत्मन इति । आत्मनः सच्चिदंशः बुद्धेर्वृत्तिश्च इति द्वयम्

संयोज्य वाविवेकेन जानामीति प्रवर्त्तते ॥२४॥
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति।
जीवः सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति ॥२५॥
रज्जुसर्पवदात्मानं जीवो ज्ञात्वा भयं वहेत्।
नाहञ्जीवः परात्मेति ज्ञानञ्चेन्निर्मलो भवेत् ॥२६॥
आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि।
दीपो घटादिवत् स्वात्मा जडैस्तैर्नावभास्यते ॥२७॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः।

अविवेकेन संयोज्य वा संयोज्येत्यर्थः अबुद्ध्वेति भावः जानामीति अहमिति शेषः प्रवर्त्तते वदतीति भावः। ज्ञानं बुद्धेरेव धर्मः न तु आत्मन इति भावः ॥ २४ ॥

आत्मन इति। आत्मनः विक्रिया विकारः सुखदुःखादिरिति भावः न अस्ति, इति बुद्धेः बोधः ज्ञानं जातु कदाचित् न भवतीति शेषः बुद्धिर्मन्यते आत्मा विकारीति भावः। जीवः सर्वं विषयम् अलं सम्यक् ज्ञात्वापि ज्ञाता द्रष्टा अहमस्मीति शेषः इति मुह्यति ॥२५॥

रज्जुसर्पेति। जीवः रज्जुसर्पवत् आत्मानं ज्ञात्वा मत्वा भयं वहेत् बिभीयात् यथा रज्ज्वां सर्पोऽयमिति कृत्वा लोकः बिभेति, तथा आत्मानं भयहेतुत्वेन मन्यते इति भावः। अहं जीवो न, परात्मा इति ज्ञानञ्चेत् भवतीति शेषः, तदा निर्मलः विशुद्धः निर्भय इति यावत् भवेत् ॥ २६ ॥

आत्मेति। दीपः घटादिवत् एकः अद्वितीयः आत्मा बुद्ध्यादीनि इन्द्रियाणि अवभासयति हि प्रकाशयत्येव आत्मराहित्ये तेषां कार्य्याक्षमत्वादिति भावः। किन्तु जडैः अचेतनैः तैः बुद्ध्यादिभिः स्वात्मा स्वनिष्ठः आत्मा न अवभास्यते न अवभासयितुं शक्यते ॥२७॥

स्वबोधे इति। यथा दीपस्य स्वात्मप्रकाशने निजस्वरूपप्रकटने

न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥२८॥
निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः ।
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥२९॥
आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षरम् ।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥३०॥
देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः ।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥३१॥
अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥३२॥

अन्यदीपस्य इच्छा न अस्तीति शेषः तथा आत्मनः बोधरूपतया ज्ञानस्वरूपत्वेन स्वबोधे स्वस्वरूपस्य प्रकाशने अन्यस्य बोधस्य इच्छा न भवतीति शेषः ॥ २८ ॥

निषिध्येति । नेति नेति तन्न तन्न इति वाक्यतः निखिलान् सर्वान् उपाधीन् आवरणभूतान् विषयानिति भावः निषिध्य निरस्य महावाक्यैः तत्त्वमसीत्यादि दुरूहार्थप्रतिपादकैर्वाक्यैः जीवात्मपरमात्मनोरैक्यम् अभेदं य एव जीवात्मा स एव परमात्मा इत्येवंरूपं विद्यात् बुध्येत ॥ २९ ॥

आविद्यकमिति । आविद्यकम् अविद्यानिबन्धनं दृश्यं शरीरादि बुद्बुदवत् जलस्फोट इव क्षरं नश्वरम् । एतद्विलक्षणं क्षरातीतमित्यर्थः अहं निर्मलं ब्रह्म इति विद्यात् ॥ ३० ॥

देहेति । मे मम देहान्यत्वात् देहभिन्नत्वादात्मन इति यावत् जन्म जरा वार्द्धकं कार्श्यं क्षीणता लयादयः ध्वंसादयश्च न सन्तीति शेषः, तथा निरिन्द्रियतया इन्द्रियराहित्येन शब्दादिभिः विषयैः शब्दरूपरसगन्धस्पर्शैरित्यर्थः न च सङ्गः नापि संयोग इत्यर्थः ॥३१॥

अमनस्त्वादिति । अप्राणः प्राणरहितः अमनाः मनोरूपेन्द्रिय-

अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥२२॥
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥२३॥
अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ॥२४॥
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥२५॥
एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥२६॥

शुभ्रः शुभ्रः हि निर्मल एव आत्मेति शेषः इत्यादिश्रुतेर्वेदस्य शासनात् मे मम आत्मन इति यावत् अमनस्त्वात् मनोरूपत्वाभावात् दुःखराग-द्वेषभयादयः न सन्तीति शेषः ॥ २२ ॥

निर्गुण इति । अस्मि अहम् आत्मेति यावत्, निर्गुणः त्रिगुणातीतः, निष्क्रियः व्यापाररहितः, नित्यः अक्षयः, निर्विकल्पः निर्भिन्न इत्यर्थः, निरञ्जनः निर्मलः, निर्विकारः अविक्रियः, निराकारः आकाररहितः, नित्यमुक्तः सततबन्धनरहितः, निर्मलः विशुद्धः ॥ २३ ॥

अहमिति । अहम् आत्मेति यावत् आकाशवत् सर्वेषां जगतां बहिरन्तर्गतः बाह्याभ्यन्तरवर्त्ती, अच्युतः अविनाशी, सदा सर्वस्मिन् काले सर्वेषां समः अपक्षपातीत्यर्थः, शुद्धः केवलः, निःसङ्गः निर्लेप निर्मलः कालुष्यरहितः, अचलः निरन्तरस्थित इत्यर्थः ॥ २४ ॥

नित्येति । यत् वक्ष्यति शेषः नित्यं शुद्धं विमुक्तं बन्धनरहितम् एकं केवलम् अखण्डानन्दं पूर्णानन्दस्वरूपम् अद्वयम् अद्वितीयं सत्यं ज्ञानम् अनन्तं परं महत् ब्रह्म, तत् अहम् आत्मेति यावत् ॥२५॥

एवमिति । एवम् इत्थं निरन्तरं सततं कृत्वा ब्रह्मैव अस्मि

विविक्तदेशे आसीनो विरागी विजितेन्द्रियः ।
भावयेदेतमात्मानं तमनन्तमनन्यधीः ॥३७॥
आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥३८॥
रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥३९॥
ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥४०॥

अहम् इति वासना संस्कारविशेषः रसायनम् औषधविशेषः रोगानिव अविद्याविक्षेपान् मोहविलसितानि हरति नाशयति ॥३६॥

विविक्तेति । विविक्तदेशे विजने आसीनः उपविष्टः विरागी विगतविषयस्पृहः विजितेन्द्रियः वशीकृतेन्द्रियः अनन्यधीः एकाग्रचित्तः सन् एतं तम् अनन्तम् आत्मानं भावयेत् चिन्तयेत् ॥३७॥

आत्मनीति । सुधीः प्राज्ञो जनः धिया बुद्ध्या आत्मन्येव अखिलं सर्वं दृश्यं वस्तु प्रविलाप्य अभ्यन्तरीकृत्येत्यर्थः निर्मलाकाशवत् निर्मलम् आकाशमिव एकमद्वितीयम् आत्मानं सदा भावयेत् चिन्तयेत् ॥ ३८ ॥

रूपेति । परमार्थवित् परमम् अर्थं वेत्तीति तथोक्तः रूपवर्णादिकं सर्वम् आत्मन इति शेषः विहाय त्यक्त्वा परिपूर्णः अखण्डः यश्चिदानन्दः ज्ञानसुखं तत्स्वरूपेण तदभिन्नत्वेनेति यावत् अवतिष्ठते सोऽहमिति भावमवलम्बते इत्यर्थः ॥ ३९ ॥

ज्ञात्रिति । परमात्मनि ज्ञाता वेत्ता ज्ञानं बोधं ज्ञेयं वेद्यं तेषां भेदः पार्थक्यमिति यावत् परमात्मनि न विद्यते परमात्मा ज्ञाता ज्ञानं ज्ञेयश्चेति भावः । स हि चिदानन्दैकरूपत्वात् ज्ञानानन्दस्वरूपत्वात् स्वयमेव दीप्यते प्रकाशते ॥ ४० ॥

एवमात्मारणिध्यानमथने सततं कृते ।
उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥४१॥
अरुणेनेव बोधेन पूर्वं सन्तमसे हृते ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥४२॥
आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥४३॥
स्थाणौ पुरुषवद् भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विकं रूपं तस्मिन् दृष्टे निवर्त्तते ॥४४॥

एवमिति । एवम् इत्थं सततम् आत्मा एव अरणिरग्निमन्थनदारु, तस्य ध्यानं चिन्तनमेव मथनं तस्मिन् कृते सति उदिता उत्थिता अवगतिरवबोध एव ज्वाला अग्निशिखा सर्वम् अज्ञानमेव इन्धनं काष्ठं दहेत् भस्मीकुर्य्यात् ॥ ४१ ॥

अरुणेनेति । अरुणेन अरुणसम्बन्धिना बोधेन ज्ञानेन उद-तेनेत्यर्थः पूर्वं प्राक् सन्तमसे गाढ़ान्धकारे मोहे च हृते सति ततः अनन्तरं बोधोदयात् परमित्यर्थः आत्मा स्वयमेव अंशुमानिव आवि-र्भवेत् प्रकाशेत ॥ ४२ ॥

आत्मेति । आत्मा तु सततं प्राप्तोऽपि सन्निहितोऽपि अविद्यया अज्ञानेन मोहेनेत्यर्थः अप्राप्तवत् असन्निहित इव प्रतीयते इति शेषः । तस्याः अविद्यायाः नाशे सति स्वस्य कण्ठाभरणं यथा कण्ठ-हार इव प्राप्तवत् कण्ठवर्त्तीवेत्यर्थः भाति राजते ॥ ४२ ॥

स्थाणाविति । स्थाणौ शाखापल्लवविहीने शुष्के तरौ पुरुष-वत् अयं पुरुषस्तिष्ठतीतिवत् ब्रह्मणि आत्मनि जीवता देहित्वं भ्रान्त्या मोहेन कृता मोहान्धा एव ब्रह्म देहिनं वदन्तीति भावः । तस्मिन् आत्मनि दृष्टे साक्षात् कृते सति जीवस्य तात्त्विकं रूपं स्वरूपमित्यर्थः निवर्त्तते ब्रह्मणि जीवत्वं दूरीभवतीत्यर्थः ॥ ४४ ॥

तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४५॥
सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलञ्जगत् ।
एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥४६॥
आत्मैवेदं जगत् सर्वमात्मनोऽन्यत् न किञ्चन ।
मृदो यद्वत् घटादीनि स्वात्मानं सर्वमीक्षते ॥४७॥
जीवन्मुक्तस्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ।
सच्चिदानन्दरूपत्वं भजेद् भ्रमरकीटवत् ॥४८॥

तत्त्वेति । तत्त्वस्वरूपस्य तात्त्विकभावस्य अनुभवात् बोधात् अञ्जसा झटिति उत्पन्नं ज्ञानम् अहं मम इति च एवम्प्रकारम् अज्ञानं दिग्भ्रमादिवत् बाधते निरस्यति ॥ ४५ ॥

सम्यगिति । सम्यक् तात्त्विकं यत् विज्ञानं विशिष्टावबोधः तद्वान् योगी ज्ञानचक्षुषा स्वात्मन्येव स्वस्वरूपे एव अखिलं समग्रं जगत् सर्वञ्च जगत् एकमद्वितीयम् आत्मानम् आत्मस्वरूपम् ईक्षते पश्यति ॥ ४६ ॥

आत्मेति । इदं सर्वं जगत् आत्मा एव आत्मनः परमात्मनः अन्यत् किञ्चन वस्तु न अस्तीति शेषः । घटादीनि यद्वत् मृदः मृत्तिकायाः अन्यत् न तथा सर्वं स्वात्मानम् ईक्षते ॥ ४७ ॥

जीवन्मुक्त इति । जीवत एव मुक्तिः अविद्याबन्धनभ्रंश इति यावत् यस्य तथाभूतो जनः तद्विद्वान् तत्त्ववित् सन् पूर्वोपाधिगुणान् अविद्याजनितान् भावानित्यर्थः पूर्वभुक्तान् कमलादींश्च भ्रमरकीटवत् भृङ्ग इव त्यजेत्, भ्रमरो यथा पूर्वं भुक्तं मधुमत् कमलादि परिणामे यदा मधुरहितं पश्यति तदा तत् त्यजति तथा जनः पूर्वभुक्तं संसारसुखम् अविद्याविगमात् यदा हेयमवगच्छति तदा तत् त्यजेदिति भावः । ततश्च सच्चिदानन्दरूपत्वं ब्रह्मभावं भजेत् लभेत ॥ ४८ ॥

तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी सर्वसमायुक्त आत्मारामो विराजते ॥४९॥
बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवत् स्वच्छमन्तरेव प्रकाशते ॥५०॥
उपाधिस्थोऽपि तद्धर्मनिर्लिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥५१॥
उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जले जलं वियद् व्योम्नि तेजस्तेजसि वा यथा ॥५२॥

तीर्त्वेति । योगी जनः सर्वस्मिन् सांसारिके भावे समम् अयुक्तः सर्वसंसारभावत्यागीत्यर्थः सन् मोहार्णवम् अज्ञानसमुद्रं तीर्त्वा रागः विषयानुरागः द्वेषः विरागः तौ आदी येषां तथाभूतान् राक्षसान् हत्वा निर्जित्य आत्मनि रमते इति तथाभूतः सन् विराजते ॥ ४९ ॥

बाह्येति । बाह्यं बहिर्भवम् अनित्यं नश्वरं यत् सुखं सांसारिकमिति भावः तस्मिन् आसक्तिं हित्वा त्यक्त्वा आत्मनः सुखे ब्रह्मज्ञानजनिते आनन्दे निर्वृतः सुखी सन् घटस्थदीपवत् घटमध्यस्थप्रदीप इव स्वच्छं निर्मलम् अन्तरेव आन्तरं तत्त्वमेव प्रकाशते ॥५०॥

उपाधिस्थ इति । मुनिः उपधिस्थः देहस्थितोऽपि तस्य धर्मैः दैहिकैः भावैः व्योमवत् आकाशमिव निर्लिप्तः निःसम्बन्धः सर्ववित् सर्वज्ञः किन्तु मूढवत् जड इव तिष्ठेत् तथा असक्तः सङ्गवर्जितः सन् वायुवत् चरेत् व्यवहरेत् ॥ ५१ ॥

उपाधीति । मुनिः जले जलं यथा व्योम्नि आकाशे वियत् आकाशं यथा तेजसि तेजो यथा उपाधिविलयात् सांसारिकभावविगमात् निर्विशेषं यथा तथा विष्णौ विश्वव्यापके आत्मनि विशेत् ॥ ५२ ॥

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद् ब्रह्मेत्यवधारयेत् ॥५३॥
यद् दृष्ट्वा नापरं दृश्यं यद् भूत्वा न पुनर्भवः ।
तज्ज्ञात्वा नापरं ज्ञेयं तद् ब्रह्मेत्यवधारयेत् ॥५४॥
तिर्य्यगूर्द्ध्वमधःपूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत् तद् ब्रह्मेत्यवधारयेत् ॥५५॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम् ।
अखण्डानन्दमेकं यत् तद् ब्रह्मेत्यवधारयेत् ॥५६॥
अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।

यदिति । यस्य लाभात् अपरो लाभः न भवतीति शेषः, यत्सुखात् यस्य ज्ञानजनितादानन्दादित्यर्थः अपरं सुखं न भवेदिति शेषः । यस्य ज्ञानात् अपरं ज्ञानं न भवेदिति शेषः, तत् ब्रह्म इति अवधारयेत् निश्चिनुयात् ॥५३॥

यदिति । यत् दृष्ट्वा अपरं दृश्यं द्रष्टव्यं न विद्यते इति शेषः, यत् भूत्वा न पुनर्भवः पुनर्जन्म भवेदिति शेषः, यत् ज्ञात्वा अपरं ज्ञेयं ज्ञातव्यं न विद्यते इति शेषः, तत् ब्रह्म इति अवधारयेत् ॥ ५४ ॥

तिर्य्यगिति । यत् तिर्य्यक् ऊर्द्धम् अधः सर्वत इति भावः पूर्णं सच्चिदानन्दं नित्यज्ञानसुखस्वरूपम् अद्वयम् अद्वितीयम् अनन्तं नित्यम् एकं केवलं, तत् ब्रह्म इति अवधारयेत् ॥५५॥

एतदिति । वेदान्तैः उपनिषद्भिः अतद्व्यावृत्तिरूपेण तत्त्वम-सीति वाक्यस्थं यत् तत्पदं तस्य व्यावृत्तेः विगमस्य अभावरूपेण तत्पदार्थेन युष्मत्पदार्थस्याभेदरूपेणेति यावत् यत् अद्वयम् अद्वि-तीयम् एकं केवलम् अखण्डानन्दं पूर्णानन्दं यत् लक्ष्यते प्रतीयते तत् ब्रह्म इति अवधारयेत् ॥ ५६ ॥

अखण्डेति । अखण्डानन्दरूपस्य पूर्णानन्दस्वरूपस्य तस्य आत्म-

ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनो लवाः ॥५७॥

तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः ।
तस्मात् सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥५८॥

अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तद् ब्रह्मेत्यवधारयेत् ॥५९॥

यद्भासा भास्यतेऽर्कादिः भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद् ब्रह्मेत्यवधारयेत् ॥६०॥

स्वयमन्तर्बहिर्व्याप्य भासयन्निखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥६१॥

न्दरूपम् आनन्दाबन्दुम् आश्रिताः ब्रह्माद्या देवाः तारतम्येन न्यूनाधिक्येन आनन्दिनः लवाः अंशाः भवन्ति ॥ ५७ ॥

तदिति । अखिलं वस्तु जगत् तेन पूर्णानन्देन आत्मना युक्तं व्यवहारः क्रिया जगत इति शेषः तेन आत्मना अन्वितः युक्तः, तस्मात् अखिले क्षीरे दुग्धे सर्पिरिव घृतमिव ब्रह्म सर्वगतं सर्वव्यापकम् ॥ ५८ ॥

अनण्विति । तत् अनणु न सूक्ष्मम्, अस्थूलं न स्थूलम्, अह्रस्वम् अखर्वम्, अदीर्घम् अजं जन्मरहितम् अव्ययम् अक्षयम् अरूपगुणवर्णाख्यं रूपगुणवर्णवर्जितमित्यर्थः ब्रह्म इति अवधारयेत् ॥५९॥

यदिति । यद्भासा यस्य परमात्मनः भासा दीप्त्या अर्कादिः भास्यते दीप्यते भास्यैः मयूखैः यद् ब्रह्म तु न भास्यते येन ब्रह्मणा इदं सर्वं जगत् भाति तद् ब्रह्म इति अवधारयेत् ॥ ६० ॥

स्वयमिति । ब्रह्म स्वयं निखिलं जगत् अन्तः बहिः व्याप्य भासयेत् दीपयेत् तथा वह्नौ प्रतप्तायसपिण्डवत् प्रतप्तं लौहपिण्डमिव प्रकाशते ॥ ६१ ॥

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किञ्चन ।
ब्रह्मान्यद्भासते मिथ्या यथा मरुमरीचिका ॥६२॥
दृश्यते श्रूयते यद्यद् ब्रह्मणोऽन्यन्न विद्यते ।
तत्वज्ञानाच्च तद् ब्रह्म सच्चिदानन्दमद्वयम् ॥६३॥
सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥६४॥
श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।
जीवः सर्वमलान्मुक्तः स्वर्णवद् द्योतते स्वयम् ॥६५॥
हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत् ।
सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥६६॥

जगदिति । ब्रह्म जगद्विलक्षणं जगद्भिन्नं ब्रह्मणः अन्यत् किञ्चन किमपि वस्त्विति शेषः न अस्तीति शेषः । ब्रह्मणः अन्यत् वस्त्विति शेषः जगदित्यर्थः मरुमरीचिका यथा मरुभूमौ मृगतृष्णिकेव मिथ्या भासते अलीकं भातीत्यर्थः ॥ ६२ ॥

दृश्यते इति । यत् यत् दृश्यते श्रूयते च तत्तत् ब्रह्मणः अन्यत् न विद्यते, तत्त्वज्ञानात् तत्त्वावबोधात् तत् यद् यद् दृश्यते श्रूयते चेति भावः अद्वयम् एकं सच्चिदानन्दं ब्रह्म विद्यादिति शेषः ॥६३॥

सर्वगमिति । ज्ञानचक्षुर्जनः सर्वगं सर्वव्यापिनं सच्चिदात्मानं निरीक्षते पश्यति । अज्ञानचक्षुर्जनः भास्वन्तं दीप्यमानं भानुं सूर्यम् अन्धवत् दृष्टिहीन इव न ईक्षते न पश्यति ॥ ६४ ॥

श्रवणादिभिरिति । श्रवणादिभिः श्रवणमननिदिध्यासनैरित्यर्थः उद्दीप्तं यत् ज्ञानमेव अग्निः तेन परितापितः प्रज्वालित इत्यर्थः जीव इति यावत् जीवः देही सर्वमलात् सर्वस्मात् पापात् मुक्तः विरहितः सन् स्वयं स्वर्णवत् आत्मनैव द्योतते दीप्यते ॥ ६५ ॥

हृदिति । [illegible] हृदयमेव आकाशं तस्मिन् उदितः [illegible] ततः

दिग्देशकालाद्यनपेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥६७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करा-
चार्य्यविरचितमात्मबोधप्रकरणं सम्पूर्णम् ।

---

# भक्तामरस्तोत्रम् ।

कपर्दगौरजाह्नवीतरङ्गफेनचन्द्रिका-
सरत्नभोगिकुण्डलोल्लसत्कपोलमण्डली ।

तमः तिमिरं मोहमिति यावत् अपहरतीति तथोक्तः बोधभानुः ज्ञानसूर्य्यः आत्मा सर्वव्यापी तथा सर्वधारी विश्वधारकः सन् भाति राजते । सर्वं जगत् प्रकाशते तेनेति शेषः ॥६६॥

दिग्देशेति । यः विनिष्क्रियः क्रियारहितः सन् दिशो देशाः कालाश्च आदयः येषां तेषु अनपेक्षम् अपेक्षारहितं तत्सम्बन्धरहितमित्यर्थः सर्वगं सर्वव्यापकं शीतादिहृत् शीतोष्णादिद्वन्द्वरहितं नित्यसुखं निरञ्जनम् अकलुषं स्वस्य आत्मा एव तीर्थः पुण्यक्षेत्रं तं भजते आराधयति, स सर्ववित् सर्वज्ञः सर्वगतः अव्याहतगतिः अमृतः मुक्तश्च भवेत् । यं ब्रह्मविदं दृष्टं, वदन्ति ब्रह्मविदं जनो अराविति तद्वचनात् ॥ ६७ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
आत्मबोधव्याख्या समाप्ता ।

---

कपर्देति । कपर्दः जटाजूटे, कपर्दोऽस्य जटाजूटविशेषः । गौरी

स पातु खण्डितारितुण्डमण्डिताजिमण्डलः
सुरासुरेन्द्रवृन्दभाललोलमालभारिपात् ॥१॥
समस्तभावभावनाफलप्रदो वृषध्वजः
करीन्द्रचर्मचेलभृत् सदष्टभूतिमूर्त्तिमान् ।
स पातु चित्रभोगिमुण्डमाल्यनीलकण्ठवान्
दिगम्बरो गिरीन्द्रजातपःफलप्रदो हरः ॥२॥

गौरवर्णा धवलेत्यर्थः या जाह्नवी गङ्गा तस्याः तरङ्गाणां फेना एव चन्द्रिकाः ज्योत्स्नाः ताभिः तथा नरत्नः शिरोरत्नभूषितः यः भोगी पन्नगः स एव कुण्डलं तेन उल्लसत् विराजत् कपोलमण्डलं यस्य तथोक्तः, खण्डितैः निकृत्तैः अरितुण्डैः शत्रुशिरोभिः मण्डितम् अलङ्कृतम् आजिमण्डलं संग्रामसमूहः येन तथाभूतः, तथा सुरासुराणां देवासुराणां वृन्दस्य समूहस्य भाले ललाटे शिरसीति यावत् लोलं चञ्चलं यत् मालं मालानां समूह इत्यर्थः तस्य भारिणौ भारवन्तौ पादौ यस्य तादृशः देवासुरवृन्दवन्दितचरण इति भावः, सः प्रसिद्धो देवः पातु रक्षतु अस्मानिति शेषः। अस्मिन् सन्दर्भे पञ्चचामरं वृत्तं प्रमाणिका पदद्वयं वदन्ति पञ्चचामरमिति प्रमाणिका जरौ लगाविति च तल्लक्षणात् ॥ १ ॥

समस्तेति। समस्तभावेन सर्वतोभावेनेत्यर्थः या भावना ध्यानं तस्य फलप्रदः भक्तानामभीष्टद इत्यर्थः, वृषध्वजः वृषभवाहनः। करीन्द्रस्य गजासुरविशेषस्य चर्म एव चेलं वसनं बिभर्त्तीति तथोक्तः, सत्यः विद्यमानाः अष्टौ भूतयः ऐश्वर्य्याणि, अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायितेत्युक्तानि यस्याः तादृशी या मूर्त्तिः तद्वान्, चित्रं रुचिरं भोगिनां पन्नगानां मुण्डमेव चरमफणमण्डलमेवेत्यर्थः माल्यं यस्य तादृशः नीलः हलाहलपानादिति भावः यः कण्ठः तद्वान् दिगम्बरः विवसनः नग्न

मुकुन्दवद्विभासिदन्तमन्दिरारविन्दहा
सुनन्दितामरेन्द्रवृन्दवन्दितो महेश्वरः ।
स पातु सेवकं कृपां करोतु पार्वतीपतिः
वृषेन्द्रवाहनो विनीतमेघवाहनः प्रभुः ॥३॥

सदा सनन्दनादिभिर्विभाव्यमानधामवान्
प्रदोषताण्डवे नटन् मृदङ्गमङ्गलं ध्वनन् ।
स पातु भक्तपालकः प्रभाकरो विभाकरः
प्रतिक्षणं विभावरीदिवासुखप्रदो हरः ॥४॥

इत्यर्थः गिरीन्द्रजा पार्वती तस्याः यत् तपसः फलं तत्प्रदः तदभीष्टद इत्यर्थः स हरः शिवः पातु रक्षतु ॥ २ ॥

मुकुन्देति । विभासो विशेषेण द्योतमानः दन्तमन्दिरवत् हस्तिदन्तनिर्मितमन्दिरवत् अरविन्दहा चन्द्रः यत्र तथाभूतः, सुनन्दितैः अमरेन्द्रवृन्दैः देवेन्द्रवर्गैः वन्दितः, सेवितः वृषेन्द्रवाहनः वृषभगतिः, विनीतः दमितः मेघवाहनः इन्द्रो येन तथाभूतः, पुरा दक्षाध्वरं मृगरूपिणं जिघांसुं पिनाकिनं प्रति देवेन्द्रो वज्रं मोक्तुं प्रवृत्ते । तदवलोक्य तेन भगवता भ्रूभङ्गेन सन्तर्जितस्य तस्य वज्रं हस्त एव तस्थौ स च भयं विलक्षितस्य रणपतितं तं भगवन्तं प्रसादयामासेति पुराणवार्त्तात्रानुसन्धेया । पार्वतीपतिः प्रभुः मुकुन्दवत् हरिरिव स शिवः पातु सेवकं कृपां करोतु च ॥३॥

सदेति । सदा सर्वस्मिन् काले सनन्दनादिभिः ब्रह्मपुत्रैः विभाव्यमानं ध्यायमानं यत् धाम तद्वान् प्रदोषताण्डवे रजनीमुखनृत्यसमये नटन् नृत्यं कुर्वन् मृदङ्गमङ्गलं मृदङ्गवत् मङ्गलं यथा तथा ध्वनन् नदन् भक्तपालकः भक्तवत्सलः प्रभाकरः विभाकरः सूर्याग्निरूप इत्यर्थः विभावरीदिवासुखप्रदः दिवारात्रं सुखदाता च हरः प्रतिक्षणं पातु रक्षतु ॥४॥

स्वभक्तभीभयङ्करः कुतश्चिदप्रमेयतः
शिवेति मन्त्रमन्त्रणात् सतां विनिर्गतं भयम् ।
स पातु लोचनत्रयीविभासितो हरो विभुः
स पातु भक्तचामरैः सुवीजितश्च चामरैः ॥५॥
समुद्रिताग्निलोचनस्त्रिलोचनः प्रवृद्धयेऽ-
वनाय चामरार्चितो गिरीन्द्रकन्यकासखः ।
स पातु भोगिकङ्कणः सरीसृपाङ्गदः शिवो
विमुक्तकञ्चुकाहिसूत्रसत्कृतोपवीतवान् ॥६॥
कपालकल्पितप्रियो नमः शिवाय जल्पतेऽ-
प्यनल्पकामदायकोऽप्यकिञ्चनो निरञ्जनः ।

स्वभक्तेति । स्वभक्तानां निजसेविनां या भीर्भयं तस्याः भयङ्करः भक्ताभयद इत्यर्थः कुतश्चित् अनिर्वचनीयात् अप्रमेयतः परिच्छेत्तुमशक्यादित्यर्थः शिवेति मन्त्रस्य मन्त्रणात् उच्चारणात् यस्येति शेषः सतां साधूनां भयं विनिर्गतं विनिवृत्तं भवतीति शेषः, लोचनानां नयनानां त्रयी तया विभासितः अलङ्कृतः त्रिलोचन इत्यर्थः स विभुर्हरः पातु । भक्तानां चामरैः चमरमृगपुच्छलोमरूपैर्व्यजनैः अमरैर्देवैश्च सुवीजितः स हरः पातु ॥५॥

समुद्रितेति । प्रवृद्धये अभ्युदयाय अवनाय रक्षणाय च जगत इति शेषः सम् यथा तथा मुद्रितं प्रायेण सङ्कुचितमित्यर्थः अग्निरूपं लोचनं तृतीयमिति भावः येन सः त्रिलोचनः त्र्यम्बकः अमरैः देवैरर्चितः पूजितः, गिरीन्द्रकन्यकासखः पार्वतीसहचर इत्यर्थः भोगिकङ्कणः सर्पवलयः सरीसृपाङ्गदः सर्पकेयूरः विमुक्तं त्यक्तं कञ्चुकं येन तथाविधः अहिर्भुजङ्ग एव सूत्रं तेन सत् सम् यथा तथा कृतं यत् उपवीतं तद्वान् च शिवः पातु ॥६॥

कपालेति । कपालेन नरशिरःकङ्कालेन कल्पितेनेति भावः

स पातु भुक्तिमुक्तिदो जगद्विलम्बिकीर्त्तनो
वसन् गिरीन्द्रकन्यया परार्थसाधने रतः ॥७॥
गणेशकार्त्तिकेयसूनुपार्वतीप्रियंवदो
गृहाश्रमं विडम्बयन् दिने दिने सुयोगिराट् ।
स पातु शम्भुरार्य्यया वसन् विनीतभार्य्यया
निवेद्यमानमर्चनं क्षणं क्षणं नवं नयन् ॥८॥
कृपाङ्कुरालवालदृक्कटाक्षमार्गभासतो
बिभाति भारतीश्वरः श्रियामपीश्वरः परः ।
स पातु पार्वतीपतिर्हि कथ्यते बुधै-
र्द्विधा हरिर्हरः सदा प्रतीतिमात्रभेदतः ॥९॥

ग्लापिता ग्लानिं नीता शोषितेति यावत् प्रिया गौरीति भावः येन तथाभूतः, भवः शिवाय इति जल्पते कथयतेऽपि पूजादिकं दूरा-पास्तमिति भावः अनल्पं प्रभूतं कामम् अभिलषितं ददातीति तथोक्तः अपि अकिञ्चनः निर्धनः निरञ्जनः निष्कलुषः भुक्तिमुक्तिदः स्वर्गापवर्गप्रदः जगति विलम्बि चिरस्थायि कीर्त्तनं यस्य तथाविधः, गिरीन्द्रकन्यया पार्वत्या सह वसन् परार्थसाधने परेषां कार्य्य-निष्पादने परमार्थसाधने वा रतः स हरः पातु ॥७॥

गणेशेति । गणेशकार्त्तिकेयौ सूनू पुत्रौ यस्याः तथाभूतायाः पार्वत्याः प्रियंवदः प्रियवादीत्यर्थः, दिने दिने गृहाश्रमं विडम्बयन् परित्यजन् सुयोगिराट् सुष्ठु योगिवरः आर्य्यया साध्व्या विनीतया वशवर्त्तिन्या भार्य्यया वसन् सम्पूज्यमानः क्षणं क्षणं प्रतिक्षणं निवेद्य-मानं नवम् अर्च्चनं नयन् आत्मानं च शम्भुः पातु रक्षतु ॥ ८ ॥

कृपेति । भारतीश्वरः सरस्वतीपतिः श्रियामपि ईश्वरः लक्ष्मी-पतिरित्यर्थः परः परमः पुमान् कृपाङ्कुरस्य [illegible] आलवाल एव दृक्कटाक्षः दृष्टिविक्षेपः तस्य मार्गभासतः [illegible] बिभाति

मुनीन्द्रनारदादिवृन्दगीयमानकीर्त्तिमान्
गिरीन्द्रजापुरःसरोऽप्सरोभिरीडितः शिवः ।
स पातु भूतभव्यकालिकालकालनापरः
परारिरूढनामवान् पुनाति वै पुनः पुनः ॥१०॥

स्फुरत्क्षपाप्रदामुखे विशुद्धचन्द्रतारके
मणिप्रदीपमन्दिरे नटन् मनोगतं नयन् ।
स पातु पालनापरो महेश्वरस्य कीर्त्यते
विशेषतश्च निस्पृहः परार्थभूतिमूर्त्तिमान् ॥११॥

विराजते । सः पातु रक्षतु । बुधैः पार्वतीपतिर्हि शिव एव रूढिः मर्षिभिः प्रसिद्धतया ख्यात इत्यर्थः दृश्यते । प्रतीतिमात्रस्य ज्ञानमात्रस्य भेदतः वैलक्षण्यात् सदा हरिः हर इति द्विधा द्विरूपबुद्धिः वस्तुतस्तु द्वावेक एवेति भावः ॥ ९ ॥

मुनीन्द्रेति । मुनीन्द्राणां नारदादीनां वृन्दैः गीयमाना वर्ण्यमाना या कीर्त्तिः तद्वान्, गिरीन्द्रजा गौरी तस्याः पुरःसरः, अप्सरोभिः सुराङ्गनाभिः ईडितः स्तुतः स शिवः पातु । यः भूतभव्यकालिकयोः अतीतभविष्ययोः कालयोः अलकायां कुवेरनगर्य्यां कैलासे इति भावः या कलना स्थितिः तत्परः भूतभव्येति वर्त्तमानोपलक्षणं तेन निरन्तरकैलासवासीत्यर्थः, परेषु मत्कृतु अरिषु शत्रुषु रूढं भयदमित्यर्थः यत् नाम तद्वान्, पुनः पुनः सततं पुनाति वै पवित्रयत्येव जगदिति शेषः ॥ १० ॥

स्फुरदिति । विशुद्धचन्द्रतारके प्रज्वलितचन्द्रनक्षत्रे अतएव स्फुरति राजति क्षपाप्रदायाः क्षपदायाः रात्रेरित्यर्थः, त्रियामा क्षणदा क्षपेत्यमरः । तस्या, मुखे प्रारम्भे प्रदोषे इत्यर्थः मणिप्रदीपो यत्र तथोक्ते मन्दिरे गृहे नटन् नृत्यन् मनोगतम् अभिलषितं नयन् [illegible] पातु सः पालनापरः जगद्रक्षणतत्परः

कृपालुता हृदिस्थिता विभाविता च सूरिभि-
र्यदक्षिकोणकेऽरुणे रसाम्भसेऽरुणप्रभाम् ।
स पातु वै बिभर्त्ति यः प्रसीदतां महेश्वरः
कुटुम्बिनीञ्च पार्वतीं गणेशनन्दनानुगाम् ॥१२॥

यदङ्घ्रिभस्मरेणुना विधेः स्वविश्वसृट्कथा
चतुर्मुखाच्चतुर्भुजान्निजार्चनं विभावयन् ।
स पातु पञ्चवक्त्रवान् सहस्रनेत्रपूजितः
पिपर्त्ति यो जगत्त्रयं गुणत्रयातिगो हरः ॥१३॥

महेश्वरस्य विशेषतश्च स्वयं निस्पृहः निष्कामः किन्तु परार्थेषु पर-कार्य्येषु भूतिमूर्त्तिमान् उत्पत्तिमान् जगत्कार्य्यार्थमेव च ईश्वरस्य शरीरपरिग्रह इति भावः कीर्त्यते लोकैरिति शेषः ॥ ११ ॥

कृपालुतेति । सूरिभिर्विद्वद्भिः अरुणे रक्ते यस्य अक्षिकोणके नेत्रप्रान्ते इत्यर्थः हृदिस्थिता मनोगता कृपालुता विभाविता अनुमिता, यश्च रसाम्भसे प्रणयमर्यादाय प्रेमास्वादार्थमिति भावः अरुणप्रभां रक्तकान्तिम् अनुरागिणीमिति भावः गणेश एव नन्दनः पुत्रः अनुगः अनुगामी यस्याः तथोक्तां पार्वतीं गौरीं कुटु-म्बिनीं नारीं बिभर्त्ति वै वहत्येव स महेश्वरः पातु प्रसीदताञ्च ॥१२॥

यदिति । यस्य अङ्घ्रेश्चरणस्य भस्मरेणुना भस्मकणेन विधे-र्ब्रह्मणः स्वस्य विश्वस्य सृजः सृष्टेः कथा प्रस्तावः भवतीति शेषः भगवतोऽस्य चरणरेणुनैव उपकरणेन विधाता जगत् सृजतीति भावः । चतुर्मुखात् ब्रह्मणः चतुर्भुजात् विष्णोः सकाशादिति शेषः निजार्चनं स्वस्य पूजनं विभावयन् लभमान इत्यर्थः ब्रह्मविष्णोरपि पूज्य इति भावः, पञ्चवक्त्रवान् पञ्चाननः, सहस्रनेत्रपूजितः इन्द्राराधितः स शिवः पातु । यः गुणत्रयातिगः त्रैगुण्यातीतः हरः जगत्त्रयं त्रिभुवनं पिपर्त्ति पालयति ॥ १३ ॥

सचन्दनाम्बुसीकरप्रकीर्णभक्तचामरैः
सुवीजितोऽच्छताम्बुमाल्यबिल्वपत्रकाञ्चनैः ।
स पातु योऽर्चितो हरो हरत्यनल्पसंज्वरं
यदर्चनाम्बु लोचने निषिक्तमर्चतामपि ॥१४॥

असद्गुहाश्च वीक्षितुं न शक्नुवन्ति किं पुनः
बिभेति वै परेतराड्यदङ्गभङ्गधारणात् ।
स पातु पार्वतीपितुः पितॄन् पिपर्त्ति नप्तृदः
सुपात्रपौत्रसम्पदा जगद्बिभर्त्ति यश्च सः ॥१५॥

सचन्दनेति । यः सचन्दनेन चन्दनाक्तेन अम्बुसीकरेण जलकणेन प्रकीर्णैः संलिप्तैः संयुक्तैरित्यर्थः भक्तानां चामरैः सुवीजितः संसेवितः, अच्छतम् आतपत्रम् अम्बु जलं माल्यं बिल्वपत्रं काञ्चनं स्वर्णं तैः अर्चितः पूजितः, यस्य अर्चना पूजा अनल्पं महान्तं संज्वरं सन्तापं हरति, अर्चतामपि पूजयतामपि यमिति शेषः लोचने नयने अम्बु जलं निषिक्तं भवतीति शेषः यदाराधने लोकानामानन्दाश्रुपातः स्यादिति भावः स हरः पातु ॥ १४ ॥

असद्गुहा इति । यस्य अङ्गभङ्गस्य धारणात् धारणकारिणो भक्तादिति भावः परेतराट् प्रेतपतिः यम इत्यर्थः बिभेति, असन्तः यक्षाः धनेश्वरादयः वीक्षितुं द्रष्टुं भक्तधारिणमिति शेषः न शक्नुवन्ति इति किं पुनः वक्तव्यमिति शेषः । यश्च नप्तृदः दौहित्रद इति यावत् पार्वत्यां पुत्रं जनयन्निति भावः । सुपात्रं सुयोग्य इत्यर्थः यः पौत्रः तस्यैव सम्पदा सम्पत्त्या पार्वतीपितुः हिमालयस्य पितॄन् पूर्वपुरुषानित्यर्थः पिपर्त्ति प्रीणयति दौहित्रोऽपि [illegible] तारयति पौत्रवदिति कारणेन पार्वतीपुत्रेण हिमालयस्य पौत्रवद्धारकत्वादिति भावः सः, यश्च जगद् बिभर्त्ति स हरः पातु रक्षतु ॥ १५ ॥

बुभुक्षते पिपासते च लुब्धकाय बिल्वको-
परि क्षुपावसज्जनाय वै मृगेन्द्रभीतितः ।
स पातु शम्भुरङ्घ्रिणा त्रुटत्सुबिल्वपत्रतो-
ऽर्चनान्निजास्पदं ददौ निशाहिमाम्बुसेचनात् ॥१६॥
सुनिस्वनन्मृदङ्गमेघसंभ्रमस्ववाहने
निरूढनन्दनां निरीक्ष्य मोदसुस्मिताननाम् ।

बुभुक्षत इति । यः त्रुटता गात्रसङ्घर्षात् स्खलतेत्यर्थः सुबि-ल्वपत्रतः शोभनेन बिल्वपत्रेण अर्चनात् पूजनात् तथा निशायाः रात्रेः हिमाम्बुना सेचनात् अभिषेकात् गात्रसंश्लेषजनितादिति भावः शीत इत्यध्याहार्य्यं बुभुक्षते क्षुधार्त्ताय पिपासते तृष्णार्त्ताय मृगेन्द्रेभ्यः श्वापदेभ्य इति यावत् भीतितः भयात् बिल्वकस्य बिल्व-वृक्षस्य उपरि हि उपर्य्येव उपावसते तिष्ठते जनाय लुब्धकाय व्याधाय अङ्घ्रिणा चरणेन चरणस्पर्शेनेति भावः निजास्पदं शैवं पदं ददौ स शम्भुः पातु रक्षतु । पुरा कश्चित् व्याधः मृगयायां सर्वं दिनमतिवाह्य रजन्यां गृहं गन्तुमशक्तः काननमध्ये श्वापदभयेन मांसराशिं कस्यचित्तरोः शाखायां बद्ध्वा स्वयं तं वृक्षमारुरोह । फाल्गुने मासि नितरां शीतार्त्तः क्षुधार्त्तः शीतवातेन कम्पान्वित-कलेवरः तां रात्रिं तत्रैव वृक्षे जजागार । दैववशात् तन्मूले शिवलिङ्गमेकं तिष्ठति । सा तिथिश्च शिवचतुर्दशी । तस्य व्याधस्य निराहारस्य गात्रसङ्घर्षात् तद्बिल्वपत्राणि तत्रत्यशिशिरजलानि च तस्मिन् लिङ्गे पेतुः । तेन चासौ भगवान् परितुतोष । ततश्च कदाचित् आयुषः शेषे तं व्याधं यमकिङ्करैर्नीयमानमाक्षिप्य शिव-दूताः शिवलोकं निन्युरिति शिवरात्रिकथानुसन्धेया ॥१६॥

सुनिस्वनन्निति । सुनिस्वनन् गम्भीरं ध्वनन् मृदङ्ग एव मेघः तेन संभ्रमः उल्लासो यस्य तादृशं स्व [illegible] [illegible] मयूरं [illegible] तस्मिन् निरूढः आरूढः नन्दनः कार्त्तिकेयः [illegible] [illegible], मोदेन

स पातु पार्वतीं हरो गजास्यपुष्करं सृज-
न्नखेन्दुसम्पदा करेण पातिनन्दनेक्षणाम् ॥१७॥
सुरासुरैर्धरामरैर्धराधिपैः सुपार्श्वगैः
ध्वनन्मृदङ्गडिण्डिमादिघण्टया निषेव्यते ।
स पातु पार्वतीश्वरोऽतिदीनहीनकाकुवाक्-
प्रपञ्चमञ्चति प्रभुः शृणोति सत्वरं च सः ॥१८॥
सितेन्दुबिम्बिताकृतिं निजां निरीक्ष्य पार्वतीं
विशङ्कमानभामिनीं परस्त्रियं चकासतीम् ।
स पातु मञ्जुवाक्शतप्रयाससान्त्वबोधनैः
शुचिस्मितां चकार यो विशुद्धबोधदाननः ॥१९॥

आनन्देन सुविकसितम् आननं यस्याः तथाभूताम्, पातिनी पतती नन्दने ईक्षणे नयने यस्यास्तादृशीं पार्वतीं निरीक्ष्य नखेषु इन्दोश्चन्द्रस्य सम्पद् शोभेव तादृशेन करेण हस्तेन गजास्यस्य गणेशस्य पुष्करं शुण्डादण्डं सृजन् स्पृशन्निति यावत् सः हरः पातु ॥ १७ ॥

सुरासुरैरिति । यः सुरासुरैः देवदैत्यैः धरामरैः ब्राह्मणैः धराधिपैः राजभिः सुपार्श्वगैः पार्श्वचरैः प्रमथगणैरिति यावत् ध्वनद्भिः मृदङ्गडिण्डिमादिभिः घण्टया च निषेव्यते सेव्यते इत्यर्थः, यः प्रभुः अतिदीनानां हीनानां दुर्गतानाञ्च काकुवाक्प्रपञ्चं दीन-वचनसमूहम् अञ्चति पूजयति यत्नेन गृह्णाति सत्वरं शृणोति च स पार्वतीश्वरः पातु ॥ १८ ॥

सितेन्द्विति । यः निजां स्वकीयां सितेन शुभ्रेण इन्दुना चन्द्रेण शिरोनिहितेनेति भावः बिम्बिता प्रतिफलिता आकृतिर्यस्याः इति तां निरीक्ष्य चकासतीं विराजमानां अपरस्त्रीति भावः परस्त्रियं मत्वेति भावः विशङ्कमाना अतो भामिनी चेति तां पार्वतीं मञ्जुवाचः पेशलात् चन्द्रकान्त्या प्रतिफलितशरीरं स्वं

शिवस्य निन्दकोऽपि सन् शिवो भवन् पुरःसरन्
करे ग्रहीतुमुद्यतस्तपोवने च पार्वतीम् ।
स पातु रूक्षया गिरा तिरस्कृतोऽप्यधोमुखीं
ह्रिया न किञ्चनोत्तरां प्रमोदपूरितान्तराम् ॥२०॥

सदोन्नमः शिवाय यो जपेत् त्रिवर्गसम्पदा
स युज्यते च भुज्यते भयैर्वियुज्यते पुनः ।
स पातु सत्प्रमोदमन्त्रमूर्त्तिरीश्वरो हरः
ददाति सद्यशोऽम्बरं सुगन्धि भोजनं किमु ॥२१॥

वीक्ष्य शिरस्थितगङ्गया भासमानदेहं मन्यमानामिति भावः निरीक्ष्य
मञ्जुना मनोहरेण वाक्शतेन वचनसमूहेन यः प्रयासः प्रयत्नः क्लेशेन
वीक्षणानि च तैः विशुद्धः निर्दोषः बोधः नाहमन्यां स्पृशः कामये
इति प्रबोध इति यावत् तस्य दानतः दानेन सुशोभितां विशुद्धहासां
चकार स हरः पातु ॥१९॥

शिवस्येति । यः शिवस्य स्वस्येति भावः निन्दकोऽपि शिवो भवन्
पुरःसरन् अग्रवर्त्ती सन् रूक्षया गिरा दुर्वचसेत्यर्थः पार्वत्या इति
शेषः तिरस्कृतोऽपि तपोवने ह्रिया लज्जया अधोमुखीं न
किञ्चनोत्तरां किञ्चिदपि वक्तुमसमर्थां प्रमोदेन उल्लासेन पूरितम्
अन्तरं मनः यस्याः तथोक्तां पार्वतीं करे ग्रहीतुम् उद्यतः, स हरः
पातु ॥ २० ॥

सदेति । यः सदा ओँ नमः शिवाय इति यस्य मन्त्रमिति शेषः
जपेत् स त्रिवर्गाणां धर्मार्थकामानां सम्पदा श्रिया युज्यते भुज्यते
सेव्यते च पुनस्तथा भयैः वियुज्यते विमुच्यते । सन् प्रमोदो यत्र
तथाभूतः मन्त्र एव मूर्त्तिर्यस्य तथोक्तः यः सद् उत्तमं यश एव
अम्बरं वसनं किमु अथवा सुगन्धि सौरभयुक्तं भोजनं ददाति, स
ईश्वरो हरः पातु ॥२१॥

सुधांशुबिम्बनामके कपालमण्डले जलैः
अनलेक्षणस्य बिम्बमच्छयत्यसत्यकम् ।
स पातु भातकौतुकीकरोति सत्यमेव यो
गुणैर्निजैश्च कीर्त्तितैर्यथाकथञ्चिदर्चितः ॥२२॥

सुपार्वतीतपःफलेन शम्भुना स भूयते
प्रपद्यते च पार्वती निजं तपोमहत् फलम् ।
स पातु लोकमातरं जगत्पिता पुरातनीं
पुरातनो बिभर्त्ति वै कृपावतीं कृपाकरः ॥२३॥

नवोदयारुणेन्दुबिम्बवद्विभासिताननां
प्रभाकरप्रभातभां परिच्छदावृताङ्गिनीम् ।

सुधांश्विति । यः निजैः गुणैः यथाकथञ्चित् कीर्त्तितैः अर्चितः सन् सुधांशुबिम्बनामके चन्द्रबिम्बनाम्नि कपालमण्डले जलैः किरणरूपैः अनलेक्षणस्य अग्निरूपनेत्रस्य बिम्बमिति भावः अत एव असत्यकं मिथ्याभूतं अप्रकृतरूपमिति भावः बिम्बम् अच्छयति आप्याययति सति सत्यमेव भातेन दीप्त्या कौतुकीकरोति सत्यतया प्रत्याययतीति भावः स हरः पातु ॥ २२ ॥

सुपार्वतीति । शम्भुना सुपार्वतीतपःफलेन शोभनगौरीतपस्याफलेन भूयते च शिवः पार्वत्याः सम्यक् तपसः फलमेवाभूदित्यर्थः । पार्वती च निजं तपसा महत् फलं शिवरूपमिति भावः प्रपद्यते च प्राप्नोति चेति पूर्वेणान्वयः । सः कृपाकरः दयानिधिः पुरातनः जगत्पिता पुरातनीं कृपावतीं लोकमातरं जगज्जननीं पार्वतीमित्यर्थः बिभर्त्ति वै वक्षसीव, स शम्भुः पातु ॥ २३ ॥

नवेति । [illegible] प्रदि[illegible]
[illegible]

स पातु पार्वतीं वहन्विवाहमण्डपे भ्रमन्
प्रदक्षिणेन सर्वतो हरो गिरीन्द्रसद्मनि ॥२४॥
सुमृत्युजित् पतिव्रता सुपुत्रिणी सुमङ्गली
भवेति सत्प्रणम्यमातृवर्गवाग्भिरादृताम् ।
स पातु केकसद्मनि सुतो गिरीन्द्रजामुवा-
ह मेनकोर्वशीतिलोत्तमासखीजनैश्रिताम् ॥२५॥
अकर्मकोऽपि कर्मभिः स्म योज्यते सखीजनैः
प्रहेलिकापरैरलं विलम्बितोऽक्षरैः खरैः ।
स पातु कौतुके गृहेऽप्यजय्यसङ्गतेष्टुभिः
शुचिस्मितैः शुचिस्मितः शुचिस्मितेश्वरीश्वरः ॥२६॥

इन्दुविम्बं चन्द्रमण्डलं तद्वत् विभासितं विद्योतितम् आननं यस्याः तां, प्रभाकरस्य सूर्य्यस्य प्रभाता प्रातस्तनी भा दीप्तिरिव भा यस्याः तथोक्तां समुज्ज्वलप्रभामिति भावः, परिच्छदेन नेपथ्येन आवृताङ्गीं व्याप्तदेहां पार्वतीं वहन् परिणयन् सर्वतः प्रदक्षिणेन भ्रमन् सः प्रसिद्धो हरः पातु ॥ २४ ॥

सुमृत्युजिदिति । यः सुमृत्युजित् अतिशयेन मृत्युञ्जयः केकस्य गिरेः सद्मनि गृहे त्वं पतिव्रता सुपुत्रिणी शोभनपुत्रवती सुमङ्गली भव इति इत्थं सत्प्रणम्यानां सुष्ठु प्रणम्यमानानां मातृवर्गाणां वाग्भिः आदृताम् अभिनन्दितां मेनका उर्वशी तिलोत्तमा ता एव सखीजनाः तैः श्रितां सेवितामिति भावः गिरीन्द्रजां गौरीम् उवाह परिणीतवान् स सुतः सन् पातु ॥ २५ ॥

अकर्मक इति । यः अकर्मकोऽपि निष्कर्माऽपि कर्मभिः जगतां व्यापारैरिति यावत् योज्यते न व्याप्रियते च, कौतुके गृहे मङ्गल-वन्दिहृदे अकथ्यम् अवाच्यं यत् यत्कृतं कैश्च मधव इति यावत् तदीयसुभिः तदर्थिभिरित्यर्थः शुचिस्मितैः विशदहासैः प्रहेलिका-

विघट्टनं सरावकस्य कोमलैकमुष्टिना-
प्यकारि पार्वतीपतिः सखीजनैः कुतूहलात्।
स पातु कौतुके गृहे गृहीतवामभागवान्
सुमेनकाद्रिराट्प्रभूतभूतिभूषितास्त्रिया ॥२७॥
सदात्मनोऽपि निन्दयोच्छलच्छलोऽप्यपर्णया
विभावितो विभावरीशशेखरस्तपोव्रतैः।
स पातु यो निरञ्जनो न वर्द्धते न हीयते
प्रवर्त्तते च सर्वतः समः समस्तदः शिवः ॥२८॥

परैः सखीजनैः अक्षरैः अक्षरैः अलम् अतिशयेन विडम्बितः प्रतारित इत्यर्थः अतएव शुचिस्मितः विशुद्धहासेनैवोत्तरद इति भावः शुचिस्मितायाः ईश्वर्य्याः गौर्य्याः ईश्वरः स हरः पातु ॥ २६ ॥

विघट्टनमिति। यः पार्वतीपतिः कौतुके गृहे शयनागारे सखीजनैः कुतूहलात् कौतुकात् सरावकस्य कोमलैकमुष्टिनापि विघट्टनं विडम्बनम् अकारि परिहसित इति भावः सुमेनकाद्रिराजोः प्रभूतया अतिमहत्या भूत्या सम्पदा, भूतिभस्मानि सम्पदीत्यमरः। विभूषिता अलङ्कृता या स्त्री गौरीत्यर्थः तया गृहीतः आश्रितः वामभागः तद्वान् स हरः पातु ॥ २७ ॥

सदेति। यः सतः शोभनस्य आत्मनः स्वस्वरूपस्यापि निन्दया उच्छलत् उद्गच्छत् छलं यस्मात् तथाभूतः आत्मनिन्दाच्छलेन पार्वतीं प्रतारयितुमुद्यतोऽपीति भावः, अपर्णया पार्वत्या तपोव्रतैः तपोनियमैः विभावरीशशेखरः चन्द्रशेखरः विभावितः विज्ञातः, यश्च निरञ्जनः निष्कलुषः न वर्द्धते न वृद्धिं गच्छति, न हीयते न क्षुद्रो-भवति, सर्वतः समन्तात् समः प्रवर्त्तते साम्येन तिष्ठतीत्यर्थः समस्तदः सर्वाभीष्टदायी स शिवः पातु ॥ २८ ॥

प्रियाप्रियाप्रियाप्रियो विभावितो विभावितो
विभाविताद्यदम्पतीस्वभावकौतुकी भवः ।
स पातु काश्यपीभृतामपत्यकन्यया वृतः
प्रभोः प्रभूततारकारिभाविपुत्रलिप्सया ॥२९॥
गजास्यपुष्करामृतं पिबंश्च पञ्चभिर्मुखै-
रतुष्टिमाप्नुवन् हरः शुचिस्मितास्यवीक्षणः ।
स पातु भूषणेन्दुगाकृतिं प्रमातुमीप्सया
विलोलवक्त्रपुष्करं गजाननं जहास यः ॥३०॥

प्रियेति । यः विभावितो विभावितः पुनः पुनर्विचिन्तित इत्यर्थः विशेषेणाराधित इति यावत् प्रियाप्रियाप्रियाप्रियः प्रियाणां भक्तानां प्रियः अप्रियाणाम् अभक्तानाम् अप्रिय इत्यर्थः विभावितयोः विशिष्टभाववतोः आद्ययोः दम्पत्योः प्रकृतिपुरुषयोरिति भावः स्वभावेन खलु कौतुकं तद्वान् स्वयं प्रकृतिपुरुषभाववानित्यर्थः भवः काश्यपीभृतां भूधराणां, क्षोणीज्या काश्यपी क्षितिरित्यमरः । प्रभोः पत्युर्हिमवत इत्यर्थः अपत्यकन्यया पुत्र्या पार्वत्येत्यर्थः प्रभूतः अतिप्रबलः यः तारकः तदाख्यासुरः तस्य अरिः शत्रुः भावी यः पुत्रः कार्त्तिकेय इत्यर्थः तस्य लिप्सया लाभेच्छया वृतः स पातु रक्षतु ॥२९॥

गजास्येति । यः पञ्चभिः मुखैः गजास्यस्य गजाननस्य पुष्करामृतं शुण्डविगलितामृतमित्यर्थः पिबन् अतुष्टिम् आप्नुवन् तृप्तिमनाप्नुवन् शुचि विशुद्धं स्मितं यस्मिन् तादृशम् आस्यं मुखं वीक्षणञ्च यस्य तादृशः, भूषणं भूषणभूत इत्यर्थः यः इन्दुश्चन्द्रः तद्गा तद्गोत्रेत्यर्थः या आकृतिः तां प्रमातुं परिमातुम् ईप्सया अभिलाषेण विलोलं चञ्चलमित्यर्थः वक्त्रपुष्करं मुखशुण्डादण्डः यस्य तादृशं गजाननं गणेशं प्रतीति शेषः जहास, स हरः पातु ॥३०॥

सहस्यवारिवासिनीं हविर्भुजां च मध्यगां
शुचौ प्रवर्षदम्बरां बभार भूमिभृत्सुताम्।
स पातु भाविभव्यभूतभूतिसत्तताष्टधा-
सुमूर्त्तिरीश्वरीश्वरो विहारकौतुकी भवः ॥२१॥

सुरासुरातितापिभिः प्रमथ्य मन्दराद्रिणा
कृते धनेऽम्बुधेः प्रकोपकालकूटजाद्भयात्।
स पातु गोपयाञ्चकार नीलकण्ठभूषणः
सुरासुरान्विदुद्रुतान् निपीय कालकूटकम् ॥२२॥

सहस्येति। यः सहस्ये पौषे, पौषे तैषसहस्यावित्यमरः। वारिवासिनीं जले स्थित्वा तपश्चरन्तीमित्यर्थः शुचौ ग्रीष्मे हविर्भुजां चतुर्णामिति शेषः मध्यगां मध्यवर्त्तिनीं, शुचौ चतुर्णां ज्वलतां शुचिस्मिता हविर्भुजां मध्यगता सुमध्यमेति कालिदासः। तथा प्रवर्षत् अम्बरम् आकाशं यस्यां तथाभूतां वृष्टिजलासु तदेवामिति भावः वर्षास्वभ्रावकाशिक इति स्मृतेः। भूमिभृतः हिमालयस्य सुतां बभार परिणीतवान् भवतीति भावी वर्त्तमान इत्यर्थः भव्यः भविष्यन् भूतः अतीतः तेषु कालेष्वित्यर्थः भूतीनाम् ऐश्वर्याणां या सत्ता स्थितिः तया अष्टधा अष्टप्रकारा सुष्ठु शोभना मूर्त्तिर्यस्य तथाभूतः त्रिकालस्थिताष्टमूर्त्तिरित्यर्थः ईश्वर्याः गौर्याः ईश्वरः विहारेण पार्वत्या सहेति भावः कौतुकी स भवः पातु ॥ २१ ॥

सुरासुरेति। सुराश्चासुराश्चेति सुरासुराः देवदैतेया एव अतितापिनः अतिक्लेशिनः तैः मन्दराद्रिणा प्रमथ्य धने अमृतादाविति भावः कृते सति यः नीलकण्ठभूषणः कालकूटकं निपीय अम्बुधेः समुद्भूतात् प्रकोपकालकूटजात् प्रकोपजनितात् कालकूटजात् भयात् विद्रुतान् विशेषेण पलायनपरानित्यर्थः सुरासुरान् गोपयाञ्चकार ररक्ष स पातु ॥ २२ ॥

विचित्रभोगिरत्नवज्जटाविलम्बिजाह्नवी-
तरङ्गमौलिवेष्टनोपरीन्दुसुन्दराकृतिः ।
स पातु भूधरात्मजाहृतार्द्धवामभागवान्
सदुच्चकैःककुद् वृषेन्द्रवाहनो दयानिधिः ॥२३॥
सभृङ्गशोणपद्मवद्विलोललोचनप्रभा-
र्चितमपाण्डुरोल्लसत्कपोललोलकुण्डली ।
स पातु पार्वतीपतिर्महोत्सवे प्रमोदको
गजाननस्य जन्मनि प्रकामपूरको हरः ॥२४॥
भवायतेऽभवायतेऽगुणाय सद्गुणायते
सकर्मणेऽप्यकर्मणे परोच्चवीचणायते ।

विचित्रेति । विचित्राणि भोगिनां पन्नगानां जटाबन्धनभूता-नामिति भावः यानि रत्नानि तद्वत्यः याः जटाः तासु विलम्बिनी विचरन्ती या जाह्नवी गङ्गा तस्यास्तरङ्गेण तथा मौलिवेष्टनेन उपरिस्थितेन इन्दुना चन्द्रेण सुन्दरी आकृतिर्यस्य तथाविधः, भूधरात्मजया गौर्या हृतार्द्धः यः वामभागः तद्वान्, सत् उच्चैः महत् ककुत् यस्य तादृशः, वृषेन्द्रः महावृषभः वाहनं यस्य तथाभूतः, दयानिधिः स हरः पातु ॥ २३ ॥

सभृङ्गेति । सभृङ्गं सभ्रमरं यत् शोणपद्मं रक्तपद्मं तद्वत् विलोलया चञ्चलया लोचनप्रभया नयनकान्त्या चर्चितयोः रञ्जि-तयोः पाण्डुरयोः उल्लसतोः उल्लासवतोः कपोलयोः गण्डयोः लोलौ चपलौ कुण्डलिनौ भुजङ्गौ कर्णभूषणभूताविति भावः यस्य तथोक्तः, गजाननस्य जन्मनि महोत्सवे प्रमोदकः प्रकृष्टानन्दः, प्रकाम-पूरकः अभीष्टद इत्यर्थः, पार्वतीपतिः स हरः पातु ॥२४॥

भवायत इति । भवायते आत्मनः भवं जन्म इच्छतीति भवी

नमोऽस्तु शम्भवे शिवप्रकामपूरणायते
प्रसीदतां महेश्वरीतपोवशीभवन् भवः ॥३५॥
समक्रमैकपङ्क्तिकोच्छ्रयप्रकल्पकद्रुमे
फलप्रसूनगन्धवाहचुम्बिमञ्जरीहृते ।
नमो वने विहारिणे हराय हर्म्यवासिने
मरुत्वदादिदेववृन्दगीतकीर्त्तये नमः ॥३६॥
मदुत्तमो न पातकी त्वदुत्तमो न पापहा
भुवः स्खलज्जनस्य वै त्वमेव सम्यगाश्रयः ।

स्वेच्छया जन्मधारिणे इत्यर्थः, अभयायते अभयम् इच्छतीति तथोक्ताय च, अगुणाय त्रिगुणातीताय, सद्गुणायते आत्मनः सतो गुणान् इच्छतीति तथोक्ताय इत्यर्थं सगुणाय चेत्यर्थः अकर्मणे कर्म कुर्वते, अकर्मणे कर्मरहितायापि परोक्षणीक्षणायते आत्मनः परोक्षे यत् वीक्षणं तत् इच्छतीति तथोक्ताय आत्मसाक्षात्कारिणे इत्यर्थः, शिवस्य शुभस्य प्रकामस्य अभिलषितस्य पूरणम् इच्छतीति तस्मै लोकानामभीष्टपूरकायेत्यर्थः, शम्भवे नमः अस्तु, महेश्वर्याः गौर्याः तपसा वशीभवन् स भवः प्रसीदतां प्रसन्नो भवतु ॥३५॥

समेति । समः तुल्यः क्रमः परिपाटी येषां तथाभूताः एका तुल्या पङ्क्तिः राजिर्येषां तादृशाः उच्छ्रायाः औन्नत्यानि येषां तथाविधाः प्रकृष्टाः कल्पद्रुमाः परिजातादयः यत्र तथाभूते, फलानां प्रसूनानां पुष्पाणां गन्धवाहं वायुं चुम्बन्त्यः वहन्त्यः याः मञ्जर्यः ताभिः हृते, वने विहारिणे क्रीडते हर्म्यवासिने सौधवर्त्तिने च मरुत्वान् इन्द्रः आदिर्येषां तादृशाः ये देवाः तेषां वृन्दैः सङ्घैः गीता कीर्त्तिर्यस्य तादृशाय हराय नमः नमः पुनः पुनस्तं नमामीत्यर्थः ॥३६॥

मदुत्तम इति । मत्तः उत्तमः अधिक इत्यर्थः पातकी पापी न अस्तीति शेषः, त्वत्तः उत्तमः अधिकः पापहा पापघ्नो च न

विधीयतां निजोचितं महेश्वरोऽसि सर्वदो
दयानिधे ! क्षमस्व मेऽपराधमान्तरं बहिः ॥२७॥
निषेव्य भक्तचामरैर्नियम्य कीर्त्तयन्ति ये
हृदाभिवाद्यविश्ववन्दनीयपादपल्लवम् ।
गणेशकार्त्तिकेयमातृवल्लभं तु मानसीं
व्यथां न जातु जानते नमस्तु तेऽस्तु शम्भवे ॥२८॥
स्वकीयबिम्बिताकृतिं स्वकीयभालभूषणे
विलोक्य विभ्रमद्भ्रुवौ विशङ्किनौ शुचिस्मितौ ।
प्रसीदतां शुचिस्मितास्यवीक्षणौ महेश्वरौ
नटाविवातिसुन्दरौ सुपर्वणां मनोहरौ ॥ २९ ॥

क्षमोति शेषः । भुवः पृथिव्याः सुतवत् सदैव दोषं कुर्वत इति यावत् जनस्य क्षमैव सम्यक् महान् आश्रयः प्रभूणां क्षमागुणेनैव दोषिणस्तरन्तीति भावः, अतः निजोचितं महतामुचितमिति भावः विधीयतां क्रियतां, त्वं महेश्वरः सर्वदः सर्वाभीष्टदातासि, हे दयानिधे ! मे मम आन्तरं बहिः बाह्यञ्च अपराधं क्षमस्व ॥ २७ ॥

निषेव्येति । ये जनाः भक्तचामरैः भक्तिसहकृतचालितैश्चामरैरित्यर्थः निषेव्य संसेव्य नियम्य संयतो भूत्वेत्यर्थः हृदा हृदयेन अभिवाद्यः विश्ववन्दनीयः पादपल्लवो यस्य तादृशं, गणेशकार्त्तिकेययोर्मातुर्गौर्याः वल्लभं कीर्त्तयन्ति, ते तु जातु कदाचित् मानसीं व्यथां न जानते न विन्दन्तीत्यर्थः, अतः शम्भवे ते तुभ्यं नमस्तु नम एव अस्तु त्वामेव नमामीत्यर्थः ॥ २८ ॥

स्वकीयेति । स्वकीयभालभूषणे ललाटालङ्कारभूते चन्द्रे इति भावः स्वकीया बिम्बिता प्रतिफलिता या आकृतिः तां विलोक्य दृष्ट्वा विभ्रमन्तौ भ्रुवौ ययोः तथाभूतौ, विशङ्किनौ कथमत्र गौर्य्या ललाटचन्द्रे पुरुषाकृतिरियं कथमत्र हरस्य ललाटचन्द्रे कोऽपि स्त्री-

सुखप्रकाशतो मयानुमीयते न मत्कृतौ
न हीश्वरौ न मुक्ततां गतौ नमस्करोमि तौ।
अभिन्नचित्स्वरूपिणौ वपुर्भवेन कर्हिचित्
न मेऽघकं क्षमस्व मेऽपराधमीश! भाविनम्॥ ४०॥

अविघ्नतादिकारणैकदन्तविघ्नमूर्त्तिना
सुतेन तारकारिणा विनीतभार्य्ययार्य्यया।
गृहाश्रमीव योगतारतम्यमृत्युजित्तमोऽ-
नुकम्पतो प्रसीदतां नमोऽस्तु शङ्कराय ते॥ ४१॥

कृतिरिति अन्योन्यं परस्परानुरक्तत्वेन बहुमानावित्यर्थः, शुचिस्मितौ अनन्तरं प्रतिबिम्बस्थानात् विशुद्धहासौ, शुचिस्मितम् आस्यं मुखं वीक्षणञ्च ययोः तयोक्तौ, नटाविव अतिसुन्दरौ, सुपर्वणां देवानां मनोहरौ प्रीतिदौ, महेश्वरौ पार्वतीहरौ प्रसादतां प्रसन्नौ भवताम्॥ ३९॥

सुखमिति। मया मत्कृतौ मद्रचिते प्रबन्धे ईश्वरौ पार्वतीपरमेश्वरौ न हि नैव सुखं सम्यगित्यर्थः प्रकाशतः अवभासतः न मुक्ततां गतौ सम्यक् सम्वरात्मिसं प्राप्तौ न चेत्यर्थः इति न अनुमीयते न प्रतीयते अतः अभिन्नचित्स्वरूपिणौ अपृथक् चिन्मयावित्यर्थः तौ नमस्करोमि। कर्हिचित् वपुषः देहस्य भवे उत्पत्तौ मे मम अघकं पापं न न अपितु सर्वस्मिन्नेव जन्मनि मम पापमस्तीत्यर्थः यद्वा कर्हिचित् वपुषः देहस्य भवेन उत्पत्त्या मे मम अघकं पापं न अस्तीति शेषः अतः हे ईश! मे मम भाविनं भविष्यन्तम् अपराधं पापकृतमिति भावः क्षमस्व॥ ४०॥

अविघ्नतेति। अविघ्नता विघ्नाभावः आदिर्येषां तेषां मङ्गलानामित्यर्थः कारणं हेतुभूतः एकदन्तः गजानन एव विघ्नमूर्त्तिर्यस्य तादृशेन तथा तारकारिणा तारकासुरहन्त्रा सुतेन गणेशकार्त्ति-

क्षमा सुमूर्त्तिरीश ! ते भवेन्न चेद्दिवौकसो
न हि स्थिरत्वमाप्नुयुस्तदेतरस्य का कथा ।
मरीचिमञ्जरीवृताय चन्द्रमूर्त्तये नमः
प्रभाकराय ते नमो निशादिवातमोनुदे ॥ ४२ ॥
तवैव तोयमूर्त्तितो जगत्त्रयस्य जीवनं
तवैव वायुमूर्त्तितो जगत्त्रयस्य चालनम् ।
तवैव वह्निमूर्त्तितो जगत्त्रयस्य जाड्यता
विलीयते गिरीश ! ते नमो नमो नमोऽस्तु ते ॥ ४३ ॥

ताभ्यां सुताभ्यामिति यावत् आर्य्यया साध्व्या विनीतया वधूसत्त्विन्या भार्य्यया गौर्य्या गृहाश्रमी गृहस्थ इव अथ च योगस्य समाधेः तारतम्येन उत्कर्षात् उत्कर्षभेदेन मृत्युजित्तमः अतिशयेन मृत्युञ्जयः हरः अनुकम्पतः कृपया प्रसीदतां प्रसन्नो भवतु, शङ्कराय ते तुभ्यं नमः अस्तु ॥ ४१ ॥

क्षमेति । हे ईश ! ते तव क्षमा सुमूर्त्तिः क्षमारूपा शोभना मूर्त्तिः चेत् यदि न भवेत् तदा दिवौकसः देवा अपीत्यध्याहार्य्यं न हि स्थिरत्वम् आप्नुयुः नैव सुस्थिरा भवेयुरित्यर्थः इतरस्य अन्यस्य कथा का ? अस्थिरत्वं नैव वक्तव्यमित्यर्थः । निशादिवातमोनुदे नैशतिमिरहारिणे दिवातिमिरहारिणे च मरीचिमञ्जरीवृताय मयूखमण्डलीमालावृताय चन्द्रमूर्त्तये प्रभाकराय सूर्य्यमूर्त्तये च ते तुभ्यं नमः ॥ ४२ ॥

तवेति । हे गिरीश ! तवैव तोयमूर्त्तितः जलमय्या मूर्त्त्या जगत्त्रयस्य त्रिभुवनस्य जीवनं भवतीति शेषः, तवैव वायुमूर्त्तितः जगत्त्रयस्य चालनं सञ्चारणं भवतीति शेषः, तवैव वह्निमूर्त्तितः जगत्त्रयस्य जाड्यता शैत्यं विलीयते, अपनीयते अतः ते तुभ्यं नमः नमः, ते तुभ्यं नमः अस्तु ॥ ४३ ॥

त्वयैव यज्ञकारिणाम्बुदोऽपि जीवनप्रदः
स जन्यतेऽभिवर्षति क्षमां तुषारबिन्दुभिः ।
ततो हि जीवजातयः समुद्भवन्ति चाव्ययत् !
चकासते शरन्नमोऽस्तु शम्भवे दयालवे ॥ ४४ ॥
वियत्सुमूर्त्तिरीश ! ते च वर्ण्यते न केनचित्
चराचरं जगच्च यत्र कल्प्यते स्वयम्भुवा ।
समुल्लसन्ति यद्गुणा मुखे मुखे शरीरिणां
श्रुतिप्रमाणतो मया विकल्प्यते न कल्पना ॥ ४५ ॥
प्रभासते क्वचिच्च यः क्वचिच्च न प्रभासते
सुचक्षुषामपि प्रभाति कस्यचिद्विशेषतः ।

त्वयेति । यज्ञकारिणा याज्ञिकमूर्त्तिना त्वयैव जीवनप्रदः अम्बुदः मेघोऽपि जन्यते, स च मेघः तुषारबिन्दुभिः शिशिरबिन्दुभिः वृष्टिजलैरित्यर्थः क्षमां पृथिवीम् अभिवर्षति, ततो हि तस्मादेव जीवजातयः समुद्भवन्ति चकासते च, हे अव्ययत् ! अयनेन जगद्भरणकारिन् ! हे शरन् ! शरण्येत्यर्थः, दयालवे शम्भवे तुभ्यं नमः अस्तु ॥ ४४ ॥

वियदिति । हे ईश ! ते तव वियत् आकाशरूपेत्यर्थः शोभना मूर्त्तिः केनचित् केनापीत्यर्थः न वर्ण्यते न वर्णयितुं शक्यते, यत्र वियन्मूर्त्तौ स्वयम्भुवा ब्रह्मणा चराचरं जगत् कल्प्यते सृज्यते । यस्य वियतः गुणाः श्रुतिप्रमाणतः शास्त्रप्रामाण्यात् शरीरिणां मुखे मुखे समुल्लसन्ति समुद्भासन्ते । मया कल्पना न विकल्प्यते कल्पनेति कृत्वा न सन्दिह्यते ॥ ४५ ॥

प्रभासते इति । यः कस्मिंश्चित् कुत्रचित् वस्तुनि जने वा प्रभासते प्रकर्षेण राजते, क्वचिच्च न प्रभासते न दीप्यते, सुचक्षुषां शोभनचक्षु-

स हीश्वरश्चराचरे जगत्यजस्रमेकधा-
प्यनेकधान्तरं बहिः प्रमोदतां हृदम्बुजे ॥ ४६ ॥
किमीहसे किमीहसेऽनुजल्पतीव शङ्करो
दरिद्रताभियां भयं समीहसे समीहसे ।
कृपालुतार्द्रपार्वतीवशंवदोऽनुगम्यते
पराधिभिः पराधिभिः प्रसीदतां नमोऽस्तु ते ॥ ४७ ॥

इति श्रीशाकद्वीपीयनियमधरमिश्रविरचितं
भक्तचामरस्तोत्रं सम्पूर्णम् ।

---

भूतानामपि मध्ये कस्यचित् जनस्य विशेषतः विभाति प्रभासते प्रकर्षेण राजते, चराचरे जगति अजस्रं सततम् एकधापि एकरूपोऽपि अनेकधा बहुरूपः सन् अन्तरं बहिश्च स्थित इति शेषः स हि स एव ईश्वरः हृदम्बुजे हृदयसरसिजे ममेति शेषः प्रमोदतां प्रकर्षेण उल्लसतु ॥ ४६ ॥

किमिति । किम् ईहसे किम् ईहसे किमभिलषसीत्यर्थः, दरिद्रताभियां भयं समीहसे समीहसे सम्यक् वाञ्छसि दारिद्र्यभयं निवारयितुमिच्छसि इत्यर्थः भावः, शङ्करः इति अनुजल्पतीव भक्तान् प्रति आभाषते । तथा पराधिभिः पराधिभिः पुनः पुनः महतीभिः मनोव्यथाभिरित्यर्थः हेतुभिः तन्निवारणार्थमिति भावः कृपालुतया आर्द्रः पार्वतीवशंवदः गौरीवल्लभः अनुगम्यते सेव्यते इति यावत् सः प्रसीदतां प्रसन्नो भवत्विति शेषः, ते तुभ्यं नमोऽस्तु ॥ ४७ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्येण कृता
भक्तचामरस्तोत्रव्याख्या समाप्ता ।

---

## रावणकृतशिवताण्डवः।



जटाकटाहसंभ्रमभ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्द्धनि।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥ १ ॥
धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-
स्फुरद्दृगन्तसन्ततिप्रमोदमानमानसे।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि
क्वचिद्दिगम्बरे मनो विनोदमस्तु वस्तुनि ॥ २ ॥

जटेति। जटा एव कटाहः तत्र संभ्रमेण भ्रमन्ती सञ्चरन्ती या निलिम्पनिर्झरी देवनदी गङ्गेत्यर्थः तस्याः विलोलाभिश्चञ्चलाभिः वीचिवल्लरीभिः तरङ्गमञ्जरीभिः विराजमानः विशेषेण शोभमानः मूर्द्धा यस्य तादृशे, धगत् धगत् धगत् इति रवेणेति भावः ज्वलन् ललाटपट्टे भालदेशे पावकः अनलः यस्य तथोक्ते, किशोरः बालः चन्द्रः शेखरः शिरोभूषणं यस्य तथाविधे हरे इत्यर्थः मम प्रतिक्षणं रतिः अनुरागः भक्तिरिति यावत् अस्त्विति शेषः। अस्मिन् सन्दर्भे पञ्चचामरं वृत्तं, प्रमाणिका पदद्वयं वदन्ति पञ्चचामरमिति, प्रमाणिका जरौ लगाविति च तल्लक्षणात् ॥ १ ॥

धरेति। धराधरेन्द्रस्य हिमवतः या नन्दिनी गौरी तस्याः विलासस्य बन्धुः सहाय इति यावत् बन्धुरं समविषमं यथा तथा स्फुरन्ती प्रसरन्ती या दृगन्तसन्ततिः अपाङ्गविस्तारः तया प्रमोदमानं प्रहृष्यमाणं मानसं यस्य तथोक्ते, कृपाकटाक्षाणां धोरणीभिः

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदान्धसिन्धुरासुरत्वगुत्तरीयमेदुरे
मनो विनोदमद्भुतं बिभर्तु भूतभर्तरि ॥ ३ ॥
ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गया
निपीतपञ्चसायकं नमन्निलिम्पनायकम् ।
सुधामयूखरेखया विराजमानशेखरं
महः कपालि सम्पदे सरिज्जटालमस्तु नः ॥ ४ ॥

परम्पराभिः निरुद्धा निवारिता दुर्धरा दुर्वारा आपत् यस्य तथाभूते क्वचित् दिगम्बरे विवसने वस्तुनि मनः विनोदम् अनुरक्तिमित्यर्थः अस्तु ॥ २ ॥

जटेति । जटासु ये भुजङ्गाः बन्धनार्थं संयता इति भावः तेषां पिङ्गलाभिः स्फुरन्तीभिः फणामणीनां प्रभाभिः कदम्बकुङ्कुमयोर्द्रवैरिव प्रलिप्तं दिशां वधूनामिव मुखं यस्य तथोक्ते, मदान्धः मदमत्तः यः सिन्धुरासुरः गजासुरः तस्य त्वक् चर्म एव उत्तरीयं तेन मेदुरे नीलस्निग्धे, भूतभर्तरि भूतनाथे हरे मनः अद्भुतं विनोदं प्रीतिं बिभर्तु प्राप्नोतु ॥ ३ ॥

ललाटेति । ललाटचत्वरे भालरूपे अजिरे ज्वलतः धनञ्जयस्य अग्नेः स्फुलिङ्गया कणेन, त्रिषु स्फुलिङ्गोऽग्निकण इत्यमरः । निपीतः दग्धः पञ्चसायकः कामः येन तथोक्तं, नमन् निलिम्पानां देवानां नायकः इन्द्रः यं तथोक्तं देवराजाभिवन्दितमित्यर्थः, सुधामयूखस्य अमृतकिरणस्य चन्द्रस्येत्यर्थः रेखया कलया विराजमानं शेखरं शिरोभूषणं यद्वा सुधामयूखस्य रेखैव कलैव विराजमानं शेखरं शिरोभूषणं यस्य तथाभूतं, सरिज्जटालं गङ्गाजलाप्लावितजटावत् कपालि नरकपालधारि महः तेजः नः अस्माकं सम्पदे अभ्युदयाय अस्तु भवतु ॥ ४ ॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर-
प्रसूनधूलिधोरणीविधूसराङ्घ्रिपीठभूः ।
भुजङ्गराजमालया निबद्धजाटजूटकः
श्रियै चिराय आयतां चकोरबन्धुशेखरः ॥ ५ ॥
करालभालपट्टिकाधगद्धगद्धगज्ज्वल-
द्धनञ्जयादुरीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम ॥ ६ ॥
नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरत्

सहस्रेति । सहस्रलोचनप्रभृतीनाम् इन्द्रादीनाम् अशेषाणां सर्वेषां लेखानां देवानां, लेखा अदितिनन्दना इत्यमरः । तानि शेखरप्रसूनानि शिरोभूषणभूतपुष्पाणि तेषां धूलिधोरणीभिः रजःपरम्पराभिः विधूसरा विशेषेण धूसरवर्णा अङ्घ्रिपीठभूः चरणपीठप्रदेशः यस्य तथाभूतः, भुजङ्गराजानां पन्नगेन्द्राणां मालया निबद्धं संयतं जाटजूटकं जटासमूहः येन तथोक्तः, चकोराणां पक्षिविशेषाणां बन्धुः चन्द्रः शेखरः शिरोभूषणं यस्य तादृशः, हरः चिराय सततं श्रियै मङ्गलाय जायतां भवतु ॥ ५ ॥

करालेति । करालायां भीषणायाम् उन्नतायां वा भालपट्टिकायां धगत् धगत् धगत् इति रवेणेति भावः ज्वलतः धनञ्जयात् अनलात् उरीकृतः अङ्गीकृतः निर्जितः दग्ध इति यावत् प्रचण्डः दुर्दम इति यावत् पञ्चसायकः कामः येन तथोक्ते, धराधराणां पर्वतानाम् इन्द्रस्य हिमवत इत्यर्थः या नन्दिनी गौरी तस्याः कुचयोः स्तनयोः अग्रे उपरि चित्रं मनोज्ञं यत् पत्रकाणां पत्रावलीनां प्रकल्पनं प्रकर्षेण रचनं तत्र एकशिल्पिनि [illegible]भूते इत्यर्थः, त्रिलोचने हरे मम रतिः अस्त्विति शेषः ॥ ६ ॥

कुहूनिशीथिनीतमःप्रबन्धबद्धकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥७॥
प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभा-
विडम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं
गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥८॥

नवीनेति । नवीनाभिर्मेघमण्डलीभिर्निरुद्धम् आवृतं सान्द्रीकृतमिति भावः अतएव दुर्धरम् उत्कटं यथा तथा स्फुरत् प्रसरत् यत् कुहूनिशीथिन्याः अमावास्यारजन्याः तमः अन्धकारं तस्य प्रबन्धः बन्धः बन्धनं यत्र तथाभूता कन्धरा ग्रीवा कण्ठ इति यावत् यस्य तथाभूतः नीलकण्ठ इत्यर्थः, यद्वा तादृशकुहूनिशीथिन्यास्तमः-प्रबन्धस्य बन्धकं निवारकं चन्द्रमिति भावः धरतीति तथोक्तः चन्द्रशेखर इत्यर्थः, निलिम्पानां देवानां या निर्झरी नदी गङ्गेत्यर्थः तस्याः धरः, कृत्तिसुन्दरः चर्मधारणेन मनोहरः, कलानिधानेन चन्द्रेण शिरोनिहितेनेति भावः बन्धुरः उन्नतानतः, बन्धुरन्तून्नतानतमित्यमरः । जगतां धुरन्धरः भारवाही, हरः श्रियं तनोतु विस्तारयतु ॥ ७ ॥

प्रफुल्लेति । प्रफुल्लानां विकसितानां नीलपङ्कजानां प्रपञ्चस्य समूहस्य या कालिमप्रभा नीलिमप्रभा तां विडम्बयति अनुकरोतीति तथोक्ता या कण्ठकन्दली कण्ठरूपा भूमिकदली तस्याः रुच्या कान्त्या प्रबद्धा बंधता व्याप्तेत्यर्थः कन्धरा ग्रीवा यस्य तथोक्तं नीलकण्ठप्रभया नीलग्रीवमित्यर्थः, स्मरच्छिदं कामदहनं, पुरच्छिदं त्रिपुरारिं, भवच्छिदं संसारच्छेदिनं, मखच्छिदं दक्षप्रजापति[illegible],

अखर्वसर्वमङ्गलाकलाकदम्बमञ्जरी-
सरित्प्रवाहमाधुरीविजृम्भणामधुव्रतम्।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
गजान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥९॥

जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमश्वसद्विनि-
र्गमक्रमस्फुरत्करालभालहव्यवाट् ज्वलन्।
धिमिं धिमिं धिमिं ध्वनन्मृदङ्गतुङ्गमङ्गल-
ध्वनिक्रमप्रवर्त्तितप्रचण्डताण्डवः शिवः ॥१०॥

गजच्छिदं गजासुरघातिनम् अन्धकच्छिदम् अन्धकासुरदलनम्, अन्तकच्छिदं यमनाशकमिति यावत्, तं हरं भजे सेवे ॥ ८ ॥

अखर्वेति। अखर्वा महती सर्वमङ्गलायाः गौर्याः या कला चतुःषष्टिप्रकारा कामविद्या सैव कदम्बमञ्जरी सैव सरित् नदी तस्याः प्रवाहे प्रसरणे या माधुरी माधुर्यं तस्याः विजृम्भणायां प्रकटने विकासे इत्यर्थः मधुव्रतः भ्रमरः तं, स्मरान्तकं कामरिपुं, पुरान्तकं त्रिपुरनिषूदनं, भवान्तकं संसारघातकं, मखान्तकं यज्ञघातिनं, गजान्तकं गजासुरदलनं अन्धकान्तकम् अन्धकासुरहरम् अन्तकस्य यमस्य अन्तकं जेतारं मृत्युञ्जयमित्यर्थः तं हरं भजे ॥ ९ ॥

जयतीति। अदभ्राणां बहूनां मत्ततानामिति यावत्, अदभ्रं बहुलं बह्वित्यमरः। विभ्रमतां सञ्चरतां भुजङ्गमानां श्वसतां निःश्वासवायूनां विनिर्गमक्रमेण विसरणपरम्परया स्फुरन् ज्वलन् कराले उन्नते भाले हव्यवाट् अग्निर्यस्य तथाभूतः, ज्वलन् दीप्यमानः, धिमिं धिमिं धिमिं रवेणेति भावः ध्वनतः मृदङ्गस्य वादित्रभेदस्य तुङ्गो महान् यः मङ्गलध्वनिः तस्य क्रमेण परीपाट्या प्रवर्त्तितं प्रारब्धं प्रचण्डम् उत्कटं ताण्डवं नृत्यं, ताण्डवं नटनं नाट्यमित्यमरः। येन तथाभूतः, शिवः जयति सर्वोत्कर्षेण वर्त्तते ॥ १० ॥

दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
र्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः
समप्रवृत्तिकः कदा सदाशिवं भजाम्यहम् ॥११॥

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्
विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् ।
विलोललोललोचनाललामभाललग्नकं
शिवेति मन्त्रमुच्चरन् सदा सुखी भवाम्यहम् ॥१२॥

दृषदिति । कदाहं दृषद् शिला विचित्रं मनोज्ञं तल्पं शय्या, तल्पं शय्याट्टदारेष्वित्यमरः । तयोः, भुजङ्गः पन्नगः मौक्तिकस्रक् मुक्ताहारः तयोः, गरिष्ठम् अतिमहत् रत्नं लोष्टश्च तयोः, सुहृत् मित्रं विपक्षपक्षः शत्रुपक्षः तयोः, तृणम् अतिनीचो विरूपो नर इति भावः अरविन्दचक्षुः पद्मनेत्रः सुन्दरः पुमानिति भावः तयोः, प्रजा च महीमहेन्द्रश्च राजा चेत्यर्थः तयोः, समा प्रवृत्तिर्यस्य तथोक्तः तुल्यानुरागमित्यर्थः सर्वत्र समदर्शिनमिति यावत् सदाशिवं भजामि, सदेति पदच्छेदे सदा सततं शिवं भजामीत्यर्थः ॥ ११ ॥

कदेति । कदाहं निलिम्पानां देवानां निर्झरी नदी गङ्गा तस्याः निकुञ्जस्य तीरवर्त्तिलतादिपिहितस्थानस्य कोटरे अन्तरे मध्ये इत्यर्थः वसन् अधितिष्ठन्, विमुक्ता त्यक्ता दुर्मतिः दुष्टा मतिः विषयवासनेत्यर्थः येन तथाभूतः, विलोललोललोचनानाम् अतिचञ्चलनयनानां रमणीनामिति भावः ललामे रत्नभूते मनोहरे इति भावः भाले ललाटे लग्नकं संसक्तम् अञ्जलिं शिरःस्थं वहन् शिरसि कुर्वन्नित्यर्थः, सदा शिवेति मन्त्रम् उच्चरन् जपन् सदा सुखी भवामि ॥ १२ ॥

निलिम्पनाथनागरीकदम्बमौलिमल्लिका-
निगुम्फनिर्भरक्षरन्मधूष्णिकामनोहरः।
तनोतु नो मनोमुदं विनोदिनीमहर्निशं
परश्रियः परं पदं तदङ्गजत्विषां चयः ॥१३॥

प्रचण्डवाड़वानलप्रभा शुभप्रचारणी
महाष्टसिद्धिकामिनीजनावहूतजल्पना।
विभक्तवामलोचनाविवाहकालिकध्वनिः
शिवेतिमन्त्रभूषणा जगज्जयाय जायताम् ॥१४॥

निलिम्पेति। निलिम्पनाथस्य देवेन्द्रस्य याः नागर्यः नगरवासिन्यः अङ्गनाः सुरसुन्दर्य इत्यर्थः तासां कदम्बस्य समूहस्य मौलिषु मस्तकेषु या मल्लिका तदाख्यपुष्पमालेत्यर्थः तस्याः निगुम्फरचनायां निर्भरम् अत्यर्थं यथा तथा क्षरन्ती स्रवन्ती या मधूष्णिका मकरन्दराजिः तद्वत् मनोहरः, परश्रियः परमशोभायाः परं पदं परमं स्थानं, तस्य हरस्य अङ्गजत्विषां शरीरजकान्तीनां चयः समूहः नः अस्माकम् अहर्निशं विनोदिनीं सन्तोषिणीं मनोमुदं मनःप्रीतिं तनोतु विस्तारयतु ॥ १३ ॥

प्रचण्डेति। शुभानां मङ्गलानां प्रचारणे प्रकाशने प्रचण्डस्य वाड़वानलस्य प्रभा, विभक्तः पृथक् कृतः निरस्त इत्यर्थः वामलोचनायाः सुन्दर्याः विवाहकालिकध्वनिः यया सुन्दरीपरिणयनकालिकमङ्गलोत्सवनिनादादपि मनोहारिणीति भावः, शिवेति मन्त्रः भूषणं यस्याः तथोक्ता शिवमन्त्रजपपरेत्यर्थः। महतीनाम् अष्टानां सिद्धीनाम्, अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायितेत्युक्तानां कामिनीनामिव जनानाम् अवहूता आवहूता हूता यस्यां तथाभूता हूतजल्पिनीति भावः [illegible] [illegible] जगतां जयाय जायतां भवतु ॥ १४ ॥

नमामि पार्वतीपतिं नमामि जाह्नवीपतिं
नमामि भक्तवत्सलं नमामि रक्तलोचनम् ।
नमामि चन्द्रशेखरं नमामि दुःखमोचनं
तदीयपादपङ्कजं स्मराम्यहं महेश्वरम् ॥१५॥
रावणेन कृतं स्तोत्रं यः पठेत् शिवसन्निधौ ।
पुत्रपौत्रादिकं सौख्यं लभते मोक्षमेव च ॥१६॥

इति दशवदनकृतः शिवताण्डवः
सम्पूर्णः ।

---

## कृष्णताण्डवस्तोत्रम् ।

---

भजे व्रजैकमण्डनं समस्तपापखण्डनं
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम् ।

नमामीति । अहं पार्वतीपतिं नमामि, जाह्नवीपतिं गङ्गाधरं नमामि, भक्तवत्सलं नमामि, रक्तलोचनं नमामि, चन्द्रशेखरं नमामि, दुःखमोचनं तापहरं तदीयपादपङ्कजं नमामि, महेश्वरं स्मरामि, नमामीति पाठः समीचीनः प्रक्रमभङ्गराहित्यादिति चिन्त्यम् ॥१५॥

रावणेनेति । यः शिवसन्निधौ रावणेन कृतं रचितं स्तोत्रं पठेत्, स पुत्रपौत्रादिकं सौख्यं दुःखसन्ततिं मोक्षं मुक्तिञ्च लभते एव ॥ १६ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
रावणकृतशिवताण्डवव्याख्या समाप्ता ।

---

भजे इति । व्रजस्य गोकुलस्य एकम् अद्वितीयं मण्डनं वा

सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं
अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥१॥
मनोजगर्वमोचनं विशालभाललोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम् ।
करारविन्दभूधरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥२॥

मङ्गलं भूषणं, समस्तानां पापानां खण्डनं निवारणं, स्वस्य भक्तानां चित्तरञ्जनं मनःप्रीतिकरं नन्दनन्दनं कृष्णं सदैव भजे। शोभनः पिच्छानां बर्हीणां गुच्छः चयः मस्तके यस्य तथोक्तं, शोभनः नादः स्वनो यस्य तादृशो वेणुः हस्ते यस्य तथाविधम्, अनङ्गस्य कामस्य रङ्गाः विलासाः तेषां सागरः तं, कृष्णनागरं कृष्णरूपं रसिकं नमामि। अस्मिन् सन्दर्भे पञ्चचामरं वृत्तं, प्रमाणिका पदद्वयं वदन्ति पञ्चचामरमिति, प्रमाणिका जरौ लगाविति तल्लक्षणात् ॥ १ ॥

मनोजेति। मनोजस्य कामस्य गर्वः अहङ्कारः तस्य मोचनं निरासकं कन्दर्पादपि मनोहरमिति भावः, विशाले आयते भाललोचने ललाटनेत्रे यस्य तथोक्तं, विधूतं निराकृतं गोपानां शोचनं शोकः दुःखमिति यावत् येन तथोक्तं, पद्मलोचनं कमलनेत्रं नमामि। करारविन्देन करकमलेन भूधरं पृथिवीधारिणं यद्वा करारविन्दे भूधरः पर्वतः गोवर्द्धन इति यावत् यस्य तथोक्तं, स्मितावलोकेन सहासनिरीक्षणेन सुन्दरं मनोमोहनं, महेन्द्रस्य देवराजस्य मानः अहङ्कारः तस्य दारणं खण्डनम्। पुरा गोकुले यज्ञोत्थानकाले इन्द्रमखः प्रचलित आसीत्। भगवता कृष्णेन तन्निवारणेन गोवर्द्धनोत्सवः कृतः। तेन च रुष्टेन इन्द्रेण वज्राङ्ग वृष्टिवर्षणेन गोकुलं ध्वंसयितुं प्रवृत्तम्। तदवलोक्य भगवान् करेण गोवर्द्धनोद्धरणेन गोकुलं रक्षितवान्, तेन च देवराजो हतमानोऽभूदिति भागवतीय-वार्त्तानुसन्धेया। कृष्णवारणं कृष्णरूपं गजं नमामि ॥ २ ॥

कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम् ।
यशोदया समोदया सकोपया दयानिधिं
उदूखले सुदुःसहं नमामि नन्दशंवहम् ॥३॥
नवीनगोपनागरं नवीनकेलिमन्दिरं
नवीनमेघसुन्दरं भजे व्रजैकमन्दिरम् ।
सदैव पादपङ्कजं मदीयमानसे निजं
दधातु नन्दबालकः समस्तभक्तपालकः ॥४॥
समस्तगोपनागरीहृदं व्रजैकमोहनं
नमामि कुञ्जमध्यगं प्रसूनभालशोभिनम् ।
दिगन्तकान्तिरङ्गिनं सहासबालसङ्गिनं
दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥५॥

कदम्बेति । कदम्बसूनं कदम्बकुसुमं कुण्डलं यस्य तथोक्तं, सुचारु सुशोभनं गण्डमण्डलं कपोलभागः यस्य तादृशं, व्रजाङ्गनानां गोपीनाम् एकमद्वितीयं वल्लभं प्रियं, कृष्णदुर्लभं दुर्लभं कृष्णमित्यर्थः नमामि । दयानिधिं दयासागरं, समोदया सहर्षया सकोपया क्रुधया च यशोदया उदूखले सुदुःसहं बद्धुमशक्यमित्यर्थः, नन्दस्य शंवहं शुभावहं नमामि ॥ २ ॥

नवीनेति । नवीनं गोपनागरं गोपरसिकं, नवीनानां केलीनां क्रीडानां मन्दिरं स्थानं, नवीनमेघवत् सुन्दरं, व्रज एव एकं मुख्यं मन्दिरम् आवासः यस्य तादृशं भजे । समस्तानां भक्तानां पालकः नन्दबालकः कृष्णः सदैव मदीयमानसे निजं पादपङ्कजं दधातु अर्पयतु ॥ ४ ॥

समस्तेति । समस्तासु गोपनागरीषु हृद् हृदयं यस्य तथोक्तं गोपाङ्गनावल्लभमित्यर्थः, व्रजस्य गोकुलस्य एकम् अद्वितीयं मोहनं

गुणाकरं सुखाकरं कृपाकरं कृपानरं
त्वरासुखैकदायकं नमामि गोपनायकम् ।
समस्तदोषशोषणं समस्तलोकतोषणं
समस्तदासमानसं नमामि कृष्णलालसम् ॥६॥
समस्तगोपनागरीनिकामकामदायकं
दृगन्तचारुसायकं नमामि वेणुनायकम् ।
भवोद्भवावतारकं भवाब्धिकर्णधारकं
यशोमतेः किशोरकं नमामि दुग्धचोरकम् ॥७॥

मनोहरं, कुञ्जमध्यगं कुञ्जविहारिणं, प्रसूनेन पुष्पेण भाले ललाटे शोभते इति तथोक्तं नमामि । दिगन्तेषु कान्तरे वने स्कन्नं सञ्चारः यस्य तथाभूतं, बहुभाषानां बालानां गोपशिशूनां सङ्गिनं सहचरं, दिने दिने प्रतिदिनं नवं नवं नवीनरूपमित्यर्थः नन्दनन्दनं कृष्णं नमामि ॥ ५ ॥

गुणाकरमिति । गुणाकरं गुणनिधिं, सुखाकरं सुखनिधानं, कृपाकरं दयासागरं, कृपानरं कृपया जगदनुकम्पार्थमिति भावः नरं नररूपेणावतीर्णमिति यावत्, त्वरया शीघ्रं सुखस्य एकदायकं सुखदायिनं, गोपनायकं गोपपतिं नमामि । समस्तानां दोषाणां शोषणं शमनं, समस्तलोकतोषणं सर्वरञ्जनमित्यर्थः, समस्तेषु दासेषु भक्तेषु मानसं यस्य तथाभूतं, कृष्णलालसं कृष्णरूपं लम्पटं नमामि ॥६॥

समस्तेति । समस्तानां गोपनागरीणां निकामः सम्पूर्णः कामः अभिलाषः तस्य दायकं दातारं, दृगन्तः अपाङ्गावलोकनमित्यर्थः चारुः मनोहरः सायकः शरो यस्य तादृशम् अपाङ्गावलोकनेन नारीमनोवेधकरमिति भावः, वेणुनायकं वंशीधरमिति भावः नमामि । भवस्य संसारस्य उद्भवः उत्पत्तिः तस्य अवतारकं कारकमित्यर्थः, भवः संसार एव अब्धिः सागरः तस्य कर्णधारकः नाविकः तं संसारोद्धारहेतुभूत-

विदग्धमुग्धगोपिकामनोमनोजदायकं
नमामि मञ्जुकानने प्रदृप्तवह्निपायिनम् ।
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम् ॥८॥

इति श्रीकृष्णताण्डवस्तोत्रं सम्पूर्णम् ।

---

## राक्षसकाव्यम् ।

कश्चिद्वनं बहुवनं विचरन् वयस्यो
वश्यां वनात्मवदनां वनितां वनार्द्राम् ।

मिति यावत्, दुग्धचोरकं चौरतस्करं, यशोमतेः यशोदायाः किशोरकं कृष्णं नमामि ॥ ७ ॥

विदग्धेति । विदग्धानां चतुराणां मुग्धानां सुन्दरीणां गोपिकानां मनःसु मनोजस्य कामस्य दायकं कामं जनयन्तमिति यावत्, मञ्जुकानने मनोहरे अरण्ये वृन्दावने इति यावत् प्रदृप्तः प्रज्वलितः यो वह्निः अनलः दावाग्निरित्यर्थः तस्य पायिनं निर्वापकमित्यर्थः, कृष्णमिति शेषः नमामि । मया यदा तदा यथा तथा एव सदैव कृष्णस्य सत्कथा सदालापः गीयतां कीर्त्त्यतां तथा तथा कृपा विधीयतां क्रियतां कृष्णेन मयीति शेषः ॥ ८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
श्रीकृष्णताण्डवस्तोत्रव्याख्या समाप्ता ।

---

कश्चिदिति । कश्चित् वयस्यः युवा मा युवान् बहुवनं प्रभूतजलं वनं काननं विचरन् पर्य्यटन् के आकाशे तत्प्रकाशात् अरिः

तवैर्यरिप्रदमुदीक्ष्य समुत्थितं खे
ना गामिमां मदकलः सकलां बभाषे ॥१॥
पश्याब्जदृग्! गिरितटेषु कुमात्मसाक्षान्
भूदेवराजरिपुशत्रुसमावधूतान्।
वैश्वानरारिजरिपुप्रशराभिभूतैः
दृक्श्रोत्रवद्भिरुपासितपुष्पशोभान् ॥२॥

दावानलः तस्य अरिः जलं तत्प्रदं मेघमित्यर्थः समुत्थितम् उदीक्ष्य दृष्ट्वा मदकलः उल्लासपरः सन् वश्यां वशंवदां वने जले आत्मा यस्य तत् वनात्म पद्मं तद्वत् वदनं यस्याः तथोक्तां पद्ममुखीमित्यर्थः वनार्द्रां जलक्लिन्नदेहां सकलां कलासु कुशलां सकलां सर्वामिति गामित्यस्य विशेषणमपि सङ्गच्छते। वनितां कान्ताम् इमां गां वाचं बभाषे उवाच। वसन्ततिलकं वृत्तं, ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

पश्येति। हे अब्जदृक्! पद्मनेत्रे! गिरितटेषु भूदेवराजः द्विजराजश्चन्द्र इत्यर्थः तस्य रिपुः शत्रवः मेघा इति यावत् आच्छादकत्वादिति भावः तेषां शत्रुः [illegible] वायुनेत्यर्थः वायुसञ्चारे मेघानामस्थितेरिति भावः समावधूतान् कम्पितान्, वैश्वानरस्य अरिर्जलं तत्र जायते इति वैश्वानरारिजः स चासौ रिपुश्चेति तथोक्तः शंबरासुर इत्यर्थः तं हन्तीति तथोक्तः कामः, शंबरारिर्मनसिज इत्यमरः। तस्य शरैः अभिभूताः तैः कामार्त्तैरिति यावत्, दृक्श्रोत्राणां चक्षुःश्रवसां सर्पाणामित्यर्थः शत्रुभिः मयूरैरित्यर्थः उपासिता सेविता पुष्पाणां शोभा येषां तथाभूतान्, कुः पृथिवी माता जननी तया [illegible] आत्मा [illegible] येषां तान् भूमिरुहानित्यर्थः पश्य अवलोकय। वसन्ततिलकं वृत्तम् ॥ २ ॥

पश्याद्रिसारसदृशीभिरमूभिरद्भि-
राप्लावयत्यमरगुप् धरणीं महिम्नः ।
अब्दः सिताभिरसितः प्रबलः खगाभि-
र्वाजैः सितैरिव विभाति वनं प्रवृद्धैः ॥३॥
गोष्ठं हृतं सुहृतवाड्भिरमूभिरन्य-
गोभिः समुद्धरति यद् बहुधा हिमघ्नः ।
तद्गव्यमम्बरगतं शिखिजात्मसंस्थं
विस्यन्दमानमभिवर्द्धयतीह गोजान् ॥४॥
अवरुट्पलाशनिभदृग् घनजालवक्त्रा
वाचंस्वरेभनिभगा गजदोःसमोरुः ।

पश्येति । पश्य अवलोकय अमरगुप् देवानां गोप्ता इन्द्र इत्यर्थः महिम्नः प्रभावात् अद्रिसारसदृशीभिः लौहसदृशीभिः अमूभिः अद्भिः धरणीं पृथ्वीम् आप्लावयति पूरयति । सिताभिः शुभ्राभिः खगाभिः बलाकाभिरित्यर्थः असितः कृष्णः अब्दः मेघः प्रबलः विलसितः सन् प्रवृद्धैर्विकसितैः सितैः शुभ्रैः वाजैरिव कमलैः वनमिव विभाति राजते । वसन्ततिलकं वृत्तम् ॥ ३ ॥

गोष्ठमिति । हिमघ्नः सूर्यः सुष्ठु हृतं हव्यमित्यर्थः वहन्तीति तथोक्ताभिः अमूभिः गोभिः किरणैः बहुधा यत् गोष्ठं पृथिवीस्थम् अन्यम् अग्नौ प्रक्षिप्तं हृतं हव्यं समुद्धरति संहरति, अम्बरगतम् आकाशगतं तत् गव्यं शिखिजः अग्निजः धूमः इति आत्मा यस्य तथोक्तः सूर्य इत्यर्थः तस्मिन् संस्थं संस्थितं पश्चात् विस्यन्दमानं निस्रवत् सत् इह पृथिव्यां गोजान् भूरुहान् अभिवर्द्धयति पोषयति । वसन्ततिलकं वृत्तम् ॥ ४ ॥

अवरुड्गिति । अपद्य रोहतीति तथोक्तं पद्मभित्यर्थः तस्य पलाशनिभे पत्रतुल्ये दृशौ नयने यस्याः तथोक्ता पद्मपलाशाक्षीत्यर्थः,

सीरिध्वजप्रसवतुल्यविषाङ्गदासौ
नाशं गताप्रमुदिता प्रसमीक्ष्य वार्दम् ॥५॥
गोमध्यमध्ये ! मृगगोधरे ! हे सहस्रगोभूषणकिङ्कराणाम् ।
नादेन गोभृच्छिखरे प्रमत्ता नृत्यन्ति गोकर्णशरीरभक्षाः ॥६॥
सूर्य्यांशुनामपतिकवतद्रुमगामी
वागनामभिः परिहृतो विषनामदाभिः ।

घनजं जलं तस्मात् तत्र या जाता जन्म यस्य तत् घनजातम् पद्मं तद्वत् वक्त्रं वदनं यस्याः तादृशी कमलमुखीत्यर्थः, वारि चरतीति वार्चो हंसः तस्येव स्वरः यस्याः तथाभूता हंसमधुरभाषिणीत्यर्थः, इभनिभं गजेन्द्रतुल्यं गच्छतीति तथोक्ता गजेन्द्रगामिनीत्यर्थः, गजस्य दोः करः शुण्डादण्ड इत्यर्थः तत्समौ ऊरू यस्याः तथोक्ता करिकरोपमोरुरित्यर्थः, सीरिणः बलभद्रस्य ध्वजः ताल इत्यर्थः तस्य प्रसवेन फलेन तुल्यौ विषं पयः आह्वा आख्या यस्य तत् दुग्धमित्यर्थः तत् दत्त इति तथोक्तौ स्तनावित्यर्थः यस्याः तथोक्ता तालफलनिभस्तनेत्यर्थः असौ कान्तेति अध्याहार्य्यं वार्दं जलदं प्रसमीक्ष्य दृष्ट्वा अप्रमुदिता अहृष्टा सती विरहादिति भावः नाशं गता ममारेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

गोमध्येति । गोः पशुः सिंह इत्यर्थः क्वचित् सामान्यशब्दस्य विशेषपरत्वमिति न्यायात् । तस्य मध्यमिव मध्यं यस्याः तथोक्ता सिंहमध्येत्यर्थः तत्सम्बुद्धौ, हे मृगगोधरे ! मृगनयने ! सहस्रं गावः नेत्राणि भूषणानि यस्य स सहस्रगोभूषणः इन्द्रः तस्य किङ्कराणां मेघानामित्यर्थः नादेन गोभृच्छिखरे पर्वतशृङ्गे गोकर्णानां पशुअवयवं शरीरं भक्षयन्तीति तथोक्ताः पन्नगभोजिनः मयूराः प्रमत्ताः सन्तः नृत्यन्ति । उपजातिवृत्तम् ॥ ६ ॥

सूर्य्यांशुनामपतिरिति । सूर्य्यांशुर्गौरिति नाम येषां तेषां पशूनामित्यर्थः पतिः, ककुद्मान् वृषः यथा तथा गच्छतीति तथोक्तः,

उक्ष्णां वरः प्रमुदितः प्रतिनानदीति
गर्जन्तमीक्षणहितोच्चयतुल्यरूपम् ॥७॥

एनं पयोदपतिरुन्नमितः पयोदं
स्वस्थं महीतलगतः प्रतिगर्जतीव ।
भित्त्वावनीं वनरुहाक्षि ! शिरोरुहाभ्यां
संप्रस्थितोऽमृतधरैरभिषिच्यमानः ॥८॥

स्रोतोजविचतजभूधरधातुरूपाः
स्वस्थाः पयोजलसदृक् ! शुचि शुक्रमासे ।
मासोर्नभस्यनभसोरतिसंचरन्तः
तीव्रं विषं विषधराः परिनिर्वपन्ति ॥९॥

विषं पयः नाम यस्य तत् दुग्धमित्यर्थः ददतीति तथोक्ताभिः दुग्धदायिनीभिरित्यर्थः वाग्नामभिः गोभिरित्यर्थः परिवृतः, उक्ष्णां वरः वृषभराजः प्रमुदितः प्रहृष्टः सन् गर्जन्तम् ईक्षणस्य दृष्टेः हितानि अञ्जनानीत्यर्थः तेषाम् उच्चयेन समूहेन तुल्यं रूपं यस्य तथाभूतं मेघमित्यर्थः प्रतिनानदीति पुनः पुनः प्रतिगर्जतीत्यर्थः । वसन्ततिलकं वृत्तम् ॥७॥

एनमिति । हे वनरुहाक्षि ! कमलनेत्रे ! महीतलगतः भूस्थः पयोदपतिः गोपतिः अमृतधरैः जलधरैः अभिषिच्यमानः सम्प्रस्थितः शिरोरुहाभ्यां शृङ्गाभ्याम् अवनीं पृथिवीं भित्त्वा उन्नमितः सन् एनं स्वस्थं पयोदं मेघं प्रतिगर्जतीव । वसन्ततिलकं वृत्तम् ॥ ८ ॥

स्रोत इति । हे पयोजलसदृक् ! पद्मविकासनयने ! शुक्रमासे ज्येष्ठे, ज्येष्ठे शुक्र इत्यमरः । स्रोत इव जवि वेगवत् यत् चतजं रक्तं तद्वत् ये भूधराणां पर्वतानां धातवः तद्वत् रूपं येषां तादृशाः, स्वस्थाः स्वाकाशचारिणः, विषधराः कालकराः नभस्यनभसोः भाद्र-

स्वयोनिभक्षध्वजसम्भवानां श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोऽरिबिम्बप्रतिबिम्बधारी विरौति कान्ते ! पवनाशनाशः ॥१०॥

गोष्ठस्थ कुङ्कुमवपुः प्रतिराजतेऽसौ
सप्ताद्रिदैत्यभुजगोत्तमशत्रुगोपः ।
उर्वीधराभमचिरोत्थितमम्बरं खे
दृष्ट्वा हि हा प्रमुदितो हि मदाङ्कयामः ॥११॥

स्रावणयोः मासोः अतिशयेन संचरन्तः सम्यक् स्रवन्तः सन्तः शुचि विशुद्धं तीव्रं तीक्ष्णं विषं जलं परिनिर्वपन्ति समन्तात् वर्षन्तीत्यर्थः । शुचिशुक्रमासे इत्येकपदत्वे आषाढज्येष्ठमासे इत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ९ ॥

स्वयोनीति । हे कान्ते ! गिरिगह्वरस्थः पर्वतगुहावासी, पवनाशनान् सर्पान् अश्नातीति तथोक्तः मयूर इत्यर्थः, स्वस्य योनयः उत्पत्तिकारणानि काष्ठानीत्यर्थः तानि भक्षयतीति तथोक्तः अग्निरित्यर्थः तस्य ध्वजः धूमः तस्मात् सम्भवः उत्पत्तिर्येषां तथोक्तानां मेघानामित्यर्थः निनादं शब्दं श्रुत्वा तमसाम् अरिश्चन्द्रः तस्य बिम्बं चन्द्रबिम्बमित्यर्थः तस्य प्रतिबिम्बानि चन्द्रकाणीत्यर्थः धरतीति तथोक्तः विस्तारितपिच्छ इति यावत् विरौति शब्दायते । उपजातिवृत्तम् ॥ १० ॥

गोष्ठ इति । गोष्ठः भूस्थः, सप्तानाम् अद्रीणां पर्वतानां दैत्यानां भुजगोत्तमानां शत्रुः इन्द्र इत्यर्थः तद्युक्तो गोपः इन्द्रगोपाख्यः कीटविशेष इत्यर्थः असौ कुङ्कुमस्येव वपुः शरीरं यस्य तथाभूतः प्रतिराजते । मदाङ्कः कंदर्प इत्यर्थः यामं वाङ्मनम् उद्दीपनहेतुरिति यावत् यस्य तथोक्तः काम इत्यर्थः खे आकाशे अचिरोत्थितं नवोदितम् उर्वीधराभं पर्वतनिभम् अम्बरं जलधरं दृष्ट्वा हि दृष्ट्वैव हा इति खेदे, प्रहृष्टः प्रहर्षं गतः उद्दीपनकारकत्वादिति भावः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

कृष्णाम्बरः क्षरति तोयमसावजस्र-
मल्याविमौ रणगताविव चेभराजौ ।
अन्ये तु ते द्विरदवृन्दनिभाः चरन्तः
प्रच्छादयन्त्यमरवृन्दविमानमार्गम् ॥१२॥
वार्दाः खगाः क्षितिधरागमनप्रकाशा
नेमीभरासभतुरङ्गमतुल्यघोषाः ।
वायूरिताः खमवत्य वनं चरन्तो
वार्भिः क्षितिं घृतधराः परिनिर्वपन्ति ॥१३॥

कृष्णेति । असौ कृष्णः नीलवर्णः अम्बरः जलधरः अजस्रम् अनवरतं तोयं क्षरति वर्षति । इमौ च अल्पौ क्षुद्रौ मेघावित्यर्थः रणगतौ संग्रामभूमौ परस्परं प्रति धावन्ताविति भावः इभराजाविव दृश्येते इति शेषः । अन्ये तु ते जलधराः द्विरदवृन्दनिभाः हस्तियूथसदृशाः चरन्तः वर्षन्तः अमरवृन्दस्य विमानमार्गम् अन्तरीक्षमित्यर्थः प्रच्छादयन्ति । वसन्ततिलकं वृत्तम् ॥ १२ ॥

वार्दा इति । क्षितिधराणां पर्वतानाम् आगमनम् उड्डयनमिव प्रकाशो येषां तथोक्ताः उत्पतन्तः पर्वता इवेत्यर्थः, नेमिः चक्रप्रान्तं, चक्रप्रान्ते प्रधिर्नेमिरित्यमरः । इभः हस्ती, रासभः गर्दभः तुरङ्गमः अश्वः तेषां तुल्यं घोषः स्वनः येषां तादृशाः गर्जन्त इति यावत्, खगाः आकाशचारिणः, घृतधराः हव्यधारिणः सन्तः वार्दाः तदेव हव्यं जलरूपेण *परिणतं तत् ददतीति तथोक्ताः मेघा इत्यर्थः वायुना ईरिताः सञ्चालिताः सन्तः खम् आकाशम् अवत्य आच्छाद्य उपेत्येति वा पाठः । वनं जलं चरन्तः वर्षन्तः वार्भिः जलैः क्षितिं परिनिर्वपन्ति परितो* आप्लावयन्तीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १२ ॥

एषोऽङ्घ्रिपाशनरिपुप्रसुतारिसाह्व-
मारुह्य तिष्ठति सुगात्रि ! भुजङ्गमारिः ।
यस्य स्वरैः प्रमुदितस्य ममाद्य बाले !
तालध्वजावरजसूनुशराः पतन्ति ॥ १४ ॥

उस्रा विषं स्थलगतोऽस्ति तथैव वार्भ्यो
वार्जो द्विजो हरति एष दृमाङ्घ्रिगूढः ।
वाताशनः स्वशयनं स्मरति स्थलस्य
चक्षुःश्रवा वनभयात् सुरशत्रुनामा ॥ १५ ॥

एष इति । हे सुगात्रि ! चार्वङ्गि ! एषः भुजङ्गमारिः मयूरः अङ्घ्रिपाणां वृक्षाणाम् अशनः भक्षकः दाहक इति यावत् अग्निरित्यर्थः तस्य रिपवः जलानि धरन्तीति तथोक्ताः सुताः किङ्कराः यस्य तस्य इन्द्रस्येत्यर्थः अरिः पर्वत इत्यर्थः तत्समानो आह्वा यस्य तथोक्तं पर्वतमित्यर्थः आरुह्य तिष्ठति । हे बाले ! यस्य मयूरस्य स्वरैः प्रमुदितस्य समुल्लसितस्य मम मां प्रतीत्यर्थः अद्य तालध्वजः बलदेवः तस्य अवरजः कनिष्ठः कृष्ण इत्यर्थः तस्य सूनोः पुत्रस्य कामस्येत्यर्थः शराः पतन्ति । कामार्त्तोऽस्मीति भावः । वसन्ततिलकं वृत्तम् ॥ १४ ॥

उस्र इति । उस्रः सूर्यरश्मिः स्थलगतः भूपतितः सन् विषं रसं यथा तथैव वार्भ्यः जलेभ्यः विषं रसं जलमित्यर्थः अत्ति भक्षयति आदत्ते इत्यर्थः । एष वार्जो जलजः द्विजः पक्षी अङ्घ्रिगूढः जलेषु अङ्घ्र्यङ्गगूढ इति यावत् दश हरितः दिशः विचरतीत्यध्याहार्य्यम् । सुरशत्रुनामा दैत्यविशेषाख्यः एषः वाताशनः वायुभोजी चक्षुःश्रवाः फणी स्थलस्य वनभयात् जलभवात् जलाकीर्णता-जनिताद् भयादित्यर्थः स्वस्य शयनं शयनस्थानं बिलमित्यर्थः स्मरति कुत्र ममावासं बिलं जलैरापूरितं कथं तत्र यास्यामीति चिन्तयतीति भावः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

पक्ष्यश्वमेधतुरगप्रतिमोष्ठवर्णो
वार्दं न वर्षति समाह्वयते च्छदिघ्नः ।
भेकस्तथैव पवनाशनवन्ध्यवाणिः
शब्दं करोत्यपि भृशं विषराशिमग्नः ॥ १६ ॥
ना विष्किरो वनमुपेत्य कुमातृसाह्व-
माक्रीडते मधुकलोऽङ्गनया समेतः ।
अन्यस्त्वयं मणिवराभमुपेत्य गोजं
ना रामया सह पयःपतिजां वृणीते ॥ १७ ॥

पक्षीति । अश्वमेधस्य यज्ञविशेषस्य तुरगस्य अश्वस्य प्रतिमः सदृशः लोहित इति भावः ओष्ठवर्णो यस्य तथाभूतः रक्तौष्ठ इत्यर्थः, पक्षी चातक इत्यर्थः वार्दं जलदं न वर्षति न वर्षणार्थं याचते इति यावत् पुनः पुनर्जलधारापानेन परितृप्तेरिति भावः । छदिघ्नः मयूरः वार्दं जलधरं समाह्वयते सम्यक् आकारयति स्वप्रोल्लासा-र्थमिति भावः । तथैव पवनाशनैः सर्पैः वन्ध्या प्रशंसिता वाणी वाक् यस्य तथाभूतः, भेकः मण्डूकः वाणीश्रवणेनास्य भक्षणार्थं विना-न्वेषणम् इमं प्रति गमनस्य सम्भवादिति भावः विषराशिमग्नः जलराशिपतितः सन् भृशम् अत्यर्थं शब्दं करोति । वसन्ततिलकं वृत्तम् ॥ १६ ॥

नेति । ना पुमान् विष्किरः तदाख्यः पक्षिविशेषः मधुकलः मधुना मधुरास्फुटनिनादः सन् अङ्गनया स्त्रिया तदाख्यपक्षिण्ये-त्यर्थः समेतः सङ्गतः सन् कुमाता पृथिवीरूपा जननी तया सह व्याह्वा संज्ञा यस्य तथोक्तं वनं भूरुहवनमित्यर्थः उपेत्य प्राप्य आक्री-डते विहरति । अन्यस्तु अयं ना पुमान् पक्षीति शेषः मणिवराभं मरकतनिभं गोजं भूरुहं वृक्षमित्यर्थः उपेत्य रामया कान्तया सह पयःपतिजां समुद्रजां श्रियमित्यर्थः शोभामिति यावत् वृणीते प्राप्नोति । वसन्ततिलकं वृत्तम् ॥ १७ ॥

स्थूलं महत् घनजवर्णनिभं नरोऽसौ
बिभ्रत्यमूनि च भिनत्ति सरोरुहाणि ।
तज्जेन चापि रजसा वनितां वयस्यः
अभ्युद्धरत्यवकिरत्यभिषिच्यमानः ॥ १८ ॥
पङ्के निमग्नमिभवृन्दमदः सवारि
गर्त्तस्तिमिक्षयदवृन्दमिवावभाति ।
वार्य्यात्मनामशतचित्रतनुः सुपर्णो
योषिद्वृतः समदनः प्रतिरौरवीति ॥ १९ ॥
विस्फारिताम्बुजरवेण रिरंसुरेष
वित्रासितो हरिरनोकहनिष्कुटस्थः ।

स्थूलमिति । असौ वयस्यो नरः स्थूलं महत् घनजवर्णनिभं वृहत् रक्तकमलमित्यर्थः बिभर्ति, अमूनि सरोरुहाणि पद्मषण्डानि भिनत्ति उत्पाटयतीत्यर्थः । तज्जेन कमलषण्डोत्पाटनजनितेन च रजसा परागेण अभिषिच्यमानः आच्छाद्यमानः सन् वनिताम् अवकिरति अभिवर्षति अभ्युद्धरति जलादुत्तोलयति चेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १८ ॥

पङ्क इति । पङ्के निमग्नं पतितम् अदः इभवृन्दं हस्तिसमूहः सवारि जलपूर्णं गर्त्तं तिमीनां मत्स्यविशेषाणां क्षयं स्थानम् आवासमित्यर्थः जलमिति यावत् ददतीति तथोक्ताः तेषां मेघानामित्यर्थः वृन्दमिव अवभाति राजते । वार्य्यात्मनाम्नां कमलानां शतैः चित्रा तनुर्यस्य तादृशः योषिद्वृतः हंसीमण्डितः सुपर्णः पक्षी हंस इत्यर्थः समदनः कामातुर इत्यर्थः प्रतिरौरवीति पुनः पुनः रौतीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १९ ॥

विस्फारितेति । अनोकहनिष्कुटस्थः वृक्षवनस्थः रिरंसुः रन्तुमिच्छुः एषः असौ हरिर्वानरः विस्फारितानां विकचानाम् अम्बु-

संलीयते तड़ितमप्यभिवीक्ष्य विग्नः
खात् संमहत्तरमसौ खमनुप्रविष्टः ॥ २१ ॥

एतावदुत्तमवचः सुमनाः स उक्त्वा
रन्त्वा दिनं सह तया प्रियया ह्यदीनः ।
युक्तं चतुर्भिरनडुद्भिरदीनवाड्भि-
रारुह्य यानमथ ना प्रययौ स्वगेहम् ॥ २१ ॥

इति राक्षसकाव्यं सम्पूर्णम् ।

---

जानां मङ्कानां रवेण वित्रासितः भीषितः तड़ितमपि विद्युतमपि अभिवीक्ष्य विग्नः व्याकुलः सन् खात् आकाशादपि संमहत्तरम् अतिमहत् खम् आकाशम् अनुप्रविष्टः मृत्युं प्राप्त इति भावः संलीयते लयं गच्छति । वसन्ततिलकं वृत्तम् ॥ २० ॥

एतावदिति । स सुमनाः प्रफुल्लमनाः ना पुमान् एतावत् उत्तमवचः शोभनं वचनम् उक्त्वा अथानन्तरं तया प्रियया सह दिनं व्याप्येत्यर्थः व्याप्तौ द्वितीया । रन्त्वा विहृत्य अदीनः अकातरः सन् अदीनम् अकातरं यथा तथा वहन्तीति तथोक्तैः चतुर्भिरनडुद्भिः बलीवर्दैः युक्तं यानं शकटम् आरुह्य स्वगेहं प्रययौ । वसन्ततिलकं वृत्तम् ॥ २१ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
राक्षसकाव्यव्याख्या समाप्ता ।

---

# सप्तश्लोकीयभागवतम्।

---

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम्।
सरहस्यं तदङ्गञ्च गृहाण गदितं मया ॥ १ ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥
अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम्।
पश्चादहं तदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥४॥

ज्ञानमिति। मया परमगुह्यम् अतिरहस्यं विज्ञानेन वाह्य-वस्तुज्ञानेन समन्वितं यत् ज्ञानं तत्त्वावबोधकं शास्त्रं गदितम् उक्तं सरहस्यं सोपनिषत् सन्ति अङ्गानि तत्तदुपोषकाणि शास्त्राणि यत्र तथाभूतं तत् ज्ञानं मे मम सकाशादिति शेषः गृहाण अवबुध्यस्वेत्यर्थः। अनुष्टुब्वृत्तमस्मिन् सन्दर्भे ॥ १ ॥

यावानिति। यथाभावः यथावृत्तिः यानि यादृशानीत्यर्थः रूपगुणकर्माणि यस्य तथोक्तः, यावान् यत्स्वरूपः अहम् आत्मेति यावत् मदनुग्रहात् मम कृपया तथैव तत्त्वस्य परमात्मनः विज्ञानं ते तव अस्तु भवतु ॥ २ ॥

अहमिति। अग्रे सृष्टेः प्रागित्यर्थः अहमेव आसम् नान्यत् किमपि आसीदिति शेषः, परम् अन्यत् यत् सत् वा असत् पश्चात् तदुत्पन्नमिति शेषः तत एतच्च अहम्। यः अवशिष्यात् भविष्यतीति भावः सोऽपि अहमेव अस्मि ॥ ३ ॥

ऋते इति। अर्थं परमार्थम् ऋते विना यत् प्रतीयेत बुध्येत,

यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥५॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः।
अन्वयव्यतिरेकाभ्यां यत् स्यात्सर्वत्र सर्वदा ॥६॥
एतन्मतं समातिष्ठ परमेण समाधिना।
भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥७॥

इति श्रीश्लोकसप्तकीयं श्रीभागवतं समाप्तम्।

आत्मनि च यत् न प्रतीयेत यज्ज्ञानं परमार्थनिष्ठं न भवतीति भावः तत् यथाभासः अवास्तवं यथा यथा तमः आत्मनः मायाम् अविद्यां विद्यात्। आत्मव्यतिरिक्तं ज्ञानमवास्तवम् अविद्यानिबन्धनमिति भावः ॥ ४ ॥

यथेति। यथा महान्ति भूतानि क्षित्यादीनि तेषु उच्चावचेषु बहुविधेषु भूतेषु पदार्थेषु अनु प्रविष्टानि अप्रविष्टानि च अहं तथा तेषु भूतेषु न अनुप्रविशामीति शेषः ॥ ५ ॥

एतावदिति। यत् वस्तु सर्वदा सर्वत्र अन्वयव्यतिरेकाभ्यां स्यात् तत्सत्त्वे तत्सत्ता अन्वयः तदसत्त्वे तदसत्ता व्यतिरेकः तथा च ईश्वरसद्भावे जगतः सद्भावः तदसद्भावे जगतोऽसद्भाव इति नयेन यदा सर्वत्र जगत्कार्य्यं दृश्यते तदा ईश्वरोऽस्त्येव तदभावे जगतामसद्भावादिति भावः। आत्मनः तत्त्वजिज्ञासुना तत्त्वज्ञानार्थिना एतदेव आत्मतत्त्वमेव जिज्ञास्यं ज्ञातुमेषणीयम् ॥ ६ ॥

एतदिति। परमेण समाधिना मनोयोगेन एतत् मतं सिद्धान्तः समातिष्ठ अनुसर। भवान् एतत् मतमनुसरन्निति शेषः कल्पविकल्पेषु विविधेषु मन्वन्तरेष्विति भावः कर्हिचित् कदाचित् न विमुह्यति मोहं गच्छति ॥ ७ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
सप्तश्लोकीयभागवतव्याख्या समाप्ता।

# एकश्लोकीयं भागवतम् ।



आदौ देवकिदेवगर्भजननं गोपीगृहे वर्द्धनं
मायापूतनजीवितापहरणं गोवर्द्धनोद्धारणम् ।
कंसच्छेदनकौरवादिहननं कुन्तीसुतापालनं
एतद्भागवतं पुराणकथितं श्रीकृष्णलीलामृतम् ॥१॥
इति एकश्लोकीयं भागवतम् ।



आदाविति । आदौ प्रथमं देवक्यां देवस्य भगवतः गर्भजननं, ततः जननानन्तरं वसुदेवेन पित्रा गोकुलं नीतस्येति अध्याहार्य्यं गोपीगृहे यशोदालये वर्द्धनं प्रतिपालनं, तत्र मायया छलेन पूतनायाः स्तन्यदात्र्या इति भावः जीवितस्य अपहरणं प्राणवध इत्यर्थः, गोवर्द्धनस्य पर्वतस्य उद्धारणं देवराजोपद्रवात् गोकुलरक्षार्थमिति भावः, ततो मथुरां नीतस्य कंसच्छेदनं ततः कौरवादीनां कुरुवंशीय-प्रभृतीनां दुर्य्योधनादीनामित्यर्थः हननं कुरुक्षेत्रयुद्धे इति भावः, तेन च कुन्तीसुतानां पितृष्वसेयानां युधिष्ठिरादीनाम् आपालनं सम्यक् रक्षणम्, एतत् पुराणे पुरावृत्ते कथितं श्रीकृष्णस्य लीलामृतं भागवतं भगवत्सम्बन्धं शास्त्रतत्त्वमित्यर्थः । शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥१॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
एकश्लोकीभागवतव्याख्या समाप्ता ।



## एकश्लोकीयं रामायणम् ।

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालिनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम् ॥१॥

इति एकश्लोकीय रामायणम् ।

---

## एकश्लोकीयं भारतम् ।

आदौ पाण्डवधार्त्तराष्ट्रजननं लाक्षागृहे दाहनं
द्यूतश्रीहरणं वने विचरणं मत्स्यालये वर्द्धनम् ।

आदाविति । आदौ प्रथमतः रामस्य तपोवनादिषु गमनं, तत्र काञ्चनं मृगं हत्वा आश्रममागच्छत इति अध्याहार्य्यम्, वैदेह्याः सीतायाः हरणं रावणेनेति शेषः, तत्र जटायुमरणं जटायुषः पक्षिणः सीताहरणजातकोपस्य रावणेन संग्रामे निधनमित्यर्थः, ततः सुग्रीवेण वानरराजेन सम्भाषणं सम्मेलनमिति भावः, तेन च वालिनिग्रहणं वालिवधः, समुद्रतरणं, लङ्कापुर्य्याः दाहनं हनुमतेति शेषः, पश्चात् रावणकुम्भकर्णयोः हननं वधः, एतत् हि एतदेव रामायणं रामचरितमित्यर्थः । शार्द्दूलविक्रीडितं वृत्तम् ॥ १ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
एकश्लोकीयरामायणव्याख्या समाप्ता ।

---

आदाविति । आदौ प्रथमं पाण्डवानां पाण्डुसुतानां युधि-

लीलागोग्रहणं रणेऽवतरणं सन्धिक्रियावर्द्धनं
पश्चाद्भीष्मककौरवादिहननञ्चैतन्महाभारतम् ॥१॥
इति एकश्लोकीयं भारतम् ।

---

## विष्णुस्तवः ।

---

श्रीकृष्ण ! विष्णो ! मधुकैटभारे !
भक्तानुकम्पिन् ! भगवन् ! मुरारे ! ।

ष्ठिरादीनां धार्त्तराष्ट्राणां धृतराष्ट्रसुतानां दुर्योधनादीनां जननम् उत्पत्तिः, ततः लाक्षागृहे जतुनिर्मिते गृहे दाहनं, ततश्च द्यूतेन पाशक्रीडया श्रीहरणं राज्यभ्रंशनमित्यर्थः पाण्डवानां दुर्योधनादिभिरिति शेषः, ततश्च वने विचरणं द्वादशवर्षमिति शेषः, ततः मत्स्यस्य मत्स्यराजस्य विराटस्य आलये वर्त्तनम् अज्ञातभावेन संवत्सरं स्थितिरित्यर्थः, तत्र लीलया हेलया अनायासेनेति भावः गवां विराटरक्षितानामिति भावः ग्रहणं दुर्योधनादिभिरिति शेषः, तत्र रणे संग्रामे अवतरणं पाण्डवस्यार्जुनस्येति शेषः, ततः सन्धिक्रियावर्द्धनं दुर्योधनादिभिः पाण्डवानां सन्ध्यर्थं भगवतः कृष्णस्य प्रयासः इति भावः, पश्चात् सन्धिवैमुख्ये इति भावः, भीष्मस्य कौरवादीनामन्येषाञ्च हननं संग्रामे वधः, एतत् महाभारतं महाभारतप्रतिपाद्यमित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
एकश्लोकीयमहाभारतव्याख्या समाप्ता ।

---

श्रीकृष्णेति । हे कृष्ण ! विष्णो ! मधुकैटभयोः अरे शत्रो !

त्रायस्व मां केशव ! लोकनाथ !
गोविन्द ! दामोदर ! माधवेति ॥१॥

संसारकूपे पतितो ह्यगाधे
मोहान्धपूर्णे विषयातितप्ते ।
करावलम्बं मम देहि विष्णो !
गोविन्द ! दामोदर ! माधवेति ॥२॥

जिह्वे ! सदैवं भज सुन्दराणि
नामानि कृष्णस्य मनोहराणि ।
समस्तभक्तार्त्तिविनाशनानि
गोविन्द ! दामोदर ! माधवेति ॥३॥

इति श्रीकृष्णानन्दव्यासदेवरागसागरोद्भव-
स्तोत्रादिपरमार्थस्तोत्रादि-
संग्रहकृतं समाप्तम् ।

---

भक्तानुकम्पिन् भक्तवत्सल ! भगवन् ! मुरारे केशव लोकनाथ गोविन्द दामोदर माधव ! मां त्रायस्व रक्ष इति । इन्द्रवज्रा वृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥ १ ॥

संसारेति । हे विष्णो ! गोविन्द दामोदर माधव ! अहम् अगाधे अतलस्पर्शे मोहान्धपूर्णे अज्ञानान्धकारावृते विषयातितप्ते विषयैः स्रक्चन्दनवनितादिभिरतिशयेन तप्ते अनन्तदुःखाकरे इति भावः, संसारकूपे पतितः स्थित पतित एव, मम करावलम्बं हस्तेन अवलम्बम् आश्रयं देहि इति । उपजातिवृत्तम् ॥ २ ॥

जिह्वे इति । हे जिह्वे ! त्वं गोविन्द दामोदर माधवेति

# रसमञ्जरी ।

---

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।
तल्पे किञ्च करित्वचा विरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ १ ॥

विद्वज्जनमनोभृङ्गरसव्यासङ्गहेतवे ।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥ २ ॥

कृष्णस्य समस्तानां भक्तानाम् आर्त्तिविनाशनानि दुःखमोचनानि एवं मनोहराणि सुन्दराणि नामानि सदा सततं भज जपेत्यर्थः । उपजातिवृत्तम् ॥ ३ ॥

इति श्रीजीयानन्दविद्यासागरभट्टाचार्य्येण कृता
विष्णुस्तवव्याख्या समाप्ता ।

---

आत्मीयमिति । अन्तः आन्तरेणेत्यर्थः प्रेम्णां भरेण अतिशयेन अलसां मन्थरां कृशाङ्गीमिति यावत् प्रियतमां गौरीम् अङ्के क्रोडे दधानः हरः पुरतः अग्रतः निम्नोन्नतायां भुवि भुवौ आत्मीयं चरणं दधाति अर्पयति, श्रमाशङ्कया पुष्पोच्चयने देव्याः श्रमो भवेदित्याशङ्कया स्वीयेनैव न तु पार्वत्या इति भावः करेण तरोः पुष्पं कर्षति चिनोति । किञ्च करित्वचा गजचर्म्मणा अतिकर्कशेनेति भावः विरचिते तल्पे शय्यायां निजैः भागैः अङ्गैः देहावयवैरिति यावत् निद्राति स्वपिति । प्रेम्णः परां काष्ठां जानाति हर इति भावः । शार्दूलविक्रीडितं छन्दः, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ १ ॥

विद्वदिति । श्रीमता भानुना विदुषां जनानां मनांसि एव भृङ्गाः

तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन(क) नायिका तावन्निरूप्यते। सा च त्रिधा, स्वीया परकीया सामान्यवनिता चेति। तत्र स्वामिन्येवानुरक्ता स्वीया, न च परिणीतायां परगामिन्यामतिव्याप्ति(ख)स्तत्र पतिव्रताया एव लक्ष्यत्वात्। तस्याः परगामितया परकीयात्वमपि सम्भवति। अस्या(ग)श्चेष्टा भर्त्तुः शुश्रूषा शीलसंरक्षणम् आर्जवं क्षमा च। यथा

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३ ॥

तेषां रसस्य व्यासङ्गः आस्वादः तस्य हेतवे तदर्थमित्यर्थः एषा रसमञ्जरी प्रकाश्यते वितन्यते। अनुष्टुब्वृत्तम् ॥ २ ॥

(क) तत्रेति। तत्र रसमञ्जर्यां रसेषु शृङ्गारवीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्राख्येषु मध्ये शृङ्गारस्य अभ्यर्हितत्वेन प्राधान्येन तस्य शृङ्गाररसस्य आलम्बनविभावत्वेन विभावयन्ति रत्यादीन् उद्बोधयन्तीति विभावाः आलम्बनाश्च ते विभावाश्चेति तथोक्ताः तेषां भावः तेन, उक्तञ्च दर्पणे, रत्याद्युद्बोधको लोके विभावः काव्यनाट्ययोः। आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ। आलम्बनं नायिकादिस्तमालम्ब्य रसोद्गमादिति।

(ख) अतिव्याप्तिः अलक्ष्ये लक्षणगमनरूपो दोषः परगामिनीरूपे अलक्ष्ये अर्थे स्वीयालक्षणस्य योगादिति भावः।

(ग) अस्याः स्वीयायाः।

गतागतेति। कुलनतभ्रुवां कुलकामिनीनां नयनयोः गतागतानां कुतूहलं कौतुकम् अपाङ्गावधि न ततोऽन्यत्र दृष्टेः प्रसरणमिति

स्वीया त्रिविधा, मुग्धा मध्यमा प्रगल्भा च। तत्राङ्कुरितयौवना मुग्धा। सा चाज्ञातयौवना ज्ञातयौवना च। सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढ़ा। सैव क्रमशः सप्रश्रया विश्रब्धनवोढ़ा (घ)। तस्याश्चेष्टा क्रिया मनोहरा कोपे मार्दवं नवभूषणे समीहा चेति (ङ)।

मुग्धा यथा।

आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरीलावण्यमामन्त्रितं ॥४॥

भावः, स्मितम् ईषत् हसनम् अधर एव विश्राम्यति न प्रकटतां गच्छतीति भावः, वचः वाक्यं प्रियतमस्य श्रुतेः श्रोत्रेन्द्रियस्यैव अतिथिः प्रियतम एव वचनं श्रोतुं शक्नोति नान्य इति भावः, चेत् यदि कदाचिदपि कोपस्य क्रमः प्रसरः स्यादिति शेषः तदा असौ कोपः केवलं मनसि मज्जति लीयते न कोऽपि ज्ञातुं शक्नोतीति भावः। पृथ्वीवृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ॥ २ ॥

(घ) सप्रश्रया सविनया। विश्रब्धनवोढ़ा विश्वासिनी मुग्धा।

(ङ) समीहा चेष्टा अभिलाष इत्यर्थः।

आज्ञप्तमिति। कामदेवधरणीपालेन कन्दर्पराजेन आज्ञप्तं किल अत् शुभे काले समये एणीदृशः कुरङ्गाक्ष्याः तनौ शरीरे वस्तुं तारुण्यं यौवनं वास्तुविधिं वास्तुसंस्कारं विधास्यति, दृष्ट्या नयनेन खञ्जनानां पक्षिविशेषाणां चातुरी, मुखरुचा मुखकान्त्या सुधाकरस्य इयं सौधाकरी चान्द्रीत्यर्थः माधुरी मधुरता, वाचा किञ्च किमपीत्यर्थः सुधासमुद्रस्य लहरी तरङ्ग एव लावण्यं आमन्त्र्यते च संस्क्रियते चेति

उरोभुवि न तुङ्गिमा न च गतागते भङ्गिमा
न वा वचसि रङ्गिमा कुटिलता न तावद् भ्रुवोः।
तथापि हरिणीदृशां वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवान्तरा लक्ष्यते ॥५॥

बाल्ययौवनयोर्मध्ये द्वैराज्ये कुसुमायुधः।
वारं वारं धनुर्धत्ते वारं वारं विमुञ्चति ॥६॥

चलदचलदपाङ्गं स्मेरमस्मेरमास्यं
गतिरहह किमस्या मन्थरामन्थरा च।

यावत्, राजाज्ञया भृत्या यथा राजकार्य्यं साधयितुं प्रवर्त्तन्ते तथा कामाज्ञया इच्छादिभिः स्वं स्वम् आदेशानुरूपं वास्तुविधानोपकरणं संगृह्यत इति भावः। यौवने कामस्था कामाविर्भावो भवतीति फलितम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४ ॥

उर इति। हरिणीदृशां मृगाक्षीणां मुग्धानामिति शेषः उरोभुवि पयोधरे तुङ्गिमा तुङ्गत्वम् औन्नत्यमित्यर्थः न गतागते गमनागमने भङ्गिमा विलासितेत्यर्थः न च, वचसि वचने रङ्गिमा विभ्रमवत्त्वमिति यावत् न वा नैव, भ्रुवोः कुटिलता वक्रता तावत् न, तथापि वपुषि शरीरे पटेन वसनेन आवृतस्य आच्छादितस्य महामणेः मध्यारत्नस्य हीरकादेरित्यर्थः द्युतिरिव कान्तिरिव अन्तरा कापि अनिर्वचनीया कान्तिच्छटा लक्ष्यते। पृथ्वीवृत्तम् ॥ ५ ॥

बाल्येति। कुसुमायुधः कामः बाल्ययौवनयोः मध्ये कैशोरे इत्यर्थः मुग्धावस्थायामिति यावत् द्वैराज्ये द्वयोः राज्ञोः बाल्ययौवनयोरिति भावः इदं द्वैराज्यं तस्मिन् तद्धितार्थद्विगुसमासः। वारं वारं पुनः पुनः धनुः धत्ते, वारं वारं विमुञ्चति त्यजति बाल्ययौवनमध्यवर्त्तिनं सम्यक् शासितुं न शक्नोति तदानीं स्वस्य स्वामित्वाभावा-दिति भावः। अनुष्टुब्वृत्तम् ॥ ६ ॥

इति मनसि नितान्तं चिन्तयन् पञ्चबाणः
करविनिहितबाणः संभ्रमाद् बभ्रमीति ॥७॥

अज्ञातयौवना यथा ।

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥८॥

ज्ञातयौवना यथा ।

स्वयम्भुः शम्भुरम्भोजलोचने ! त्वत्पयोधरः ।

चलदिति । अस्याः कामिन्याः आस्यं मुखं किं कथं चलन् चपलश्च अपाङ्गः यत्र तादृशम् अपाङ्गयोर्वलनयुक्तमवलनयुक्तञ्चेत्यर्थः स्मेरम् ईषत् हासविकस्वरम् अस्मेरञ्च तथा गतिः गमनं पदविन्यास इत्यर्थः मन्थरा मन्दा अमन्थरा अमन्दा चेत्यर्थः अहह खेदे । पञ्चबाणः कामः करे विनिहितः धृतः बाणो येन तथाभूतः इति इत्थं मनसि नितान्तम् अत्यर्थं चिन्तयन् संभ्रमात् आवेगात् बभ्रमीति पुनः पुनर्भ्रमतीत्यर्थः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ७ ॥

नीरादिति । शशिमुखी चन्द्रवदना काचित् नीरात् जलात् तीरम् उपागता सती श्रवणयोः कर्णयोः सीम्नि सीमायां स्फुरतोः प्रसरतोः नेत्रयोः सतोः श्रोत्रे किमिदम् उत्पलं नीलोत्पलमित्यर्थः लग्नमिति ज्ञातुं करं न्यस्यति अर्पयति । शैवालस्य जलनीलस्याः अङ्कुरस्य शङ्कया बोधेन रोमावलीं प्रोञ्छति अपनयतीत्यर्थः तथा अविदितः अज्ञातः श्रोणीभरः नितम्बभरः यया तथाभूता सती श्रान्ता अस्मि श्रममिति शेषः मुहुः पुनः पुनः सखीं पृच्छति । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

स्वयम्भुरिति । हे अम्भोजलोचने पङ्कजनेत्रे ! तव पयोधरः

नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥९॥

तन्वी बाला मृदुतनुरियं त्यज्यतामत्र शङ्का
काचिद् दृष्टा भ्रमरभरतो मञ्जरी भिद्यमाना।
तस्मादेषा रहसि भवता निर्दयं पीड़नीया
मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः समग्रम् ॥१०॥

नवोढ़ा यथा।

हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते बहिरेव गन्तुम्।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥११॥

स्वयं भवतीति स्वयम्भुः शम्भुः कस्य धन्यस्य पुण्यवतः नखेन नखक्षतेन चन्द्रचूड़ः चन्द्रशेखरः भविष्यति ? ॥ ९ ॥

तन्वीति। इयं मृदुतनुः कोमलाङ्गी बाला तन्वी कृशाङ्गी, अत्र अस्याः निर्दयोपभोगे इति भावः शङ्का त्यज्यतां निर्दयमेनां भुङ्क्ष्वेति भावः। भ्रमरस्य भरतः भरेण काचित् मञ्जरी भिद्यमाना दृष्टा ? नैवेत्यर्थः। तस्मात् भवता रहसि विजने एषा कामिनी निर्दयं पीड़नीया रन्तव्येति यावत् इक्षुयष्टिः मन्दं यथा तथा आक्रान्ता चर्वितेति यावत् समग्रं रसं न वितरति नैव ददातीत्यर्थः। दृष्टान्तालङ्कारः। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति दर्पणः। मन्दाक्रान्तावृत्तम्। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्म-मिति तल्लक्षणात् ॥ १० ॥

हस्ते इति। नववधूः नवोढ़ा कामिनी हस्ते धृतापि शयने शय्यायां विनिवेशितापि क्रोड़े कृतापि बहिरेव गन्तुं यतते इच्छतीत्यर्थः चेष्टते इति यावत्, अतः सा नवोढ़ा तस्य जनस्य वश्या

बलान्नीता पार्श्वं मुखमभिमुखं नैव कुरुते
धुनाना मूर्द्धानं रहसि बहुशश्चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥१२॥

विस्रब्धनवोढ़ा यथा ।

दरमुकुलितनेत्रपालिनी सा
नियमितबाहुलतोरुयुग्मबन्धम् ।
करकलितपयोधरं नवोढ़ा
स्वपिति समीपमुपेत्य कस्य यूनः ॥१३॥

वशवर्त्तिनी भवतीति शेषः यः पारदं स्थिरयितुं निश्चलीकर्त्तुं स्थग-यितुमिति पाठान्तरम् । क्षमते शक्नोति इति जानीमहे मन्यामहे । यथा पारदं कोपि हस्ते रक्षितुं न शक्नोति तथा, नवोढ़ा कामिनी केनापि वशमानेतुं न शक्यते इति भावः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

बलादिति । नवोढ़ा कामिनी बलात् बलमाश्रित्येत्यर्थः यब्लोपे पञ्चमी, पार्श्वं नीता सती मुखम् अभिमुखं कान्तस्येति शेषः नैव कुरुते, रहसि विजने चुम्बनविधौ चुम्बनव्यापारे बहुशः पुनः पुनः मूर्द्धानं धुनाना कम्पयन्ती हृदि न्यस्तम् अर्पितं पयोधरस्पर्शलोभात् कान्तेनेति शेषः हस्तं क्षिपति अपनयति तथा गमने आरोपितं प्रवर्त्तितं मनो यया तथाभूता गमनोत्सुकेत्यर्थः सती वोढ़ारं परिणेतारं कान्तमिति यावत् रमयति च सन्तोषयति च सन्तापयति च क्लेशयति च । शिखरिणीवृत्तम् । रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ १२ ॥

दरेति । नवोढ़ा सा कामिनी कस्य यूनः तरुणस्य समीपम् उपेत्य प्राप्य दरमुकुलिते ईषत् मुद्रिते नेत्रे पालयति रक्षतीति तादृ

समानलज्जामदना मध्या। एषैव चातिप्रश्रयादति-विस्रब्धनवोढ़ा।

अतिविश्रब्धनवोढ़ा यथा।

प्रेङ्खणप्रेक्षणालापान् कुर्वत्याः सस्मितत्रपम्।
नवीनायाः प्रवीणायाः खञ्जनं स्मररञ्जनम् ॥१४॥

अस्याश्चेष्टा सागसि प्रेयसि (च) धैर्ये वक्रोक्तिः अधैर्ये परुषवाक्। यथा

स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
स्वापं विधातुमपि हातुमपि प्रपेदे ॥१५॥

तथाभूता सती नियमितेन संवेष्टितेन बाहुना कृतः करयुग्मस्य बन्धः बन्धनं यस्मिन् तत् तथा करेण कलितौ धृतौ व्यावृताविति यावत् पयोधरौ स्तनौ यस्मिन् तत् यथा तथा स्वपिति निद्राति। पुष्पिताग्रावृत्तम्। अयुजि नयुगरेफतो यकारो युजितु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥१२॥

प्रेङ्खणेति। सस्मितत्रपं सहासलज्जं यथा तथा प्रेङ्खणं चलनं प्रेक्षणम् अवलोकनम् आलापः सम्भाषणं तान् कुर्वत्याः प्रवीणायाः रसिकायाः नवीनायाः खञ्जनं शोभनम् अञ्जनं स्मरस्य कामस्य रञ्जनं दीपनमित्यर्थः ॥ १४ ॥

(च) सागसि सापराधे। प्रेयसि कान्ते।

स्वापे इति। स्वापे निद्रायां प्रियस्य कान्तस्य आननविलोकनस्य मुखदर्शनस्य हानिरेव क्षतिरेव, स्वापच्युतौ निद्रापगमे प्रियस्य करग्रहणप्रसङ्गः हस्तग्रहणोपक्रमः। सरोरुहमुखी पद्ममुखी इत्थं

पतिमात्रविषयकेलिकलापकोविदा प्रगल्भा। वेश्यायाश्च पतिमात्रविषयकत्वाभावान्नातिव्याप्तिः। अस्याश्चेष्टा रतिप्रीतिः आनन्दात् सम्मोहः।

प्रथमं यथा।

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं
निष्पीड्याधरबिम्बमम्बरमपाकृष्य व्युदस्यालकम्।
देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥ १६॥

परिचिन्तयन्ती सती स्वापं निद्रां विधातुं गन्तुमपि हातुं त्यक्तुमपि प्रपेदे प्रपन्ना बभूव उभयोरितिकर्त्तव्यताविमूढ़ा आसीदिति यावत्। वसन्ततिलकं वृत्तं, सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १५ ॥

संस्पृश्येति। स्तनं संस्पृश्य संमर्द्येति यावत् वदनं मुखम् आकलय्य विचुम्ब्येत्यर्थः कण्ठस्थलं संश्लिष्य समालिङ्ग्य अधरबिम्बं निष्पीड्य दंशित्वेत्यर्थः अम्बरं वसनम् अपाकृष्य स्खलयित्वेत्यर्थः अलकं चूर्णकुन्तलं व्युदस्य प्रोत्क्षिप्य प्रिये कान्ते अम्बुजिनीपतेः पद्मिनीकान्तस्य देवस्य सूर्य्यस्येत्यर्थः समुदयं सम्यक् उदयं जिज्ञासमाने ज्ञातुमिच्छति सति वामाक्षी सुनयना कान्ता वसनाञ्चलैः श्रवणयोः कर्णयोः स्थितमित्यध्याहार्य्यं नीलोत्पलं निह्नुते गोपायति। अनुद्घाटितद्वारे गृहे सूर्य्यरश्मेरप्रवेशात् सूर्य्य उदेति न वेति प्रातः प्रियस्य सन्देहे सूर्य्योदये नीलोत्पलस्य निमीलनदर्शनात् सूर्य्योदयो जात इति निश्चये सति मामेतादृशीं विहाय पतिर्गच्छात् निःसरिष्यतीति धिया नीलोत्पलनिह्नवः कृत इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

द्वितीयं यथा।

नखक्षतमुरस्स्थलेऽधरतले रदस्य क्षतं
च्युता वकुलमालिका विगलिता च मुक्तावली।
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्व च रतिः क्व च क्व च तवालि! शिक्षाविधिः ॥१७॥

मध्याप्रगल्भे मानावस्थायां प्रत्येकं त्रिविधे धीरा अधीरा धीराधीरा च।

व्यङ्गकोपप्रकाशिका धीरा। अव्यङ्गकोपप्रकाशिका अधीरा। व्यङ्गाव्यङ्गकोपप्रकाशिका धीराधीरा। इयं तु विशेषः।

मध्याधीरायाः कोपस्य गीर्व्यञ्जिका। अधीरायाः परुषवाक्। धीराधीरायास्तु वचनरुदिते कोपप्रकाशके।

प्रौढ़ाधीरायास्तु रत्यौदास्यम्। अधीरायास्तु तर्जनताड़नादिः। धीराधीरायास्तु रत्यौदास्यं तर्जनताड़नादि च कोपस्य प्रकाशकमिति।

नखक्षतेति। हे आलि! सखि! मया रतान्तसमये सुरतावसाने उरस्स्थले पयोधरे इति यावत् नखक्षतम्, अधरतले रदस्य दन्तस्य क्षतं, च्युता वकुलमालिका, विगलिता स्खलिता मुक्तावली मुक्ताहारश्च, एतत् सकलम् आलोकितं दृष्टं ज्ञातमिति यावत्, किन्तु स्मृतिः स्मरणं क्व च, रतिः सुरतं क्व च, तव शिक्षाविधिश्च क्व च, कान्तं प्रति त्वया एवमेव वर्त्तितव्यमिति तवादेशः सुरतसमये सम्यक् विस्मृतः इदानीञ्च नखक्षतादिकं यत् यत् भर्त्राकृतं तदपि न मया विदितमिति भावः। पृथ्वीछन्दः ॥१७॥

यत्तु धीराभेदः स्वीयायामेव न तु परकीयायामिति प्राचीनलिखनं तदाज्ञामात्रं धीरत्वमधीरत्वं तदुभयं वा माननियतं, परकीयाया अपि मानस्तेत्तासामप्याव-श्यकत्वम्। मानस्य स्वीयायामेव न तु परकीयाया इति वक्तुं न शक्यते ।

मध्याधीरा यथा ।

लीनालिपुञ्जव्रततीनिकुञ्जे
स्फारा बभूवुः श्रमवारिधाराः ।
देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥१८॥

मध्यमा अधीरा यथा ।

जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा
निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गगणे निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेव मां हुतवहक्रूरैः शरैः कृन्तति ॥१९॥

लीनेति । लीनानि सङ्गतानि अलिपुञ्जानि भृङ्गनिचयाः यत्र तादृशे व्रततीनिकुञ्जे लतामण्डपे इत्यर्थः भवतः देहे श्रमवारिधाराः परिश्रमस्वेदबिन्दवः स्फाराः प्रभूताः बभूवुः । अतः नलिनीदलेन पद्मिनीदलेन पद्मिनीपलाशेन धीरं मन्दं समीरं वायुं विधातुं सञ्चालयितुमिति यावत् समीहे सम्यक् यते इत्यर्थः । इन्द्रवज्रावृत्तम् ॥ १८ ॥

जात इति । ते तव निशि रात्रौ जागरः जातः, पुनः किन्तु मम नेत्राम्बुजे नयनकमले शोणिमा रक्तिमा, भवता प्रविततं सुवि-स्तृतं प्रभूतमित्यर्थः मधु निष्पीतं निःशेषेण पीतं, मे मम मनः व्याघू-

मध्याधीराधीरा यथा ।

कान्तानुरागचतुरोऽसि मनोहरोऽसि
नाथोऽसि किञ्च नवयौवनभूषितोऽसि ।
इत्थं निगद्य सुदृशा वदने प्रियस्य
निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥२०॥

प्रगल्भाधीरा यथा ।

नो तल्पं भजसे न जल्पसि सुधाधारानुकारा गिरो
दृक्पातं कुरुषे न वा परिजनक्रोधप्रकाशच्छलात् ।
इत्थं केतकगर्भगौरि ! दयिते ! कोपस्य सङ्गोपनं
तं स्यादेव न चेत् पुनः सहचरी कुर्वीत साचि स्मितम् ॥२१॥

र्षितं, त्वया भ्राम्यन् भृङ्गगणः यत्र तादृशे निकुञ्जभवने लतामण्डपे श्रीफलं बल्वं चोरितमिति यावत्, पुनः किन्तु पञ्चेषुः कामः हुतवह-क्रूरैः अनलदारुणैः शरैः मामेव हन्ति विध्यतीति यावत् । अत्र जागर एव नेत्रलौहित्यहेतुः मधुपानमेव मनोघूर्णनकारणं चौर्य-मेव प्रहारहेतुरित्येतत्त्रयस्य एकाधारवर्त्तित्वमेव युक्तं किन्त्वत्र तद्-विपरीतमिति कार्य्यकारणयोर्भिन्नदेशावस्थानात् असङ्गतिरलङ्कारः । तदुक्तं दर्पणे । कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति । शार्दू-लविक्रीडितं वृत्तम् ॥१८॥

कान्तानुरागेति । हे नाथ ! त्वं कान्ताया अनुरागे प्रणय-सम्पादने चतुरः निपुणः असि, मनोहरः मनोरञ्जनः असि, नाथः प्रभुरसि, किञ्च नवयौवनेन भूषितः अलङ्कृतः असि, सुदृशा सुनयनया कामिन्या इत्थं निगद्य उक्त्वा निःश्वस्य प्रियस्य वदने बाष्पेण लुलिताः व्याकुलाः दृगन्ताः अपाङ्गावलोकितानीत्यर्थः निहिताः अर्पिताः । वसन्ततिलकं वृत्तम् ॥ २० ॥

नो इति । हे केतकगर्भगौरि ! दयिते प्रिये ! तल्पं शय्यां

प्रगल्भाधीरा यथा।

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्यावासमाशङ्कमाना।
गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयवल्गत्कान्तिभाजा करेण॥२२॥

प्रगल्भाधीराधीरा यथा।

तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया
काकुव्याकुलवाचि साचिहसितस्फूर्यत्कपोलश्रिया।

नो भजसे न आगच्छसीत्यर्थः, सुधाधाराम् अनुकुर्वन्तीति तथोक्ताः गिरः वाचः न जल्पसि नालपसि, परिजनेषु क्रोधप्रकाशच्छलात् दृक्पातं दृष्टिपातं मयीति शेषः न वा कुरुषे, इत्थं ते तव कोपस्य सङ्गोपनं स्यादेव, चेत् यदि पुनः सहचरी साचि वक्रं स्मितं न कुर्वीत। तव सख्याः स्मितेनैव कोपः प्रकटतां गत इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २१॥

प्रतिफलमिति। अचलकन्या पार्वती इन्दोः चन्द्रस्य पतिललाटस्थस्येति भावः कलायां स्वीयं प्रतिफलं प्रतिबिम्बम् अवलोक्य हरस्य शिरसि परस्य अन्याङ्गनाजनस्येति यावत् आवासं स्थितम् आशङ्कमाना मन्यमाना सती कम्पेन कोपजनितेनेति भावः प्रचलयोः चञ्चलयोः वलययोः वल्गन्ती स्फुरन्ती या कान्तिः तां भजते इति तथोक्तेन करेण गिरिशं तर्जयामास। मालिनीवृत्तम्। अत्र भ्रान्तिमानलङ्कारः। तदुक्तं, साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति॥ २२॥

तल्पेति। प्रियतमे कान्ते तल्पस्य शय्यायाः उपान्तं प्रान्तं समीपमित्यर्थः उपेयुषि आगते काकुभिरपराधजनितस्खलत्कण्ठस्वरैरिति भावः, भिन्नकण्ठध्वनिधीरैः काकुरित्यभिधीयते इति दर्पणः।

हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-
प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥२३॥

धीरादित्रय एते द्विधा। ज्येष्ठा कनिष्ठा च। अधीरा ज्येष्ठा कनिष्ठा च। धीराधीरा ज्येष्ठा कनिष्ठा च। परिणीतात्वे सति भर्त्तुरधिकस्नेहा ज्येष्ठा। परिणीतात्वे सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा। अधिकस्नेहासु न्यूनस्नेहासु सामान्यवनितासु नातिव्याप्तिः। परिणीतपादेन व्यावर्त्तनात् नापि परकीयायां भर्तृपदव्यावृत्तेः।

धीरा ज्येष्ठा कनिष्ठा यथा।

एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रार्त्तयो-
रेकां पल्लवितावगुण्ठनवतीमुत्कन्धरो दृष्टवान्।
अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलि-
व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं कृतवान् ॥२४॥

व्याकुला दीना वाक् यस्य तादृशे, हस्ते न्यस्तः करो येन तथाभूते स्वकीयहस्ते इत्यर्थः सति मृगदृशा कान्तया, वक्रीकृता ग्रीवा यया तथाभूतया, साचिहसितेन कुटिलहासेन स्फूर्जन्ती विकसन्ती कपोलयोः श्रीः शोभा यस्याः तथोक्तया सत्या, लाक्षारसेन अलक्तकद्रवेण क्षालिता धौता या प्रोष्ठी शफरी, प्रोष्ठी तु शफरी द्वयोरित्यमरः। तस्याः पृष्ठस्य मयूखवत् मांसला पुष्टेत्यर्थः रुक् कान्तिर्यासां तथाभूताः रक्ता इति यावत् दृष्टयः विस्फारिताः पातिताः। शार्दूलविक्रीडितं वृत्तम् ॥२३॥

एकस्मिन्निति। एकस्मिन् शयने शय्यायां निद्रार्त्तयोः निद्राकुलयोः सरोरुहदृशोः पङ्कजाक्ष्योः कान्तयोरिति शेषः, एकां कान्तामिति शेषः पल्लवितं विस्तृतं यत् अवगुण्ठनं [illegible] विधाय धूर्त्तवरः

अधीरा ज्येष्ठा कनिष्ठा यथा ।

अन्तःकोपकषायिते प्रियतमे पश्यन् घने कानने
पुष्पस्यावचयाय नम्रवदनामेकां समायोजयन् ।
अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेराभाधरपल्लवां नववधूमन्यां समालिङ्गति ॥२५॥

धीराधीरा ज्येष्ठा कनिष्ठा यथा ।

धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्ति रुचिरं मुष्टिद्वये न्यस्तवान् ।
एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रियो
हस्ताहस्तिमिषात् स्पृशन् कुचतटीमानन्दमाविन्दति ॥२६॥

उद्ग्रीवः सन् दृष्टवान् । अन्यस्याः कान्तायाः सविधं समीपं समेत्य निभृतं गूढं यथा तथा व्यालोलानां चपलानां हस्ताङ्गुलीनां व्यापारैः वसनाञ्चलं चपलयन् स्खलयन्नित्यर्थः स्वापच्युतिं निद्राभङ्गं क्लृप्तवान् कृतवान् कान्त इति शेषः ॥ २४ ॥

अन्तरिति । घने निविड़े कानने अन्तःकोपेन कषायिते कलुषिते प्रियतमे कान्ते पश्यन् पुष्पस्य अवचयाय एकां कान्तां नम्रवदनाम् अवनतमुखीं समायोजयन् कारयन् अर्द्धोन्मीलितयोः लोचनयोः अञ्चलेन अपाङ्गेनेति भावः यः चमत्कारः वैचित्र्यं तेन अभिरामं मनोहरम् आननं यस्याः तथाभूतां स्मेराभः विकसितप्रभः अधरपल्लवः यस्याः तथोक्ताम् अन्यां नववधूं समालिङ्गति । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

धैर्य्याधैर्य्येति । प्रियः कान्तः धैर्य्याधैर्य्यपरिग्रहग्रहिलयोः धीराधीरयोरिति भावः एणीदृशोः कान्तयोः प्रीतये प्रीत्यर्थम् अनन्तकान्ति [illegible] रुचिरं मनोज्ञं रत्नद्वन्द्वं मणिद्वयं

अप्रकटितपरपुरुषानुरागा परकीया । सा च द्विविधा परोढ़ा कन्यका चेति । कन्यायाः पित्राद्यधीनत्वात् परकीया अस्या गुप्ता एव सर्वा चेष्टा ।

परोढ़ा यथा ।

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलादरविदलदेलापरिमलः ।
इयं प्रावृट् धन्या नवजलदविन्यासरुचिरा
पराधीनं चेतः सखि ! किमपि कर्तुं मृगयते ॥२७॥

गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेवान्तर्भावः ।

गुप्ता त्रिविधा वृत्तसुरतगोपना वर्त्तिष्यमाणसुरतगोपना वर्त्तमानसुरतगोपना च इति ।

न्यस्तवान् अर्पितवान् । प्रथमतः एकस्याः प्रियाया इति शेषः करे रत्नं कलयन् ददत् इत्यर्थः परस्याः प्रियायाः हस्ताहस्तिमिषात् हस्ताहस्तिच्छलात् कुचतटीं स्तनतटीं स्पृशन् आनन्दम् आविन्दति अनुभवति । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

अयमिति । अयं रेवाकुञ्जः नर्मदातटनिकुञ्जदेशः कुसुमशरस्य कामस्य सेवासमुचितः कामोपभोगसमुचितः । अयं समीरः पवनः वेलासु तटेषु दरं मन्दं विदलन् प्रसरन् एलानां परिमलः यत्र तथाभूतः । इयं प्रावृट् वर्षाकालः धन्या प्रशंसनीया नवानां जलदानां विन्यासेन अवस्थानेन बाढ़म् रुचिरा मनोहारिणी । अतः हे सखि ! पराधीनं चेतः किमपि स्वाभिमतपुरुषप्रणयमिति भावः कर्त्तुं मृगयते अन्विष्यति कामयते इत्यर्थः । [illegible] ॥२७॥

वितथमपि यथा ।

श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्नद्य न मन्दिरे सखि ! पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥२८॥

वाग्विदग्धा यथा ।

निविडतमतमालमल्लिवल्ली-
विकचिलराजिविराजितोपकण्ठे ।
पथिक ! समुचितस्तवाद्य तीव्रे
सवितरि तत्र सरित्तटे निवासः ॥२९॥

श्वश्रूरिति । हे सखि ! श्वश्रूः क्रुध्यतु कोपं करोतु कुप्यत्विति पाठान्तरं, सुहृदः बान्धवः गुरव इति पाठान्तरं विद्विषन्तु विद्वेषं कुर्वन्तु, यातरः निन्दन्तु निन्दां कुर्वन्तु वा । अद्य तस्मिन् मन्दिरे शयनागारे इति यावत् मया पुनः स्वापः शयनं न विधेयः न कर्त्तव्यः । हेतुमाह आखोरिति, कोणकुहरात् गृहकोणविवरात् आखोः मूषिकस्य आक्रमणाय उत्फालम् उल्लम्फनम् आतन्वती कुर्वती मार्जारी खरैः तीक्ष्णैः नखरैः मे मम कां कां दुर्दशां दुरवस्थां न कृतवती ? अपि तु कृतवत्येवेत्यर्थः । पतिसम्भोगे नखक्षतादिकं गोप्यते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

निविडेति । हे पथिक ! तीव्रे प्रचण्डे सवितरि सूर्ये मध्याह्नकाले इति भावः निविडतमानाम् अतिसान्द्राणाम् एतेनातपवारणयोग्यत्वं व्यज्यते । तमालानां मल्लीनां वल्लीनां लतानां विकचिताभिः विकसिताभिः राजिभिः एतेन सम्भोगयोग्यत्वं व्यज्यते । राजितम् शोभितम् उपकण्ठं यस्य तादृशे तत्र सरि-

विदग्धा द्विविधा। वाग्विदग्धा, क्रियाविदग्धा।

क्रियाविदग्धा यथा।

दासाय भवननाथे बदरीमपनेतुमादिशति।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिःक्षिपति ॥३०॥

लक्षिता यथा।

यदभूतं तदभूतं यद् भूयात्तदपि वा भूयात्।
यद्भवति तद्भवति वा विफलस्तव कोपगोपनोपायः ॥३१॥

कुलटा यथा।

एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वहन्ति न सृजन्त्येते पुनर्नायकान्।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः! कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥३२॥

तटे नदीतीरे तव अद्य निवासः समुचितः, एतादृशे सम्भोगोचिते प्रदेशे त्वं मया सह विहरन् विश्रामसुखं लभस्वेति भावः। पुष्पिताग्रावृत्तम् ॥ २९ ॥

दासायेति। भवननाथे स्वपतौ दासाय बदरीम् अपनेतुम् अपसारयितुं आदिशति सति हरिणाक्षी हेमन्ते पयसि कुठारं विनिःक्षिपति ॥ ३० ॥

यदभूतमिति। यत् अभूतम् अवृत्तं तत् अभूतम् अवृत्तमेवेत्यर्थः, यत् भूयात् भविष्यतीत्यर्थः तदपि भूयाद्वा भविष्यत्येवेत्यर्थः, यत् भवति तत् भवति वा भवत्वेवेत्यर्थः, तव कोपस्य गोपनोपायः विफलः अकिञ्चित्कर इत्यर्थः ॥ २१ ॥

एते इति। एते अम्भोधराः वारिकणान् किरन्ति वर्षन्ति पुरुषान् न वर्षन्ति। शैलाः पर्वताः शाद्वलं नवतृणम् उद्वहन्ति पुनः

ब्रह्मैव सर्वमितरं न हि वस्तु किञ्चित्
जारे यथा गृहपतौ च रुचिस्तथा मे।
तस्मादहो न हि परापरभेदबुद्धिः
मूढाः किमर्थमसतीति कदर्थयन्ति ॥२३॥

पृथ्वी तावत्त्रिकोणा विपुलनदनदीग्रामरुद्धं तदर्द्धं
तत्राप्यर्द्धं युवत्यः शिशुगतवयसो रोगिणो योगिनश्च।
लज्ज्यास्तत्रापि मान्याः श्वशुरपितृमुखाः सन्ति शेषाः कियन्तो
मिथ्यावार्त्ता ममायं मुखरमुखरवः पुंश्चली पुंश्चलीति ॥२४॥

किन्तु एते नायकान् न त्यजन्ति न जनयन्ति। त्रैलोक्ये त्रिलोकी-तले तरवः फलानि सुवते उत्पादयन्ति जनान् नैव आरभन्ते न जनयन्तीत्यर्थः। हे धातः! कातरं दीनं यथा तथा याचयामि अर्थीमि त्वामिति शेषः त्वया कुलटाहेतोः दुश्चारिणीनां भोगलालसा-परितृप्त्यर्थमिति यावत् किं कृतं? न किमपीत्यर्थः। शार्दूलविक्री-डितं वृत्तम् ॥ २२ ॥

ब्रह्मेति। सर्वं जगत् ब्रह्मैव ब्रह्ममयमेव इतरं ब्रह्मातिरिक्तं किञ्चिदपि वस्तु न हि नैव विद्यते इति शेषः। अहो खेदे, तस्मात् कारणात् परापरभेदबुद्धिः अयं परः अयं न परः आत्मीय इत्यर्थः इत्येवं ज्ञानमित्यर्थः मम न हि अस्तीति शेषः, तेन च मे मम जारे उपपतौ यथा, तथा गृहपतौ स्वामिनि मे मम रुचिः प्रणय इत्यर्थः, जारो यथा मया सम्भुज्यते गृहपतिरपि तथैव समदर्शित्वादिति भावः। अतः मूढाः जनाः असतीति किमर्थं कदर्थयन्ति निन्दन्ति मामिति शेषः ॥ २३ ॥

पृथ्वीति। पृथ्वी तावत् त्रिकोणा त्र्यस्रा न तु चतुरस्रा यथा बहवो धार्यन्ते इति भावः, तदर्द्धं तस्याः पृथिव्या अर्द्धं विपुलैः बहुभिः नदैः नदीभिः ग्रामैः शिखाभिः पर्वतैरित्यर्थः रुद्धम्

अन्यान्तरे अनुशयाना यथा । वृत्तस्थानविघटनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केतस्थाने भर्तुर्गमनानुमानेन चानुशयाना भवति । प्रत्येकमुदाहरणानि । प्रथमं यथा ।—

समुपागतवति चैत्रे निपतति पत्रे लवङ्गलतिकायाः ।
सुदृशः कपोलपाली शिव शिव तालीद्युतिं धत्ते ॥ २५ ॥

व्याहृतम् । तत्रापि अवशिष्टे पृथ्वीभोगेऽपि युवत्यः अहं यावन्तः पुरुषास्तावन्त एव युवत्य इति यावत्, तेषु च पुरुषेषु शिशवा बालकाः गतवयसः स्थविराः वृद्धा इत्यर्थः रोगिणः योगिनः सन्न्यासिनश्च त्याज्याः वर्जनीयाः नैव भोग्या इति भावः, तत्रापि स्वस्थेषु तरुणेष्वपीत्यर्थः श्वशुरपितृसखाः श्वशुरादयः पित्रादयश्च मान्याः गुरवः इति यावत् न भोगे स्पृहणीया इति भावः, शेषाः कियन्तः सन्ति तरुणा इति शेषः, अतः मम पुंश्चली पुंश्चलीति अयं सुखराणां वाचालानां सुखरवः प्रवाद इति यावत् मिथ्याभूतः अलीकः । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ २४ ॥

समुपागतवतीति । चैत्रे मासि समुपागतवति सति तथा लवङ्गलतिकायाः पत्रे निपतति सति सुदृशः चारुनयनायाः कपोलपाली गण्डदेशः तालीद्युतिं तालफलकान्तिं मालिन्यमिति भावः धत्ते धारयति शिवशिवेति खेदे । वसन्ते लवङ्गिकालतामण्डपे उपनायकागमनसङ्केतितायां यथानिर्दिष्टे समये तत्र लवङ्गिकापत्रपातेन जारागमनं निश्चाय अयं तत्र गन्तुमशक्ततया कपोलमालिन्यमिति भावः । आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्येति तल्लक्षणात् ॥ २५ ॥

निद्रालुकेकिमिथुनानि कपोतपीत-
व्याधूतनूतनमहीरुहपल्लवानि ।
तत्रापि तन्वि! न वनानि कियन्ति सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयासि ॥३६॥

कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ।
निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥३७॥

मुदिता यथा ।

गोष्ठेषु तिष्ठति पतिर्बधिरा ननन्दा
नेत्रद्वयस्य न च पाटवमस्ति यातुः ।

निद्रालुभिति । हे तन्वि कृशाङ्गि ! निद्रालूनि केकिनां मयूराणां मिथुनानि युगलानि येषु तथाभूतानि एतेन जनसञ्चार-राहित्यं व्यज्यते । कपोतैः पीताः आस्वादिताः व्याधूताः कम्पिताः विक्षिप्ता वा नूतनाः महीरुहाणां वृक्षाणां पल्लवाः येषु तथोक्तानि एतेन मनोहरत्वं व्यज्यते । कियन्ति वनानि न सन्ति न विद्यन्ते तत्रापि रत्यमखेदहेतावपि खिद्यस्व, प्रियतमस्य गृहं तादृशखेदहेतु-मिति भावः न प्रयासि न गच्छसि ? सख्या नायिकां प्रत्युक्तिरियम् । वसन्ततिलकं वृत्तम् ॥ ३६ ॥

कर्णेति । कर्णे कल्पितया रसालमञ्जर्या चूतमञ्जर्या पिञ्जरीकृतं रञ्जितमिति यावत् कपोलमण्डलं यस्य तथाभूतः, निष्पतन् निर्गच्छन् स्वसान्निध्यादिति भावः मधुरिपुः कृष्णः नयनयोर्वारिधारा यस्याः तथाभूतया राधया निरीक्ष्यते विरहादिति भावः । रथोद्धता-वृत्तं, रात् परैर्नरलगैरथोद्धतेति लक्षणात् ॥ ३७ ॥

गोष्ठेष्विति । पतिः गोष्ठेषु गोचारणस्थानेषु तिष्ठति नात्र तस्मात् यास्यति भावः, ननन्दा पतिभगिनी या स्वगृहे तिष्ठतीति

इत्थं निगद्य तरुणी कुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥२८॥

कन्यका यथा ।

किञ्चित्कुञ्चितहारयष्टिसरलभ्रूवल्लि साचिस्मितं
प्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यन्तकर्णोत्पलम् ।
अङ्गुल्या स्फुरदङ्गुलीयकरुचा गण्डस्य कण्डूयनं
कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥२९॥

वित्तमात्रोपाधिकसकलपुरुषाभिलषा सामान्यवनितेति ।
नन्वग्निमित्रे क्षितिपतावनुरक्तायामैरावत्यामप्राप्तिः । तत्र

भावः बधिरा श्रोत्रेन्द्रियवर्जिता एतेन संलापे नास्ति शङ्केति भावः, यातुः देवरपत्न्या इत्यर्थः नेत्रद्वयस्य पाटवं दृष्टिक्षमत्वमिति भावः नास्ति च अस्वत्वादिति भावः एतेन तस्या अपि स्वच्छ-स्थिताया न भीतिरिति भावः । तरुणी इत्थं निगद्य उक्त्वा कुच-कुम्भयोः सीम्नि सीमायां स्तनद्वयोपरीति यावत् उदञ्चितम् उत्थितं रोमाञ्चकञ्चुकं रोमाञ्चरूपं स्तनावरणम् आततान विस्तारयामास । त्वं निःशङ्कं मया रमस्वेति कयाचिदुपनायकं प्रति भण्यते । वसन्त-तिलकं वृत्तम् ॥ २८ ॥

किञ्चिदिति । किञ्चित् ईषत् कुञ्चिता हारयष्टिरिव सरला भ्रूवल्लिः भ्रूलता यस्मिन् तत्, साचि वक्रं स्मितं मन्दहसितं यस्मिन् तत्, प्रान्ते भ्रान्ता विलोचनस्य नयनस्य द्युतिरिव कान्तिरिव द्युति-र्यस्य तादृशं भुजापर्य्यन्तं करपतितं कर्णोत्पलं यस्मिन् तत् यथा तथा स्फुरन्ती अङ्गुलीयकस्य रुक् कान्तिर्यस्याः तथाभूतया अङ्गुल्या गण्डस्य कण्डूयनं कुर्वाणा नृपकन्यका राजकन्या सुकृतिनं धन्यं जन-मित्यर्थः सव्याज छलेनेत्यर्थः आलोकते अवलोकयति । शार्दूलविक्री-ड़ितं वृत्तम् ॥ २९ ॥

वित्तमात्रोपाधेरभावादिति चेत् मैवम्। सापि काश्मीरहीर-
कादिदातरि महाराजेऽनुरक्ता न तु महाहर्षितेनावगम्यते।
तत्र वित्तमात्रोपाधिरिति सामान्यवनिता यथा।

दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः।
आनन्दाम्बुपयांसि मुञ्चति मुहुर्मालामिषात् कुन्तलो
दृष्टिः किञ्च धनागमं कथयितुं कर्णान्तिकं गच्छति ॥४०॥

अन्यसम्भोगदुःखिता यथा।

त्वं दूति! निरगाः कुञ्जं न तु पापीयसो गृहम्।
किंशुकाभरणो देहो दृश्यते कथमन्यथा ॥४१॥

दृष्ट्वेति। प्राङ्गणस्य सन्निधौ बहुधनं दातारम् अभ्यागतं दृष्ट्वा कुरङ्गीदृशः मृगाक्ष्याः वक्षोजौ पयोधरौ परस्परम् आश्लेषमिव आलिङ्गनमिव तनुतः कुरुतः तत्सम्भोगार्थम् आनन्देन स्फुरत इति भावः। कुन्तलः केशः मालामिषात् माल्यव्याजात् मुहुः पुनः पुनः आनन्दाम्बुपयांसि हर्षजनितनेत्रजलानि मुञ्चति वर्षति। किञ्च दृष्टिः धनागमम् एतावत् धनमस्मात् प्राप्यते इत्येवमित्यर्थः कथयितुं कर्णान्तिकं गच्छति कटाक्षेण तं साभिलाषं निरीक्षते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

त्वमिति। हे दूति! त्वं कुञ्जं लतादिपिहितं सङ्केतस्थानमिति यावत् निरगाः गतवती असीत्यर्थः पापीयसः अतिनिष्ठुरस्येति भावः तस्येति शेषः गृहं न तु नैवेत्यर्थः। अन्यथा कथं देहः तवेति शेषः किंशुकं पलाशं पुष्पम् आभरणं यस्य तथाभूतः दृश्यते। मयोक्तं त्वं नायकगृहं गच्छेति त्वन्तु तदलब्ध्वा कुञ्जं गत्वा मानवेन केनचित् सम्भुक्ता आगतेति कस्याश्चित् दूतीं प्रति साक्षेपवचनम्। अनुष्टुप्वृत्तम् ॥ ४१ ॥

वक्रोक्तिगर्विता द्विविधा। प्रेमगर्विता सौन्दर्य्यगर्विता चेति।

प्रेमगर्विता यथा।

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमासि ब्रवीमि।
सखि तनुनयनान्तरालभीरुः
कलयति मे न भूषणानि कान्तः ॥४२॥

सौन्दर्य्यगर्विता यथा।

कलयति कमलोपमान मक्ष्णोः
प्रथयति वाचि सुधारसस्य साम्यम्।
सखि! कथय किमाचरामि कान्ते
समजनि तत्र सहिष्णुतैव दोषः ॥४३॥

वपुषीति। प्रभुः कान्तः तव वपुषि अङ्गे रत्नभूषां रत्नालङ्कारं तनोति रत्नालङ्कारेण त्वां सज्जयतीति भावः यतः त्वं धन्यतमा पुण्यवती असि इति ब्रवीमि कथयामि, हे सखि! मे मम कान्तः तनोः अङ्गस्य नयनान्तरालात् नयनव्यवधानात् भीरुः सन् मे मम आभरणानि न कलयति न परिधापयति आभरणेन अङ्गस्य आच्छादनं भवेत् ततस्वाङ्गदर्शने व्याघातः स्यादिति भिया मदङ्गं नालङ्कारेण सज्जयतीति भावः ॥ ४२ ॥

कलयतीति। हे सखि! अक्ष्णोः नयनयोः कमलोपमानं कलयति त्वदीयं नयनं कमलोपममिति कीर्त्तयतीति भावः, वाचि वचने सुधारसस्य अमृतास्वादस्य साम्यं सादृश्यं प्रथयति तव वचनं सुधासवर्णमिति वदतीति भावः, कान्ते किम् आचरामि किं करोमि कथय, तत्र तद्दुषयोत्कर्षः सहिष्णुतैव दोषः समजनि जातः सात्त्वत-

मानवती यथा । प्रियापराधसूचको मानः । स च लघुर्मध्यमो गुरुः । अल्पापनेयो लघुः । कष्टतयापनेयो मध्यमः, कष्टतरापनेयो गुरुः । असाध्यस्तु रसाभासः । अन्यस्त्रीदर्शनादिजन्मा लघुः । गोत्रस्खलनादिजन्मा मध्यमः । अपरस्त्रीसम्भोगादिजन्मा गुरुः । अन्यथा सिद्धकुतूहलाद्यपनेयो लघुः । अन्यथावादशपथाद्यपनेयो मध्यमः अन्यस्त्रीदर्शनादिजन्मा । चरणपातभूषणदानाद्यपनेयो गुरुः ।

परस्त्रीदर्शनादिजन्मा यथा ।

स्वेदाम्बुभिः क्व च न पिच्छलमङ्गभूमौ
शातोदरि ! क्व च न कण्टकितं विभाति ।
अन्यां विलोकयति भाषयति प्रियेऽपि
मानः क्व दास्यति पदं तव तन्न विद्मः ॥४४॥

येन मदीयनयनस्य वचसश्च कमलात् सुधातश्च हीनत्वव्यञ्जनात् मम क्रोधे जातेऽपि सहिष्णुतादोषेण तं प्रति मया न किञ्चिदुक्तमिति भावः । पुष्पिताग्रावृत्तम् ॥ ४३ ॥

स्वेदाम्बुभिरिति । हे शातोदरि कृशोदरि ! प्रिये तवेति शेषः अन्यां नायिकां विलोकयति भाषयति आलापयति च सति अङ्गभूमौ अङ्गप्रदेशे तवेति शेषः क्व च कुत्रापि स्वेदाम्बुभिः कोपजनिताभिरिति भावः न पिच्छलं न आर्द्रमित्यर्थः, तथा क्व च कुत्रापि न कण्टकितं न रोमाञ्चितं विभाति, अतः मानः क्व कुत्र पदं दास्यति कस्मिन्नपराधे ते मानो भविष्यतीत्यर्थः तत् न विद्मः न जानीमः । वसन्ततिलकं वृत्तम् ॥ ४४ ॥

गोत्रस्खलनादिजन्मा यथा ।

यद्गोत्रस्खलनं तव भ्रमं यदि न मन्यसे ।
रोमालिव्यालसंस्पर्शं शपथं तन्वि ! कारय ॥४५॥

अपराङ्गनासङ्गादिजन्मा यथा ।

दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः ।
सुदृशो नयनस्य कोणभासः
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥४६॥

एताः षोडशापि अष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः । प्रोषितभर्तृका खण्डिता कलहान्तरिता विप्रलब्धा उत्कण्ठिता वासकसज्जा स्वाधीनपतिका अभिसारिका चेति गणनया अष्टाविंशत्यधिकशतं भेदा भवन्ति ॥१२८॥ तासा-

यदीति । हे तन्वि कृशाङ्गि ! यत् गोत्रस्य नाम्नः स्खलनं भ्रमेति अपः तव नाम्नि कीर्त्तितव्ये यन्मया अपरस्या नाम कीर्त्तितमिति भावः तत् यदि भ्रमं न मन्यसे भ्रान्त्या मया तत् कीर्त्तितमिति बुद्धा न क्षमसे इति भावः तदा रोमाली रोमावली एव व्यालः सर्पः तस्य संस्पर्शं शपथं दिव्यं कारय । यदि मम विश्वासो न चेत् तव रोमावलीरूपसर्पस्पर्शनरूपशपथेन यदि मम पापं स्यात् तदा सर्पो मां दंक्ष्यति अन्यथा नेति परीक्षया मां शोधयेति भावः । अनुष्टुब्वृत्तम् ॥ ४५ ॥

दयितस्येति । दयितस्य कान्तस्य भालदेशं ललाटं सपत्न्याः चरणस्य अलक्तकेन लाक्षारसेण पिञ्जरं शोणं निरीक्ष्य सुदृशः सुनयनायाः कान्तायाः नयनस्य कोणभासः कोणप्रभाः श्रुतिमुक्ताः कर्णाच्युताः शिखरोपमाः कर्णोपलनिभा इत्यर्थः बभूवुः क्रोधेन कटाक्षे शरो निक्षिप्त इति भावः ॥ ४६ ॥

मप्युत्तमाधममध्यमागणनया चतुरशीतियुतं शतत्रयं भेदा भवन्ति ॥३८४॥ यत्तु तासां दिव्या अदिव्या दिव्यादिव्यादित्रयगणनया द्विपञ्चाशदधिकशतयुतसहस्रभेदा भवन्ति ॥ ११५२॥ तत्र दिव्याः शच्यादयः । अदिव्या मालत्यादयः । दिव्यादिव्या द्रौपद्यादयः इति । तत्र अवस्थायां भेदेनैव नायिकानामपि भेदात् । जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात् ।

तथाहि दिव्यादिभेदा नायकानामपि सन्ति । यथा, दिव्या इन्द्रादयः, अदिव्या माधवादयः, दिव्यादिव्या अर्जुनादयः । यद्यपि मुग्धायां यथा धीरादिभेदाभावस्तथाविधप्रज्ञासामग्र्यभावात् तथा अष्टविधत्वाभावो भवितुमर्हति । तथापि प्राचीनलिखनानुरोधेन नवोढामप्यवलम्ब्य ते भेदा अवगन्तव्याः । देशान्तरगते प्रेयसि सन्तापव्याकुला प्रोषितभर्तृका । उत्कण्ठिता कलहान्तरिता विप्रलब्धानां पतिर्देशान्तरगतो न भवतीति तत्रातिव्याप्तिः । अस्याश्चेष्टा दशावस्था ।

मुग्धा प्रोषितभर्तृका यथा ।

दुःखं दीर्घतमं वहन्त्यपि सखीवर्गाय नो भाषते<br>
शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया ।<br>
कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न वाष्पोदकं<br>
सन्तापं सहते यदम्बुजमुखीतद्वेद चेतोभवः ॥४७॥

दुःखमिति । दीर्घतमम् अतिमहत् दुःखं वहन्ती अपि सखीवर्गाय सहचरीगणाय नो भाषते न कथयति दुःखवार्त्तामिति शेषः । शैवालैः

मध्या प्रोषितभर्तृका यथा ।

वासस्तदेव वपुषो वलयं तदेव
हस्तस्य सैव जघनस्य च रत्नकाञ्ची ।
वाचालभृङ्गसुभगे सुरभौ समस्त-
मभ्याधिकं भवति तत् सखि ! किं निदानम् ॥४८॥

प्रौढप्रोषितभर्तृका यथा ।

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किञ्च त्वयि यदुपते प्रस्थिते ! प्रस्थितैव ।
अन्यद् ब्रूमः किमिह धमनी वर्त्तते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥४९॥

जननीभिः शयनं सृजन्तो अपि रचयन्तो अपि लज्जया न वा सैव शेते । कण्ठे गद्गदवाचम् अञ्चति पूजयति गद्गदवचसा कथयतीत्यर्थः, दृशा नेत्रेण वाष्पोदकम् अम्बुजलं धत्ते धारयति, अतः अम्बुजमुखी पद्ममुखी कान्ता यत् सन्तापं सहते, तत् चेतोभवः कामः वेद जानाति नापर इति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

वास इति । हे सखि ! वपुषः शरीरस्य तदेव वासः वसनं, हस्तस्य वलयं तदेव, जघनस्य रत्नकाञ्ची मणिमेखला सा एव अविरहावस्थायां यद् यद् आसीत् इदानीमपि तत्तदेव अस्तीत्यर्थः, किन्तु वाचालैः मुखरैः भृङ्गैः सुभगे मनोहरे सुरभौ वसन्ते समस्तम् एतत् वसनादिकम् अभ्याधिकम् अतिरिक्तम् अधिकक्लेशकरमिति भावः भवति तत् किं निदानं कारणम् ?• पतिविरहे एतत् सर्वं वृथा मया भ्रियते विशेषतो वसन्ते इति भावः । वसन्ततिलकं वृत्तम् ॥ ४८ ॥

मालेति । हे यदुपते ! त्वयि प्रस्थिते मथुरामिति शेषः बालानां नवानाम् अम्बुजानां कमलानां दलमयी माला मौक्तिकी मुक्तामयी हारयष्टिः किञ्च काञ्ची रशना प्रस्थितैव प्रचलितैव

परकीया प्रोषितभर्तृका यथा

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्योमर्मरशङ्कया न च तया संस्पृश्यते पाणिना ।
यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते
श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥५०॥

सामान्यवनिता प्रोषितभर्तृका यथा ।

विरहविदितमन्तः प्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति ।
मरिचनिचयमक्ष्णोर्न्यस्य वाष्पोदबिन्दून्
विसृजति पुरयोषिद् द्वारदेशोपविष्टा ॥५१॥

निष्प्रयोजनत्वेन परित्यक्तैवेति भावः । अन्यत् इह अस्मिन् तव प्रस्थाने इति भावः किं ब्रूमः कथयामः ? धमनी नाड़ी वर्त्तते न वा इति ज्ञातुं बाह्वोः वलयं पाणिमूलं करमूलं प्रयाति गच्छति । मन्दाक्रान्तावृत्तम्, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥४९॥

श्वश्रूरिति । श्वश्रूः पद्मदलं पद्मपत्रं ददाति तया प्रोषितभर्तृकया तदपि भ्रूसंज्ञया भ्रूसङ्केतेन गृह्यते किन्तु सद्योमर्मरशङ्कया सद्यः स्पर्शमात्रेणैवेत्यर्थः मर्मरं शुष्कमित्यर्थः भवतीति शङ्कया विरहार्त्तया करस्य नितरामुष्णत्वादिति भावः पाणिना न च संस्पृश्यते पद्मदलमिति भावः । यातुः देवरपत्न्याः वाचि सुहृद्गणस्य च वचने प्रत्युत्तरं दीयते किन्तु कुरङ्गीदृशा मृगाक्ष्या तया हुतवहक्रूरः अग्निवत् उष्ण इत्यर्थः श्वासः न मुच्यते न त्यज्यते । उत्तरदाने दीर्घोष्णश्वासस्त्यज्यते इति यावत् । शार्दूलविक्रीड़ितं वृत्तम् ॥५०॥

विरहेति । कान्तः विरहेण विदितं ज्ञातम् अन्तः प्रेम विज्ञाय तस्मात् ज्ञापयितादिति भावः एत्य आगत्य पुनरपि मे मह्यं वसु धनं

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्या सा खण्डिता । प्रातरित्युपलक्षणम्, अस्याश्चेष्टा, अस्फुटालापचित्तसन्तापनिःश्वासतूष्णीम्भावाश्रुपातादयः ।

मुग्धा खण्डिता यथा ।

वक्षः किमु कलसाङ्कितमिति किमपि द्रष्टुमिच्छन्त्याः ।
नयनं नवोढ़सुदृशः प्राणेशः पाणिना पिधत्ते ॥५२॥

मध्या खण्डिता यथा ।

वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किञ्चित् ।
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥५३॥

दास्यति इति धियेति शेषः द्वारदेशे उपविष्टा पुरयोषित् नागरी कामिनी अक्ष्णोः नयनयोः मरिचनिचयं न्यस्य दत्त्वा बाष्पोदबिन्दून् अश्रुकणान् विसृजति मुञ्चति । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ५१ ॥

वक्ष इति । प्राणेशः पतिः वक्षः वक्षस्थलं कलसाङ्कितं कलसेन कलसदृशेनेति यावत् पयोधरेणेति भावः अङ्कितं चिह्नितं स्तनयोरङ्गरागेण रञ्जितमिति भावः किमु किमर्थमिति किमपि द्रष्टुमिच्छन्त्याः नवोढ़ा मुग्धा या सुदृक् सुनयना तस्याः नयनं पाणिना करेण पिधत्ते आच्छादयति । आर्य्यावृत्तम् ॥ ५२ ॥

वक्षोजेति । बाला कामिनी दयितस्य कान्तस्य उरः वक्षस्थलं वक्षोजचिह्नितं स्तनाङ्गरागरञ्जितं वीक्ष्य दृष्ट्वा दीर्घं न निःश्वसिति, नैव किञ्चित् जल्पति आलपति । प्रातः जलेन वदनं परिमार्जयन्ती क्षालयन्ती सती विलोचनजलानि अश्रूणि पत्युरन्यासङ्गदर्शनजनितानीति शेषः तिरोदधाति गोपयति । वसन्ततिलकं वृत्तम् ॥५३॥

प्रौढ़ा खण्डिता यथा ।

कान्तं वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकै-
रालिप्राननमानतीकृतमुखी चित्रार्पितेवाभवत् ।
व्यक्तं नोक्तवती न वा कृतवती निःश्वासकोष्णा दृशः
प्रातर्मङ्गलमङ्गना करतलादादर्शमादर्शयत् ॥५४॥

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥५५॥

कान्तमिति । अङ्गना कान्ता कान्तं विपक्षपक्ष्मलदृशः सपत्न्याः दृशः पादाम्बुजालक्तकैः चरणकमललाक्षारागैः आलिप्तम् आननं मुखं यस्य तथाभूतं वीक्ष्य दृष्ट्वा आनतीकृतम् अवनमितं मुखं यया तादृशी सती चित्रार्पितेव अभवत् । व्यक्तं स्पष्टं न उक्तवती किमपीति शेषः, निःश्वासेन कोष्णाः ईषदुष्णाः दृशश्च न कृतवती किन्तु प्रातर्मङ्गलं प्रातःकाले मङ्गलार्थं पश्यणीयमिति यावत् आदर्शं दर्पणं करतलात् आदिति शेषः आदर्शयत् सम्यक् दर्शयामास । आदर्शे स्वस्य प्रतिबिम्बदर्शने स्वत एवाप्रतिभो भवतीति धियेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

नवेति । नवानि नखपदानि नखक्षतचिह्नानि यस्मिन् तादृशम् अङ्गम् अंशुकेन वसनेन गोपयसि तिरोदधासि, दन्तदष्टं दशनक्षतं ओष्ठं पुनः पाणिना स्थगयसि आवृणोषि, किन्तु प्रतिदिशम् अपरस्याः स्त्रियाः सङ्गशंसी सम्भोगसूचकः विसर्पन् प्रसरन् नवपरिमलगन्धः अभिनवविमर्दोत्थगन्धः केन वरीतुम् आच्छादयितुं शक्यः न केनापीत्यर्थः । मालिनीवृत्तम् ॥ ५५ ॥

सखे! दशनक्षतमधरं किमिति गोपयसे प्रयत्नेन।
सम्प्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥५६॥

ग्रन्थान्तरम्।

परकीया खण्डिता यथा।

कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशम्
उक्ता तया परभिया परुषा न वाचः।
दूतीमुखे मृगदृशा स्खलदश्रुधारा
दूरात् परं निदधिरे नयनान्तपाताः ॥५७॥

सामान्यवनिता खण्डिता यथा।

उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा
ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम्।
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कनककङ्कणं करतलात् समाकृष्यते ॥५८॥

सखे इति। हे सखे! दशनक्षतम् अधरं प्रयत्नेन किमिति किमर्थं गोपयसे आच्छादयसि? नयनालस्यं नेत्रजाड्यं सम्प्रति रजनिरहस्यं रात्रिवृत्तान्तमित्यर्थः निवेदयति प्रकटयति ॥ ५६ ॥

कान्तमिति। कान्तं प्रियं वलयेन वलयाभ्यां वा अङ्कितः चिह्नितः कण्ठदेशः यस्य तथाभूतं निरीक्ष्य तया परभिया अपरभयेन परुषाः निष्ठुरा वाचः वचनानि न उक्ताः, परं किन्तु मृगदृशा मृगाक्ष्या दूतीमुखे दूत्या वदने दूरात् स्खलन्त्यः अश्रुधाराः यासु तथाविधाः नयनान्तस्य कटाक्षस्य पाताः निदधिरे निक्षिप्ताः। वसन्ततिलकं वृत्तम् ॥ ५७ ॥

उर इति। तव इदम् उरः वक्षस्थलं पयोधराभ्यां कामिन्याम् अपराङ्गनाया इति शेषः अङ्कितं चिह्नितम् अतः मे मम

अग्रे अवमत्य पतिं पश्चात् परितप्ता कलहान्तरिता ; अस्याश्चेष्टा भ्रान्तिसंमोहसन्तापसन्ततिश्वासज्वरप्रलापादयः ।

मुग्धा कलहान्तरिता यथा ।

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किञ्चित् ।
प्रसरति मलयानिले नवोढ़ा
वहति परन्तु चिराय शून्यमन्तः ॥५९॥

मध्या कलहान्तरिता यथा ।

विरमति कथनं विना न खेदः
सति कथने समुपैति कापि लज्जा ।
इति कलहमधोमुखी सखीभ्यो
लपितुमनालपितुं समाचकाङ्क्षे ॥६०॥

क्षमा कुतः ? नाहं क्षमे इत्यर्थः, ततः तस्मात् कारणात् पुरा पूर्वं यत् वसु धनम् अङ्गीकृतं स्वीकृतं मह्यं दातुमिति शेषः तत् मयि निधीयताम् अर्प्यताम् इतीत्थम् उक्त्वेति शेषः वारांस्त्वया वाराङ्गनया प्रचलम् उत्कण्ठितं चेतः यस्य तथाभूतस्य प्रियतमस्य करतलात् क्षणात् रणत् कनककङ्कणं सौवर्णं वलयं समाकृष्यते । पृथ्वीवृत्तम् ॥ ५८ ॥

अनुनयतीति । लज्जमाना पतिं न अनुनयति, सखीजनाय च किञ्चिदपि न कथयति, परन्तु किन्तु मलयानिले प्रसरति वहति सति नवोढ़ा कामिनी चिराय शून्यम् अन्तः अन्तःकरणं वहति । पुष्पिताग्रावृत्तम् ॥ ५९ ॥

विरमतीति । कथनं वचनं विना खेदः सन्तापः न विरमति न

प्रौढ़ा कलहान्तरिता यथा।

अकरोः किं नु नेत्रशोणिमानं
किमकार्षीः करपल्लवावरोधम्।
कलहं किमधाः क्रुधा रसज्ञे!
हितमर्थं न विदन्ति दैवदष्टाः ॥६१॥

परकीया कलहान्तरिता यथा।

भर्त्तुर्यस्य कृते गुरुर्लघुरभूद्‌ गोष्ठी कनिष्ठीकृता
धैर्य्यं कोषधनं गतं सहचरीनीतिः कृता दूरतः।
निर्मुक्ता तृणवत्‌ त्रपा परिचिता स्रोतस्वती विन्दुवत्‌
स क्रोधादवधीरितो हतधिया मातर्बलीयान्‌ विधिः ॥६२॥

निवर्त्तते। कथने सति लज्जा कापि समुपैति आविर्भवतीत्यर्थः।
इति हेतोः अधोमुखी सती सखीभ्यः कलहं जल्पितुं वक्तुम्‌ अनाल्पि-
तुञ्च अवक्तुञ्च समाचकाङ्क्षे इच्छति स्मेत्यर्थः। इयमेतायामुदाहृतम्‌ ॥६०॥

अकरोरिति। नु भोः रसज्ञे रसिके! नेत्रयोः शोणिमानं
लौहित्यं किमिति कथम्‌ अकरोः कृतवती असि? करपल्लवस्य
अवरोधं विरोधं कान्तस्येति भावः किम्‌ अकार्षीः कृतवती
असि? क्रुधा कोपेन किं कलहम्‌ अधाः कृतवती? दैवदष्टाः
प्रतिकूलदैवा इत्यर्थः हितम्‌ अर्थं न विदन्ति न जानन्ति ॥६१॥

भर्त्तुरिति। यस्य भर्त्तुः कृते निमित्तं गुरुः गुरुजन इत्यर्थः
लघुः अभूत्‌ तुच्छीकृत इति भावः, गोष्ठी कुलमिति यावत्‌ कनिष्ठी-
कृता खर्व्वीकृतेत्यर्थः, धैर्य्यं कोषधनं धैर्य्यरूपं भाण्डारस्थं धनं वा
पृथक्‌पदमेतत्‌। गतं नष्टमित्यर्थः, सहचरीणां नीतिः पत्यौ एवमेव-
माचरितव्यमित्येवमुपदेश इत्यर्थः दूरतः कृता अगणितेति यावत्‌,
त्रपा लज्जा तृणवत्‌ निर्मुक्ता निःशेषेण त्यक्ता, स्रोतस्वती नदी
विन्दुवत्‌ गोष्पदसलिलमिवेति भावः परिचिता विदितं सन्तीर्णा

सामान्यवनिता कलहान्तरिता यथा।

यत् पङ्केरुहलक्ष्मपाणिकमले भाग्यालये यद्गुरु
न्यस्तं काममयं ललाटफलके भाग्याक्षरं वेधसा।
तत् सर्वं सखि यो यथार्थमकरोत् तस्मिन् प्रकोपः कृतो
धिङ्मां धिङ्मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः॥६३॥

सङ्केतनिकेतने प्रियतममनवलोक्य समाकुलहृदया विप्रलब्धा।

अस्याश्चेष्टा निर्वेदनिःश्वाससखीजनोपालम्भसन्तापासापभयचिन्ताश्रुपातमूर्च्छादयः।

इति यावत्, कुत्सितधिया दुर्मत्या मया सः कान्तः क्रोधात् अवधीरितः अवज्ञातः? हे मातः! विधिः बलीयान् सर्वथा प्रबल इत्यर्थः दैवे प्रतिकूले सर्वमेव विपर्य्यासमेतीति भावः। अत्र कारणे कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे, सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति। शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

यदिति। वेधसा विधिना पङ्केरुहं कमलं लक्ष्म चिह्नं यस्य तादृशं यत् पाणिकमलं करपद्मं तस्मिन् अतएव भाग्यस्य सौभाग्यस्य आलये स्थानभूते करे पद्मचिह्नम् सौभाग्यसूचकमिति भावः, यत् यच्च ललाटफलके गुरु महत् काममयं सुखभोगसूचकं भाग्याक्षरं न्यस्तम् अर्पितं लिखितमिति यावत्, हे सखि! तत् सर्वं यः यथार्थम् अकरोत्, तस्मिन् कान्ते' इति शेषः प्रकोपः कृतः मयेति शेषः, अतः मां धिक् मम जीवितं धिक् अतनुं कामं धिक् चेष्टितम् आचरणं ममेति शेषः धिक् वयश्च यौवनञ्च ममेति शेषः धिक् सर्वं निन्दार्हमित्यर्थः, धिक्शब्दोऽत्र निर्भर्त्सननिन्दयोरित्यमरः। शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥

मुग्धा विप्रलब्धा यथा ।

आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया

शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम् ।

न्यस्ता किन्तु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा

भ्राम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥६४॥

किमुत्तीर्णः पन्थाः कुपितभुजगाभोगविषमो

विषोढा भूयस्यः किमपि कुलपालीकटुगिरः ।

इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ

सरोजाक्षी शोणं दिशि नयनकोणं विकिरति ॥६५॥

आलीभिरिति । आलीभिः सखीभिः अनेककपटैः बहुकैतव-वाक्यैः शपथैः कुञ्जोदरं सङ्केतभूमीमिति भावः नीतया प्रापितया नवोढनीरजदृशा मुग्धया पद्मनयनया तत् कुञ्जोदरं शून्यं नायक-रहितमिति भावः निरीक्ष्य विक्षुभितया विशेषेण क्षोभं गतया अत्या न प्रस्थितं न तस्मात् चलितं न स्थितं न तत्र स्थितिः कृते-त्यर्थः स्यातुं गन्तुञ्च किमपि न शक्तमिति भावः किन्तु रुषा कोपेन कुञ्जोपकण्ठे भ्राम्यतां भृङ्गाणां कदम्बस्य समूहस्य डम्बरः विस्तारः तस्य चमत्कारं वैचित्र्यं स्पृशन्तीति तथोक्ताः दृष्टयः न्यस्ताः अर्पिताः । अत्रान्यस्य धर्मं कथमन्यो वहत्विति भृङ्गकदम्बडम्बरस्य चमत्कारमिव चमत्कारं स्पृशन्तीति विम्बप्रतिविम्बप्रत्यायनात् निदर्शनालङ्कारः । तदुक्तं दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

किमिति । कुपितानां भुजगानां सर्पाणाम् आभोगेन समन्तात् सञ्चारेणेति यावत् विषमः दुर्गम इत्यर्थः पन्थाः सङ्केतमार्गं इति यावत् किम् उत्तीर्णः ? पारं नीतः ? भूयस्यः बह्व्यः कुलपालीनां कुलाङ्गनानां कटुगिरः दुर्वाचः मत्समीपगमनादिति भावः किमपि

मध्यमा विप्रलब्धा यथा।

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्यम्
एणीदृशो निभृतनिःश्वसिताधरायाः।
अर्द्धाक्षरं वचनमर्द्धविकासि नेत्रं
ताम्बूलमर्द्धकवलीकृतमेव तस्थौ ॥६६॥

प्रौढ़ा विप्रलब्धा यथा।

शून्यं केलिगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा तया।
शम्भो! शङ्कर! चन्द्रशेखर! हर! श्रीकण्ठ! शूलिन्! शिव!
त्रायस्वेति परन्तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥६७॥

वियोढ़ाः? विशेषेण सह्यन्ते इत्यर्थः? इति वारं वारं पुनः पुनरतिशयेन वा स्तुत्वेत्यर्थः नतोजाक्षी पद्मनेत्रा कामिनी दरदलिता ईषत् प्रकटं गता आतन्वाना तन्वन्ती यस्याः रुचिः प्रभा यस्यां तथाभूतायां दिशि प्राच्यामित्यर्थः शोणं रक्तं नयनकोणं कटाक्षमित्यर्थः विकिरति विक्षिपति। शिखरिणीदृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ६५ ॥

सङ्केतेति। सङ्केतकेलिगृहं साङ्केतिकं क्रीड़ामन्दिरम् एत्य आगत्य शून्यं कान्तरहितमिति भावः निरीक्ष्य निभृतं यथा तथा निःश्वसितः निश्वासेन स्फुरित इत्यर्थः अधरः यस्याः तथाभूतायाः एणीदृशः मृगाक्ष्याः वचनम् अर्द्धाक्षरं, नेत्रम् अर्द्धविकासि, ताम्बूलम् अर्द्धकवलीकृतम् एव तस्थौ। न सम्यक् वचनप्रसरः, नापि नेत्रस्य सम्यग्विकासः, न च ताम्बूलस्य चर्वणप्रयत्नः केवलं विलुब्धतया स्थितमनयेति भावः। वसन्ततिलकं वृत्तम् ॥ ६६ ॥

शून्यमिति। केलिगृहं क्रीड़ामन्दिरं शून्यं कान्तरहितमिति भावः निरीक्ष्य दृष्ट्वा चेतोभवं कामं कुटिलं निर्दयं विज्ञाय पङ्कज-

परकीया विप्रलब्धा यथा।

दत्त्वा धैर्य्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-
मङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः।
सन्तापाकुलया तया च परितः पाथोधरे गर्जति
क्रोधक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥६८॥

सामान्यवनिता विप्रलब्धा यथा।

कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीरञ्जिका वञ्चितासौ।

दृशा पद्मनेत्रया तया कामिन्या दूती नापि नैव निवेदिता नैव विज्ञा-
पिता, नो वा सहचरी अपि पृष्टा, परन्तु केवलमित्यर्थः शम्भो!
शङ्कर! चन्द्रशेखर! हर! श्रीकण्ठ! शूलिन्! शिव! त्रायस्व रक्ष
मामिति शेषः इतीयं भर्गस्य महेश्वरस्य स्तुतिः चक्रे कृता।
शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

दत्त्वेति। तन्व्या कृशाङ्ग्या धैर्य्यमेव भुजङ्गः तस्य मूर्ध्नि
शिरसि चरणौ दत्त्वा धैर्य्यमुत्सृज्येति यावत् लज्जा एव नदी ताम्
उल्लङ्घ्य अतिक्रम्य लज्जां त्यक्त्वेत्यर्थः घनं निविडम् अन्धकारपटलम्
अङ्गीकृत्य अगणयित्वेति भावः प्रियः न दृष्टः सङ्केतभूमाविति शेषः,
ततश्च सन्तापाकुलया नितरां सन्तप्तया तया पाथोधरे जलधरे
गर्जति सति परितः समन्तात् क्रोधक्रान्तस्य क्रुद्धस्येत्यर्थः कृतान्तस्य
यमस्य यो मत्तमहिषः वाहनभूत इति भावः तस्य भ्रान्त्या भ्रमेण
शङ्कयेति यावत् दृशौ नयने योजिते, विक्षिप्ते। मृत्युर्मे उपस्थितः
यतोऽयं महिषवाहनः समुदेतीति शङ्कयेति भावः। शार्दूलविक्री-
डितं वृत्तम् ॥ ६८ ॥

कपटेति। केनचित् कपटवचनभाजा धूर्त्तेनेति यावत्, असौ
सकलरसिकगोष्ठीनां सर्वनागरकाणां रञ्जिका मनोरञ्जनी वारयोषा

इति विहसति रिङ्गद्भृङ्गविचित्रवल्ली-
विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥९८॥

सङ्केतस्थलं प्रति भर्त्तुरनागमनकारणं या चिन्तयति सा उत्कण्ठिता । अवधिदिवसानागतप्रेयसि प्रोषित-पतिकायां नातिव्याप्तिः । तस्या भर्त्तुरवधिदिवसे भवना-गमनानियम इति सङ्केतपदेन व्यावर्त्तनात् ।

अस्याश्चेष्टा ।

अरतिसन्ताप-जृम्भणाङ्गाक्रष्टिकम्पमलरुदितश्वासावस्था-कथनादयः ।

मुग्धा उत्कण्ठिता यथा ।

यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे पराम्
इत्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीड़िता पृच्छति ।

वाराङ्गना वञ्चिता विप्रलब्धा इति रिङ्गद्भिः सञ्चरद्भिः भृङ्गैः विचित्राणां कम्पितानां वल्लीनां लतानां विकचानि प्रस्फुटानि यानि कुसुमानि तेषां कान्तिच्छद्मना प्रभामिषेण केलिकुञ्जः क्रीडा-निकेतनलतादिपिहितस्थानसमूहः विहसति । अत्र प्रकृतस्य कुसुमकान्तिरूपस्य प्रतिषेधेन अन्यस्य हासस्य स्थापनात् अपह्नुति-रलङ्कारः । तदुक्तं दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुति-रिति । मालिनीवृत्तम् ॥ ९८ ॥

यदिति । यत् यतः पतिः अद्यापि न समागतः इत्यतः पराम् अन्यां कान्तां प्रपेदे प्राप इति प्रायः मन्ये, मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृश इति दर्पणः । इत्थं चेतसि मनसि चिन्तयन्ती अपि व्रीड़िता लज्जिता सखीं न पृच्छति नानुयुङ्क्ते । दीर्घं श्वसितं निः-

दीर्घं न श्वसितं दधाति चकितं न प्रेक्षते केवलं
किञ्चित्पक्वपलाण्डुपाण्डुरुचिं धत्ते कपोलस्थलीम् ॥७०॥

मध्या उत्कण्ठिता यथा।

आनेतुं न गता किमु प्रियसखी भीता भुजङ्गात् किमु
क्रोधी वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्त्तते।
इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छलात्
अक्ष्णोः कापि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥७१॥

प्रौढा उत्कण्ठिता यथा।

भ्रातर्निकुञ्ज! सखि यूथि! रसाल बन्धो!
मातस्तमस्विनि! पितस्तिमिर! प्रसीद।

श्वासं न दधाति न त्यजतीति यावत्, तथा चकितं यथा तथा न प्रेक्षते नावलोकयति, केवलं किञ्चित् ईषत् पक्वपलाण्डुवत् पाण्डुरा रुचिर्यस्याः तादृशीं कपोलस्थलीं धत्ते धारयति। शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

आनेतुमिति। प्रियसखी आनेतुं कान्तमिति शेषः किमु किमिति न गता? किमु भुजङ्गात् सर्पात् पथि स्थितादिति शेषः भीता सती न गतेति शेषः। असौ प्राणेश्वरः प्रतिषेधवाचि मदीय-निषेधवचने मा गच्छेति मत्कर्त्तृके निषेधवचने क्रुद्धः वा किं वर्त्तते? इत्थं विचिन्त्येति शेषः कापि नवोढा मुग्धा नीरजमुखी पङ्कजवदना अक्ष्णोः नेत्रयोः कर्णे यत् सुवर्णं शोभनवर्णं केतकं केतकीपुष्पं तस्य रजःपातेन परागपतनेन यः उपघातः पीडा स एव छलं व्याजः तस्मात् बाष्पोदकम् अश्रुजलं मुञ्चति त्यजति। अत्र पूर्ववदपह्नुतिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

भ्रातरिति। हे भ्रातः निकुञ्ज! हे सखि यूथि! हे बन्धो रसाल चूत! हे मातः तमस्विनि रजनि! हे पितः तिमिर!

पृच्छामि किञ्चिदिह नीरधराभिरामो
दामोदरः कथय किन्न समाजगाम ॥७२॥

परकीया उत्कण्ठिता यथा ।

स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
शीतैश्चन्दनवारिभिर्मनसिजो देवः समाराधितः ।
नीता जागरणव्रतेन रजनी व्रीड़ा कृता दक्षिणा
तप्तं किन्न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः ॥७३॥

सामान्यवनिता उत्कण्ठिता यथा ।

कथं न कान्तः समुपैति कुञ्जम्
इत्थं चिरं चेतसि चिन्तयन्ती ।
प्रचालयन्निष्पतिताश्रुधारां
वाराङ्गना कापि धनाभिलाषात् ॥७४॥

प्रसीद प्रसन्नो भव, किञ्चित् पृच्छामि त्वामिति शेषः नीरधराभिरामः नवमेघश्यामसुन्दरः दामोदरः इह अस्मिन् प्रदेशे किं न आजगाम ? कथय । वसन्ततिलकं वृत्तम् ॥ ७२ ॥

स्नातमिति । वारिदस्य मेघस्य वारिभिः वृष्टिजलैरित्यर्थः स्नातम् अभिषिक्तं घने निविड़े कानने वासः अवस्थितिः विरचितः कृतः । शीतैः चन्दनवारिभिः मनसिजः देवः कामदेवः समाराधितः पूजितः । जागरणव्रतेन रजनी नीता अतिवाहिता, व्रीड़ा लज्जा दक्षिणा कृता दक्षिणात्वेन परित्यक्तेत्यर्थः, अतः किं तपः न तप्तं न चरितं तथापि सः कान्त इति शेषः कथम् अद्यापि नेत्रातिथिः दृष्टिगोचरो न भवतीति शेषः । लोकैस्तपसा अभिलषितं प्राप्यते मया तु तन्नेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥७३॥

कथमिति । कान्तः कथं कुञ्जं विहारभूमिमिति यावत् न समुपैति समागच्छति ? इत्थं चेतसि चिरं बहुक्षणं चिन्तयन्ती

अद्य मे प्रियवासक इति अभिप्रेत्य या सुरतसामग्रीं सज्जीकरोति, सा वासकसज्जा (क)। वासको वासरः।

अस्याश्चेष्टा मनोरथसखीपरीहासदूतीप्रश्नसामग्रीसम्पादनमार्गविलोकनादयः।

मुग्धा वासकसज्जा यथा।

हारं गुम्फति तारकान्तरुचिरं बध्नाति काञ्चीलतां
दीपं न्यस्यति किन्तु तत्र बहुलं स्नेहं न दत्ते पुनः।
आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां
साचिस्मेरनवोढ़नीरजमुखी दूरात् समुद्वीक्षते ॥७५॥

कापि वाराङ्गना धनाभिलाषात् न तु प्रेमाभिलाषादिति भावः निर्वर्तितां निर्गताम् अश्रुधाराम् अक्षालयत् क्षालितवती। प्रेमार्थिनी तु, न कथमपि अश्रुधारां क्षालयितुं शक्नोतीति भावः। उपजातिवृत्तम् ॥ ७४ ॥

(क) वासकसज्जेति। वसन्त्यस्मिन्निति वासकं शयनगृहं तस्मिन् प्रियेण सह विहारार्थं सज्जा सुसज्जिता नारी वासकसज्जा। वासको वासर इति यल्लिखितं तद् भ्रमविलसितम् अन्यथा उदाहरणश्लोके वासकस्य रजनावित्यंशस्य वासकस्य दिवसस्य रजनाविति बालप्रलपितमिव भासते इति सुधीभिर्विभाव्यम्।

हारमिति। तारः महान् कान्तः मनोहरः रुचिरः समुज्ज्वलः तं हारं गुम्फति रचयति आलीनां मध्ये काचित् आलीति शेषः, काञ्चीलतां रशनाकलापं बध्नाति काचिदिति शेषः, काचित् दीपं न्यस्यति अर्पयति किन्तु तत्र दीपे बहुलं स्नेहं तैलं न पुनः दत्ते इतीत्थं रजनौ वासकस्य शयनमन्दिरस्य कामानुरूपां मदनोद्दीपनसाधनीं क्रियाम् बहुतरां साचिस्मेरा वक्रहसनशीला नवोढ़नीरजमुखी

मध्या वासकसज्जा यथा ।

शिल्पं दर्शयितुं करोति कुतुकात् कह्लारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते ।
गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीक्ष्य चरितं स्मेराननोऽभूत् स्मरः ॥७६॥

प्रगल्भा वासकसज्जा यथा ।

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः ।
अकारि हरिणीदृशा भवनमेत्य देहश्रिया
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥७७॥

नवीना पद्मसखी नायिकेति शेषः दूरात् समुद्वीक्षते पश्यति न तत्र संसजतीति शेषः विप्रलम्भभयादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

शिल्पमिति । शिल्पं रचनानैपुण्यमिति भावः कुतुकात् कह्लार-हारस्रजं रक्तोत्पलमालामिति यावत् करोति रचयति, चित्रस्य आश्चर्यभूतस्य कस्यचित् वस्तुन इति भावः प्रेक्षणकैतवेन दर्शनच्छलेन किमपि द्वारं समुद्वीक्षते द्वारदेशम् अवलोकयतीत्यर्थः नाथागमन-दर्शनार्थमिति भावः, सहचरीणां भूषायाः अलङ्कारस्य जिगीषा-मिषात् जयेच्छाच्छलात् नवं नूतनम् आभरणं गृह्णाति परिधत्ते । इत्थं पद्मदृशः कमलनेत्रायाः चरितं कान्तागमननिबन्धनमिति भावः प्रतीक्ष्य दृष्ट्वा स्मरः कामः स्मेराननः हसन्मुखः अभूत् । शार्दूल-विक्रीडितं वृत्तम् ॥ ७६ ॥

कृतमिति । हरिणीदृशा प्रगल्भया वपुषि शरीरे भूषणं कृतं, चिकुराणां केशानां धोरणी कलापः धूपिता धूपवासेन सुरभीकृता, शयनसन्निधौ शय्यासमीपे क्रमुकवीटिकासम्भृतिः पूगसंवलितताम्बूल-

मनोरथो यथा ।

आवयोरङ्गयोर्द्दित्वे भूयो विरहविप्लवः ।
अद्वैते च स्मितं स्फीतं न स्यादन्योन्यवीक्षणम् ॥७८॥

परकीया वासकसज्जा यथा।

श्वश्रूं स्वापयति छलेन च तिरोधत्ते प्रदीपाङ्कुरान्
धत्ते सौधकपोतनिनदैः साङ्केतिकं चेष्टितम् ।
शश्वत्पार्श्वविवर्त्तिताङ्गलतिकं लोलत्कपोलद्युति
क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति॥ ७९॥

वीटिकासंभारः कृता सज्जितेत्यर्थः, भवनम् यत्र देहश्रिया शरीरकान्त्या स्फुरतः विकसतः कनकवत् केतकीकुसुमस्य कान्तिभिः दुर्दिनम् आच्छन्नं शोभितमिति यावत् अकारि कृतम् । पुष्पोद्दत्तम् ॥७७॥

आवयोरिति । आवयोः दम्पत्योः द्वित्वे भूयः अत्यर्थं विरहविप्लवः विरहस्य उपद्रव इत्यर्थः अद्वैते च अभिन्नत्वे च अन्योन्यस्य वीक्षणं दर्शनं यस्मिन् तादृश स्मितं मन्दं हसितं स्फीतं न स्यात् । एवञ्च अविरहत्वे सति अन्योन्यवीक्षणजस्मितशालित्वं सर्वथा सुखमिति भावः ॥ ७८ ॥

श्वश्रूमिति । छलेन श्वश्रूं स्वापयति निद्रापयति, प्रदीपाङ्कुरान् क्षुद्रदीपान् तिरोधत्ते आच्छादयति, सौधकपोतपोतानां हर्म्यस्थपारावतशिशूनां निनदैः साङ्केतिकं चेष्टितं धत्ते जारसङ्के यत् यत् सुरतनिनदो भावी तत्तत् पारावतशिशूनां निनदेन अनुकरोतीत्यर्थः, तथा प्रियधिया जारबोधेन शश्वत् सततं पार्श्वयोर्विवर्त्तिता अङ्गलतिका यस्मिन् तत् लोलन्ती स्फुरन्ती कपोलयोः द्युतिर्यस्मिन् तत् यथा तथा क्वापि क्वापि तल्पान्तिके शय्याप्रान्ते कराम्बुजं करकमलं न्यस्यति अर्पयति परकीया वासकसज्जेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥७९॥

सामान्यवनिता वासकसज्जा यथा ।

चोलं नीविनिचोलकर्षणविधौ चूडामणिं चुम्बने
याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् ।
इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती
तत् किं यन्न मनोरथं वितनुते जारेषु वाराङ्गना ॥ ८० ॥

सदा कृताज्ञापरा प्रियतमा स्वाधीनपतिका । अस्याश्चेष्टा वनविहारादिमदनमहोत्सवमदाहङ्कारमनोरथाद्याभिप्रकृतयः ।

मुग्धा स्वाधीनपतिका यथा ।

मध्ये नो कृशिमा स्तने न गरिमा देहे न वा कान्तिमा
श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वारक्रिया ।

चोलमिति ।। नीविनिचोलस्य कटिबन्धवसनस्य कर्षणविधौ कर्षणव्यापारे यदा नागरः कटिबन्धवसनं मे कर्षतीति भावः, चोलं वसनं चुम्बने यदा चुम्बिष्यतीति भावः, चूडामणिं शिरोरत्नं तथा कुचयोः स्तनयोः करार्पणविधौ हस्तार्पणव्यापारे यदा स्तनमर्दनं करिष्यतीति भावः, काञ्चनीं सौवर्णीं काञ्चीं रशनां याचिष्ये प्रार्थयिष्ये । चन्दनचर्चितैः चन्दनाक्तैर्मृगमदैः कस्तूरीभिः अङ्गानि संस्कुर्वती वाराङ्गना जारेषु नागरवृन्देषु इत्थं यत् मनोरथं न वितनुते प्रकटयति तत् किम् ? समस्तमेव मनोरथं प्रकटयतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥

मध्ये इति । मध्ये कटिदेशे कृशिमा कार्श्यं क्षीणत्वमित्यर्थः नो, स्तने गरिमा गौरवं न, देहे कान्तिमा लावण्यवत्त्वं वा न, श्रोणौ नितम्बे प्रथिमा स्थूलत्वं न, गतौ गमने जडिमा जाड्यं मन्दत्वमित्यर्थः न, नेत्रे वारक्रिया कोपव्यापारः कटाक्षविक्षेप इति

लास्ये न द्रढ़िमा न वाचि पटिमा हास्ये न वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥ ८१॥

मध्या स्वाधीनपतिका यथा ।

यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि ।
प्रियसखि ! पतिरेष पार्श्वदेशं
तदपि न मुञ्चति चेत् किमाचरामि ॥८२॥

प्रौढ़ा स्वाधीनपतिका यथा ।

रक्तस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् ।

यावत् न वा, लास्ये नर्त्तने न द्रढ़िमा न दार्ढ्यं न पाटवमिति भावः, वाचि न पटिमा न विन्यासनैपुण्यमिति यावत्, हास्ये च स्फीतिमा न महत्त्वं न प्रमेति शेषः, तथापि प्राणेशस्य मनः मयि एव मज्जति समासजति किं कारणम् नोपलक्षये इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८१ ॥

यदिति । हे प्रियसखि ! यदपि यद्यपि रतिमहोत्सवे नकारः यदा प्रियः रतिमहोत्सवार्थम् उद्युङ्क्ते इति भावः तदाहं नेति करोमीत्यर्थः । यदपि यद्यपि करेण नीविधारणानि यदा प्रियः करेण नीविं स्खलयितुं प्रयतते तदा मया तन्निवारणार्थं करेण नीविर्धार्य्यते इति भावः तदपि तथापि एषः पतिः पार्श्वदेशं न मुञ्चति न त्यजति चेत् तदा किम् आचरामि किं करोमि ? पुष्पिताग्रावृत्तम् ॥ ८२ ॥

रक्तस्येति । हे सखि ! कान्तः धन्यानां पुण्यवतीनाम् अरविन्दसुन्दरदृशां कमलमनोहरनयनानां कामिनीनां, रक्तस्य अधरपल्लवस्य हास्यस्य लास्यस्य नर्त्तनस्य वा स्तुतिं प्रशंसां करोति । काचि

स्वप्नेनापि न गच्छति श्रुतिपथं चेतः कथं दृक्पथं
काप्यन्या दयितस्य मे सखि! कथं तस्यास्तु भेदग्रहः ॥८३॥

परकीया स्वाधीनपतिका यथा ।

स्वीयाः सन्ति गृहे सरोरुहदृशो यासां विलासक्वणत्-
काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति ।
को हेतुः सखि! कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्तीमपि वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥८४॥

सामान्यवनिता स्वाधीनपतिका यथा ।

सन्त्येव प्रतिमन्दिरं मृगदृशो यासां सुधासागर-
स्रोतःसूतसरोजसुन्दरचमत्कारा दृशोर्विभ्रमाः ।

अन्या मत्त इति शेषः नायिका मे मम दयितस्य श्रुतिपथं चेतः चित्तं दृक्पथञ्च कथमपि स्वप्नेनापि न गच्छति अतः तस्य दयितस्य भेदग्रहः नारीविशेषबोधः कथम् अस्तु भवतु ? न कथमपीत्यर्थः। मत्प्रतिमां विना नान्यां कामयते इति भावः। शार्दूलविक्रीडितं वृत्तम् ।८३॥

स्वीया इति। हे सखि! यासां विलासेन क्वणतां झणत्कुर्वतां काञ्चीकुण्डलहेमकङ्कणानां झणत्कारः न विश्राम्यति अनवरतं चलतीति भावः तादृश्यः स्वीयाः सरोरुहदृशः कमलनेत्राः कामिन्यः गृहे सन्ति, किन्तु वल्लभस्य मत्प्रियस्य दृष्टिः कानने पुरपथे नगरमार्गे सौधे सखीनां सन्निधौ परितः समन्तात् भ्राम्यन्तीमपि मां न मुञ्चति न त्यजति को हेतुः किं कारणम् ? नो जाने इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥

सन्त्येवेति। प्रतिमन्दिरं प्रतिगृहम् एवम् एतादृश्यः मृगदृशः मृगनयनाः कामिन्यः सन्तु तिष्ठन्तु यासां दृशोर्विभ्रमाः नयनविलासाः सुधासागरस्य अमृतसमुद्रस्य स्रोतसि जातस्य सरोजस्येव

चित्रं किन्तु विचित्रमन्मथकलाकौशल्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ॥८५॥

स्वयमभिसरति प्रियमभिसारयति साभिसारिका।
अस्याश्चेष्टा समयानुरूपमितभूषणशङ्काप्रज्ञानैपुण्यकपटहा-
सादयः। इति परकीयायाः, स्वीयायास्तु प्रकृत एव विभ्रमः।

मुग्धाभिसारिका यथा।

दूती विद्युदुपागता सहचरी रात्रिश्चिरस्थायिनी
दैवज्ञो जलदः स्वनेन दिशति प्रस्थानवेलां शुभाम्।
वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवै-
र्जातोऽयं दयिताभिसारसमयो मुग्धे! विमुञ्च त्रपाम् ॥८६॥

कमलस्येव सुन्दरः मनोहरः चमत्कारः वैचित्र्यं येषां तथाभूताः।
किन्तु युवा मत्प्रिय इति भावः विचित्रा या मन्मथकला तस्यां
कौशल्यहेतोः नैपुण्यार्थं मय्येव चित्तहरं मनोहरं वित्तं धनं चित्त-
हर इति पाठे युवेत्यस्य विशेषणम्। प्रयच्छति प्रददाति किं कारणं
को हेतुः? न जाने इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥८५॥

दूतीति। हे मुग्धे! दूती मार्गदर्शिनीति भावः विद्युत्
उपागता उपस्थिता स्फुरतीति भावः, सहचरी रात्रिः चिरस्थायिनी
सर्वथा सङ्गिनीत्यर्थः, दैवज्ञः ज्योतिषिकः जलदः मेघः स्वनेन गर्जनेन
शुभां प्रस्थानवेलाम् अभिसारसमयं दिशति उपदिशति, तिमिर-
स्तोमोऽपि तमोराशिरपि झिल्लीनां कीटविशेषाणां रवैः माङ्गलिकीं
वाचं शुभं ते भूयादित्येवं कुशलमयीं वाणीमित्यर्थः तनोति विस्ता-
रयति, अतः अयं दयितस्य अभिसारसमयः प्रियं प्रति गमनकालः
जातः उपस्थितः, तस्मात् त्रपां लज्जां विमुञ्च त्यज। शार्दूल-
विक्रीडितं वृत्तम् ॥ ८६॥

मध्याभिसारिका यथा ।

भीतासि नैव भुजगात् पथि मद्भुजस्य
सङ्गात् पुनः किमपि भीतिमुरीकरोषि ।
अम्भोधरध्वनिभिरक्षुभितासि तन्वि !
मद्वाचि साचिवदनासि किमाचरामि ॥८७॥

प्रौढाभिसारिका यथा ।

स्फुरदुरसिजभारभङ्गुराङ्गी
किशलयकोमलकान्तिना पदेन ।
अथ कथय कथं सहेत गन्तुं
यदि न निशासु मनोरथो रथः स्यात् ॥८८॥

भीतेति । हे तन्वि कृशाङ्गि ! पथि मार्गे अभिसारस्येति भावः भुजगात् सर्पात् नैव भीता असि सर्पभयं न करोषीत्यर्थः, पुनः किन्तु मम भुजस्य सङ्गात् सम्पर्कात् मया अङ्गेषु हस्ते दत्ते इति भावः किमपि भीतिम् उरीकरोषि अङ्गीकरोषि मम हस्त-सम्पर्कात् भयं करोषीति यावत्, अम्भोधरस्य मेघस्य ध्वनिभिः अक्षु-भितासि क्षोभं न गतासीत्यर्थः, किन्तु मम वाचि साचिवदना परा-वृत्तमुखी असि मम वाक्यात् विरज्यसीति भावः किम् आचरामि किं करोमीत्यर्थः ? जाराभिसारिणीं प्रति पत्युरुक्तिरियम् । वसन्त-तिलकं वृत्तम् ॥८७॥

स्फुरदिति । स्फुरतोः प्रसरतोः उरसिजयोः स्तनयोः भारेण भङ्गुरम् अवनतमिति यावत् अङ्गं यस्यास्तथोक्ता कामिनी किश-लयवत् कोमला कान्तिर्यस्य तादृशेन अतिमृदुनेति भावः पदेन गन्तुम् अभिसर्तुं कथं सहेत क्षमेत अथ इदानीं कथय यदि निशासु मनो-रथः कामः रथो न स्यात् । एनादृशी कोमलाङ्गी अपि कामार्त्ता सती अभिसारात् न पराङ्मुखी भवतीति भावः । पुष्पिताग्रा वृत्तम् ॥८८॥

परकीयाभिसारिका यथा।

रभसादभिसर्त्तुमुद्यतानां
वनितानां सखि! वारिदो विवस्वान्।
रजनी दिवसोऽन्धकारमर्चिः
विपिनं वेश्म विमार्ग एव मार्गः ॥८९॥

कृष्णाभिसारिका यथा।

नाम्बुजैर्न कुमुदैरुपमेयं स्वैरिणीजनविलोचनयुग्मम्।
नोदये दिनकरस्य न चेन्दोः केवले तमसि यस्य विकाशः ॥९०॥

ज्योत्स्नाभिसारिका यथा।

चन्द्रोदये चन्दनमङ्गकेषु विन्यस्य विन्यस्य विनिर्गतायाः।

रभसादिति। हे सखि! रभसात् औत्सुक्यात् अभिसर्त्तुम् उद्यतानां प्रवृत्तानां वनितानां वारिदः मेघः विवस्वान् सूर्य्यः, रजनी दिवसः, अन्धकारम् अर्चिः आलोकः, विपिनं वनं वेश्म गृहं, विमार्गः असत्पथ एव मार्गः पन्थाः, अभिसारिणीनां गोपनस्या-वश्यकत्वेन वारिदादीनां विरुद्धोपायानामेव अवलम्बनं श्रेय इति भावः। उपचित्रं वृत्तं, विषमे यदि सौ सलगा दले भौ युजि भाद् गुरुकावुपचित्रमिति तल्लक्षणात् ॥८९॥

नाम्बुजैरिति। स्वैरिणीजनस्य अभिसारिणीवृन्दस्य विलोचन-युग्मम् अम्बुजैः कमलैः न, कुमुदैश्च न उपमेयम् उपमातुं शक्यम्। यस्य विलोचनयुग्मस्य दिनकरस्य सूर्य्यस्य उदये न, इन्दोश्च उदये न, केवले तमसि अन्धकारे विकाशः प्रफुल्लता। सूर्य्योदये कमलं विकसति चन्द्रोदये च कुमुदम् अस्यास्तु नयनयुगलस्य तद्विलक्षणत्वात् न पद्मकुमुदसादृश्यमिति भावः। स्वागतावृत्तम्, स्वागता रनभगै-र्गुरुणा चेति लक्षणात् ॥९०॥

चन्द्रोदये इति। चन्द्रोदये अङ्गकेषु शरीरेषु चन्दनं विन्यस्य

मनो निहन्तुं मदनोऽपि बाणान् करेण कोपाद्बिभरांबभूव ९१

दिवसाभिसारिका यथा ।

पत्नीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे
जाते सद्मजना मिथःकृतमहोत्साहं पुरः प्रस्थिताः ।
सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमेवान्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥९२॥

विन्ध्य च चन्दनेन सर्वाङ्गमनुलिप्य येन ज्योत्स्नाङ्गयोरभेदग्रहः स्यादिति भावः विनिर्गतायाः अभिसरन्त्या इत्यर्थः मनः निहन्तुं मदनोऽपि कोपात् करेण बाणान् बिभरांबभूव । अतिकामार्ता एव चन्द्रोदयेऽपि प्रकाशजनितलज्जाभयमपास्य अभिसरन्तीति भावः । उपजातिवृत्तम् ॥ ९१ ॥

पत्नीनामिति । पत्नीनाम् अधिपस्य पत्नीपतेः पङ्कजदृशां कमलाक्षीणां नारीणामिति शेषः पर्वोत्सवे पर्वसु अमावस्याष्टमी-चतुर्दशीपौर्णमासीरविसंक्रान्तिरूपासु यः उत्सवः तस्मिन् यत् आमन्त्रणं दर्शनार्थमाह्वानविशेषः तस्मिन् जाते उपस्थिते सति सद्मजनाः गृहजनाः पुरः अग्रतः मिथः अन्योन्यं कृतः महान् उत्साहः यस्मिन् तत् यथा तथा प्रस्थिताः गताः । अत्रान्तरे अस्मिन्नवकाशे सव्याजं सकपटम् आवाभ्यामामन्त्रणे न गन्तव्यं शरीरस्यासौष्ठवादि-त्येवं अवमान्यस्येति भावः स्थितयोः आमन्त्रणे न गतयोरिति यावत् विहस्य शुद्धान्तम् अन्तःपुरं गतयोः यूनोः तरुणयोः स्विन्नौ घर्माक्तौ कपोलौ ययोः तादृशयोः सत्त्वोद्रेकादिति भावः एतयोः कोऽपि एषः कण्ठग्रहः कण्ठालिङ्गनं विजयते सर्वोत्कर्षेण वर्त्तते निःसरो निःशङ्कतया कर्म जनयतीति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥९२॥

सामान्यवनिताभिसारिका यथा ।

लोलच्चोलचमत्कृति प्रविचलत्काञ्चीलताझङ्कृति
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति ।
स्फूर्जद्दीधितिविस्फुरत्प्रविचलच्चामीकरालङ्कृति
क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥९३॥

मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनप्राधान्येन, प्रगल्भायाः कोपप्रकाशप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, नवोढायाः संगुप्तिप्राधान्येन, मुग्धाया इव कन्यायाः । सामान्यवनितायाः धनप्राप्तिप्राधान्येन, अष्टविधनायिकावर्णनमिति शेषः ।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।

लोलदिति । कस्यापि कृतिनः पुण्यवतः वाराङ्गना लोलता पवनवेगात् चलता चोलेन वसनेन चमत्कृतिर्वैचित्र्यं यस्मिन् तत्, प्रविचलन्ती काञ्चीलतायाः झङ्कृतिर्झङ्कारो यस्मिन् तत्, न्यञ्चन् स्खलन् कञ्चुकबन्धः ययोः तथाभूतयोः बन्धुरम् उन्नतानतं चलतोः वक्षोजकुम्भयोः स्तनकलशयोः उन्नतिः यस्मिन् तत्, स्फूर्जन्ती विकसन्ती दीधितिः किरणः यस्याः तथोक्ता विस्फुरन्ती दीप्यमाना प्रविचलन्ती कम्पमाना चामीकरालङ्कृतिः स्वर्णालङ्कारो यस्मिन् तत् यथा तथा क्रीडाकुञ्जगृहं प्रयाति गच्छति । शार्दूलविक्रीडितं वृत्तम् ॥९३॥

प्रस्थानमिति । वलयैः करभूषणविशेषैः प्रस्थानं कृतं प्रचलितं भाविप्रियप्रवासचिन्तनेन अङ्गानां काश्यात् करात् वलयस्खलनमिति भावः । प्रियसखैः सततसहचरैरिति यावत् अस्रैः नयनवारिभिः

यातं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते ॥९४॥

इत्यादि प्राचीनग्रन्थकारलिखनात्।

अग्रिमक्षणे देशान्तरनिश्चितगमने प्रेयसि प्रोषत्पति-
कापि नवमी नायिका भवितुमर्हति। तथाहि

एतस्याः प्रोषितपतिकाविप्रलब्धोत्कण्ठितासु नान्त-
र्भावः, भर्त्तुः सन्निधिवर्त्तित्वात्। नापि कलहान्तरिता-
यामेवान्तर्भावः, कलहाभावात् अनवमानितपतित्वाच्च।
नापि खण्डितायामन्तर्भावः, प्रियस्यान्योपभोगचिह्नितस्या-
गमनाभावात् प्रियायाः कोपाभावात्। काकुवचनकात-
रप्रेक्षणादिसूचितान्तःपक्षपातदर्शनाच्च। न वासकसज्जा-
न्तर्भावः, वासकसज्जाया वासरनियमाभावात् सुरत-
सामग्रीसज्जीकरणाद्यभावात् निर्वेददर्शनाच्च। न स्वाधी-

अजस्रं गत [illegible] यावत् भाविविरहदुःखचिन्तनेनेति भावः। धृत्या सन्तोषेण क्षणं न आसितं न स्थितमित्यर्थः सन्तोषो-ऽपि गत इति भावः। चित्तेन मनसा पुरः अग्रतः गन्तुं व्यवसितम् उद्युक्तं यत्र प्रियतमो गमिष्यति तत्रैव मनसा पूर्वमेव गतमिति यावत्। प्रियतमे कान्ते यातुं देशान्तरमिति शेषः निश्चितचेतसि सति सर्वे बन्धवादय इति भावः समं युगपत् प्रस्थिताः चलिताः, हे जीवित! गन्तव्ये सति अवश्यम् अस्मात् देहात् प्रस्थातव्ये सति प्रियसुहृत् प्रियबन्धु-बान्धवादिरूप इति भावः सार्थः सङ्गी किमु कथं त्यज्यते? सङ्गित्यागो न कर्त्तव्य इति भावः। शार्दूलविक्री-डितं वृत्तम्। प्रवत्स्यत्पतिकैवेयमिति बोध्यं यत्तु प्रोषितपति-केति [illegible] तद् भ्रमविजृम्भितमिति विभाव्यम् ॥९४॥

नपतिकान्तर्भावः, अग्रिमक्षण एव सङ्गस्य विच्छेददर्शनात्। न हि स्वाधीनपतिकाया कदाचिदपि सङ्गस्य विच्छेद इति सम्प्रदायकाः। व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते। अन्यथा भर्त्तरि स्वाधीनत्वमेव न स्यात्, नेह तथा सर्वथा अग्रिमक्षणे विच्छेददर्शनात्। किञ्च निर्वेदाश्रुपातनिःश्वासवनविहारादिमदनमहोत्सवाभावदर्शनाच्च। नाप्यभिसारिकान्तर्भावः, अभिसारोत्सवाभावात् अन्तस्तापदर्शनाच्चेति युक्तमुपपत्स्यामः लक्षणन्तु यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यति एव सा प्रोष्यत्पतिका। अस्याश्चेष्टा। काकुवचनकातरप्रेक्षणगमनविघ्नोपदर्शननिर्वेदसन्तापसम्मोहनिःश्वासवाष्पादयः। मुग्धाप्रोष्यत्पतिका यथा।

प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरी वदनमानमयाञ्चकार।
आली पुनर्निभृतमेत्य लतानिकुञ्ज-
मुन्मत्तकोकिलकलध्वनिमाततान॥८५॥

प्राणेश्वरे इति। प्राणेश्वरे कान्ते निर्गमाय देशान्तरगमनाय किमपि जल्पति आलपति सति क्षामोदरी कृशोदरी कान्तेति शेषः वदनं मुखम् आनमयाञ्चकार अवनतमुखी अभूदित्यर्थः, आली पुनः सखी किन्तु निभृतं निःशब्दमेत्य आगत्य लतानिकुञ्जं क्रीड़ाकाननमिति यावत् उन्मत्तानां कोकिलानां कलः मधुरास्फुटः ध्वनिर्यस्मिन् तथाभूतम् आततान कृतवती। तादृशाचरणेन भर्त्तुर्विदेशगमनं प्रतिबध्यते इति भावः। वसन्ततिलकं वृत्तम् ॥८५॥

मध्या प्रोषितपतिका यथा।

गन्तुं प्रिये। वदति निःश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत्।
आयुर्लिपिं पठितुमेष्यदृशः परन्तु
भालस्थलीं किमु करः समुपाजगाम ॥८६॥

प्रौढ़ा प्रोषितपतिका यथा।

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वरः
तेनाहं विहिताञ्जलिर्यदुपते! पृच्छामि सत्यं वद।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रेव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥८७॥

गन्तुमिति। प्रिये कान्ते गन्तुं वदति गच्छामि प्रिये इत्येवं वदति सति एणीदृशः मृगाक्ष्याः दीर्घं निःश्वसितं न आसीत्, नयनयोः नेत्रयोः जलं न वा आविरासीत् न च पपातेत्यर्थः। परन्तु किन्तु करः हस्तः आयुषः लिपिं लिखनं विधात्रार्पितमिति शेषः पठितुं भालस्थलीं ललाटदेशं किमु समुपाजगाम? शिरसि करो निहित इति भावः। वसन्ततिलकं वृत्तम् ॥८६॥

नेति। हे यदुपते! सुभ्रुवाम् अस्माकामिति शेषः तनुत्यागेऽपि शरीरत्यागेऽपि अयं वियोगज्वरः विरहव्याधिः न मुञ्चति न त्यजति? तेन हेतुना अहं विहिताञ्जलिः कृताञ्जलिः सती पृच्छामि त्वामिति शेषः सत्यं वद। अत्रेव इहलोके इव बन्धुभिः यत् ताम्बूलं कुसुमं पटीरं चन्दनम् उदकं जलञ्च दीयते तत् परत्र परस्मिन् लोके किमु विषज्वालावलीवत् दुःसहं स्यात्। इहलोके तत्सर्वं दुःसहं वर्त्तते यत परलोकेऽपि किं तथैव भविष्यतीति पृच्छामीति भावः। शोभेमार्त्तिः। शार्दूलविक्रीडितं वृत्तम् ॥८७॥

परकीया प्रोषितपतिका यथा।

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरौ
त्यक्ता नीतिरकारि किं न भवतोर्हेतोर्मया दुष्कृतम्।
अङ्गानां मलयातना नयनयोः कोपक्रमो रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥९८॥

सामान्यवनिता प्रोषितपतिका यथा।

मुद्रां प्रदेहि वलयाय भवद्वियोगम्
आसाद्य यास्यति वहिः सहसा यदेतत्।
इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥९९॥

न्यस्तमिति। पन्नगानां सर्पाणां मूर्ध्नि शिरसि पादयुगलं न्यस्तम् अर्पितं अभिसरणे पथि सर्पादपि न भीतमिति भावः। गुरौ श्वशुरादौ भक्तिः विमुक्ता त्यक्ता। नीतिः कुलाचार इति यावत् त्यक्ता। अतः भवतः हेतोः मया किं दुष्कृतं न अकारि न कृतं सर्वमेव कृतमित्यर्थः। तस्मिन् त्वयि प्रस्थिते प्रोषिते सति अङ्गानां मलयातना, नयनयोः कोपस्य क्रमः यं यं पश्यामि तं तं प्रत्येव कोपदृष्टिरिति भावः मनसः, रौरवः कुम्भीपाकपराभवश्च मनः कुम्भीपाकाख्ये रौरवाख्ये वा नरके निमग्नमिव भवतीति भावः एतत् सर्वं युक्तम् उचितं तवेति शेषः? तस्मान्न गन्तव्यमिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥९८॥

मुद्रामिति। भवतो वियोगं विच्छेदम् आसाद्य प्राप्य यत् यतः एतत् वलयमित्यर्थः सहसा वहिः यास्यति अङ्गानां कार्श्यात् करात् स्खलिष्यतीत्यर्थः, तस्मात् वलयाय मुद्रां प्रदेहि दृढतरं बन्धनं बधानेति यावत् इत्थं निगद्य उक्त्वा वाराङ्गना [illegible] नयनयोरम्बुधारा

अहितकारिण्यपि प्रिये हितकारिणी या सा उत्तमा । अस्या उत्तमैव चेष्टा । यथा

पतिः शयनमागतः कुचविचित्रितोरस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा ।
अवर्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥१००॥

हिताहितकारिणि प्रिये हिताहितकारिणी या सा मध्यमा । व्यवहारानुसारिणी चेष्टा । यथा

कान्ते सागसि कञ्चकस्पृशि तया साचीकृतग्रीवया
मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाङ्कुराः ।
साकूते दरहासपेशलवचोमाध्वीकधारालसा-
प्रीतिः कल्पलता च काचन महादानीकृता सुभ्रुवा ॥१०

यस्याः तथाभूता सती प्रियतम करयोः बभार दधार । वसन्ततिलकं वृत्तम् ॥९९॥

पतिरिति । वामभ्रुवा सुभ्रुवा कयाचित् कामिन्या कुचाभ्यां पराङ्गनाया इति शेषः तदङ्गरागेणेति भावः विचित्रितं रञ्जितम् उरस्थलं यस्य तथाभूतः शयनमागतः अयं पतिः प्रसन्नैः प्रसाद-युक्तैः वचनामृतैः अतर्पि तृप्तिं नीतः तोषित इत्यर्थः, सुभगया मनोहारिण्या स्मितस्य द्युत्या आलोकेन पटीरपङ्कद्रवैः चन्दनानु-लेपनैश्च अवर्चि विलिप्तः; तथा विलसन्ति विस्फुरन्ति विलोचना-नीव चमत्कृतानि विचित्राणि तैः अम्बुजैः पद्मैः अपूजि पूजितः । पृथ्वीवृत्तम् ॥१००॥

कान्ते इति । सागसि सापराधे कान्ते कञ्चकस्पृशि स्तना-वरणाकर्षिणि सति तया [illegible] कामिन्या साचीकृता वक्रीकृता

हिताहितकारिण्यपि प्रियतमे अहितकारिणी या सा अधमा। एषैव निर्निमित्तकोपना चण्डीत्युच्यते। अस्या निर्निमित्तकोपत्वादधमैव चेष्टा। यथा

प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहे
श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति ।
तस्मिन् प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि-
भ्रान्ताक्रान्तसरोजपत्रसदृशा भूयो दृशा क्रुध्यसि ॥१०२॥

विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा नोदाहृता इति। विश्वासविश्रामकारिणी पार्श्वचारिणी सखी।

योगा यया तथाभूतया सख्या कोपेन कषायः कलुषः यः मन्मथः कामः तस्य शरवत् क्रूराः कटाक्षाङ्कुराः क्षुद्राः कटाक्षाः सूक्ष्माः विक्षिप्ताः । साकूते साभिप्राये कान्ताया आशयानुरूपवचनोपन्यासेऽपि सतीत्यर्थः दरहासैः मन्दहासैः प्रेमलवचांसि कोमलवचनानि च माध्वीकधाराः मधुप्रवाहाः तैः अलब्धा अन्यरा काचन प्रीतिः कल्पलता च महादानीकृता महादानत्वेन अर्पिता । शार्दूलविक्रीडितं वृत्तम् ॥ १०१ ॥

प्रस्थाने इति । यः तव प्रस्थाने गमने मुखाम्भोरुहे मुखपद्मे तवेति शेषः कमलच्छायां पद्मपत्रच्छायां करोति तथा शिशिरया शीतलया श्रीखण्डद्रवधारया चन्दनरसप्रवाहेण पुरो मार्गं सिञ्चति, तस्मिन् प्रेयसि प्रियतमे विद्रुमद्रवनद्याः प्रवालरसधारेति रिङ्गन्तः प्रचलन्तः तरङ्गस्य भ्रमिवत् यद् भ्रान्तं भ्रमणं तेन आक्रान्तं घूर्णायितमित्यर्थः यत् सरोजपत्रं तत्सदृशा तच्छोभेन दृशा नेत्रेण भूयः पुनः अतिशयेन वा क्रुध्यसि कुप्यसि अनुचितं तवैतादृशि प्रेयसि कोप इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१०२॥

तथा मण्डनोपालम्भमिषापरिहासप्रभृतीनि कर्माणि ।
मण्डनं यथा ।

स्तनकनकमहीधरोपकण्ठे
प्रियकरपल्लवमुल्लसत्प्रमोदम् ।
रहसि मकरिकामिषाल्लिखन्तीं
कमलमुखी कमलैः सखीं जघान ॥१०३॥

उपालम्भो यथा ।

अभ्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति ।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेतत्
त्वं निःस्नेहो यदसि तदिदं नाथ ! मे विस्मयाय ॥१०४

स्तनेति । काचित् कमलमुखी रहसि स्तनावेव कनकमहीधरौ स्वर्णगिरी तयोः उपकण्ठे परिसरे इति यावत् मकरिकामिषात् मकराकृतिरचनाच्छलात् उल्लसन् प्रमोदः यस्य तथाभूतं प्रियस्य करपल्लवं लिखन्तीं सखीं कमलैः जघान ॥१०३॥

अभ्रध्वानैरिति । तोयदानां जलदानां श्रेणयः अभ्रध्वानैः आकाशगर्जनैः मुखरितदिशः पूरितककुभः सन्तः धारासारैः सर्वतः समन्तात् धरणिवलयं भूमण्डलं प्लावयन्ति वर्षन्ति, तेन हेतुना मत्सखी विपुलं महान्तं स्नेहं प्रणयं त्वयीति शेषः वहति एतत् युक्तम् एतादृशसमये त्वयि सख्या नितरामासक्तियुक्तेति भावः, किन्तु हे नाथ ! त्वं यत् निःस्नेहः प्रणयरहितः असि भवसि तत् इदं मे मम विस्मयाय भवतीति शेषः ईदृशे काले तव मत्सख्यां निःस्नेहत्वं विस्मयकरमिति भावः । अत्रोपालम्भः ॥१०४॥

शिक्षा यथा ।

सानन्दमालि ! वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः ।
भृङ्गारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः ॥१०५॥

परिहासो यथा ।

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमो दशसु मूर्त्तिषु लोकभर्त्तुः ।
इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार ॥१०६॥

सानन्दमिति । हे आलि सखि ! वनमालिनः कृष्णस्य विलोकनाय सानन्दं यथा तथा कुञ्जं निर्गच्छ, दिवसे भृङ्गारिणः मधुलिहः भ्रमराः, रात्रौ पुनः रजन्यान्तु चपलं लोलं पिपासयेति भावः चञ्चुपुटं येषां तथाभूताः चकोराः तदाख्यपक्षिविशेषाः भ्रमन्ति, इति विचारयेथाः चिन्तय । तव मुखं कमलं मन्यमाना मधुलिहः दिवसे त्वां बाधिष्यन्ते रात्रौ च चन्द्रं मन्यमानाः चकोराः सुधापानार्थं तव मुखमभिधाविष्यन्तीति भावः । वसन्ततिलकं वृत्तम् ॥१०५॥

आगारेति । आगारभित्तिषु गृहकुड्येषु लिखितासु चित्रितासु लोकभर्त्तुः जगत्पतेः दशसु मूर्त्तिषु मीनकूर्मकोलनृहरिवामनपरशुरामरामकृष्णबुद्धकल्किप्रतिकृतिष्विति यावत् मध्ये सप्तमः सप्तानां पूरणः राम इति भावः कः इति त्वं निवेदयस्व वद इत्थं सखीजनानां वचः प्रतिपद्य श्रुत्वा सीता सद्यः तत्क्षणं स्मितद्युतिभिः मन्दहसितालोकैः उत्तरयाञ्चकार उत्तरं दत्तवतीत्यर्थः । वसन्ततिलकं वृत्तम् ॥१०६॥

सख्याः परिहास इव प्रियस्य परिहासः । यथा

भ्रूसंज्ञया दिशसि तन्वि ! सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे ।
राधा चिराय दशनव्रणदूयमान-
बिम्बाधरा वदनमानमयाञ्चकार ॥१०७॥

प्रियस्य परिहासवत् प्रियाया अपि परिहासः, यथा ।

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहो दिव्यं स चाङ्के तव ।
तस्माद् द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-
मित्थं शैलजया विहस्य लपितः शम्भुः शिवायास्तु वः॥१०८

भ्रूसंज्ञयेति । हे तन्वि ! कृशाङ्गि ! भ्रूसंज्ञया भ्रुवः सङ्केतेन सखीं दिशसि उपदिशसि वाग्भिः वचनैः, विहस्य मुरवैरिणि कृष्णे इत्थं भाषमाणे कथयति सति दशनव्रणेन दन्तक्षतेन दूयमानः क्लिश्यमानः बिम्बमिव अधरः यस्याः तथाभूता राधा चिराय वदनम् आननमयाञ्चकार अवनमयामास लज्जयेति भावः । दशनक्षताधरत्वं वचने क्रोधकारणमिति प्रसिद्धिः । वसन्ततिलकं वृत्तम् ॥१०७॥

दिव्यमिति । दिव्यं वारि कथं तव शिरसि तिष्ठतीति शेषः, यतः सुरधुनी गङ्गा मम मौलौ तिष्ठतीति शेषः, कथं पावकः अग्निः तव भाले इति शेषः, तत् दिव्यं विलोचनं हि नेत्रमेव ज्योतिर्धारणे, न तु तत्त्वतः पावक इति भावः । कथम् अहो आश्चर्यं दिव्यं विलोचनमिति शेषः नैव तादृगिति भावः स च पावकः येन स्मरे मम विघ्नः कृत इति भावः तव अङ्के तिष्ठतीति शेषः मम शत्रुरयं त्वया धृत इति भावः । तस्मात् द्यूतविधौ पाशक्रीडायां त्वया मुषितः हृतः मम इति शेषः हारः परित्यज्यताम् इत्यनेन प्रकारेण शैलजया पार्वत्या विहस्य लपितः कथितः इति यावत् शम्भुः

दूतव्यापारकृता दूती। तस्याः सङ्घट्टनविरहनिवेदनादीनि कर्माणि। सङ्घट्टनं यथा।

अञ्चति रजनिरुदञ्चति तिमिरमिदं प्रादुर्भवति मनोभूः।
उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥१०९॥

विरहनिवेदनं यथा।

चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले
तस्या दैववशाद् दशापि चरमा प्रायः समुन्मीलति।
तद् ब्रूमः सहसा नतेन शिरसा श्रीकृष्ण! निक्षिप्यतां
स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धन्तमः ॥११०॥

वः युष्माकं शिवाय मङ्गलाय अस्तु भवतु। शार्दूलविक्रीडितं वृत्तम् ॥१०८॥

अञ्चतीति। रजनिः रात्रिः अञ्चति गच्छति, इदं तिमिरम् अन्धकारम् उदञ्चति उदेति, मनोभूः कामः प्रादुर्भवति। उक्तं पूर्वमिति शेषः युक्तं युक्तियुक्तं वचनमित्यर्थः न त्यज तस्मिन् यूनीति शेषः, मनः रक्तम् अनुरागप्रबलं विरचय कुरु ॥१०९॥

चक्रे इति। धात्रा विधिना धरामण्डले जगति चन्द्रमुखी राधेति शेषः प्रदीपकलिका चक्रे कृता तया चन्द्रमुख्या पृथिवी आलोकितेति भावः। दैववशात् भाग्यदोषात् त्वद्विरहजनितादिति भावः तस्याः चरमा अन्त्या दशा मृत्युरूपेति यावत् प्रायः समुन्मीलति उपतिष्ठते। तस्मात् नतेन शिरसा ब्रूमः प्रार्थयामहे हे श्रीकृष्ण! तत्र चन्द्रमुख्यां सहसा तथा स्नेहः प्रणयः निक्षिप्यतां निधीयतां यथा त्रैलोक्यम् अन्धं तमः गाढान्धकारमयमिति यावत् न भवति तस्मात् सा सर्वथा त्वयानुग्राह्येति भावः। शार्दूलविक्रीडितं वृत्तम् ॥११०॥

इति नायिकाप्रकरणम्।

अथ शृङ्गारस्य उभयसाधनत्वान्नायकोऽपि निरूप्यते। स च त्रिविधः। पतिरुपपतिर्वैशिकश्चेति।

विधिवत्पाणिग्राहकः पतिर्यथा।

त्वं पीयूषमयूख! मुञ्चसि शिलास्निग्धान् सुधाशीकरान्
त्वं भोगीन्द्र! विलम्बसे किमु फणाभोगैः शनैर्वीजय।
त्वं स्वर्वाहिणि! किञ्च सिञ्च सलिलैरङ्गैः शिरीषोपमैः
सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति॥१११॥

अनुकूलदक्षिणधृष्टशठभेदात् पतिश्चतुर्विधः। सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः। यथा।

पृथ्वि! त्वं भव कोमला दिनमणे! त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन्! लघुतां प्रयाहि पवन! त्वं स्वेदमुत्सारय।

त्वमिति। हे पीयूषमयूख! चन्द्ररश्मे! त्वं शिलास्निग्धान् सुधाशीकरान् मुञ्चसि त्यजसि वर्षसीत्यर्थः, हे भोगीन्द्र! शेष! त्वं विलम्बसे किम्? फणाभोगैः विस्तारितफणैरित्यर्थः शनैः मन्दं मन्दं वीजय, किञ्च हे स्वर्वाहिणि! मन्दाकिनि! त्वं सलिलैः सिञ्च, शिरीषोपमैः शिरीषकुसुमसदृशैः अङ्गैः उपलक्षिता सा इयं शैलसुता गौरी कठोरमहसः सूर्यस्य कान्त्या किरणेन पथि मार्गे क्लाम्यति क्लिश्यति। परिक्लाम्यतीति पाठान्तरम्। हरस्योक्तिरियम्। शार्दूलविक्रीडितं वृत्तम्॥१११॥

पृथ्वीति। हे पृथ्वि! त्वं कोमला भव, हे दिनमणे! भास्कर! त्वं शैत्यं शीतलत्वम् अङ्गीकुरु, हे वर्त्मन्! त्वं लघुतां सुगमतां

सान्निध्यं कुरु दण्डकाननगिरे ! निर्गच्छ मार्गाद्बहिः
सीतासौ विपिनं मया सह यतो गन्तुं समुत्कण्ठते ॥११२॥

सकलनायिकाविषयसहजानुरागो दक्षिणः । यथा ।

अन्तःपुरे स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥११३॥

भूयोनिःशङ्ककृतदोषोऽपि भूयोनिवारितोऽपि भूयः-
प्रश्रयपरायणो धृष्टः । स यथा ।

बद्धो हारैः करकमलयोर्द्वारतो वारितोऽपि
स्वापं बुद्ध्वा पुनरुपगतो दूरतो दत्तदृष्टिः ।

प्रयाहि गच्छ, हे पवन ! त्वं स्वेदं घर्मोदकम् उत्सारय हे,
दण्डकाननगिरे दण्डकारण्यभूधर ! त्वं मार्गात् पथः बहिः सान्निध्यं
स्थितिं निर्गच्छ प्राप्नुहि मार्गाद् बहिस्तिष्ठेति यावत्, यतः असौ
सीता मया सह विपिनं गन्तुं समुत्कण्ठते प्रवर्त्तते इत्यर्थः ।
रामस्योक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥११२॥

अन्तःपुर इति । अन्तःपुरे पद्मदृशां सरोजाक्षीणां महिषीणा-
मिति शेषः सहस्रं स्फुरति विकाशते । अक्षिद्वयं नेत्रयुगलं
ममेति शेषः कुत्र कस्यां पद्मदृशि निवेशयामि कथय । इति
आकलय्य विचिन्त्य अच्युतेन कृष्णेन नयनाम्बुरुहे नेत्रपद्मे निमील्य
रोमाञ्चितेन चिन्ताजनितपुलकोद्भेदवतेत्यर्थः वपुषा शरीरेण
स्थितम् । किं करोतु वराक इति भावः । वसन्ततिलकं वृत्तम् ॥११३॥

बद्ध इति । यथा धृष्टः असौ कान्त इति शेषः हारैः कर-
कमलयोः बद्धः संयतः, द्वारतः द्वारात् वारितः प्रवेष्टुं निषिद्धोऽपि

तल्पोपान्ते कनकवलयं मुक्तमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥११४॥

कामिनीविषयककपटपटुः शठः। स यथा।

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरं भुजयोर्विधाय कुचयोर्विन्यस्य मुक्तास्रजम्।
विश्वासं समुपार्जयन् मृगदृशः काञ्चीनिवेशच्छलात्
नीविग्रन्थिमपाकरोति मृदुना हस्तेन वामभ्रुवः ॥११५॥

आचारहानिहेतुः पतिरूपपतिः। स यथा।

शङ्कासङ्कुलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते
केयूरध्वनिभिर्बिभेति चकितं नो यत्र वाश्लिष्यते।

दूरतः दूरात् दत्तदृष्टिः गृहाभ्यन्तरनिवेशितदृष्टिः सन् स्वापं निद्रां समेति गच्छ: बुद्ध्वा विज्ञाय पुनः उपगतः समीपमागतः, ततः तल्पोपान्ते शय्याप्रान्तदेशे मुक्तं त्यक्तं रक्षितमिति यावत् कनकवलयम् अन्वेषयन्त्या मया पुनरपि पार्श्वे एव प्रसुप्तः निद्रितः दृष्टः। मन्दाक्रान्तावृत्तम् ॥११४॥

मौलाविति। वामभ्रुवः सुभ्रुवः मृगदृशः मृगाक्ष्याः मौलौ दाम विधाय दाम्ना शिरोऽलङ्कृतं कृत्वेत्यर्थः भालफलके ललाटपट्टे पत्रावलीं व्यालिख्य चित्रयित्वेत्यर्थः भुजयोः केयूरम् अङ्गदं विधाय, कुचयोः स्तनयोः मुक्तास्रजं मौक्तिकं हारं विन्यस्य विश्वासं समुपार्जयन् मृदुना कोमलेन हस्तेन काञ्चीनिवेशच्छलात् रशनापरिधापनमिषात् नीविग्रन्थिं कटिवस्त्रबन्धनमिति भावः अपाकरोति स्खलयति धृष्टः पतिरिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥११५॥

शङ्केति। यत्र शङ्कासङ्कुलितेन शङ्कया संयमितेन नयनप्रान्तेन अपाङ्गेनेत्यर्थः न प्रेक्ष्यते नावलोक्यते, यत्र केयूरध्वनिभिः

नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते
नो वा यत्र विधीयते स्मरहितं तत् किं रतं कामिनोः ॥११६॥

उपपतिरपि चतुर्धा। परन्तु तत्र शठत्वं नियतम् अनियतमित्यपरे। बहुलवेश्योपभोगरसिको वैशिकः। यथा।

काञ्चीक्वणत्क्वणितकोमलनाभिकान्तिं
पारावतध्वनिविचित्रितकण्ठपालिम्।
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माशास्महे किमपि वारविलासवत्याः ॥११७॥

वैशिकस्तु उत्तमाधममध्यमभेदात्त्रिविधः। दयितायाः भूयःप्रकोपेऽपि उपचारपरायण उत्तमः। यथा।

बिभेति शब्दानुसारेण कस्यापि लज्जः भवाप्नोति भयं जायते इति भावः, यत्र चकितं यथा तथा नो वा नैव आश्लिष्यते आलिङ्ग्यते, यत्र वा अलग्नदशनं दन्तक्षतरहितं यथा तथा शनैः मन्दं मन्दं बिम्बाधरः नो वा पीयते, यत्र वा स्मरहितं सुरतमित्यर्थः नो विधीयते न कर्तुं शक्यते इत्यर्थः, कामिनोर्यूनोः तत् किं रतम्? नैव रतमित्यर्थः, यद्वा तत् किं कुत्सितं रतमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥११६॥

काञ्चीति। काञ्ची रशना तस्याः क्वणत्क्वणितेन झणत्कारेणेत्यर्थः कोमला मनोज्ञा नाभिकान्तिः यस्मिन् तं, पारावतध्वनिना विचित्रिता कण्ठपाली कण्ठनली यस्मिन् तथोक्तं पारावतशब्दसदृशशब्दविशेषशालिनमित्यर्थः, उद्भ्रान्ते लोचने चकोराविव यस्मिन् तादृशं, वारविलासवत्याः वाराङ्गनायाः किमपि अद्भुतरूपमिति भावः अनङ्गरङ्गं कामोत्सवम् आशास्महे प्रार्थयामहे। वसन्ततिलकं वृत्तम् ॥११७॥

चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं
नोच्चैर्जल्पति न स्मितं वितनुते गृह्णाति वीटिं न वा ।
तल्पोपान्तमुपेत्य किन्तु पुलकभ्राजत्कपोलद्युतिः
कान्तः केवलमाननेन शिरसा मुक्तास्रजं गुम्फति ॥११८॥

प्रियायाः प्रकोपे यः प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनोभावं गृह्णाति स मध्यमः । यथा ।

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन हीनं वचो
नेत्रे शोणसरोजकान्तिरुचिरे क्वापि क्षणं स्थीयताम् ।
माल्यायाः करणोद्यमो मकरिकारम्भः कुचाम्भोधरे
धूपः कुन्तलधोरणीषु सुतनोः सायन्तनो दृश्यते ॥११९॥

चक्षुरिति । कान्तः पक्ष्मलदृशः घनलोमावृतचक्षुषः प्रियायाः इति शेषः शोणं रक्तं यत् अरविन्दं पद्मं तस्य श्रीरिव श्रीर्यस्य तादृशं चक्षुःप्रान्तम् अपाङ्गम् उदीक्ष्य दृष्ट्वा उच्चैः न जल्पति नाभाषते, स्मितं न वितनुते, वीटिं ताम्बूलं न वा गृह्णाति, किन्तु तल्पोपान्तं शय्याप्रान्तदेशम् उपेत्य प्राप्य पुलकेन भ्राजन्ती कपोलयोः द्युतिर्यस्य तथाभूतः सन् आननेन अवनतेन शिरसा केवलं मुक्तास्रजं मुक्ताहारं गुम्फति रचयति रोदितीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥११८॥

आस्यमिति । यद्यपि इदम् आस्यं वदनं हास्यवर्जितं, वचः लास्येन विभ्रमविशेषेणेति भावः हीनं वर्जितं, नेत्रे नयने शोणं रक्तं यत् सरोजं तस्येव कान्त्या प्रभया रुचिरे मनोहरे, तथापि क्वापि क्षणं स्थीयतां किञ्चित्कालं अस्याः सन्निधावगत्वा विश्रम्यतामिति यावत् । सुतनोः सुन्दर्याः अस्याः माल्यायाः करणोद्यमः रचनाचेष्टितं कुचाम्भोधरे स्तनकुम्भे मकरिकारम्भः मकराकृतिपत्रावलीरचनमित्यर्थः तथा कुन्तलधोरणीषु केशपाशेषु सायन्तनः

भयकृपालज्जाशून्यः कामक्रीडायाम् अकृतकृत्याविचारोऽधमः। स यथा।

उदयति हृदि नैव यस्य लज्जा
न च करुणा न च कोऽपि भीतिलेशः।
वकुलमुकुलकोषकोमलां मां
पुनरपि तस्य करे न पातयेथाः ॥१२०॥

मानी यथा।

बाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद्बहिः प्रस्थिते।
प्रातर्वीतविलोकने परिहृतालापे विवृत्तानने
प्राणेशे निपतन्ति हन्त कृपणा वामभ्रुवो दृष्टयः ॥१२१॥

धूपः दृश्यते। मार्जारिरचनया अस्याः मन्मथोद्यमः प्रकाश्यते तदस्याः कोपो न चिरायेति भावः। कान्तं प्रति नायिकासख्या उक्तिरियम् ॥११९॥

उदयतीति। यस्य हृदि लज्जा नैव, करुणा न च कोऽपि भीतिलेशः भयविन्दुः न च उदयति, पुनरपि तस्य करे वकुलमुकुलस्य कोषवत् कोमलां मां न पातयेथाः नार्पय। सखीं प्रति नायिकाया उक्तिः। पुष्पिताग्रावृत्तम् ॥१२०॥

बाह्येति। तव वचः बाह्यं यत् आकूतम् अभिप्रायः तत्परायणं तत्प्रवणं बाह्यप्रणयप्रकाशनं तव वचः न तु आन्तरप्रणयपरमिति भावः, मनः वज्रोपमेयम् अतिकठिनमित्यर्थः, अतः ते इमां वाचं श्रुत्वा विनयम् अपास्य त्यक्त्वा प्राणेशे कान्ते प्रातः वीतविलोकने त्यक्तावलोकने त्वां प्रति अकृतदृष्टिक्षेपे इति यावत् परिहृतालापे त्यक्तालापे विवृत्तानने परावृत्तमुखे सति व्याजात् छलात् बहिः प्रस्थिते प्रचलिते सति वामभ्रुवः तवेति शेषः कृपणाः

वाक्‌चेष्टाव्यङ्गसमागमश्चतुरः । चेष्टाव्यङ्गसमागमो यथा ।

कान्ते कनकजम्बीरं करे किमपि कुर्वति ।
आगारलिखिते भानौ विन्दुमिन्दुमुखी ददौ ॥१२२॥

वचनव्यङ्गसमागमो यथा ।

तमोजटाले हरिदन्तराले
काले निशायां तव निर्गतायाः ।
तटे नदीनां निकटे वनानां
घटेत शातोदरि ! कः सहायः ॥१२३॥

प्रोषितपतिरुपपतिः वैशिकश्च भवति । क्रमेणोदाहरणानि यथा ।

ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो
वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ।

टीनाः दृष्टयः ॰फन्न खेदे निपतन्ति । एतस्या नायिकां प्रत्युक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥१२१॥

कान्ते इति । कान्ते किमपि कनकजम्बीरं शौवर्णं जम्बीराख्यफलविशेषं सुरतोत्सवसूचकमिति भावः करे कुर्वति सति इन्दुमुखी कामिनीति शेषः आगारलिखिते गृहचित्रिते भानौ सूर्ये सूर्यप्रतिकृतावित्यर्थः विन्दुं ददौ आच्छादयामासेति यावत् । एतेन रजन्यां सुरतोत्सवो भवितेति सूचितं नायिकयेति भावः । अनुष्टुब्वृत्तम् ॥१२२॥

तम इति । हे शातोदरि ! कृशोदरि ! हरिदन्तराले दिगन्तरे तमोजटाले अन्धकारावृते इति यावत् निशायां काले नदीनां तटे वनानां निकटे निर्गतायाः तव कः सहायः घटेत ? न कोऽपीत्यर्थः, तस्मात् मया सह रमस्वेति भावः । उपजातिर्वृत्तम् ॥१२३॥

ऊरू इति । यस्याः कान्ताया इति शेषः ऊरू रम्भा कदली-

नाभिः कूपो वलिरपि सरित् पल्लवः किञ्च पाणि-
र्यस्याः सा चेदुरसि न कथं हन्त ! तापस्य शान्तिः ॥१२४॥

यान्त्याः सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्त्तमाने ।
अन्तःस्मितद्युतिचमत्कृतदृक्तरङ्गै-
रङ्गीकृतं किमपि वामदृशः स्मरामि ॥१२५॥

अधृतपरिपतन्निचोलबन्धं
मुषितनकारमवक्रदृष्टिपातम् ।
प्रकटितहसितमुन्नतास्यपद्मं
पुरसुदृशः स्मरचेष्टितं स्मरामि ॥१२६॥

तस्या इत्यर्थः, दृगपि नेत्रमपि कमलं, केशपाशः शैवलं जलनीली, वक्त्रं वदनं चन्द्रः, जल्पितं वचनम् अमृतं, मध्यदेशः कटिदेशः मृणालं, नाभिः कूपः, वलिः मध्यदेशरेखात्रयमित्यर्थः अपि सरित् नदी, किञ्च पाणिः पल्लवः, सा कान्ता चेत् यदि उरसि वक्षसि स्यादिति शेषः तदा तापस्य शान्तिः कथं न भवेदिति शेषः हन्त खेदे । मन्दाक्रान्तावृत्तम् ॥१२४॥

यान्त्या इति । व्याजात् छलात् वर्त्मनि मार्गे उपेत्य मयि वर्त्तमाने सति सलिलकेलिकुतूहलाय जलक्रीड़ोत्सवाय सरः यान्त्याः गच्छन्त्याः वामदृशः वामनयनायाः अन्तःस्मितस्य आन्तरहसितस्य द्युत्या चमत्कृताः विचित्रिताः ये दृशां तरङ्गाः तैः किमपि अनिर्वचनीयम् अङ्गीकृतं स्मरामि । वसन्ततिलकं वृत्तम् ॥१२५॥

अधृतेति । पुरदृशः पुराङ्गनायाः अधृतः अतएव परिपतन् स्खलन् निचोलबन्धः नीविबन्धः यस्मिन् तत्, मुषितः हृतः नकारो निषेधवाचकः शब्द इति भावः यस्मिन् तथोक्तं प्रतिषेध-

अनभिज्ञनायको नायिकाभाषी यथा ।

शून्ये सद्मनि योजिता बहुविधा भङ्गी वने निर्जने
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः ।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दूति ! कियता यत्नेन संज्ञास्यति ॥१२७॥

न च नायिकाया इव नायकस्यापि ते ते भेदाः सन्तीति न वाच्यम् अस्या अवस्थाभेदेन भेदाः । अस्य च स्वभावभेदेन भेदा इति विशेषात् । अनुकूलत्वं, दक्षिणत्वं, धृष्टत्वं, शठत्वमिति चत्वार एव नायकानां स्वभावाः । अन्यच्च अवस्थाभेदेन यदि नायकानां भेदः स्यात् तदा उक्तविप्रलब्धखण्डितादयोऽपि नायकाः स्वीकर्त्तव्याः । तथाच सङ्केतव्यवस्थायां स्त्रीणामनागमने अन्यसम्भोगाशङ्काविषयत्वे अन्यसम्भोगचिह्नितत्वं वा नायकानामपि स्यात्

वचनरहितमित्यर्थः, अवक्रः सरलः दृष्टिपातः यस्मिन् तथाभूतं, प्रकटितम् आविष्कृतं स्मितं यस्मिन् तथोक्तम्, उन्नतम् आस्यपद्मं मुखकमलं यस्मिन् तथाविधं स्वरचेष्टितं स्मरामि । पुष्पिताग्रा-वृत्तम् ॥१२६॥

शून्ये इति । हे दूति ! शून्ये निर्जने सद्मनि गृहे बहुविधा भङ्गी विभ्रमविशेषः योजिता कृता, निर्जने वने पुष्पव्याजं पुष्पचयनच्छलम् उपेत्य कस्येति यावत् निर्गतम्, अथ किन्तु दृष्टयः स्फारीकृताः विशालीकृता इत्यर्थः, ताम्बूलाहरणच्छलेन वक्षोरुहौ कुचौ च व्यक्तौ प्रकटौ विहितौ कृतौ मयेति शेषः एतेनापि न वेत्ति न बुध्यते मदाशयमिति कान्तश्चेति शेषः, अतः कियता यत्नेन संज्ञास्यति सम्यक् वेत्स्यति ? शार्दूलविक्रीडितं वृत्तम् ॥१२७॥

न तु नायिकानां, ताः प्रति तदुद्भावे रसाभासतापत्ति-
रिति। तेषाञ्च पीठमर्द्दविटचेटकविदूषकभेदाच्चतुर्विधाः।
कुपितस्त्रीप्रसादकः पीठमर्द्दकः। स यथा।

कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिता मेदिनी।
आस्तां वा स्पृहयालु लोचनमिदं व्यावर्त्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य चैव सुतपोवृन्दानि वन्दामहे॥१२८॥

नर्मसचिवोऽप्ययमेव। कामतन्त्रकलाकोविदो विटः।
स यथा।

आयातः कुसुमेश्वरोऽपि जयते सर्वेश्वरो मारुतो
भृङ्गः कूजति भैरवो न निकटं प्राणेश्वरो मुञ्चति।
एते सिद्धरसाः प्रसूनविशिखो वैद्योऽद्य वेद्योत्सवो
मानव्याधिरसौ कृशोदरि! कथं त्वच्चेतसि स्थास्यति॥१२९॥

कोऽयमिति। अयं कोपविधिः मानावलम्बनमित्यर्थः कः? करुणागर्भं सदयमित्यर्थः वचः प्रयच्छ, मेदिनी पृथिवी पीयूषद्रवदीर्घिकायाः अमृतरसमय्याः सरस्या इत्यर्थः परिमलैः सौरभैः आमोदिता उल्लासिता जायताम् स्पृहयालु सतृष्णमित्यर्थः लोचनम् आस्तां तिष्ठतु वा, मुहुः पुनः पुनः इदं लोचनं व्यावर्त्तयन्ती विघूर्णयन्ती सती यस्मै कुप्यसि, तस्य सुतपोवृन्दानि शोभनानि तपांसि एव वन्दामहे प्रशंसामः। बहूनि तपांसि तेन कृतानीति भावः। शार्द्दूलविक्रीडितं वृत्तम्॥१२८॥

आयात इति। हे कृशोदरि! कुसुमेश्वरः वसन्त इत्यर्थः आयातः उपस्थितः, सर्वेश्वरः सर्वजीवन इत्यर्थः मारुतः अपि जयते सर्वोत्कर्षेण वर्त्तते, भृङ्गः भैरवः भयङ्करः सन् कूजति

सन्धानचतुरश्चेटकः। यथा।

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
र्दैवात् निकुञ्जभवनं समुपाजगाम।
तत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥१३०॥

अङ्गादिवैकृत्यैर्हास्यपरो विदूषकः। यथा।

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय।
तत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकूटनादः ॥१३१॥

जानीति, प्राणेश्वरः कान्तः निकटं सान्निध्यं न मुञ्चति, एते वसन्तादयः सिद्धरसाः प्रसिद्धौषधानि, वैद्यः मनोगम्यः उत्सवो यस्य तथाभूतः प्रसूनविशिखः कामः वैद्यः चिकित्सकः, अतः अद्य तव चेतसि असौ मानव्याधिः कथं स्थास्यति? नैव स्थात् शक्यतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥१२९॥

सेति। चन्द्रवत् सुन्दरमुखी सा राधेति भावः, स च नन्दसूनुः कृष्णः दैवात् निकुञ्जभवनं समुपाजगाम। तत्र अन्तरे अवकाशे सहचरः कश्चित् गोपबालक इति भावः तरणौ सूर्य्ये कठोरे तीक्ष्णकिरणवर्षिणीति यावत् मध्याह्नकाले इति भावः पानीयपानं जलपानमेव कपटं छलं तेन सरः प्रतस्थे। वसन्ततिलकं वृत्तम् ॥१३०॥

आनीयेति। नीरजमुखीं पद्ममुखीं शयनोपकण्ठं शय्याप्रान्तम् आनीय कुचकञ्चुकस्य स्तनावरणस्य मोचनाय उत्कण्ठितः उत्सुकः सदृश इति यावत् अस्मि। तत्रान्तरे तस्मिन्नवसरे विदूषकेण छक

स्वेदस्तम्भोऽथ रोमाञ्चो स्वरभङ्गोऽथ वेपथुः ।

वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्त्विका गुणाः ॥ यथा ।

भेदो वाचि दृशोर्जलं कुचतटे स्वेदः प्रकम्पोऽधरे
पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति ।
आलस्यं नयनाश्रयं चरणयोः स्तम्भः समुज्जृम्भते
तत् किं राजपथे कृशोदरि ! दृशोर्जातोऽतिथिः केशवः १२२

रतिस्थायिभावः शृङ्गारः । स च द्विविधः, सम्भोगो विप्रलम्भश्च । सम्भोगो यथा ।

वियति विलोलितजलदः स्फुरति कूजति कपोतो निरन्तरम् ।
निपतति तारका समान्दोलयति वीचिरमरनद्याः ॥१२३॥

पुनः पुनः प्रातस्तनः प्रातःकालीनः तरुणकुक्कुटानां युवककुक्कुटानां कूटस्य समूहस्य नादः अकारि कृतः । वसन्ततिलकं वृत्तम् ॥१२१॥

भेद इति । हे कृशोदरि ! वाचि भेदः वचनस्खलनमित्यर्थः, दृशोर्नेत्रयोः जलम् अश्रुपात इत्यर्थः, कुचतटे स्तनाभोगे स्वेदः, अधरे प्रकम्पः, गण्डतटी कपोलदेशः पाण्डुः, वपुः शरीरं पुलकितं रोमाञ्चितं, मनः लीनं निस्तब्धं तिष्ठति, आलस्यं जाड्यं नयनाश्रयं नयनयोः आश्रितमित्यर्थः, चरणयोः स्तम्भः समुज्जृम्भते गतौ अक्षमतेत्यर्थः, तत् तस्मात् राजपथे केशवः कृष्णः किं दृशोः नयनयोः अतिथिः जातः ? कृष्णदर्शनेन तवेदृशी अवस्था जाता ? इति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥१२२॥

वियतीति । वियति आकाशे विलोलितः चपलः जलदः मेघः स्फुरति राजते, कपोतः निरन्तरं कूजति शब्दायते, तारका नक्षत्रं निपतति च, अमरनद्याः मन्दाकिन्याः वीचिस्तरङ्गः समान्दोलयति सम्यक् प्रस्फुरतीत्यर्थः । सम्भोगकालोऽयमिति कामपि प्रति कस्यचिदुक्तिरियम् आर्यावृत्तम् ॥१२३॥

विप्रलम्भो यथा ।

प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः
प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति ।
अन्यद् ब्रूमस्तव मुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षः पक्षं सृजति विधिना पल्लवस्य छलेन ॥ १२४ ॥

अभिलाषस्तथा चिन्ता स्मृतिश्च गुणकीर्त्तनम् ।
उद्वेगश्च विलापश्च उन्मादो व्याधिरेव च ।
जड़तादर्शनान्येता दशावस्थाः प्रकीर्त्तिताः ॥

सङ्गमेच्छाभिलाषः । यथा ।

तस्यां सुतनुसरस्यां चेतो नयनञ्च तथा निष्पतितम् ।
चेतो गुरु च निमग्नं लघु नयनं सर्वतो भ्रमति च ॥१२५॥

दर्शनसम्भोगयोः प्रकारभावना चिन्ता । यथा ।

प्रादुर्भूत इति । नवजलधरे प्रादुर्भूते उदिते सति त्वत्पथं तव स्थानं द्रष्टुकामाः पङ्केरुहदलदृशः पद्मपलाशाक्ष्याः प्राणाः कण्ठदेशं प्रयान्ति आगच्छन्ति । अन्यत् अपरं ब्रूमः कथयामः तव मुखविधुं मुखचन्द्रं द्रष्टुं पल्लवस्य छलेन विधिना वक्षः उरःस्थलम् उड्डीय गन्तुं पक्षं सृजति रचयति । वक्षसि पल्लवदानेन विरह-तापशान्तिः क्रियते इति प्रसिद्धिमाश्रित्य अपह्नुतिरलङ्कारोऽत्र सङ्घटते इति बोध्यम् । मन्दाक्रान्तावृत्तम् ॥१२४

तस्यामिति । तस्यां सुतनुसरस्यां शुभाङ्गीरूपसरसि चेतः चित्तं नयनञ्च तथा निष्पतितं किन्तु गुरु च भारवत् चेतः निमग्नं, लघु नयनं सर्वतः समन्तात् भ्रमति च तस्याः सर्वाङ्गेषु विचरतीति भावः । आर्य्यावृत्तं, यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके साऽर्य्येति तल्लक्षणात् ॥१२५॥

मया विधेयो मुहुरद्य तस्मिन् कुञ्जोपकण्ठे कलकण्ठनादः ।
राधा मधौ विभ्रममावहन्ती कुर्वीत नेत्रोत्पलतोरणानि ॥ १३६ ॥

प्रियायाः चेष्टाद्युद्बोधसंस्कारजन्यं ज्ञानं स्मृतिः । यथा ।

रामो लक्ष्मणदीर्घदुःखचकितो नाविष्करोति व्यथां
श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि ।
वातावर्त्तविवर्त्तमानदहनक्रूरैरनङ्गज्वरैः
क्षामः किन्तु विदेहराजतनयां भूयः स्मरन् वर्त्तते ॥ १३७ ॥

विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्त्तनम् । यथा ।

संस्पर्शः स्तनसंस्पर्शो वीक्षणं रत्नवीक्षणम् ।
तस्याः केलिकलालापसमयः समयः सखे ! ॥ १३८ ॥

मयेति । अद्य मधौ वसन्ते मया तस्मिन् कुञ्जोपकण्ठे निकुञ्जोपान्ते मुहुः पुनः पुनः कलः मधुरः कण्ठनादः कण्ठस्वरः विधेयः वेणुनिनदेन सङ्केतं कार्य्यमिति यावत्, राधा विभ्रमं विलासम् आवहन्ती प्रकटयन्ती सती नेत्रोत्पलतोरणानि नयनकुवलयतोरणस्रज इत्यर्थः कुर्वीत करोतु । उपजातिवृत्तम् ॥ १३६ ॥

राम इति । रामः लक्ष्मणस्य दीर्घदुःखेन शक्तिशेलभेदजनितेनेति भावः चकितः विमूढः सन् व्यथाम् आन्तरं दुःखं न आविष्करोति न प्रकटयति, उष्णतरं श्वासं न जहाति मुञ्चति, चक्षुषि सलिलं न वा धत्ते न वा रोदितीत्यर्थः, किन्तु विदेहराजतनयां सीतां भूयः पुनः पुनः स्मरन् वातावर्त्तेन वायुसञ्चारेण विवर्त्तमानः प्रज्वलन् यो दहनः अग्निः तद्वत् क्रूराः दारुणाः तैः अनङ्गज्वरैः कामसन्तापैः क्षामः क्षीणः दग्ध इति यावत् वर्त्तते तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ॥ १३७ ॥

संस्पर्श इति । हे सखे ! तस्याः संस्पर्शः स्तनयोः संस्पर्शः

विषयजन्यदुःखकामक्लेशजनितसकलविषयकद्वेयता-
ज्ञानम् उद्वेगः । यथा ।

गरलद्रुमकन्दमिन्दुबिम्बं क्रीडावारिजवारणो वसन्तः ।
रजनी स्मरभूपतेः कृपाणी करणीयं किमतःपरं विधातः ! १३९

प्रियाश्रितकाल्पनिकव्यवहारः प्रलापः । यथा । कल्प-
नायाः कारणमन्तःकरणविक्षेपः । तस्य च निदानमुत्कण्ठा ।

अर्द्धमुद्वीक्षणं चक्षुरर्द्धसम्मीलनं मनः ।
अर्द्धसंस्पर्शनः पाणिरद्य मे किं भविष्यति ॥ १४० ॥

औत्सुक्यसन्तापादिकारितमनोविपर्य्याससमुत्थितप्रियाश्रितवृथाव्यापार उन्मादः । व्यापारः कायिको वाचिकश्चेति ।

स्तनसंस्पर्शेन यादृशं सुखं तस्याः शरीरस्पर्शेन तादृशं सुखं स्तन-
संस्पर्शो दूरे तिष्ठत्विति भावः । वीक्षणम् अवलोकनं रत्नानां वीक्षणं
रत्नवीक्षणे यादृश आनन्दः तस्याः वीक्षणे तादृश इति भावः ।
केलिकलायाः निधुवनक्रीड़ायाः आजायस्य समयः स्तनयः अन्यः
समयः विफल इति भावः । अनुष्टुव्वृत्तम् ॥१३८॥

गरलेति । हे विधातः ! इन्दुबिम्बं चन्द्रमण्डलं गरलद्रुमस्य
विषवृक्षस्य कन्दं मूलमित्यर्थः, वसन्तः क्रीडावारिजानां लीला-
पद्मानां वारणः ध्वंसन इत्यर्थः, रजनी रात्रिः स्मरभूपतेः काम-
भूपतेः कृपाणी तरवारः, अतःपरम् इदानीं किं करणीयम् ?
चन्द्रबिम्बादयः नितरामुद्दीपकाः । कुतः कथं मनसः शान्तिर्विधेयेति
कामिनोक्तिः ॥१३९॥

अर्द्धमिति । अद्य मे मम चक्षुः अर्द्धम् उद्वीक्षणम् उन्मान-
दर्शनं, मनः अर्द्धसम्मीलनम् अर्द्धसङ्कुचितं प्रायेण विहृलमिति भावः,
पाणिः करः अर्द्धसंस्पर्शनः सम्यक्स्पर्शज्ञानरहित इति यावत्

कायिको यथा ।

प्रतिफलममृतांशोः प्रेक्ष्य कान्तो मृगाक्ष्या
मुखमिति परिहासं कर्त्तुमभ्युद्यतोऽभूत् ।
अथ शिथिलितवाचो मानमाशङ्क्य तस्याः
स्पृशति पुलकभाजा पाणिपङ्केरुहेण ॥ १४१ ॥

वाचिको यथा ।

किं रे विधो ! मृगदृशो मुखमद्वितीयं ?
कन्दर्प ! दृप्यसि वृथा दृगमृतपलैस्ते ? ।
भङ्कारमावहसि भृङ्ग ! तनूनं तादृक् ?
तस्यास्तथा विलसितं नहि वेदनीयम् ॥ १४२ ॥

पाणिना किं स्पृशामीति न सम्यक् ज्ञायते इति भावः, अतः किं भविष्यति इति न जाने इति शेषः । अनुष्टुब्वृत्तम् ॥१४०॥

प्रतिफलमिति । कान्तः मृगाक्ष्याः मुखम् अमृतांशोश्चन्द्रस्य प्रतिफलं प्रतिबिम्बम् इति प्रेक्ष्य परिहासं कर्त्तुम् अभ्युद्यतः प्रवृत्तः अभूत् । अथानन्तरं शिथिलिता वाक् यया तथाभूतायाः तस्याः मृगाक्ष्याः मानम् आशङ्क्य मत्वा पुलकभाजा रोमाञ्चितेन पाणिपङ्केरुहेण करकमलेन स्पृशति मृगाक्षीमिति शेषः सान्त्वनार्थमिति भावः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकै-रिति तल्लक्षणात् ॥१४१॥

किमिति । रे विधो ! चन्द्र ! मृगदृशो मृगाक्ष्या अद्वितीयं निरुपमं मुखं किं निरर्थकं दृप्यसि । हे कन्दर्प ! काम ! दृशं नयनं तस्या इत्यर्थः, ते तव उत्पलैः नीलपद्मैः किं वृथा दृप्यसि स्पर्द्धसे ? हे भृङ्ग ! भ्रमर, ! झङ्कारम् आवहसि करोषि इति यत्, तथा ते तव तादृक् तादृशी कथाक्षा इव तनुः शरीरयष्टिर्न्न भासतीति शेषः । तस्यास्तथा प्रविष्टं विलसितं हि निश्चितं न च पुनः

मदनवेदनासमुत्थसन्तापकार्श्यादिदोषो व्याधिः । यथा ।

कोदण्डाद् विशिखो मनो निविशते कामस्य तस्या अपि
भ्रूवल्ली नयनाञ्चलं मनसिजो वासः समुन्मीलति ।
इत्थं साम्यविधौ तयोः प्रभवति स्वामी तथा सिद्धतां
तन्मानस्तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥ १४३ ॥

विरहव्यथा निष्कारणसत्त्वे बन्धजीवनावस्था जड़ता । यथा ।

पाणिर्नीरवकङ्कणः स्तनतटी निष्कम्पमानांशुका
दृष्टिर्निश्चलतारका समभवद् ध्वस्तांशुकं कुण्डलम् ।

रमणीयम् द्रष्टव्यं पुनरपि इमां किं करिष्यामीति भावः । वसन्ततिलकं वृत्तम् ॥१४२॥

कोदण्डादिति । कामस्य कोदण्डात् धनुषः विशिखः शरः तस्याः मनः निविशते प्रविशति, तस्या अपि भ्रूवल्ली नयनाञ्चलं नेत्रप्रान्तम् अपाङ्गमित्यर्थः निविशते, अपाङ्गपर्यन्तविस्तीर्णा तस्या भ्रूवल्लीति भावः । यत्र मनसिजः कामः वसन् सन् इत्यर्थः समुन्मीलति आविर्भवति । इत्थं तयोः कान्तामनसिजयोः साम्यविधौ यथा मनसिजस्तच्चित्तकोणे निविशते तथा मनसिजस्यापि शरस्तन्मनसि निविशते इत्येवं सादृश्यविधाने स्वामी प्रियः तथा प्रभवति कर्त्तुं शक्नोति यथा तस्या मानः सिद्धतां साफल्यं सत्त्वतां प्राप्नोति यथा च एषा कान्ता क्रमात् कालात्ययक्रमेणेति यावत् अतनुताम् अनङ्गतां न गच्छति न प्राप्नोति यथा न म्रियते इति यावत् । स्वामिनः कान्तायाः मानस्य सम्मानरक्षणेन सन्तोषणं कर्त्तव्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१४३॥

पाणिरिति । पाणिः करः नीरवः निःशब्दः क्वणत्कारवर्जित इति यावत् कङ्कणो यत्र तथाभूतः, स्तनतटी निष्कम्पमानम् अंशुकं वसनं वस्त्रं तयोक्ताः, दृष्टिः निश्चला तारका यस्यां तथा॰

कश्चित्तार्पितया समं मृगदृशोर्भेदो भवेन्नो यदि
त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥ १४४ ॥

स्वप्नचित्रसाक्षाद्भेदात् दर्शनं त्रिधा । स्वप्नदर्शनं यथा ।

मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्
कर्णात् स्वर्णाभरणमपि वा नीतवान्नैव रागात् ।
आहो स्वप्ने वकुलकुसुमं भूषणं सन्दधानः
कोऽयं चौरो हृदयमहरत् तन्वि ! तन्न प्रतीमः ॥१४५॥

चित्रदर्शनं यथा ।

नीवीं हरेदुरसिजं विलिखेन्नखेन
दन्तच्छदञ्च दशनेन दशेदकस्मात् ।

भूता, कुण्डलम् ध्वस्तः अंशुः किरणः यस्य तादृश दोलनराङ्कित्वादिति भावः समभवत्, अतः चित्रार्पितया आलेख्यनिहितया समं मृगदृशः मृगाक्ष्याः का भेदः भवेत् नैव कोऽपीत्यर्थः यदि तव नाम-स्मरणेन कोऽपि पुलकारम्भः रोमाञ्चोदयः नो समुज्जृम्भते नोदेति । केवलं रोमाञ्च एव उभयोर्भेदक इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१४४॥

मुक्ताहारमिति । हे तन्वि ! कृशाङ्गि ! सखीति शेषः कोऽयं चौरः कुचगिरेः स्तनशैलात् मुक्ताहारं न च, हस्तात् कङ्कणं नैव, कर्णात् स्वर्णाभरणं कुण्डलादिकमिति यावत् नैव नीतवान् केवलं रागात् अनुरागादिति यावत् स्वप्ने वकुलकुसुमं भूषणं सन्दधानः सन् आहो आश्चर्यं हृदयमेव अहरत्, तं न प्रतीमः न जानीमः । मन्दाक्रान्तावृत्तम् ॥१४५॥

नीवीति । नीवीं कटिबन्धवसनं हरेत् स्खलयेत्, नखेन उरसिजं स्तनं विलिखेत्, दशनेन अकस्मात् सहसा दन्तच्छदं दशेत्, [illegible]

इत्थं पटे विलिखितं प्रविलोक्य कान्तं
बाला पुरेव न जहार विहारश्रद्धाम् ॥ १४६॥

साक्षाद्दर्शनं यथा ।

चेतस्त्वं चलतां व्रज प्रियसखि व्रीडे ! न मां पीडय
भ्रातर्मुञ्च दृशो निमेष ! भगवन् काम ! क्षणं क्षम्यताम् ।
बर्हं मूर्ध्नि च कर्णयोः कुवलयं वेणुं दधानः करे
सोऽयं लोचनगोचरो भवतु मे दामोदरः सुन्दरः ॥ १४७ ॥

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम् ।
कुर्वन्तु कवयः कर्णभूषणं कृपया मम ॥ १४८ ॥

एवंरूपं कान्तं पटे विलिखितं प्रविलोक्य दृष्ट्वा बाला मुग्धा कान्ता पुरेव पूर्ववत् एतादृशचित्रदर्शनात् पूर्वमेवेत्यर्थः विहारश्रद्धां सुरतश्रद्धां न जहार न तत्याज समधिकं श्रद्धितामूदिति यावत् । वसन्ततिलकं वृत्तम् ॥१४६॥

चेत इति । हे चेतः ! त्वं चलतां चञ्चलताम् अधीरतां व्रज गच्छ सतृतुकं भवेति यावत्, हे प्रियसखि व्रीडे ! लज्जे ! मां न पीडय न प्रतिबध्नानेति यावत्, भ्रातः निमेष ! दृशो नयनानि मुञ्च त्यज, निर्निमेषम् अवलोकयामीति भावः । भगवन् काम ! क्षणं क्षम्यतां मां न प्रहर प्रहारजनितमूर्च्छया दर्शनाव्याघातादिति भावः । मूर्ध्नि शिरसि बर्हं मयूरपिच्छं कर्णयोः कुवलयं नीलोत्पलं करे च वेणुं दधानः सोऽयं सुन्दरः मनोहरः दामोदरः कृष्णः मे मम लोचनगोचरः दृष्टिविषयः भवतु । शार्दूलविक्रीडितं वृत्तम् ॥१४७॥

माध्वीकेति । कवयः कृपया माध्वीकस्य मधुनः स्यन्दसन्दोहः स्रावसङ्घातः तद्वत् सुन्दरी मनोहारिणी तां मे मम रसमञ्जरीं कर्णभूषणं कुर्वन्तु साग्रहं शृणुन्त्विति यावत् । अनुष्टुप् वृत्तम् ॥१४८॥

तातो यस्य जनेश्वरः कविकुलालङ्कारचूड़ामणि-
र्देशो यस्य विदेहभूः सुरसरित्स्यन्देन संवेष्टिता।
पद्येनात्मकृतेन तेन कविना श्रीभानुना बोधिता
वाग्देवीश्रुतिपारिजातकुसुमस्पर्द्धाकरी मञ्जरी॥१४८॥

इति श्रीमहामहोपाध्यायभानुदत्तमिश्रविरचिता
रसमञ्जरी समाप्ता।

---

# विद्यासुन्दरम्।

---

कालिन्दीतटसन्निधावुपवने गोपाङ्गनालिङ्गन-
क्रीड़ाकर्षणचुम्बनादिरसितः संमूर्च्छितो वेणुना।

तात इति। कविकुलस्य अलङ्कारचूड़ामणिः शिरोभूषणभूत इत्यर्थः जनेश्वरः यस्य तातः पिता, सुरसरितः गङ्गायाः स्यन्देन प्रवाहेण संवेष्टिता गङ्गातीरवर्त्तिनीत्यर्थः विदेहभूः मिथिला-भूमिः यस्य देशः जन्मस्थानमित्यर्थः, तेन कविना श्रीभानुना आत्मकृतेन स्वरचितेन पद्येन वाग्देव्याः सरस्वत्याः श्रुतेः कर्णस्य यत् पारिजातकुसुमं तस्य स्पर्द्धाकारी ततोऽपि चमत्कारिणीति भावः मञ्जरी रसस्येति शेषः बोधिता ज्ञापिता प्रकटितेत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥१४८॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
रसमञ्जरीव्याख्या समाप्ता।

---

कालिन्दीति। कालिन्द्याः यमुनायाः तटस्य सन्निधौ उपवने गोपाङ्गनानाम् आलिङ्गनं क्रीड़ार्थमाकर्षणं चुम्बनम् आदि येषां तेषु

स्थित्वा कल्पमहीरुहाश्रितलतावासे सुपुष्पान्विते
नानाभूषणभूषितो विहसितः कृष्णः प्रसन्नोऽस्तु ते ॥१॥

राजात्मजे ! कामकलाकलाप-
संगीतविद्यारसिकेऽम्बुजाक्षि ! ।
हेमप्रभे ! पीननितम्बबिम्बे !
बिम्बोष्ठि ! रम्भोरु ! मयि प्रसीद ॥२॥

गिरौ समाकर्ण्य मयूरनादं जगाद विद्या वचसा कुमारम् ।
पद्येन कोऽयं वद रौति शैले मृदुस्वरं प्राज्ञवरो यदि स्याः॥३

रसितः सञ्जातरसः, वेणुना सम्मूर्च्छितः कृतस्वरसंयोगः, सुपुष्पैरन्विते कल्पमहीरुहैः कल्पवृक्षैराश्रितलताराचिते वासे लतामण्डपे इति यावत् स्थित्वा तिष्ठन्, नानाभूषणैः विविधालङ्कारैः भूषितः, विहसितः हास्यं कुर्वन्, कृष्णः ते तव प्रसन्नः अस्तु भवतु । शार्दूलविक्रीडितं वृत्तम् । सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥१॥

राजात्मजे इति । हे राजात्मजे राजपुत्रि ! कामकलाकलापः मदनव्यापारसमूहः सङ्गीतविद्या च तयोः रसिके ! अम्बुजाक्षि पङ्कजनेत्रे ! हेमप्रभे सुवर्णगौराङ्गि ! पीननितम्बबिम्बे विशाल-नितम्बमण्डले ! बिम्बोष्ठि ! रम्भोरु ! मयि प्रसीद । इन्द्रवज्रावृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥२॥

गिराविति । गिरौ पर्वते मयूरस्य नादम् आकर्ण्य श्रुत्वा विद्या वचसा कुमारं सुन्दरं जगाद उवाच, यदि त्वं प्राज्ञवरः पण्डितवरः स्याः, तदा शैले पर्वते कोऽयं मृदुस्वरं रौति भ्रमति ? पद्येन श्लोकेन वद । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् । स्यादिन्द्र-वज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति, अनन्त-रोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ।३।

गोमध्यमध्ये ! मृगगोधरे ! हे सहस्रगोभूषणकिङ्कराणाम् ।
नादेन गोभृच्छिखरेषु मत्ता नदन्ति गोकर्णशरीरभक्षाः ॥४॥
स्वयोनिभक्षध्वजभवानां श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोऽरिबिम्बप्रतिबिम्बधारी कराल कान्ते ! पवनाशनादः ॥५॥

*बालेऽबलारत्न ! दयार्द्रचित्ते !
प्राणेश्वरि ! श्रीमति ! सुप्रसन्ने ! ।
दासोऽस्मि ते सुन्दरि ! राजपुत्रि !
प्राणांश्च रक्षस्व हि मे मृगाक्षि ! ॥६॥

गोमध्येति । हे गोमध्यमध्ये ! गौः शङ्खः तस्य मध्यमिव मध्यं यस्याः तत्सम्बुद्धौ कृशोदरीत्यर्थः, स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्यमरः । मृगगोधरे मृगनयनधारिणि ! सहस्रं गावः नेत्राणि यस्य सः सहस्रगोरिन्द्रः तस्य भूषणानि वाहनानीति यावत् मेघा इत्यर्थः तेषां किङ्कराः मयूराः तेषां नादेन ध्वनिना मत्ताः, गोकर्णानां सर्पाणां शरीरभक्षाः भुजङ्गभुज इत्यर्थः मयूरा इति यावत्, गोभृतः पर्वतस्य शिखरेषु नदन्ति शब्दायन्ते । उपजातिवृत्तम् ॥४॥

पुनश्च प्रकारान्तरेणोत्तरयति, स्वयोनीति । हे कान्ते ! गिरिगह्वरस्थः पर्वतगुहावर्त्ती, पवनाशनान् सर्पान् अत्तीति तथोक्तः मयूर इत्यर्थः, स्वस्य आत्मनः योनयः कारणानि काष्ठानीति भावः भक्षयतीति तथोक्तः अग्निरित्यर्थः तस्य ध्वजः धूमः तत्सम्भवानां मेघानामित्यर्थः, धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति मेघदूते कालिदासः । निनादं श्रुत्वा तमसाम् अरिबिम्बश्चन्द्रः तस्य प्रतिबिम्बधारी मेचकधारीत्यर्थः विस्तारितपिच्छ इति यावत् कराल दध्वान । उपजातिवृत्तम् ॥५॥

बाले इति । हे बाले ! मुग्धे ! अबलारत्न स्त्रीरत्नभूते ! दयार्द्रचित्ते ! प्राणेश्वरि ! श्रीमति ! सुप्रसन्ने ! सुन्दरि ! मृगाक्षि !

हे पान्थ ! चिन्ताकुलितातिमूढ़ः
संस्तौषि किं मामबलां कृशाङ्गीम् !
अर्थं यदि प्रार्थयसे भजेशं
मोक्षञ्च लक्ष्मीपतिमम्बुजाक्षम् ॥७॥

धनं त्वमेवात्र सुवर्णवर्णे ! स्त्रीरत्नभूते ! मम रत्नभूषा ।
सेवापि ते भूपतिजे ! प्रसन्ने ! सौख्यप्रदे ! मोक्षदवासुदेवः ८

प्रिये ! सदा पूर्णतरं मनोहरं
ते निष्कलङ्कं मुखचन्द्रमण्डलम् ।

राजपुत्रि ! अस्मि अहं ते तव दासः किङ्करः किङ्कर एव, मे मम प्राणांश्च जीवितानि रक्ष । इन्द्रवज्राष्टत्तम् ॥६॥

हे पान्थेति । हे पान्थ ! चिन्ताकुलित ! अतिमूढ़ः सन् अबलां पराधीनामिति भावः कृशाङ्गीं मां किं कथं संस्तौषि सम्यक् प्रशंससि ? यदि अर्थं धनं प्रार्थयसे अभिलषसि, तदा ईशं शङ्करं भज आराधय, यदि मोक्षं मुक्तिं प्रार्थयसे इति पूर्वेणान्वयः तदा अम्बुजाक्षं कमलनेत्रं लक्ष्मीपतिं नारायणं भजेति पूर्वेणान्वयः । इन्द्रवज्राष्टत्तम् ॥७॥

धनमिति । हे सुवर्णवर्णे ! काञ्चनगौराङ्गि ! स्त्रीरत्नभूते ! अत्र संसारे त्वमेव मम धनं रत्नभूषा रत्नालङ्कारश्च । हे प्रसन्ने ! सौख्यप्रदे सुखदायिनि ! भूपतिजे राजनन्दिनि ! ते तव सेवापि परिचर्य्यापि मोक्षदवासुदेवः मुक्तिदाता नारायणः त्वत्सेवैव मम मुक्तिसम्पादयित्रीति भावः । उपजातिष्टत्तम् ॥८॥

प्रिये इति । हे प्रिये ! सदा पूर्णतरम् अतिशयेन पूर्णं निष्कलङ्कम् अतएव मनोहरं ते तव मुखचन्द्रमण्डलं विलोक्य निशापतिः चन्द्रः सव्रीड़तया सलज्जतया स्वस्य अतथात्वादिति भावः प्रतप्तः सन्तापितः सन् जलधेः समुद्रस्य अभ्यन्तरं अभ्यन्तरं गतः प्रविष्टः ।

विलोक्य सव्रीड़तया निशापति-
र्गतः प्रतीचीं जलधेर्जलान्तरम् ॥९॥

किं केतकीपरिमलोत्थितगन्धलुब्धो
गुञ्जन् भ्रमन् भ्रमर! वाञ्छसि रन्तुमेताम्।
यत् कण्टकैः परिवृतामतुलामगम्यां
संरक्षितां व्रज निकुञ्जलतां सपुष्पाम् ॥ १० ॥

यत् केतकीकुसुमसौरभगन्धलुब्धो
भृङ्गस्तदर्पितरसोदितचित्तवृत्तिः।
किं कण्टकैर्भवतु दुर्गममेव किंवा
जानाति सुभ्रु! वरकुञ्जलतां न चेच्छतु ॥११॥

चन्द्रोऽस्तमित इति भावः। अत्र प्रतीयमानोत्प्रेक्षा। तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनरिति। वंशस्थविलेन्द्रवंशयोरुपजातिवृत्तं, वदन्ति वंशस्थविलं जतौ जरौ, तच्चेन्द्रवंशा प्रथमाक्षरे गुराविति ॥९॥

किमिति। हे भ्रमर! केतक्याः परिमलेन सम्मर्दनेन वायुसङ्घट्टनेनेति भावः उत्थितः यो गन्धः सौरभं तत्र लुब्धः अतएव गुञ्जन् स्वनन् भ्रमन् सन् कण्टकैः परिवृताम् अतुलां निरुपमां संरक्षिताम् अतएव अगम्याम् एतां केतकीं यत् रन्तुं वाञ्छसि अभिलषसि, तत् किं कथमित्यर्थः अपि प्रयासस्ते विफल इति भावः। अतः सपुष्पां सञ्जातपुष्पां निकुञ्जलतां वनलतामित्यर्थः अरक्षितामिति भावः व्रज गच्छ। वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥१०॥

यदिति। हे सुभ्रु! यत् यतः भृङ्गः केतकीकुसुमसौरभगन्धेन लुब्धः अतएव तदर्पिते रसे उदिता उद्गता सञ्जातेत्यर्थः चित्तवृत्ति-

त्वद्वर्तुलस्थूलसुवर्णकान्ति रम्यस्तनश्रीफलयुग्ममेतत् ।
दृष्ट्वा वने श्रीफलसङ्कुलं किं लज्जाभिरालम्बितमेव वृक्षे ॥१२॥

हे कोकिलाखिललतासु फलानि सन्ति
सन्त्यज्य तानि ननु चूतलतां सपुष्पाम् ।
किं काङ्क्षसीह रमितुं फलभोक्तुकामः
न ज्ञायसे नृपतिसेवकभीषणीयाम् ॥ १३ ॥

यच्चातकोऽन्यानि जलानि हित्वा
धाराजले प्राप्तमतिं करोति ।
तथा पिकश्चूतफलानि तानि
रम्याणि दृष्ट्वान्यफलं जहाति ॥ १४ ॥

रोष्टसियंस्मा तद्रसास्वादनिविष्टमना इत्यर्थः, अतः कण्टकैः किं भवतु ? दुर्गमत्वं किंवा जानाति ? तथापि वरकुब्जलताम् उत्तमां वनलतां न च ऐच्छत् नाभिलषति चेत्यर्थः । यत्र तस्य समासक्ति-र्जाता तत्रैव स खिन्नत्वकृतत्वेऽपि समासजति न परावर्त्तते इति भावः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

त्वदिति । तव वर्त्तुलं स्थूलं पीनं सुवर्णकान्ति एतत् रम्यस्तनमेव श्रीफलयुग्मं दृष्ट्वा वने श्रीफलानां सङ्कुलं समूहः लज्जाभिः किं वृक्षे आलम्बितमेव । स्तनस्य अतथासौन्दर्यं लज्जाहेतुरिति भावः । इन्द्रवज्रावृत्तम् ॥१२॥

हे इति । हे कोकिल ! अखिलासु समस्तासु लतासु फलानि सन्ति, तानि फलानि संत्यज्य फलभोक्तुकामः तदास्वादाकाङ्क्षीति यावत् सपुष्पां सकुसुमां चूतलतां रमितुम् इह किं कथं काङ्क्षसि अभिलषसि ? नृपतिसेवकैः राजकिङ्करैः भीषणीयाम् इमामिति यतः न ज्ञायसे न जानासि । वसन्ततिलकं वृत्तम् ॥१३॥

यदिति । यत् यथा चातकः अन्यानि जलानि हित्वा

विचक्षणे ! पद्मिनि ! पद्मगन्धे !
प्रमत्तमातङ्गगतेऽनुरक्ते ! ।
नृपात्मजे ! जीवय मा मनोज्ञे !
मनोजबाणव्रणखिन्नगात्रम् ॥ १५ ॥

मृदादिपात्रे सलिलं यथा स्यात्
तृष्णाहरं स्वादु सुशीतलञ्च ।
सुवर्णरत्नैरपि निर्मिते तु
गतं सुपात्रेऽम्बु तथा न किं स्यात् ॥ १६ ॥

व्यक्ता धाराजले मेघवारिणि प्राप्तमतिं गतमतिं करोति, तथा पिकः कोकिलः रम्याणि तानि चूतफलानि दृष्ट्वा अन्यफलं अश्नाति त्यजति चूतफलमेवाकाङ्क्षतीति भावः । उपजातिर्वृत्तम् ॥१४॥

विचक्षणे इति । विचक्षणे सुविज्ञे ! पद्मिनि ! पद्मिनीलक्षण-युक्ते रतिमञ्जर्याम् । भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरल-कुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचनसुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धेति । पद्मगन्धे पद्मगन्धवति ! प्रमत्तस्य मातङ्गस्य हस्तिनः गतमिव गतं गमनं यस्याः तत्सम्बुद्धौ, अनुरक्ते अनुरागवति ! मनोज्ञे मनोहारिणि ! नृपात्मजे राज-पुत्रि ! मनोजबाणेन कामशरेण यद् व्रणं क्षतं तेन खिन्नं व्यथितं गात्रं यस्य तथाभूतं मा मां जीवय आत्मदानेनाह्लादयेति भावः । उपेन्द्रवज्रावृत्तम् ॥१५॥

मृदादीति । यथा मृदादिपात्रे स्थितमिति शेषः सलिलं जलं तृष्णाहरं स्वादु सुशीतलञ्च स्यात्, सुवर्णरत्नैः निर्मितेऽपि सुपात्रे शोभने भाजने गतम् अम्बु तथा तादृशं तृष्णाहरं स्वादु सुशीतलञ्चेति भावः किं न स्यात् ? अपि तु स्यादेवेत्यर्थः । उप-जातिर्वृत्तम् ॥१६॥

सद्धेमरत्नचयनिर्मितवारिपात्रे
गाङ्गं सुनिर्मलहिमं परमं सुरम्यम् ।
कर्पूरवासितजलं सुखदं यथा स्यात्
कौपं पयः किमु भवेच्च तथाविधानम् ॥१७॥

वलित्रयाबद्धसुसूक्ष्ममध्ये !
विषापहार्य्यौषधमन्त्ररूपे ! ।
मनोजबाणौघविषार्त्तगात्र-
मनुग्रहं मां कुरु सम्प्रति त्वम् ॥ १८ ॥

कन्दर्पबाणावशचित्तवृत्ते !
किमर्थमेवं वदसि स्मरार्त्त ! ।
ज्ञातव्यमेवं यदि मे च पिता
कथं त्वया कामुक ! जीवितव्यम् ॥ १९ ॥

सद्धेमेति । यथा सद्भिः हेमरत्नचयैः निर्मिते वारिपात्रे भाजनमिति शेषः सुनिर्मलं हिमं शीतलं परमम् उत्कृष्टं सुरम्यं कर्पूरवासितं गाङ्गं गङ्गावारि सुखदं स्यात्, कौपं कूपसम्बन्धि पयः जलं तथाविधानं तादृशं किमु भवेत् ? नैव भवेदित्यर्थः । वसन्ततिलकं वृत्तम् ॥१७॥

वलीति । वलित्रयेण आबद्धं युतं सुसूक्ष्मम् अतिकृशं मध्यं यस्याः तत्सम्बुद्धौ, विषापहारि विषनाशकं यत् औषधं मन्त्रश्च तादृशं रूपं यस्याः तत्सम्बोधने ! राजपुत्रीति अध्याहार्य्यं, त्वं सम्प्रति मनोजस्य कामस्य बाणौघविषेण शरसङ्घगरलेन आर्त्तं दुःखितम् आधृतं गात्रं यस्य तथाभूतं माम् अनुग्रह्यते इति अनुग्रहः कर्मण्यनुप्रत्ययः । तम् अनुग्रहणीयमित्यर्थः कुरु । उपेन्द्रवज्रा-वृत्तम् ॥१८॥

कन्दर्पेति । कन्दर्पबाणेन अवशा [illegible] तादृशः तत्-

जघान बाणैर्दशभिर्दशास्य-
शिरांसि सीताहरणे स रामः ।
त्वदङ्गसङ्गाय सदानुरक्तौ
प्रयातु मे मस्तकमेकमेव ॥ २० ॥

स्वरूपसन्दर्शनमेव देहि चक्षुर्द्वयं मे सफलीकुरुष्व ।
तपः कृतं येन नरोत्तमेन तेनाङ्गसङ्गस्तव लभ्यते च ॥२१॥

प्रपूर्य्यते किं ननु दर्शनेन विनापि कुक्षिर्वरभोजनेन ।
सखण्डमारीचपयोभवेन रसान्वितस्वादुसुधोपमेन ॥२२॥

सम्बुद्धौ, हे स्मरार्त्त ! कामाकुल ! किमर्थं कथम् एवं वदसि ? हे कामुक ! यदि मे मम पिता एवं तथाचरणमिति भावः ज्ञातव्यं तदा त्वया कथं केन प्रकारेण जीवितव्यम् । न केनापि प्रकारेण तव प्राणरक्षा स्यादिति भावः । उपजातिवृत्तम् ॥१९॥

जघानेति । स रामः सीताहरणे दशभिर्बाणैः शरैः दशास्यस्य रावणस्य शिरांसि जघान चकर्त्त । तव अङ्गसङ्गाय सदा अनुरक्तौ मे मम एकमेव मस्तकं प्रयातु गच्छतु सीतासम्भोगार्थिना रावणेन यदि दश शिरांसि दातुं शक्यते तदाहं तव सम्भोगार्थी एकमेव शिरो दातुं न शक्नोमीति का कथेति भावः । उपजातिवृत्तम् ॥२०॥

स्वरूपेति । त्वं स्वस्य आत्मनः रूपस्य सन्दर्शनम् एव देहि नान्यत् मया कामयितुं नाधिक्रियते इति भावः, मे मम चक्षुषो-र्द्वयं सफलीकुरुष्व कृतार्थय । येन नरोत्तमेन पुण्यवता नरेण-त्वर्थः तपः कृतं तेनैव तव अङ्गसङ्गः लभ्यते नान्येनेति भावः । उपजातिवृत्तम् ॥२१॥

प्रपूर्य्यते इति । कुक्षिः उदरं सखण्डमारीचपयोभवेन रसा-न्विता स्वादुः या सुधा तदुपमेन तद्भिन्नेन वरभोजनेन पञ्चाक्षर-

भो देवि ! सुभ्रु ! कथशीतलकोमलाङ्गि !
नानाविभूषणविभूषितचारुगात्रि ! ।
आज्ञां विधेहि किमहं करवाणि हृद्ये
प्राणप्रदेऽद्य परिपूरय मेऽभिलाषम् ॥ २३ ॥

विद्याविनोदरसिके ! सुरतैकपात्रि !
सर्वाङ्गसुन्दरि ! धराधिपतिप्रसूते ! ।
यद्यस्ति मेऽद्य सदये ! न दया तवैव
त्वत्प्राप्तये सुरसरित्सु तनुं त्यजामि ॥ २४ ॥

सुरक्षकैरेष विनोदसौधः
सुदुर्गमोऽन्तःपुरचारिभिश्च ।

भोजनेन विनापि दर्शनेन ननु दर्शनेनैव किं प्रपूर्य्यते ? नैवेत्यर्थः तस्मात् दर्शनं विफलमिति भावः । उपजातिवृत्तम् ॥२२॥

भो इति । भोः सुभ्रु ! कथं शीतलं कोमलम् अङ्गं यस्याः तत्सम्बुद्धौ, नानाविभूषणैः विभूषितम् अलङ्कृतं चारु सुन्दरं गात्रं यस्याः तत्सम्बुद्धौ, हृद्ये मनोहारिणि प्राणप्रदे जीवनदायिनि देवि ! आज्ञां विधेहि कुरु, अहं किं करवाणि ? अद्य मे मम अभिलाषं परिपूरय सफलय । वसन्ततिलकं वृत्तम् ॥२३॥

विद्येति । हे विद्याविनोदरसिके ! सुरतैकपात्रि ! सर्वाङ्गसुन्दरि ! धराधिपतिप्रसूते राजपुत्रि ! सदये दयावति ! यदि तव अद्य मे मयीति यावत् सम्बन्धविवक्षया षष्ठी । दया न अस्ति, तदा तव प्राप्तये पुनर्जन्मनीति भावः सुरसरित्सु गङ्गाप्रभृतिषु तनुं शरीरं त्यजामि । वसन्ततिलकं वृत्तम् ॥२४॥

सुरक्षकैरिति । एष विनोदसौधः मदीयविहारगृहं विलासैः सुरक्षकैः रक्षकैर्द्वारिभिरिति शेषः अन्तःपुरचारिभिः परिजनैः

सखीजनैरिङ्गितहेत्वभिज्ञैः
कथं हि ते वाञ्छितसिद्धिरस्तु ॥ २५ ॥

प्रसन्नतायां त्वयि राजकन्ये !
भवेत् सुसिद्धिर्मम वाञ्छितस्य ।
अभीष्टदा कल्पलतेव भासि
सुकेशि ! चिन्तामणिरेव किं त्वम् ॥ २६ ॥

मृदुलकनककान्ति श्वाससौरभ्यरम्यं
वदनकमलमेतन्नेत्रमत्तद्विरेफम् ।
तव किमु सुसमीक्ष्य व्रीडया पद्मवृन्दं
सरसि सलिलपूर्णे मङ्क्तुकामं विवेश ॥ २७ ॥

इङ्गितहेत्वभिज्ञैः इङ्गिताकारवेदिभिः सखीजनैश्च सद्भिर्हेतुभिः सुदुर्गमः दुष्प्रवेशः तवेति शेषः अतः कथं केन उपायेन ते तव वाञ्छितसिद्धिः इष्टसिद्धिः अस्तु भवतु ? केनापि प्रकारेण न भवितुमर्हतीत्यर्थः । उपेन्द्रवज्रावृत्तम् ॥२५॥

प्रसन्नतायामिति । हे राजकन्ये ! त्वयि प्रसन्नतायां प्रसादगुणे सतीत्यर्थः मम वाञ्छितस्य सुसिद्धिः सम्यक् सिद्धिः भवेत् । हे सुकेशि ! त्वम् अभीष्टदा कल्पलतेव किं बहुना चिन्तामणिरेव किं न भासि ? न राजसे ? अपि तु राजसे । तस्मात् तव प्रसाद एव मम वाञ्छितसिद्धौ हेतुः अन्यः न मम इष्टसाधनप्रत्यूह इति भावः । उपेन्द्रवज्रावृत्तम् ॥२६॥

मृदुलेति । मृदुला कनकस्येव कान्तिर्यस्य तादृशं, श्वासे यत् सौरभ्यं सुगन्धः तेन रम्यं मनोज्ञं, नेत्रमेव मत्तः द्विरेफः भ्रमरः यत्र तथाभूतं, तव एतत् वदनकमलं सुसमीक्ष्य सुनिरीक्ष्य पद्मवृन्दं व्रीडया लज्जया किमु सलिलपूर्णे सरसि मङ्क्तुकामं सत् विवेश ।

ज्योत्स्ना दिवं गच्छति वाञ्छितस्य
सिद्धिर्भवेत् कर्मबलेन पुंसाम्।
पुनः पुनर्वाक्यमिदं सुलक्ष्यं
बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥ २८ ॥

प्राणाधिके! प्रियतमे! तव रूपरज्जु-
बद्धोऽस्मि सम्प्रति कथं भवने वसामि।
राजात्मजे! त्वमसि सुन्दरि! कर्मरूपा
त्वत्प्रीतिरम्यसुरतैर्मम कार्य्यसिद्धिः ॥ २९ ॥

चन्द्रानने! श्रीफलपीनतुङ्ग-
रम्यस्तनि! स्मेरसुधांशुवक्त्रे।

मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥२७॥

ज्योत्स्नेति। ज्योत्स्ना चन्द्रिका दिवम् अन्तरीक्षं गच्छति अन्तरीक्षस्यैव ज्योत्स्नाभोगे योग्यता नान्यस्येति भावः, कर्मबलेनैव पुंसां वाञ्छितस्य सिद्धिर्भवेत्, तव यादृशं प्राक्तनं कर्म तदनुरूपमेव तव फलभोक्तृत्वमिति भावः। पुनः पुनः इदं वाक्यं त्वयोक्तमिति शेषः सुलक्ष्यं श्रुतं मयेति शेषः, बुभुक्षितः क्षुधितः जनः किं द्विकरेण द्वाभ्यां हस्ताभ्यां भुङ्क्ते? नैवेत्यर्थः। त्वया यत् पुनः पुनर्व्यग्रतया उक्तं तत् द्विकराभ्यां भोजनमिवेति भावः। वंशस्थवि-लेन्द्रवंशयोरुपजातिवृत्तम् ॥२८॥

प्राणाधिके इति। हे प्राणाधिके! प्रियतमे! अस्मि अहं तव रूपं सौन्दर्यमेव रज्जुः तया बद्धः, अतः सम्प्रति अधुना कथं भवने वसामि। हे राजात्मजे! सुन्दरि! त्वं मम कर्मरूपा असि त्वत्सेवनमेव मम कर्मेति भावः, तव प्रीत्या रम्याणि मनोहराणि यानि सुरतानि तैः मम कार्य्यसिद्धिः अभीष्टलाभः। वसन्ततिलकं वृत्तम् ॥२९॥

विद्याविनोदे! सुविचक्षणा त्वं
स्त्रीरत्नभूते! मयि भोः प्रसीद ॥ ३० ॥

कामाभिराम! कामार्त्त! प्रीतिविश्रम्भभाजन!।
सार्कं सख्या समागच्छ त्यक्तमार्गोऽन्यरूपधृक् ॥ ३१ ॥

अद्यैव पुण्यदिवसो मम देवि! बाले!
त्वत्पादपङ्कजयुगं ह्यवलोक्यते यत्।
रम्यातिपीनजघनस्तनि! सेवकं मां
मुग्धे! विधेहि सदयेऽधरसोधुलुब्धम् ॥ ३२ ॥

घुणाक्षरस्येव विधानमत्र
त्वं निर्मिता देवि! तथा विधात्रा।

चन्द्रानने इति। भोः चन्द्रानने चन्द्रमुखि! श्रीफलवत् पीनौ तुङ्गौ उन्नतौ रम्यौ मनोहरौ स्तनौ यस्याः तत्सम्बुद्धौ, चन्द्रं इन्द्राभ्यं सुधांशुवत् वक्त्रं वदनं यस्याः तत्सम्बोधने, विद्याविनोदे विद्यया विनोदिनि! स्त्रीरत्नभूते! त्वं सुविचक्षणा सुविज्ञा, अतः मयि प्रसीद प्रसन्ना भव। इन्द्रवज्रा वृत्तम् ॥ ३० ॥

कामाभिरामेति। हे कामाभिराम कन्दर्पसुन्दर! कामार्त्त! प्रीत्या विश्रम्भभाजन! विश्वासपात्र! त्वम् अन्यरूपधृक् स्वाकृपधारीति भावः तथा त्यक्तमार्गः परित्यक्तराजपथः सन् सख्या सार्कं मम समागच्छ। अनुष्टुप् वृत्तम् ॥ ३१ ॥

अद्यैवेति। हे बाले मुग्धे! देवि! अद्यैव मम पुण्यदिवसः शुभदिनं, यत् यतः तव पादपङ्कजयुगम् अवलोक्यते दृश्यते। हि-शब्दः पादपूरणे। हे रम्यौ मनोहरौ अतिपीनौ जघनस्तनौ यस्याः तत्सम्बुद्धौ, हे मुग्धे! सदये दयावति! सेवकं माम् अधरसोधुलुब्धम् अधरामृतलोलुपं विधेहि कुरु। वसन्ततिलकं वृत्तम् ॥ ३२ ॥

घुणाक्षरस्येति। हे देवि! विधात्रा [illegible]

विधेस्तु जानामि सुकौशलत्वं
त्वद्रूपकल्पा यदि दृश्यतेऽन्या ॥ २३ ॥

उक्तं त्वया मदनसुन्दर ! पूर्वमस्मत्-
सन्दर्शनाय ननु साम्प्रतमेव दृष्टम् ।
गच्छ स्वकीयभवनं त्वरितञ्च पश्य
प्राणेश्वरीं तव मनोरथसिद्धिरस्तु ॥ २४ ॥

त्वमेव मे भूपतिजे ! निवास-
स्त्वमेव जीवेश्वरि ! नास्ति मेऽन्या ।
प्रसन्नता ते सकलेष्टसिद्धि-
र्मनोजसम्मोहिनि ! मामव त्वम् ॥ २५ ॥

विधानमिव त्वं तथा निर्मिता स्रष्टा यथा घुणनाम्ना कीटेन काष्ठं कर्त्तयता कदाचित् अक्षराकार उत्पाद्यते तथा विधात्रा सृष्टिं कुर्वता दैवात् त्वं निर्मितेति भावः । यदि तव रूपकल्पा रूपानुरूपा अन्या नारीति शेषः दृश्यते तदा तु तदैव विधेः विधातुः सुकौशलत्वं सुष्ठु नैपुण्यं जानामि । त्वत्सदृशी अन्या नास्तीति कुतो विधातुः कौशलमिति भावः । उपेन्द्रवज्रा वृत्तम् ॥२३॥

उक्तमिति । हे मदनसुन्दर ! पूर्वं त्वया अस्मत्सन्दर्शनाय उक्तं कथितं मां प्रति नितान्तानुरागवचनमिति भावः, साम्प्रतं ननु अधुना च दृष्टमेव तव मय्यनुरागित्वमिति भावः, स्वकीयभवनं गच्छ, त्वरितं शीघ्रञ्च तव प्राणेश्वरीं स्त्रियमित्यर्थः पश्य, तवच तव मनोरथसिद्धिः इष्टसिद्धिः अस्तु भवतु । वसन्ततिलकं वृत्तम् ॥२४॥

त्वमेवेति । हे भूपतिजे राजनन्दिनि ! त्वमेव मे मम निवासः स्थानं, हे जीवेश्वरि प्राणेश्वरि ! त्वमेव मे प्राणेश्वरीति शेषः मे मम अन्या कापि नास्ति, हे मनोजसम्मोहिनि मदनमोहिनि ! ते

तव नयनकटाक्षक्षिप्रबाणव्रणार्त्तां
मम तनुमनुरक्ते ! जीवय त्वौषधेन ।
त्वदधरमधुपानं क्षेममेकं परन्तु
स्तनजघनविलग्नालिङ्गनो गात्रलेपः ॥ २६ ॥

क्रीड़ार्थं मदनातुरा प्रियतमा सञ्जातलज्जादरा
कान्तं केलिनिकेतनं नृपसुता नीत्वात्मशय्योपरि ।
संस्थाप्यागुरुचन्दनं सुकुसुमं कर्पूरपूगं पुरो
दत्त्वा प्रीतसखीजनैः प्रहसिता कान्तेन सम्मानिता ॥ २७

तव प्रसन्नता अनुकम्पेत्यर्थः सकला सम्पूर्णा इष्टसिद्धिः अभीष्टलाभः, अतः त्वं माम् अव रक्ष । उपेन्द्रवज्रावृत्तम् ॥२५॥

तवेति । हे अनुरक्ते अनुरागवति ! तव नयनस्य कटाक्षा एव क्षिप्राः त्वरिताः शराः तैः यत् व्रणं क्षतं तेन आर्त्तां व्यथितां मम तनुं शरीरम् औषधेन जीवय शान्तिं नयेति भावः तदौषधं विना नास्य व्रणस्य निवृत्तिरित्यवधारणार्थं नाञ्छब्देन द्योत्यते । एकं क्षेमं मङ्गलम् औषधमिति भावः तव अधरमधुनः पानं परन्तु क्षेममिति यावत् स्तनजघनेषु विलग्नं संसक्तम् आलिङ्गनं यस्मिन् तथाभूतः गात्रलेपः शरीरस्पर्शः । मालिनीवृत्तं, ननमययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥२६॥

क्रीड़ार्थमिति । मदनातुरा कामार्त्ता प्रियतमा नृपसुता विद्या क्रीड़ार्थं विहारार्थं सञ्जातः लज्जा आदरः यत्नश्च यस्याः तथाभूता सती कान्तं सुन्दरं केलिनिकेतनं क्रीड़ागृहं नीत्वा आत्मनः शय्यायाः उपरि संस्थाप्य उपवेश्य अगुरुचन्दनं सुकुसुमं कर्पूरपूगं कर्पूरवासितं गुवाकं पुरः अग्रतः दत्त्वा प्रीतैः सखीजनैः प्रहसिता प्रकृष्टहासेन अभिनन्दिता कान्तेन सम्मानिता समादृता च आसीदिति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥२७॥

सव्रीड़ां हि विनिर्गतां प्रियसखीं दृष्ट्वा स कामातुर-
स्तस्याः पीनघनस्तनोरुयुगलादाकृष्य चीनांशुकम् ।
कृत्वालिङ्गनचुम्बनं नृपसुतां पीत्वाधरं ताड़यन्
मन्दं दन्तनखक्षतानि कुरुते क्षोभञ्च नीव्यास्ततः ।।२८।।
दृष्टे तज्जघनस्थले स्तनयुगे लज्जाभरव्याकुला
बाला सत्कबरीसुपुष्पविगलन्मालाहते दीपके ।
स्वच्छद्रत्नसुतेजसा समभवद्दीपोपमेन स्फुटं
दृष्ट्वा कान्तगुणाधिकं स्मितमुखी सा त्यक्तलज्जाभवत् ।।२९।।

सव्रीड़ामिति। कामातुरः सः सुन्दरः सव्रीड़ां सलज्जाम् अतएव विनिर्गतां स्थानात् निर्गच्छन्तीमित्यर्थः प्रियसखीं विद्यां दृष्ट्वा तस्याः पीनाभ्यां घनाभ्यां निविड़ाभ्यां स्तनाभ्याम् ऊरुयुगलाच्च चीनांशुकं सूक्ष्मं वसनम् आकृष्य आलिङ्गनं चुम्बनञ्च कृत्वा अधरं ताड़यन् दशन् नृपसुतां पीत्वा मन्दं यथा तथा दन्तनखक्षतानि ततश्च नीव्याः कटिबन्धवसनस्य क्षोभं भ्रंशनं कुरुते [illegible]। हिशब्दः पादपूरणार्थः। शार्दूलविक्रीड़ितं वृत्तम् ।।२८।।

दृष्टे इति। तस्मिन् जघनस्थले कटिपुरोभागे स्तनयुगे च दृष्टे सति वसनस्खलनादिति भावः लज्जाभरेण लज्जातिशयेन व्याकुला बाला दीपके प्रदीपे सत्याः शोभनायाः कबर्य्याः केशपाशात् सुपुष्पा शोभनकुसुमा विगलन्ती या माला तया हते निर्वापिते इति यावत् सति [illegible]। दीपोपमेन स्फुरतां रत्नानां स्वच्छस्थितानां हीरकादीनामिति भावः सुतेजसा सुप्रभया स्फुटं व्यक्तं समभवत् [illegible] शेषः। अथ सा कान्तस्य गुणाधिकं दृष्ट्वा स्मितमुखी हसन्मुखी सती त्यक्तलज्जा अभवत् किं करोतु तदधीनेति भावः। शार्दूलविक्रीड़ितं वृत्तम् ।।२९।।

सत्पानं सुमनः स्रजश्च मधुरालापश्च पादद्वये
सौवर्णध्वनि नूपुरद्वयमिदं कर्पूरपर्णानि च ।
कर्पूरागुरुचन्दनादिरचना सीत्कारनादाः कथा
एतान्याभरणानि किं निधुवने प्रोत्साहयन्ति स्मरम् ॥४०

शृङ्गारमेतद्विपरीतमस्याः
समाचरन्त्या नृपराजपुत्र्याः ।
कर्णे शशी कुण्डलच्छद्मरूपो
गण्डस्थलीं चुम्बति किं स कामी ॥ ४१ ॥

उत्तुङ्गस्तनयुग्मनिर्दयदृढाश्लेषेण तेऽद्य प्रिये !
दन्ताघातनखक्षतैः सुमधुरालापैस्तथा चुम्बनैः ।

सदिति । सत् उत्कृष्टं पानं पानीयं सुमनः पुष्पं स्रजः मालाश्च मधुरालापश्च पादद्वये सौवर्णः हैमः ध्वनिर्यस्य तादृशम् इदं नूपुरद्वयं कर्पूरपर्णानि कर्पूरवासितानि ताम्बूलपत्राणि, कर्पूरागुरुचन्दनादीनां रचना, सीत्कारनादाः सीत्कारध्वनयः कथाः रहस्यसंलापाः एतानि आभरणानि उपकरणानि निधुवने सुरते किं स्मरं कामं प्रोत्साहयन्ति उद्दीपयन्ति ? शार्दूलविक्रीडितं वृत्तम् ॥४०॥

शृङ्गारमिति । कुण्डलच्छद्मरूपः कुण्डलं कर्णभूषणविशेष एव छद्म कपटं यस्य तादृशं रूपं यस्य तथाभूतः सः शशी चन्द्रः कामी सन् एतत् विपरीतं शृङ्गारं पुरुषायितमिति भावः समाचरन्त्याः अस्याः नृपराजपुत्र्याः राजाधिराजकन्यायाः कर्णे स्थित्वेति शेषः गण्डस्थलीं किं चुम्बति ? उपजातिवृत्तम् ॥४१॥

उत्तुङ्गेति । हे प्रिये ! अद्य ते तव उत्तुङ्गस्य उन्नतस्य स्तनयुग्मस्य निर्दयः दृढः घनः यः आश्लेषः आलिङ्गनं तेन दन्ता-

नानाबन्धविनोदिताधिकरसेनैतत् कृतं सार्थकं
गात्रं मे पुरुषायितेन शमिता कन्दर्पबाणव्यथा ॥४२॥

यद्वक्त्रं मुखरञ्च कुण्डलयुगं दोलायमानं प्रिये !
निःशब्दं वहतीह नूपुरयुगं यद्यत् कृतं भाविनि ! ।
निःशब्दा कटिमेखला घनरवं विज्ञापयन्ती स्मरं
कुर्वाणा जयडिण्डिमध्वनिमसौ शृङ्गारसत्ताण्डवे ॥४३॥

तद्वक्त्रं रुचिरानने ! त्वदधराद्दिव्यामृतं स्वादितं
याभ्यां ते नयने निचोलरहितं सर्वाङ्गमालोकितम् ।
तौ हस्तौ जघनस्थलं स्तनयुगं ते सन्धानौ च यौ
तद्गात्रं तपसार्जितं रतिसुखं प्राप्ताङ्गसङ्गञ्च यत् ॥४४॥

घातनखक्षतैः सुमधुरालापैः चुम्बनैः तथा नानाबन्धेन विनोदितः सञ्चारितः अधिकः रसः प्रेमावेशः येन तथाभूतेन पुरुषायितेन विपरीतरतेन एतत् मे मम गात्रं सार्थकं सफलं कृतं कन्दर्पबाणव्यथा मदनशरपीड़ा शमिता नाशिता च । शार्दूलविक्रीड़ितं वृत्तम् ॥४२॥

यदिति । हे प्रिये ! हे भाविनि सद्भावपूर्णे ! यत् मुखरं प्रणयालापवाचालमिति भावः वक्त्रं वदनं यस्य दोलायमानं कुण्डलयुगम्, इह अस्मिन् सुरतव्यापारे यत् यत् कृतं तत् सर्वमिदानीं सुरतावसाने निःशब्दं वहति तिष्ठति, असौ निःशब्दा इदानीमिति शेषः कटिमेखला काञ्चीत्यर्थः शृङ्गारे यत् वर्त्तमानं ताण्डवं नृत्यं तस्मिन् घनरवं घोरगर्जनं स्मरं कामं विज्ञापयन्ती सती जयडिण्डिमध्वनिं कुर्वाणा भवतीति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥४३॥

तदिति । हे रुचिरानने सुमुखि ! तत् वक्त्रं वदनं वक्त्रपद्- [illegible]मिति भावः, येन तव अधरात् दिव्यामृतं स्वादितं पीतम् ।

त्वद्दिव्यपीनस्तनयुग्ममास्यं
त्वच्चारुरूपं जघनस्थलञ्च।
त्वत्पीवरं रम्यनितम्बबिम्बं
मज्जीवनं जीवयति स्म कान्ते ! ॥४५॥

निशावशेषे रमणाभिलाष-
सिद्धिस्तवासीत् किमतःपरन्तु।
यथा न जानाति जनोऽपि कश्चित्
तथा तथा याहि पुनस्त्वमेहि ॥ ४६ ॥

तवास्तु मेऽनुग्रह एष देवि !
त्वदङ्गसङ्गात् सफलं हि जन्म।

ते नयने नेत्रे, याभ्यां नयनाभ्यां निचोलरहितं वसनहीनं सर्वाङ्गं तवेति शेषः आलोकितं दृष्टम्। तौ हस्तौ, यौ ते तव जघनस्थलं स्तनयुगञ्च सन्दधानौ स्पृष्टवन्तावित्यर्थः। तद् गात्रं, यद् रतिसुखं प्राप्तः अङ्गसङ्गः येन तथाभूतम् अतएव तपसा अर्जितम् इति मन्ये इत्यध्याहार्य्यम्। शार्दूलविक्रीडितं वृत्तम् ॥४४॥

त्वदिति। हे कान्ते ! तव दिव्यं पीनं स्तनयुग्मम् आस्यं मुखं तव चारु सुन्दरं रूपं जघनस्थलं तव पीवरं रम्यं नितम्बबिम्बं मम जीवनं जीवयति स्म रक्षति स्म। इन्द्रवज्रावृत्तम् ॥४५॥

निशावशेषे इति। निशायाः अवशेषे तव रमणाभिलाषस्य सिद्धिः आसीत्, अतःपरं किन्तु यथा कश्चिदपि जनः न जानाति, त्वं तथा याहि गच्छ आवासमिति शेषः, तथा पुनश्च एहि आगच्छ सन्ध्यावसाने रजन्यामिति शेषः। उपजातिवृत्तम् ॥४६॥

तवेति। हे देवि ! तवं मे ममोत्यर्थः सम्बन्धविवक्षया षष्ठी, एषः अनुग्रहः अस्तु तिष्ठतु, हि यतः तव अङ्गसङ्गात् जन्म सफलमिति

न च प्रिये! मां विजहासि नूनं
मनोव्यथाभेषजमत्र नास्ति ॥*४७॥

न स्नानं न च भोजनं न पठनं नान्यत्र सौख्यं धृति-
र्नान्यस्त्रीजनसेवनं न च कथा निद्रा विलासोद्यमः।
किन्तु त्वां परिचिन्तयामि सततं ध्यानेन चेतःस्थितां
स्वप्नालोकनकामकेलिविधिना जीवामि कान्ते! तव॥४८॥

रात्रिः कालयुगोपमा मलयजो गन्धानिलः किं विषं
सोमः सूर्य्य इवाभवन्मलयजालेपः स्फुलिङ्गोपमः।
तिक्तः सुस्वरगीतवाद्यपरभृत्पारावतादिध्वनि-
र्वज्रस्याहतिरेव कर्णयुगले विच्छेदतो मे तव॥४९॥

इव सफलं कृतार्थं जातमिति शेषः, हे प्रिये! मां न च नूनं निश्चितं विजहासि परित्यजसि कदापीति शेषः, अत्र संसारे मनसः व्यथायाः पीडायाः भेषजम् औषधम् अन्यदिति यावत् मे न अस्ति त्वमेव मे जीवनौषधमिति भावः। उपेन्द्रवज्रा वृत्तम् ॥४७॥

नेति। हे कान्ते! न स्नानं, न च भोजनं, न पठनं, न अन्यत्र कस्मिंश्चिद्विषये इति शेषः सौख्यं सुखसन्ततिः, तथा धृतिः सन्तोषः, न अन्यस्त्रीजनस्य सेवनं, न च कथा अन्ये आलापा इति यावत्, न च निद्रा, नापि विलासोद्यमः आनन्दोत्सवप्रयास इत्यर्थः ममा-स्तीति सर्वत्राध्याहार्य्यम्। किन्तु केवलमित्यर्थः चेतसि स्थितां त्वां ध्यानेन सततं परिचिन्तयामि। तव स्वप्ने आलोकनेन यः कामकेलिविधिः कामक्रीडाविधानं तेन जीवामि प्राणिमि। शार्दूल-विक्रीडितं वृत्तम् ॥४८॥

रात्रिरिति। तव विच्छेदतः विरहे इत्यर्थः मे मम रात्रिः कालयुगोपमा कल्पान्तसदृशी, मलयजः मलयपर्वतादुत्थितः गन्धानिलः

चन्द्रो द्वादशभास्करः समभवद्रात्रिर्युगानां शतं
मिष्टं तिक्तरसं विलेपनमहो दीप्तानलो मे तव ।
विच्छेदान्मलयानिलः प्रियतमे ! किं कालकूटः श्रुतौ
गीतादिध्वनिरिव वज्रसदृशोऽरण्यं विचित्रं गृहम् ॥५०॥
मानं मानिनि ! मुञ्च देवि ! दयिते ! मिथ्यावचः श्रूयते
किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते ।
दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं
दोषस्येष मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु ॥५१॥

सुगन्धपवनः विषं किम् ? सोमचन्द्रः सूर्य्य इव अभवत् व्यत्य-
द्दीपकत्वादिति भावः, मलयजालेपः चन्दनविलेपनं स्फुलिङ्गोपमः
अग्निकणस्पर्शसदृशः, सुस्वरगीतं वाद्यं परभृतां कोकिलानां पारा-
वतादीनां ध्वनिः तिक्तः मम कर्णयुगले वज्रस्य आहतिरेव वज्रा-
घातसम एव भवतीति सर्वशेषः । शार्दूलविक्रीडितं वृत्तम् ॥४९॥

चन्द्र इति । हे प्रियतमे ! तव विच्छेदात् चन्द्रः मम द्वादश-
भास्करः, रात्रिः युगानां शतं, मिष्टं लड्डुकादि तिक्तरसं तिक्त-
स्वादं, विलेपनं चन्दनादिः दीप्तानलः दीप्ताग्निः, मलयानिलः
कालकूटः, श्रुतौ कर्णे गीतादिध्वनिः वज्रसदृशः, विचित्रं गृहम्
अरण्यं किं समभवत् ? अहो आश्चर्यम् । शार्दूलविक्रीडित
वृत्तम् ॥५०॥

मानमिति । हे मानिनि ! मानं कोपं मुञ्च त्यज, हे दयिते
प्रिये ! देवि ! मिथ्यावचः मदपराधसूचकमिति भावः श्रूयते त्वयेति
शेषः । निजसेवके निजदासे कोपः किं कथम् ? यदि त्वया वचः
मदपराधसूचकमिति भावः सत्यं गृह्यते मन्यते तेन च मम दोष-
श्चेत् भवतीति शेषः, तदा दोर्भ्यां भुजाभ्याम् आशु शीघ्रं बन्धनं,
दन्तदलनं दशनैर्दंशनं, पीनाभ्यां स्तनाभ्याम् आस्फालनं ताडनं, तथा

नानाकथाकौतुककेलिभिः सा
साद्धं तु तेनैव रमेत नित्यम् ।
हर्म्ये सुरम्ये रमणेन युक्ता
वरा सखीभिः परमप्रियाभिः ॥५२॥

कामार्त्तो नवयौवनः कविवरो भूपालपुत्र्या समं
नानाबन्धविनोदनिर्भररतिक्रीड़ारसानन्दितः ।
गत्वान्तःपुरतो वहिर्विलसितो राजाग्रतो नीयते
चौरो राजनियोजितैः सुपुरुषैश्चारैरुपायक्षमैः ॥५३॥

राजा तानपि सेवकान् सुवसनालङ्कारभूषीकृतान्
कृत्वा हन्तुं विपक्षकं खरतरं खड्गं समानीय ते ।

ते तव कटाक्षा एव विशिखाः शराः तैः शस्त्रैः प्रहारं कुरु ।
शार्दूलविक्रीड़ितं वृत्तम् ॥५१॥

नानेति । वरा उत्तमा सा विद्या तेनैव रमणेन सुन्दरेण सार्द्धं नानाकथाभिः कौतुकेन ये केलयः क्रीड़नानि तैः सुरम्ये मनोहरे हर्म्ये सौधे कुमारीपुरे इति यावत् परमप्रियाभिः सखीभिः युक्ता सती नित्यं रमेत विजहारेत्यर्थः । अतीते विधिलिङ्प्रयोगश्चिन्त्यः । उपजातिवृत्तम् ॥५२॥

कामार्त्त इति । भूपालपुत्र्या राजनन्दिन्या समं नानाबन्धैः विविधैः रतिप्रयोगैरिति यावत् विनोदनिर्भरः सुखातिशयः यस्यां तादृशी या रतिक्रीड़ा सुरतोत्सवः तस्याः रसेन आस्वादेन आनन्दितः नवयौवनः कामार्त्तः कविवरः सुन्दरः चौरः राजनियोजितैः उपायक्षमैः सुपुरुषैः चारैः गूढ़नरैः अन्तःपुरतः कन्यान्तःपुरमित्यर्थः गत्वा विलसितः संयमितः वहिः राजाग्रतः राजसमक्षं नीयते स्मेत्यध्याहार्य्यम् । शार्दूलविक्रीड़ितं वृत्तम् ॥५३॥

राजेति । राजापि तान् सेवकान् किङ्करान् सुवसनालङ्कार-

नीत्वा तं भवनाद्वहिर्विलसितं राजात्मजं साहसं
दृष्ट्वा संस्मर देवतामिति तदाप्यूचुः स चौरोऽवदत् ॥५४

इति विद्यासुन्दरं समाप्तम् ।

---

# रामकृष्णविलोमकाव्यम् ।

तं भूसुतामुक्तिमुदारहासं
वन्दे यतो भव्यभवं दयाश्रीः ।
श्रीयादवं भव्यभतोयदेवं
संहारदामुक्तिमुतासुभूतम् ॥ १ ॥

भूषीकृतान् वस्त्रालङ्कारादिभिः पुरस्कृतानित्यर्थः कृत्वा विपक्षर्क्षं यत्, चौरमिति यावत् घ्नन्तु नाशयन्तु भवन्त इति शेषः इति व्यादिदेशेत्यध्याहार्य्यम् । ते च पुरुषाः खरतरं सुतीक्ष्णं खड्गं समानीय गृहीत्वा भवनात् बहिः विलसितं बद्धं तं राजात्मजं सुन्दरं नीत्वा साहसं तत्कृतं चौर्य्यापराधं दृष्ट्वा विशेषेण ज्ञात्वेति भावः देवताम् इष्टामिति शेषः संस्मर इति ऊचुः उक्तवन्तः । स च चौरः तदापि अवदत् साहसोक्तिं वचनमिति शेषः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५४ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
विद्यासुन्दरव्याख्या समाप्ता ।

---

तमिति । भूसुता जानकी तस्याः मुक्तिः मोचनम् उद्धार इति यावत् रावणहस्तादिति भावः यस्मात् तम्, उदारः महान् हासः सीतोद्धरणजनितानन्दातिशयादिति भावः यस्य शोभिः

चिरं विरिञ्चिर्न चिरं विरिञ्चिः
साकारता सत्यसतारका सा।
साकारता सत्यसतारका सा
चिरं विरिञ्चिर्न चिरं विरिञ्चिः ॥२॥

अक्लान्तिरिति यावत् यस्य तथाभूतं, यद्वा भूसुतायाः सीतायाः मुक्तिः उद्धारः तया या मुत् हर्षः आरः अत्यन्तः हासः आनन्दः यस्य तादृशं तं प्रसिद्धम् अत्र प्रसिद्धार्थकस्तच्छब्दः। भव्यः शुभः भवः जननम् अवतार इति यावत् यस्य तथाविधं राक्षसवधेन जगन्मङ्गलविधानादिति भावः रामभिति शेषः वन्दे प्रणमामि। यतः यस्मात् रामात् दया श्रीः लक्ष्मीः सम्पदिति यावत् यस्य दयायां जगतां समृद्धिः समभवदिति भावः। उत पक्षान्तरे भव्या मनोहारिणी भा दीप्तिः यस्य तादृशे तोये जले यमुनायाः क्षीरोदस्य चेति भावः दीव्यति क्रीडतीति तथोक्तं, संहारदाया, विनाशकारिण्या इति यावत् पूतनाया इति भावः मुक्तिः प्राणशोषणेन अपवर्गलाभः यस्मात् तथोक्तम्, अद्भुतं प्राणरूपं जगतामिति शेषः श्रीयादवं श्रीकृष्णं वन्दे इति पूर्वेणान्वयः। इन्द्रवज्रावृत्तम्, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥१॥

चिरमिति। विरिञ्चिः ब्रह्मा चिरं चिरकालं तिष्ठतीति शेषः, पुनश्च विरिञ्चिर्ब्रह्मा न चिरं तिष्ठतीति शेषः सर्वभूतापेक्षया ब्रह्मणः चिरस्थायित्वेऽपि, आब्रह्मभुवना लोकाः पुनरावर्त्तिनोऽर्जुनेति भगवदुक्तेर्ब्रह्मणो नाशस्यावश्यम्भावादिति भावः, किन्तु सा साकारता रामरूपेण भगवतः शरीरधारणमिति यावत्, सत्यसतारका सत्या नित्या सनातनीत्यर्थः सतारका तारो नाम वानरभेदः तेन सह वर्त्तमाना यद्वा तारकेण तदाख्यमन्त्रविशेषेण सह वर्त्तमाना सद्रूपतारकमन्त्रवतीत्यर्थः। पक्षान्तरे सा साकारता कृष्णरूपेण शरीरधारणमिति भावः, सती नित्या मनोहारिणी च तथा तार-

तामसीत्यसति सत्यसीमता
माययाक्षमसमक्षयायमा ।
माययाक्षमसमक्षयायमा
तामसीत्यसति सत्यसीमता ॥३॥

का तापघ्नी तारकाद्या विपापा
त्रेधा विद्या नोष्णकृत्यं निवासे ।
सेवा नित्यं कृष्णनोद्या विधात्रे
पापाविद्याकारताघ्नी पताका ॥४॥

ताभिः नक्षत्रैः सह वर्त्तमानं सतारकम् आकाशमित्यर्थः नास्ति सतारकम् आकाशं यत्र तथाभूता पूर्णत्वादिति भावः चिरमित्यादि पूर्ववत् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सा । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ॥२॥

तामसीति । असति असत्ये प्रपञ्चे सत्यसीमता सत्यतया ज्ञानमिति यावत्, तामसी तमोगुणमयी माया इति यस्य रामस्येति अध्याहार्य्यम् । अक्षमं समक्षं यस्याः तथाभूतया प्रत्यक्षेणावबोद्धुमशक्ययेति भावः यया तामस्या मा लक्ष्मीः अयमा नियमरहिता चञ्चलेत्यर्थः योग्यायोग्यविचारणाक्षमेति भावः । द्वितीयार्द्धं कृष्णपक्षे पूर्ववत् । रथोद्धतावृत्तम् । रात्परैर्नरलगै रथोद्धतेति तल्लक्षणात् ॥३॥

का तापघ्नीति । तापघ्नी आध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयनाशिनी का ? इति प्रश्ने उत्तरं तापत्रयशमनमित्यर्थः रामनामेति भावः आद्यं मुख्यं यस्याः तादृशी विपापा निष्पापा निर्मलेत्यर्थः त्रेधा त्रिविधा विद्या ऋग्यजुःसामरूपा इति उत्तरम् । निवासे आश्रये यत्किञ्चिदिति शेषः उष्णकृत्यं सन्तापजननमिति यावत् नो अस्तीति शेषः । पक्षान्तरे कृष्णेन विधात्रे ब्रह्मणे नोद्या प्रेर्य्यमाणा,

श्रीरामतो मध्यमतोऽहि येन
धीरोऽनिशं वश्यवतीवराद्वा ।
द्वारावती वश्यवशं निरोधी
मयेदितो मध्यमतोऽमरा श्रीः ॥५॥
कौशिके वितपसि चरव्रती
योऽददाद्द्वितनयस्वमातुरम् ।

अभिधीयमानेति यावत् नित्यं सेवा भक्तिविशेष इति यावत् पापां दुरितमयी या अविद्याकारता मायेति यावत् तां छन्तीति तथोक्ता । उक्तञ्च गीतायाम् । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपेति, तथा पताका ध्वजस्वरूपा यथा ध्वजदर्शनेन ध्वजिनः साक्षात्कारादिसाधनं तथा कृष्णे नित्यसेवा तत्साक्षात्कारादि साधयतीति भावः । शालिनीवृत्तम् । मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥४॥

श्रीरामत इति । येन अनिशं सततं वश्यं वशं गतं रूपमिति अवत् तदस्या अस्तीति वश्यवती परमरूपिणीत्यर्थः सीतेति भावः तस्या वरात् स्वामिनः श्रीरामतः श्रीरामसेवनादिति भावः मध्यं संसार-रूपं पापमिति भावः अतोऽहि नाशितं स वा स एव धीरः सुधीः । यश्च निरोधी निगृहीतेन्द्रियः पुमान् इतः अस्मात् मध्यमतः संसा-ररूपात् प्रपञ्चात् द्वारावती द्वारकाख्यनगरी वश्या वशवर्त्तिनी यस्य तथाभूतस्य कृष्णस्येत्यर्थः वशं नयेत् स्वं मानसमिति शेषः तस्य श्रीः लक्ष्मीः अमरा अविनाशिनीत्यर्थः । इन्द्रियसंयमेन कृष्णभक्तिः चिरस्थायिनीं श्रियं जनयतीति भावः । उपजातिवृत्तम् ॥५॥

कथाहुपक्रमते कौशिके इति । क्षरेषु सर्वेषु भूतेषु, द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर उच्यते । क्षरः सर्वाणि भूतानि कूटस्थो-ऽक्षर उच्यते ॥ इति भगवद्गीता । अतं नियमः तत्प्रतिपालन-

रन्तुमास्वमय ! तद्विदादयो
तीव्ररक्षसिपतत्रिकेशिकौ ।६॥
लम्बाधरोरु ! त्रयलम्बनासे !
त्वं याहि याहि चरमागताशा ।
शातागमा रच हि याहि त्वं
सेनाबलं यत्र रुरोध बालम् ॥७॥

रूपमिति यावत् यस्य तथाभूतः प्रजापालनव्रतीत्यर्थः, यः दश-
रथः त्रितपसि कायिकवाचिकमानसिकभेदेन त्रिविधतपश्चारिणी-
त्यर्थः कौशिके विश्वामित्रे आतुरं प्रदानसमये पितुः कातरतां
दृष्ट्वा स्वयमपि कातरं पितृवियोगादिति भावः हितनयस्त्वं पुत्र-
द्वयरूपं धनं अददात् । पक्षान्तरे । परीक्षितं प्रति शुकस्योक्तिः ।
हे आस्वयन ! आ समन्तात् सुष्ठु शोभनम् अयनं गतिर्यस्य तत्-
सम्बुद्धौ तद्वित् तदभिप्रायस्य इत्यर्थः पूतनादीनां दुरभिसन्धिं
जानन्नित्यर्थः स्वयमन्तर्यामित्वादिति भावः रन्तुं क्रीडितुं तीव्र-
रक्षसि बालघातित्वात् अतिदारुणराक्षसीरूपिण्यां पूतनायामित्यर्थः
पतत्री पक्षिरूपो बकासुर इत्यर्थः केशी हयरूपो दैत्यविशेषः तयोः
कौ पृथिव्यां पार्थिवशरीरे इति भावः आ सम्यक् दया कृपा यस्य
तथाभूतः । कृपया पूतनादीन् निहत्य मुक्तिमनयदिति भावः ।
रथोद्धतावृत्तम् ॥६॥

लम्बेति । विश्वामित्रेण सह प्रस्थितं रामं ज्ञात्वा राक्षसानां
ताड़कां प्रत्युक्तिः । हे लम्बाधरोरु ! लम्बम् अधरोरु यस्याः
तत्सम्बुद्धौ, हे त्रयलम्बनासे त्रये त्रिजगतीत्यर्थः लम्बा नासा यस्याः
तत्सम्बोधनम् । ताड़के इति यावत् त्वम् आगताशा प्राप्ताशा
रावणनिदेशवर्त्तिनी सतीति भावः चरं विनश्वरं मानुषं राम-
मित्यर्थः याहि याहि पथि मा यस नाशयेति भावः । पक्षान्तरे
पूतनां प्रति कंसस्योक्तिः । हे पूतने ! त्वं व्रज याहि गच्छ [illegible]

लङ्कायना नित्यगमा धवाशा
साकं तयानुन्नयमानुकारा ।
राकानुमा यन्ननु यातकंसा
शावाधमागत्य निनाय कालम् ॥८॥
गाधिजाध्वरवैरा ये तेऽतीता रक्षसा मताः ।
तामसा चरतातीते ये रावैरध्वजाधिगाः ॥९॥

मदीयमिति भावः रक्ष । कुत्रेत्यपेक्षायामाह वत्सेति, वत्स बालः आगमः उत्पातानामिति भावः यथा बालघातार्थं विविधान् उत्पातान् आगच्छतः जानातीति भावः वर्त्तेदिति शेषः बालं कृष्णं कुरोध सावधानं रक्षेति यावत् । हिंसकोऽवधारणार्थः । इन्द्रवज्रावृत्तम् ॥७॥

लङ्केति । लङ्का अयनम् आश्रयः यस्याः तथोक्ता, अनुन्नः अप्रेरितः स्वतःप्रवृत्त इति यावत् यो नयः छलान्तः तेन अनुकारः सादृश्यं यस्याः तथाभूता स्वतःप्रवृत्तच्छलानुकारिणीत्यर्थः, धवे भर्त्तरि आशा यस्याः तथोक्ता रामं प्रतिलिप्सन्तीति भावः तया ताड़कया साकं सह नित्यगमा सततसङ्गिनी अभूदिति शेषः । पक्षान्तरे, यत् यतः शवा एव शावाः प्रेता इति भावः तेषु अधमा निकृष्टेति यावत् बालघातित्वादिति भावः, राका निशाकरपूर्णा रजनी अनुमीयते अनयेति तथोक्ता राकावत् लोकरञ्जनीति भावः एतेनास्या दुष्टाभिप्रायत्वं पूर्वं न केनापि शङ्कितमिति भावः, यातः अधिगतः कंसः यया कंसाश्रितेति यावत् पूतनेति शेषः यं कृष्णम् आगत्य प्राप्य कालं निनाय कृष्णविनाशार्थं बहुकालं गोकुले स्थितेति भावः । नन्विति निर्द्धारणार्थम् । इन्द्रवज्रावृत्तम् ॥८॥

गाधिजेति । ये गाधिजस्य विश्वामित्रस्य अध्वरे यज्ञे वैराः शत्रुभावमापन्ना इत्यर्थः ते मताः रावणेनाभिमता इत्यर्थः राक्षसाः

तावदेव दया देवे यागे यावदवासनाः ।
नासवादवया गेया वेदे यादवदेवता ॥१०॥

सभाव्यये ! भग्नमनेन चापं
कीनाशतानद्धरुषा शिलाशैः ।
शैलाशिषा रुद्धनताशनाकी
पञ्चानने भग्नभये स्वभासः ॥११॥

क्षुधाक्षुपभृतयः अतीताः रामशरेण विनाशं गता इति यावत् । पक्षान्तरे, ये च रावैः शब्दैः कंसस्य निदेशवचनैरिति भावः अध्वजा-धिगाः अध्वनि गोकुलमार्गे जाता, उत्पन्नाः ये आधयः मानस्यः व्यथाः कृष्णकर्तृकप्रहारजनिता इति भावः तान् गच्छन्तीति तथोक्ताः, तामसाः तमोगुणभूयिष्ठाः बकशकटादय इति भावः तैः अरतातीते अक्षरे अविनाशिनीत्यर्थः कृष्णे इति भावः अतीता इति पूर्वेणान्वयः । अनुष्टुब्वृत्तम् ॥९॥

तावदिति । यागे यज्ञकर्मणि यावदेव अवासनाः वासना सङ्कल्पः तद्रहिताः कामनारहिता इत्यर्थः मुनय इति शेषः तावदेव देवे रामे दया आसीदिति शेषः निष्कामकर्मिणामेव मुक्तिप्रदो राम इति भावः । पक्षान्तरे, वेदे गेया गातुं शक्या यादवदेवता कृष्णदेवः आसवात् मदजननव्यापारात् अज्ञानादिति भावः न अवया न अव-गन्तुं शक्येत्यर्थः । मत्तैः कंसानुचरैः कृष्णमहिमा कथं ज्ञायते इति भावः । अनुष्टुब्वृत्तम् ॥१०॥

सभेति । अये श्रोतृवृन्द इत्यध्याहार्य्यं सभायां जनकस्येति शेषः कीनाशता कृतान्तवत् दुर्दान्ततेति भावः रावणस्येति शेषः तया आनद्धा सम्बद्धा रुट् यस्य तथाभूतेन रावणं प्रति बद्धवैरेणेति भावः अनेन रामेण शिलावत् अतिदृढेति भावः आशा जानकी-

न वेद यामक्षरभामसीतां
का तारका विष्णुजिते विवादे ।
देवाविते जिष्णुविकारता का
तां सीमभारक्षम यादवेन ॥ १२ ॥

त्वामेच्छेति यावत् येषां तैः धनुर्भङ्गेन सीतापरिणयार्थिभिरसि
भग्नः राजभिरिति शेषः सह चापं धनुः भग्नं न केवलं धनुर्भङ्गः
कृतः अपि तु राजानोऽपि सीतां प्रति भग्नमनोरथाः कृता इत्यर्थः ।
पक्षान्तरे, पञ्चानने नृसिंहे सिंहवत् दुर्द्धर्षे इति भावः कृष्णे इति
शेषः स्वभासः स्वप्रभावात् भग्नभये निर्भये भयमकुर्वति सतीत्यर्थः
शैलस्य गोवर्द्धनस्य आशिषा अभीष्टपूरणेन कृष्णकर्तृकतदुत्सव-
विधानेनेति भावः, रुषा प्रतिबद्धा अतएव नता अवसादं गता
आशा यज्ञहविर्भोजनेच्छा यस्य तादृशः नाकी स्वर्गी देवराज
इत्यर्थः अभूदिति शेषः । पुरा ऐन्द्रं यागं कर्त्तुं प्रवृत्तान् गोपान्
निवार्य्य कृष्णः गोवर्द्धनोत्सवेन आत्मानं परितोषयामास । तेन
च क्रुद्धो देवराजः सप्ताहानि वर्षणादिना गोकुलं नाशयितुं
प्रावर्त्तत । ततश्च कृष्णः लीलया करेण गोवर्द्धनं धृत्वा गोकुलं
रक्षन् इन्द्रस्य दर्पमहरदिति भागवती वार्त्ता । उपजातिवृत्तम् ॥ ११ ॥

नेति । याम् अक्षरम् अविनश्वरं भाम प्रभा कान्तिरित्यर्थः, भा
दीप्तावित्यस्मात् मनूप्रत्ययः । यस्याः सा चासौ सीता चेति तां सतत-
उज्ज्वलरूपां सीतामित्यर्थः न वेद न जानाति लोक इति शेषः ।
विष्णुना रामेण जितं हरधनुर्भङ्गकरणमित्यर्थः तस्मिन् अविवादे
निर्विवादे सर्वसम्मते इत्यर्थः सति तारका तारावदुज्ज्वलप्रभा सीतेति
का ? कथंरूपा ? आसीदिति शेषः तारका रामरूपचन्द्रसङ्ग-
तेति किं वक्तव्यमिति भावः । पक्षान्तरे देवेन भगवता कृष्णेन
अविते रक्षिते गोकुले सति जिष्णोरिन्द्रस्य विकारता पिपासार्त्यादि-

तीव्रगोरन्वयजार्यो वैदेहीमनसो मतः ।
तमसो न महीदेवैर्योजायन्वरगोव्रती ॥१३॥
वेद या पद्मसदनं साधारावततार सा ।
सा रता तव राधा सा नन्द ! सद्मप ! यादवे ॥१४॥
श्रेवतो हननेऽरोधी यो देवेषु नृपोत्सवः ।

विकृतिसंभूतः का ? न किमपि कर्त्तुं यत्नाभूदित्यर्थः सोऽन्नः गोवर्द्धनरूपस्य भारः तस्मिन् क्षमः तदुत्पाटनसमर्थस्तादृशो यादवश्चेति तथाभूतेन गिरिधारिणा कृष्णेनेत्यर्थः निरस्तां तां विकारतां धिगित्यध्याहार्य्यम् । उपजातिवृत्तम् ॥१२॥

तीव्रेति । तीव्रास्तीक्ष्णाः गावः किरणाः यस्य तस्य तीव्रगोः सूर्य्यस्य अन्वयं वंशं जायन्ते इति अन्वयजाः वंशरक्षकाः दिलीपरघुप्रभृतयः तेषु आर्य्यः श्रेष्ठः राम इति यावत् वैदेह्याः सीतायाः मनसः मतः वैदेह्या पतित्वेन वृत इति भावः । पक्षान्तरे, अन्न अद्भुतत्वे अयः वरं श्रेष्ठं गोषु व्रतं तत्प्रतिपालनरूपमिति भावः यस्य तथाभूतः गोपाल इत्यर्थः कृष्णः तमसः तमोगुणप्रभावात् अज्ञानादिति भावः महीदेवैः ब्राह्मणैः न पूजित इत्यध्याहार्य्यम् इतरगोपबुद्ध्या न मानित इति यावत् । अनुष्टुब्वृत्तम् ॥१३॥

वेदेति । या पद्ममेव सदनं आनिलयं वेद जानाति, सा लक्ष्मीरित्यर्थः, लक्ष्मीः पद्मालया पद्मेत्यमरः । आधारेण आश्रयेण नाथेन विष्णुनेति भावः सह वर्त्तमाना सती अवततार सीतारूपेण अवतारं कृतवतीत्यर्थः । पक्षान्तरे । कस्यचित् नन्दं प्रति उक्तिः, हे सद्मप गृहेश्वर नन्द ! सा तव सा लक्ष्मीरूपा राधा यादवे कृष्णे रता अनुरागिणी अभूदिति शेषः । अनुष्टुब्वृत्तम् ॥१४॥

श्रेवत इति । हनने धनुर्भङ्गकरणे इति भावः देवेषु राजसु समागतेष्विति शेषः यः नृपोत्सवः नृपस्य दशरथस्य पुत्रविरहा-

वत्सपो वृषु वेदे योऽधीरोऽनेन हतोऽवशैः ॥१५॥

नगोपगोऽसि स्मर! मे पिनाके
ऽनायोऽजने धर्मधनेन दानं ।
नन्दानने धर्मधने जयी ना
केनापि मे रक्षसि गोपगो नः ॥ १६ ॥

धम् उपस्थितस्येति भावः उत्सवः आनन्दजननव्यापारः आसी-
दिति शेषः, स शैवतः शिवो देवता यस्य स शैवः परशुरामः तस्मात्
अचिरत्वाध्याहार्य्यः अरोधी न रोधं गत इत्यर्थः न निहत इति
भावः। पक्षान्तरे। यः वेदे प्रतिपादित इति शेषः स कृष्णः वृष्
णिषु वत्सपः गोवत्सपालक इत्यर्थः आसीदिति शेषः, अनेन
कृष्णेन अधीरः चपलः धेनुकासुर इति भावः अवशैः अवाध्यैः
दुर्दान्तैरिति भावः अन्यैः तदनुचरैः सहेत्यर्थः हतः विनाशितः।
अनुष्टुब्वृत्तम् ॥१५॥

नगेति। रामं प्रति परशुरामस्य सकोपोक्तिः। हे स्मर
विनश्वर! अचिरात् त्वं मम शरेण विनाशं प्राप्स्यसीति भावः,
त्वं मे मम पिनाके ऐश्वरे धनुषि नगं पर्वतम् उपगच्छतीति
नगोपगः पर्वतसदृश इति यावत् शरप्रहारेण निश्चेष्टः भवसीति
भावः। धर्मधनेन धर्म एव धनं यस्य तथाभूतेन जनकेनेत्यर्थः अजने
नीचजने अत्र नञः अल्पार्थत्वमप्राशस्त्यार्थत्वं वा। तदुक्तं, तत्
सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः
षट् प्रकीर्त्तिता इति। त्वयीति शेषः दानं कन्याया इति शेषः
अनायः अनीतिः अयुक्तमित्यर्थः। पक्षान्तरे कृष्णं प्रति नन्दस्य
स्तुतिः। धर्म एव धनं यस्य तादृशे गोपालनादिना धर्मार्जनपरे
नन्दः आननं मुखं प्रधानमित्यर्थः यस्य तथाभूते गोकुले इति

ततान दाम प्रमदा पदाय
नेमे रुचामस्वनसुन्दराक्षी ।
क्षीरादसुं न स्वमचारु मेने
यदाप दाम प्रमदा नतानः ॥१७॥

तामितो मत्तसूतामा यापादेष विगानताम् ।

शेषः त्वं जयः जयशाली सर्वोत्कर्षेण वर्त्तमान इत्यर्थः ना पुरुषः असीति शेषः मे मम केनापि अनिर्वचनीयेन सुकृतेनेति भावः गोपान् गच्छतीति तथोक्तः गोपालमध्ये स्थितः सन्नित्यर्थः नः अस्मान् रक्षसि । उपजातिवृत्तम् ॥१६॥

ततानेति । आमः अपक्वः स्वनः शब्दः वागित्यर्थः यस्याः अयुक्तभाषिणीत्यर्थः सा चासौ सुन्दराक्षी सुनयना चेति तथोक्ता सुनयनत्वेन राज्ञोऽतिप्रियत्वं तद्वशंवदत्वञ्च व्यज्यते । प्रमदा प्रकृष्टः मदः गर्व्वः यस्याः तथाभूता सौभाग्यगर्व्विततेति भावः कैकयीति शेषः पदाय स्वपुत्रस्य भरतस्य राज्यलाभायेत्यर्थः इमे रामादयः रुचा दीप्त्या प्रभावेणेति यावत् न राज्यक्षमा इति शेषः इति उक्त्वा दाम बन्धनरज्जुं रामस्य राज्याभिषेकप्रतिबन्धमिति भावः ततान विस्तारयामास । पक्षान्तरे, प्रमदा स्त्री यशोदेति शेषः यत् यतः क्षीरात् असुं प्राणं स्वं धनं न मेने प्राणानपेक्ष्य क्षीरमेव धनं मन्यते स्मेत्यर्थः । यत् दाम क्षीरलोलुपकृष्णस्य बन्धनार्थं रज्जुं आप संगृहीतवती तत् अचारु अशोभनम् अकिञ्चित्करं जातमिति शेषः कृष्णोऽपि दामभिः कष्णं बद्धुं न शक्येति भावः । अतः अस्मात् कारणात् नता श्रान्ततया निश्चेष्टेत्यर्थः अभूदिति शेषः । उपजातिवृत्तम् ॥१७॥

इन्द्रस्य अहल्याधर्षणमाह तामिति । मत्तः ऐश्वर्य्यगर्व्वेण विमूढः

तां नगाविषदे पाशा मात्रासूत्तमतो मिता ॥१८॥
नासावद्यापत्रपाज्ञाविनोदी
धीरोऽनुत्या सस्मितोऽद्याविगीत्या ।
त्यागी विद्यातोऽस्मि सत्यानुरोधी
दीनोऽविज्ञा पात्रपद्यावसाना ॥ १९ ॥

स चासौ सुत्रामा चेति तथोक्तः ऐश्वर्य्यमत्तः देवराज इत्यर्थः तां प्रसिद्धामित्यर्थः अहल्याम् इतः अभिगतः । ततश्च एषः इन्द्रः, शापात् अहल्यापतेः गोतमस्य त्वं सहस्रयोनिर्भवेत्येवंरूपा-दिति भावः विगानतां विरुद्धत्वेन गेयत्वं दुष्कीर्त्तिमित्यर्थः इत इति पूर्वेणान्वयः। पश्चान्तरे, तां मातरं यशोदां प्रति कृपयेति अध्याहार्य्यं पाशा बन्धनरज्जुः न गच्छत इति नगौ स्थावरौ यम-लार्जुनाख्यौ वृक्षौ ताभ्यां विषम् अमृत मोक्षमित्यर्थः ददातीति तथोक्ते नारदशापात् स्थावरतां गतयोः कुवेरपुत्रयोः तयोः भङ्गेन मुक्तिं ददतीत्यर्थः प्रसङ्गतः यमलार्जुनभङ्गोऽपि उक्तः। कृष्णे इति शेषः मात्रासु परिमाणेषु उत्तमतः अतिशयेनेत्यर्थः मिता ह्रासं गता अभूदिति शेषः । कृष्णः श्रान्तां मातरमालोक्य स्वयं बन्धनं जग्राहेति भावः। अनुष्टुव् वृत्तम् ॥१८॥

नासेति । नासायाः नासिकायाः अवद्येन छेदनेन अपगता त्रपा लज्जा यस्याः तथोक्ता जाता शूर्पणखेति शेषः आज्ञाविनोदी आज्ञायां रामस्येति शेषः विनोदः आनन्दः यस्य तथाभूतः लक्ष्मण इति शेषः । लक्ष्मणः रामाज्ञया शूर्पणखां छिन्ननास-मकरोदिति भावः। अद्य अधुना तदानीमित्यर्थः धीरः राम इति शेषः अनुत्या असुत्या तिरस्कारेण अविगीत्या अकीर्त्तिख्यापनेन च शूर्पणखाकर्त्तकेणेति भावः सस्मितः ईषद्धास्य-

सम्भावितं भिक्षुरगादगारं
याताधिराप स्वनघाजवंशः ।
शर्वं जघान स्वपराधिताया
रङ्गादगारक्षुभितं विभासम् ॥ २० ॥
तयातितारस्वनया गतं मा
लोकापवाददितयं पिनाके ।

युक्तः अभूदिति शेषः । पक्षान्तरे, उद्धृतौ यमलार्जुनौ प्रति कृष्ण-स्योक्तिः । अहं विद्यातः ज्ञानात् त्यागी दाता भोगापवर्गयोरिति शेषः सत्यानुरोधी सत्यानुरागी अदीनः दैन्यरहितः सततं पूर्ण इत्यर्थः अस्मि । अविशा अविद्या पात्राणां सत्पात्राणां भक्तानां साधूनामित्यर्थः पद्यं पन्थाः सदाचारपद्धतिरित्यर्थः अवमानं यस्याः तथाभूता । सत्भक्तेनाविद्या नश्यतीति भावः । शालि-नीवृत्तम् । मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ १९ ॥

सम्भावितमिति । स्वनघाजवंशः सुष्ठु अनघः निष्पापः अजस्य ब्रह्मणः वंशः कुलं यस्य तथाभूतः निष्पापब्रह्मकुलोद्भव इत्यर्थः रावण इति यावत्, यातः प्राप्तः आधिः मनोव्यथा येन तथोक्तः शूर्पणखानिग्रहखरदूषणादीनां वधादिति भावः, भिक्षुः परिव्राजकरूपधरः सन् सम्भावितं सम्भावनया लक्षितम् अगारं पञ्चवटीस्थं रामाश्रममित्यर्थः अगात् आप प्राप जहार चेत्यर्थः सीतामिति शेषः । पक्षान्तरे कृष्ण इत्यध्याहार्य्यं रङ्गात् सभा-मण्डपात् शर्वं मम प्राणहन्तारमिति दुश्चिन्तया क्षतप्रायमिति भावः अगारे स्वगृहे क्षुभितं चाणूरादीनां वधात् क्षोभं गतम् अतएव विभासं निष्प्रभं मलिनकान्तिमित्यर्थः कंसमिति शेषः स्वप-राधिताया अत्यन्तापराधकरणाहेतोरित्यर्थः पितुर्निग्रहादिरूपा-दिति भावः जघान हतवान् । उपजातिवृत्तम् ॥ २० ॥

तयेति । तया जानक्या अतितारः अत्युच्चैः स्वनः आक्रोशः

केनापि यं तद्विदवाप कालो
मातङ्गयानं खरतातियातः ॥ २१ ॥
शवेऽविदा चित्रकुरङ्गमाला
पञ्चावटीनर्म न रोचते वा ।
वातेऽचरो नर्म नटीव चापं
लामागरं कुत्रचिदाविवेश ॥२२॥

यस्याः तथाभूतया सत्या रावणेन बलात् नीयमानत्वादिति भावः गतम् । मा मां पतीत्युक्तं पिनाके धनुषि यदि पिनाकशब्दस्य ऐश्वरधनुर्वाचित्वं तथापि विशेषशब्दस्य क्वचित् सामान्यपरत्वं दृश्यते । लोकापवादद्वितयं धनुर्धरस्य मम अज्ञानेन मायामृगपृष्ठानुधावनम् एकस्या अपि स्त्रिया अरक्षणमित्येवमकीर्त्तिद्वयमिति भावः जातमिति शेषः । पक्षान्तरे, तद्वित् तज्ज्ञः कंसो हन्तव्य इति जानन्नित्यर्थः कालः कृतान्तोपमः कृष्णः मातङ्गस्य कुवलयापीडाख्यस्य हस्तिनः यानं खं प्रति धावनं खरता चीत्कारश्च ते अतिक्रम्य यातः तं निहत्य रङ्गं गत इत्यर्थः केनापि कारणविशेषेणेत्यर्थः यं कंसम् अवाप प्राप्तवान् । उपजातिवृत्तम् ॥२१॥

शवे इति । रामस्य जानकीं प्रति खेदोक्तिः । हे शवे ! मृतप्राये जानकि इति ऊह्यं शत्रुहस्तपतितत्वात् जानक्याः शवत्वमिति भावः, अविदा अज्ञेन मूढेनेत्यर्थः मया सहेत्यर्थः चित्रा मनोहारिणी कुरङ्गमाला मृगश्रेणी यस्यां तथाभूता पञ्चवटी तत्र नर्म विहारश्च न रोचते वा नैव रोचते तुभ्यमिति शेषः । पक्षान्तरे, वाते वात्यारूपे तृणावर्त्ताख्ये दैत्ये अचरः निश्चलः तेन दैत्येन चालयितुमशक्य इति यावत् कृष्णः नटी नर्म विलासमिव कुत्रचित् प्रदेशे इति शेषः चापं धनुः लाभागरं लाभगृहं धनभाण्डारमित्यर्थः आविवेश प्रविष्टवान् । कंसं निहत्य तदी[illegible]रादिकमैश्वर्यम् आत्मसाच्चकारेति भावः । उपजातिवृत्तम् ॥२२॥

नेह वा क्षिपसि पक्षिकन्धरा
मालिनी स्वमतमत्त ! दूयते।
ते यदूत्तम ! तमस्वनीलिमा-
राधकं क्षिपसि पक्षिवाहने ॥२३॥

वनान्तयानस्वणुवेदनासु
योषामृतेऽरण्यगताविरोधी।
धीरोऽविताऽगण्यरते मृषा यो
सुनादवेणुस्वनयातनां वः ॥२४॥

नेति। सीतां हृत्वा पलायमानं रावणं प्रति जटायुष उक्तिः। रे स्वमतमत्त ! स्वेच्छाचारिन्नित्यर्थः पक्षिकन्धरा पक्षिणि मयि कन्धरा ग्रीवा यस्याः तथोक्ता ग्रीवाविवर्त्तनेन मां परित्रायस्वेति एवञ्च मां प्रति दृष्टिं निक्षिपन्तीति भावः मालिनी स्रग्विनी सीता दूयते क्लिश्यति, इह अस्मिन् स्थाने वा न क्षिपसि न त्यजसि। अतोऽहं त्वां निहत्य एनां मोचयामीति फलितार्थः। पक्षान्तरे, कंसे निहते तत्त्रासान्मुक्तयादवानां कृष्णं प्रति स्तुतिः। हे यदूत्तम ! यादवश्रेष्ठ ! ते तव स्वस्य आत्मनः नीलिमा कृष्णत्वं तस्य आराधकं सेवकं त्वद्भक्तमिति भावः पक्षिवाहने गरुड़याने क्षिपसि प्रेरयसि। त्वद्भक्तं गरुड़वाहनं रूपं विष्णुरूपधरं करोषीति भावः। रथोद्धतावृत्तं, रान् परैर्नरलगैरथोद्धतेति तल्लक्षणात् ॥२३॥

वनान्तेति। योषां जायां जानकीम् ऋते विना स्थित इत्यध्याहार्य्यं वनान्ते वनसीमायां यत् यानं भ्रमणं तत्र सु अणवः अल्पाः वेदनाः मनसः सन्तापाः तासु लक्ष्मणोपदेशेन स्वस्य धैर्य्यातिशयेन प्रतिविधानकामनया च ह्रासं गतासु मनःपीड़ास्विति भावः अरण्यगताः आरण्याः वानरा इति भावः अविरोधिनः

किं नु तोयरसा पम्पा न सेव्या नियतेन वै ।
वैनतेयनिवासेन पापं सारयतो नु किम् ॥२५॥
स नतातपहा तेने स्वं शिनाविहितागसम् ।
संगताहिविनाशे स्वं नेतेहाप ततान सः ॥२६॥

भिन्नानि यस्य तथाभूतः अभूदिति शेषः वानरैः सह भिन्नत्वमकरोदित्यर्थः । राम इति कर्तृपदमूह्यम् । पक्षान्तरे, अगण्यम् अपाह्यम् अश्लाघ्यमिति यावत् रतं कुब्जा निकृष्टया सह यत् रमणं तत् अश्लाघ्यतया परिहरणीयमिति भावः तस्मिन् धीरः सन्तुष्ट इति भावः यः कृष्णः, सः वः युष्मान् अविता पुनर्गोकुलमेत्य रक्षितेति एतत् मृषा मिथ्या । रुष्टः नादो यस्य तादृशस्य वेणोः स्वनेषु ध्वनिषु यातनां किं न स्मरयेति शेषः । तादृशं वेणुरवं श्रुत्वा यावत् कृष्णदर्शनं न जातं तावत् पर्य्यन्तम् अस्माकं कीदृशं विरहदुःखमभूत् सम्प्रति दूरं गते तस्मिन् का कथा अस्माकं दुःखस्येति भावः । उपजातिवृत्तम् ॥२४॥

किमिति । तोये रसः स्वादुता यस्याः तादृशी पम्पा तदाख्यं सरः किं नु निश्चयेन अस्ति ? नास्त्येवेत्यर्थः रामस्य विरहोद्दीपकत्वात् पम्पायाः स्वादुताया नानुभव इति भावः, अतः नियतेन सेव्या तत्तोयावगाहनादिरूपेति भावः न वै नैवेत्यर्थः रामस्येति शेषः । पक्षान्तरे, वैनतेयः विनतानन्दनः गरुड़ः निवासो यानमिति यावत् यस्य तेन कृष्णेनेत्यर्थः तत्सक्तेनेति भावः पापं सारयतः अपनयतः तवेत्यूह्यं किं नु ? नैव किञ्चित् अस्माकं प्रतारण इति भावः, उद्धवं प्रति गोपीनामुक्तिः । अनुष्टुब्वृत्तम् ॥२५॥

स इति । नतानां नम्राणां शरणागतानामित्यर्थः आतपं सन्तापमित्यर्थः हन्तीति तथोक्तः शरण्य इत्यर्थः सः रामः अविहितम् अकृतम् आगः अपराधः येन तथोक्तं निरपराधं तथापि शाखिना

कपितालविभागेन योषाद्दोऽभुनयेन सः ।
स नये न नु दोषायो नगेभाविलतापिकः ॥२७॥

ते सभा प्रकपिवर्णमालिका
नाल्पकप्रसरमभ्रकल्पिता ।

ताडितमिति शेषः सुग्रीवं शेन सुखेन सानन्दमिति यावत् स्वम् आत्मीयं तेने विस्तारितवान् सम्मितेन प्रकाशयामासेति यावत् । पक्षान्तरे, स नेता नायकः कृष्णः इह अस्मिन् प्रदेशे सङ्गतेन स्थितेन अहिना सर्पेण कालियेनेति भावः विनाशे संहारे उपस्थिते इति शेषः स्वं जनं गोकुलवासिनमिति भावः आप प्राप्तवान् ततान विस्तारयामास च । कालियोत्पातात् विनष्टप्रायं व्रजजनं दृष्ट्वा तं दर्शयित्वा सर्वमजीवयदिति यावत् । स युष्माभिः प्रेक्ष्यते इति नैव वक्तव्यमिति भावः । अनुष्टुब्वृत्तम् ॥२६॥

कपीति । सः रामः अनुनयेन प्रणयेन हेतुना सुग्रीवस्येति भावः कपिवर्जी तालाः तालवृक्षाः श्रेणिबन्धनेन स्थिता इति भावः तेषां विभागेन विच्छेदेन सप्ततालभेदपूर्वकं वालिहननेनेति यावत् योषां पत्नीं वालिनापहृतां सुग्रीवपत्नीमिति भावः ददातीति तथोक्तः अभूदिति शेषः । वालिनं हत्वा सुग्रीवाय तत्पत्नीमुद्धृतां ददाविन्यर्थः । पक्षान्तरे, नु सम्बोधने हे उद्धव ! सः कृष्णः दोषाणाम् आयः आगमः यस्मात् तादृशः सर्वदोषाकर इत्यर्थः तथा नगे पर्वते भाविनी या लता वल्ली तस्याः पिकः कोकिलः अस्थिरसौहृद इति भावः अतः नये नीतिवर्त्मनि युक्तायुक्तविवेकी न अस्तीति शेषः । अनुष्टुब्वृत्तम् ॥२७॥

ते इति । वानराणां रामं प्रति उक्तिः । हे राम ! ते तव सभा, प्रकृष्टाः कपीनां वानराणां वर्णमाला अक्षरपङ्क्तिः वाक्-

ताम्रिकभ्रमरसप्रकल्पना
कालिमार्णव! पिक! प्रभासते ॥२८॥
रावणोऽक्षिपतनत्रपानते
नाल्पकभ्रमणमक्रमातुरम्।
रन्तुमाक्रमणमभ्रकल्पना
ते न पात्र! ननपाक्षिणे वरा ॥२९॥

परम्परा इत्यर्थः यद्वा कपीनां वर्णानां माला समूहः यस्यां तथा-भूता यथिनवर्णैरञ्जितवानरपूर्णेत्यर्थः। न अल्पकः प्रसरः विस्तारः यत्र तद्विविधप्रचारमित्यर्थः यथा तथा अभ्रे आकाशे कल्पिता आकाशमण्डलव्याप्तेति यावत् वह्नौ कपिसेना ते समुप-स्थितेति भावः। पक्षान्तरे, हे कालिकार्णव कालिमसागर! पिक कोकिल! तवेत्यध्याहार्य्यं, तल्पे शय्यायां भवं ताल्पिकं सुरतमित्यर्थः तस्य भ्रमेण यो रसः आस्वादः तस्य प्रकल्पना मान-सिकरचना प्रभासते प्रकर्षेण स्फुरति तव अस्माभिः सह इदानीं मानससुरतं वर्त्तते न तु वास्तवं पिकस्य मनःकल्पित फलरसास्वाद-वदिति भावः। गोपीनां कृष्णोद्देशेन उद्धवं प्रत्युक्तिरियम्। रथो-द्धताहत्तम् ॥२८॥

रावणे इति। अक्षिपतनेन रामस्य दृष्टिपातेन या त्रपा लज्जा वीरत्वमतिक्रम्य चौर्य्येण परनारीहरणादिति भावः तया आनते अवनतमुखे रावणे अक्रमेण अनौचित्याचरणेन परस्त्रीहरणादिना आतुरं पर्य्याकुलं यथा तथा अल्पकभ्रमणं न सर्वाधिका चित्तस्य भ्रान्तिरित्यर्थः जातेति शेषः। रावणः कथं दुष्कार्य्यं कृतमिति चिन्ताकुलोऽभूदिति भावः। पक्षान्तरे गोपीनां कृष्णोद्देशेन उद्धवं प्रति उक्तिः। हे न पात्र अयोग्यपात्र! अस्माभिरयोग्ये प्रेम कृत-मिति भावः रन्तुं क्रीडितुम् आक्रमणं तत्कामिगमनमिति यावत्

देवे योगी सेवादानं शङ्का नाये ! लङ्कायाने ।
नेयाकालं येनाकाशं नन्दावासे गेयो वेदैः ॥३०॥

शङ्कावश्यानुत्त्वनुश्यावकाशं
याने नद्यामुग्रमुख्याननेया ।
याने नद्यामुग्रमुख्याननेया
शङ्कावश्यानुत्त्वनुश्यावकाशम् ॥३१॥

यां कामपि लतां प्राप्य पूर्वलतात्यागेन भ्रमतीति नतः स चासौ पक्षी चेति तथोक्तस्य अस्थिरसौहृदस्येति भावः ते तुभ्यं त्वदर्थमित्यर्थः तत्कारणनिमित्तमिति भावः अभ्रकल्पना आकाशकल्पना अलीकमिति भावः। यदस्माभिस्त्वयि प्रेमाविष्कृतं तदयुक्तमिति तात्पर्य्यम् । रथोद्धतावृत्तम् ॥२९॥

अथ सीतान्वेषणार्थं हनूमति आज्ञापिते लक्ष्मणादिभिस्तस्य शङ्कापरिहारार्थमुच्यते, देवे इति। अये हनूमन् ! लङ्कायाने लङ्कां प्रति यात्रायां शङ्का भयं न अस्ति तवेति शेषः, यतः देवे देवसम्बन्धिनि योगे सेवादानं सेवावलम्बनं तव अस्तीति शेषः त्वया देवो रामः सेव्यते तत् कथं ते भयमिति भावः। पक्षान्तरे, येन क्षणेन आकाशं नेयः संहरणीयः आ समन्तात् कालः कलनसामर्थ्यं स्वव्यापारशक्तिरिति यावत् यस्य तथाभूतं भवतीति शेषः यस्मिन् आकाशमपि कालेन नीयते इति भावः, यश्च नन्दस्य आवासे गोकुले स्थित इति शेषः किन्तु वेदैः गेयः कीर्त्तनीयः वेदेषु यो गीयते इत्यर्थः। तस्य किमसाध्यमिति भावः। विद्युन्मालावृत्तम्, मो मो गो गो विद्युन्मालेति तल्लक्षणात् ॥३०॥

शङ्केति। सीतामन्विष्यागतस्य हनूमत उक्तिः। हे रामेत्यध्याहार्यम्. अनुशायाः श्रीमद्रामायाः अवकाशः प्रसरः यत्र तत् यथा तथा याने लङ्कां प्रति गमने श्रीमद्रामायाः वध्वाः लङ्कामध्ये इति शङ्कु

तारकि रिपुराप श्रीरुचा दाससुतान्वितः ।
तन्विताषु सदा चारु श्रीपरा पुरि के रता ॥२५॥
लङ्कारङ्गागाराध्यासं याने सेया काराव्यासे ।
सेव्या राका या मेने या सन्ध्यारागाकारं कालम् ॥२६॥

तार्क्ष्यः विषाशनयनः कृष्णः युताः सम्मिलिताः अरयः शत्रवः तेषु घोरत्वयं भीषणान् तान् दैत्यपुङ्गवासुरानिति भावः वन्यनगानुकारम् अरण्यपर्वतसादृश्यं निनाय प्रापयामास । कृष्णेन निहता एते अरण्ये पर्वता इव निपतितास्तिष्ठन्तीति भावः । उपजातिवृत्तम् ॥२४॥

तारके इति । रिपुः रावणः दासैः भृत्यैः सुतैश्च इन्द्रजिदादिभिः अन्वितः युक्तः सन् श्रीरुचा शोभनश्रीकान्त्या तारके परब्रह्मणि रामे इत्यर्थः आप लयं गत इत्यर्थः । पक्षान्तरे, पुरि मथुरायां द्वारकायां वा श्रीपरा श्रीः शोभा कान्तिरित्यर्थः परं प्रधानं यस्याः तथाभूता यद्वा परा द्वितीया श्रीः लक्ष्मीस्वरूपेत्यर्थः रुक्मिणीति यावत् तन्विताषु तनुभिः शोभनैः शरीरैः इतासु युक्तासु अन्यासु सुन्दरीषु नारीषु मध्ये इति भावः सदा सततं चारु मनोहरं यथा तथा के परब्रह्मणि कृष्णे इत्यर्थः रता आसीदिति शेषः । अनुष्टुब्वृत्तम् ॥२५॥

लङ्केति । काराव्यासे कारा बन्धनस्थानं रावणेन निगृहीतानां देवानां देवाङ्गनानाञ्चेति भावः तस्याः व्यासे अविभागे विश्रामराहित्ये च इत्यर्थः सति कारायां देवेषु तदङ्गनासु च निरोधितासु इति भावः याने रामस्य रावणनिधनानन्तरं सीतासहितस्य स्वराजधानीं प्रति यात्रायामिति यावत् लङ्का रङ्गागाराध्यासं रङ्गाणाम् आगारः आश्रयः तस्य अध्यासः भ्रमः यस्मिन् तत् यथा तथा सेया याता शोभा हृष्टावस्थेन कारोपशीर्येति भावः । रावण-

गोदावरी ब्रह्मगिरेः सकाशात्
संप्रापिता प्रागुदधिं प्रयत्नात्।
येनर्षिणा सोऽपि पुनः प्रतीप-
मानेतुमद्रिं प्रभवेत् किमेताम्? ॥३७॥

एवं विलोमाक्षरकाव्यकर्त्तु-
र्भूयः सभायां समवेत्य तज्ज्ञाः।
जानन्त्विमां चित्रकवित्वसीमां
दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥३८॥

इति श्रीदैवज्ञपण्डितसूर्यकविविरचितं विलोमाक्षर-
रामकृष्णकाव्यं समाप्तम्।

---

निधनात् परं रामप्रयाणे लङ्का श्मशानभूमिरिव अनुमेया आसी-
दिति निष्कर्षः। पक्षान्तरे, या पूर्वोक्ता लक्ष्मीरूपा रुक्मिणी राका
पौर्णमासी सेव्या पौर्णमासीव मनोहरत्वेन सेवनीयेत्यर्थः। सा च
कालं कृष्णं सन्ध्यारामाकारम् अत्यनुरागवन्तमिति यावत् मेने
अमन्यत। कृष्णः यां पौर्णमासीमिव मनोहारिणीं यथा अनु-
रागिणीं मेने तथा सापि कृष्णमनुरागवन्तमिति निष्कर्षः। विद्यु-
न्मालावृत्तं, मो मो गो गो विद्युन्मालेति तल्लक्षणात् ॥३६॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
रामकृष्णविलोमकाव्यव्याख्या समाप्ता।

---

# वृन्दावनयमकम् ।

---

वरदाय नमो हरये पतति जनो यं स्मरन्नपि नमो हरये ।
बहुशश्चक्रंद हता मनसि दितिर्येन दैत्यचक्रं दहता ॥१॥
स्वमिव भुजं गवि शेषं व्युपधाय स्वपिति यो भुजङ्गविशेषम् ।
नवपुष्करसमकरया श्रियोर्मिपङ्क्त्या च सेवितः समकरया ॥२॥
येन च बलिरसुरोधः समवस्थापितः क्षितेरसुरोऽधः ।
पृथुकः सन्निभवदनः चिक्षेप च यः सरोजसन्निभवदनः ॥३॥

विशेषकम् ।

वरदायेति । यं स्मरन्नपि जनः मोहरये अज्ञानवेगे न पतति, दैत्यचक्रं दितिजवृन्दं दहता नाशयता येन मनसि हता व्यथिता दितिः असुरमाता बहुशः पुनः पुनः चक्रन्द तस्मै वरदाय अभीष्ट-दायिने हरये नमः ॥१॥

स्वमिवेति । यः गवि सागरजले स्वं भुजमिव भुजङ्गविशेषं शेषम् अनन्तं व्युपधाय उपधानीकृत्य नवं पुष्करं पद्मं तस्य समः करः यस्याः तथाभूतया श्रिया लक्ष्म्या समकरया मकराः जल-जन्तुभेदाः तैः सहितया ऊर्मिपङ्क्त्या तरङ्गमालया च सेवितः सन् स्वपिति निद्राति तस्मै नम इति पूर्वेणान्वयः ॥२॥

येनेति । येन च असुरोधः सुखेन रोद्धुमशक्यः दुरासद इति यावत् बलिर्नाम असुरः क्षितेः पृथिव्याः अधः तले पाताले इत्यर्थः समवस्थापितः, यश्च सरोजसन्निभवदनः पद्मसदृशनेत्रः पृथुकः बालकः सन् इभवत् गज इव अनः शकटं चिक्षेप तस्मै हरये नम इति पूर्वेणान्वयः ॥३॥

स्तौमि च लाङ्गलवन्तं देवं यः संयुगे चलाङ्गलवन्तम् ।
कपिमकरोदसुरहितं द्विविदं दृढमुष्टिताडनादसुरहितम् ॥४॥
आपानपरम्परया भेजे यं रेवती जितपरं परया ।
बिभ्रतमालानाभौ बाहू मग्नकुसुमाश्च माला नाभौ ॥५॥
यो रूढमदारुणया तन्वा प्रपतं प्रति द्विषमदारुणया ।
कर्षितदानवकुलया विबभौ गन्धविजितेभदानवकुलया ॥६॥
ग्रहपतिरिव हिमहीनः कान्त्याभूदुग्रसेन इति हि महीनः ।
प्रकृतिभिररिहेतीहः स्वयं हतः संहताभिररिहेतीहः ॥७॥

स्तौमीति । लाङ्गलवन्तं देवं बलभद्रमित्यर्थः स्तौमि च, यः संयुगे युद्धे चलः चञ्चलः अङ्गलवः शरीरांशः यस्य तादृशं विचरन्तमिति यावत्, असुराणां हितं हितकरं तं द्विविदं नाम कपिं दृढमुष्टिताडनात् असुरहितं प्राणवर्जितम् अकरोत् चकार ॥४॥

आपानेति । रेवती जिताः परे शत्रवः येन तादृशं शत्रुञ्जयमित्यर्थः आलानाभौ गजबन्धनदण्डसदृशौ बाहू नाभौ मग्नकुसुमा संलग्नपुष्पा मालाश्च बिभ्रतं यं परया भक्त्या आपानपरम्परया पानगोष्ठीसमुदायेन भेजे सिषेवे । तं स्तौमीति पूर्वेणान्वयः ॥५॥

य इति । रूढेन जातेन मदेन सुरापानजनितेन उल्लासेनेति भावः अरुणया रक्तया प्रपतं द्विषं शत्रुं प्रति अदारुणया सदययेत्यर्थः कर्षितं ध्वंसितं दानवकुलं यया तथाभूतया तथा गन्धेन विजितम् इभदानं हस्तिमदः बकुलं बकुलकुसुमञ्च यया तथाविधया तन्वा शरीरेण विबभौ विशेषेण रराज ॥६॥

ग्रहपतिरिति । इह भुवि कान्त्या तेजसा हिमहीनः सोष्ण-तेजा इति यावत् ग्रहपतिरिव सूर्य इव [illegible] इति

बलभिद्दरीभागानां जेताविन्ध्यस्येवदरीभागानाम्।
औक्ता दाशार्हस्य प्रभवो यशसः नमश्च दाशार्हस्य ॥८॥
यो भोक्तेव सुधायाः वर्णकविशयिता च वसुधायाः।
यस्य परामुदधीनां तटेषु दत्तिं प्रवदन्ते सुदधीनाम् ॥९॥
भरत इव विभावसवः सर्वेषां प्राणिनामथ विभावसवः।
यस्मिन्वसुधामवति स्थिरा बभूवुः समाश्च वसुधामवति ॥१०॥
अनुकृत्य रघो राज्ञः प्रत्याख्यातायनः प्रभुरघोराज्ञः।

हेतोः संहताभिः मिलिताभिः प्रकृतिभिः प्रजाभिः स्वयं वृतः अरीणां शत्रूणां हेतोः अस्त्राणि हन्तीति तथोक्तः उपसेन इति हि प्रसिद्धः महीमः महीपतिः अभूत् ॥७॥

बलभिदिति। यः अरीभागानां शत्रुहस्तिरूपपर्वतानां बलभित् बलहन्ता इन्द्र इत्यर्थः इन्द्रो यथा पर्वतान् पक्षहीनांश्चकार तथा शत्रुहस्तिनां बलं नाशयामासेत्यर्थः ॥८॥

य इति। यः सुधायाः अमृतस्य भोक्तेव देव इवेत्यर्थः वसुधायाः पृथिव्याः वर्णकेन मराङ्गनविशेषेण विशयिता भूषयिता रञ्जक इत्यर्थः। यस्य सुदधीनाम् आनन्दनिधीनाम् उदधीनां समुद्राणां तटेषु परां महतीं दत्तिं दानं प्रवदन्ते कीर्त्तयन्ति बुधा इति शेषः ॥९॥

भरत इति। भरते इव सर्वेषां प्राणिनां विभौ प्रभौ वसुधामवति धनवति तेजस्वति चेत्यर्थः यस्मिन् वसुधां पृथिवीम् अवति रक्षति सति असवः प्राणाः प्रजानामिति शेषः विभा प्रभा वसु धनं येषां तथाभूताः समुज्ज्वला इति भावः स्थिराः अचञ्चलाः समाः अविकृताश्चेत्यर्थः बभूवुः। सर्वा एव प्रजाः सुखेन कालं नयन्ति स्मेति भावः ॥१०॥

अनुकृत्येति। रघोः राज्ञः रघुं राजानमित्यर्थः सम्बन्धविवक्षया

योगिभिरित्यस्तमितः केशवमाप्नोमि नाथमस्तमितः ॥११॥
तस्येयमकार्येभ्यः च्युतेन तनयेन रचितयमकार्येभ्यः ।
दत्ता वाक् स्वा कृतिना मानाङ्केन हरिसंश्रया स्वाकृतिना १२
अथ जग्मतुरक्रमन्तौ वयसा वृन्दावनान्तरं क्रमन्तौ ।
हरिराहितकुमुदसितः स्निग्धतराङ्गस्तथा हली कुमुदसितः १३

षष्ठो, अनुकृत्य प्रत्याख्यातं परित्यक्तम् अशनं भोजनं येन तथाभूतः अनशनव्रतीत्यर्थः अघोरा अदारुणा सौम्येत्यर्थः आशा यस्य तादृशः यः प्रभुः अस्तमितः त्यक्तदेहः सन् केशवं नाथं प्रभुम् आप्नोमि लभे इति धियेति शेषः योगिभिः अस्तमितः । यथा रघुः पुत्रे अजे राज्यं निधाय योगिभिः सह मिलित्वा योगावलम्बनेन प्रायोपवेशनपरः निष्ठां गतः तथेति भावः ॥११॥

तस्येति । रचितम् अनुष्ठितं यमकाख्यं जगद्धसद्रूपमिति भावः यैः तादृशेभ्यः अकार्य्येभ्यः गर्हितकार्य्येभ्यः हेतुभ्यः च्युतेन नष्टकर्म्मणा स्वाकृतिना शोभनाशयेन कृतिना कार्य्यदक्षेण मानाङ्केन मानचिह्नितेन अभिमानिनेति यावत् तस्य उग्रसेनस्य तनयेन कंसेनेत्यर्थः हरिसंश्रया कृष्णसंश्रिता कृष्णविद्वेषमयीति भावः इयं स्वा स्वकीया वाक् दत्ता अनुचरेभ्य इति शेषः कृष्णं जहि सर्वैरुपायैरिति दासान् प्रति आदिष्टमिति भावः । यद्वा अकार्य्येभ्यः असत्कार्य्येभ्यः च्युतेन असत्कार्य्यविमुखेनेत्यर्थः इयं वाक् वाणी दत्ता इदं काव्यं रचितमिति यावत् । ग्रन्थकर्त्तुः प्रशंसेयमिति ॥१२॥

अथेति । अथानन्तरम् आहिता जनिता कोः पृथिव्याः मुद् आनन्दः येन तथाभूतः अहं ते भारम् अपहरिष्यामीति आश्वासनेन पृथिव्या आनन्दयितेति यावत्, स्निग्धतरम् अङ्गं यस्य तथाभूतः, असितः कृष्णः, तथा कुमुदवत् सितः शुभ्रवर्णः हली बलभद्रः वयसा शैशवेनेति यावत् हंसौ इव [illegible] गतौ चपलौ

उदधिपयोनिर्घोषं तत्र निवेश्याच्युतोऽपयोनिर्घोषम् ।
अविचिन्तितकंसबलः चचार भेजे च यामुनकं सबलः ॥१४॥
प्रियसुहृद्दामोदरयोः ललतो रथरौहिणेयदामोदरयोः ।
कृतपशुवृन्दावनयोः घर्मः क्षयमापदयितवृन्दावनयोः ॥१५॥
क्षोभमगाददभ्राणां स्तनितैर्विद्युल्लतामगादभ्राणाम् ।
मुनिरपि नीरागमनाः सरितश्चासन् प्रवृत्तनीरागमनाः ॥१६॥

तौ रामकृष्णौ विचेरतुरिति वृन्दावनान्तरं जग्मतुः विचेरतुः अवतीर्णौ तस्थतुरिति भावः ॥१३॥

उदधीति । तत्र वृन्दावनान्तरे अपयोनिः अयोनिरज इति यावत् सबलः बलवान् अच्युतः कृष्णः उदधिपयसामिव समुद्रजलानामिव निर्घोषः यस्य तादृशं बहुलमिति भावः घोषम् आभीरवृन्दं निवेश्य संस्थाप्य अविचिन्तितम् अगणितं कंसस्य बलं येन तथाभूतः सबलः बलभद्रेण सहितः सन् चचार यामुनकं यमुनाजलञ्च भेजे सिषेवे ॥१४॥

प्रियसुहृदिति । अथानन्तरं प्रियसुहृदाम् आमोदम् आनन्दं रातः दत्त इति तथोक्तौ प्रियसुहृदामोदरौ तयोः रा दाने इत्यस्मात् डप्रत्ययः । ललतोः विहरतोः कृतं पशुवृन्दानां गवामित्यर्थः अवनं रक्षणं याभ्यां तथाविधयोः गोपालकयोरित्यर्थः अयितं अयितं वृन्दावनं याभ्यां तथोक्तयोः रौहिणेयदामोदरयोः बलकृष्णयोः घर्मः ग्रीष्मकालः क्षयम् आपत् अवसानं जगाम वर्षागमो बभूवेति भावः ॥१५॥

क्षोभमिति । न गच्छतीति अगा स्थिरा पृथिवीत्यर्थः, दभ्रा विस्तरा स्थिरेत्यमरः । नीरागम् रागः विषयवासना तद्रहितं मनो यस्य तादृशः मुनिरपि अदभ्राणां बहूनां, अदभ्रं बहुलं बहिस्त्यमरः । विद्युल्लतामभ्राणां मेघानां स्तनितैः गर्जितैः क्षोभं

रौद्रं कन्दर्पस्य प्रथमो हेतुर्बभूव कन्दर्पस्य ।
स्त्रीहृदयान्यभिनदतः स शरैः प्राप्य सुहृदो घनानभिनदतः॥१७
विद्युद्गौरी छावान् भ्रमतेव घनेष्वभूच्च गौरीछावान् ।
सुलभवलाकायेषु ग्लपितचिरप्रोषितवलाकायेषु ॥१८॥
जात्या सज्जालकया यूथिकया चाप्ययुवतिसज्जालकया ।
कमलानि ससर्जाभ्यां भ्रमरः कृष्णो बलादिव ससर्जाभ्याम्॥१९

चञ्चलताम् अगात् प्राप । सरितश्च प्रवृत्तं नीरागमनं जलागमनं येषां तथाभूताः आसंश्च ॥१६॥

रौद्रमिति । रौद्रं दारुणं कं जलं कन्दर्पस्य दर्पस्य प्रथमः हेतुः मुख्यं कारणं बभूव । अतः स कन्दर्पः अभिनदतः घनान् गर्जतः मेघान् सुहृदः प्राप्य शरैः स्त्रीहृदयानि अभिनत् विव्याध ॥१७॥

विद्युदिति । गौरी गौरकान्तिः विद्युत् सुलभः बलाकानां वकपङ्क्तीनाम् अयः गतिः सञ्चारः येषु तादृशेषु घनेषु मेघेषु छावान् विलासान् स्फुरणानीति भावः भ्रमतेव, गौर्य्यश्च, स्वर्गेषु पशुवाग्-वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्यमरः । ग्लपितं ग्लानिं नीतं व्यथितमित्यर्थः चिरप्रोषितस्य दीर्घप्रवासिनः बलं येन तादृशः अकायस्य अनङ्गस्य इषुः शरो यत्र तद् यथा तथा ईछावान् चेष्टावान् अभूच्च ॥१८॥

जात्येति । कृष्णो भ्रमरः सज्जाः भूषिताः अलकाः चूर्णकुन्तलाः यया तादृश्या जात्या जातीकुसुमेन आप्राप्य धीराश्च युवतिषु सत् वर्त्तमानं जालकं समूहः यस्याः तथाविधया यूथिकया च ससर्जाभ्यां सलिलसंश्लिष्टाभ्याम् आभ्याम् एतत्प्रभावेणेति भावः बलादिव कम-लानि ससर्ज तत्याज । वर्षासु कमलानां क्षयः जात्यादीनाञ्च विकाशः भवतीति भावः । भ्रमरस्य स्वतः कृष्णत्वेऽपि कृष्ण इति विशेषणं भ्रमरस्य नीचत्वं कमलस्य उत्कृष्टवस्तुनः परित्यागेनापकृष्टसेवनं नीचस्य च द्योतयतीति बोध्यम् ॥१९॥

व्याप्य दिशो दश निभृतं क्षणमपि तस्थौ शासनाद्दशनिभृतः ।
संशमितागबलस्य ध्वनत् घनौघं समप्रभोगबलस्य ॥२०॥
भ्रमर ! दश कदम्बरजः त्वमितीव वदन् स्वनाद्दशकदम्बरजः ।
हन्तुं विभ्रमरहितां नलिनीं पथिकाङ्गनाञ्च विभ्रमरहिताम् २१
ज्योत्स्नालं घनमलिना न बभौ क्रियते स्म कुटजलङ्घनमलिना ।
बलवानवपू रोहन् ह्वयास नदीतटांश्च नवपूरोऽहन् ॥२२॥

शिखिषु समुत्सु कमनसः
गतिहरमुर्व्वांति च खे समुत्सुकमनसः ।
व्यमुञ्चन्त पवनजवना
वापीहंसाश्च न पवनजवनाः ॥२३॥

व्याप्येति । संशमितम् अगबलं पर्वतबलं येन तथाभूतस्य गोत्रभिद इत्यर्थः समं तुल्यं प्रकृष्टे भोगे बलं सामर्थ्यं यस्य तादृशस्य दशनिभृतः वज्रिणः शासनात् ध्वनत् गर्जत् घनौघं मेघवृन्दं दश दिशो व्याप्य क्षणमपि निभृतं निश्चलं न तस्थौ सततं सञ्चचारेति भावः ॥२०॥

भ्रमरेति । हे भ्रमर ! त्वं कदम्बरजः कदम्बकुसुमपरागं दश खादय इतीव वदन् अम्बरजः मेघः स्वनात् गर्जनात् विशेषेण भ्रमरस्य हितां नलिनीं पद्मिनीं विभ्रमरहितां विलासशून्यां पतिवियोगेनेति भावः पथिकाङ्गनां पान्थयुवतीं हन्तुम् अशकत् शशाक ॥२१॥

ज्योत्स्नेति । ज्योत्स्ना चन्द्रिका अलम् अत्यर्थं घनैर्मेघैर्मलिना सती न बभौ न शुशुभे, अलिना भ्रमरेण कुटजानां कुटजपुष्पाणां लङ्घनं क्रियते स्म कुटजमधु पीयते स्मेति भावः, अवपुः अनङ्गः हृदि जनानामिति शेषः बलवान् रोहन् जायमानः आस दिदीपे । नवपूरं नवीनजलप्रवाहः नदीतटांश्च अहन् बिभेद ॥२२॥

शिखिष्विति । खे आकाशे जनः शकटस्य गतिहरं गमन-

भङ्गो नादेयानां कलुषतया नो शशाम नादेयानाम्।
फेनो वा नीराणाम् आक्रष्टोभयतटान्तवानीराणाम् ॥२४॥
प्राप्य सखद्योतायां निशि विद्युज्जितमरुत्सखद्योतायाम्।
प्रियतमसदनं गेहादबला भयमुत्ससर्ज सदनङ्गेहा ॥२५॥
पर्वतकटकेशानां नीपरजःकपिलकुम्भकटकेशानाम्।
कृष्णनदीनगजानां हर्षो जज्ञे महान्नदीनगजानाम् ॥२६॥

घनवन्ति कं जलम् उज्झति त्यजति वर्षति सतीत्यर्थः, शिखिषु मयूरेषु सनृत्येषु सानन्देषु सत्सु, समुत्सुकमनसः पवनजवनाः वायुवेगवन्तः हंसाः अपगतश्रीणां वनजानां पद्मानां वनं यासु तथाविधाः वापीः दीर्घिकाश्च न व्यमुञ्चन् न तत्यजुः ॥२३॥

भङ्ग इति। कलुषतया आविलतया नादेयानाम् अम्भोरुहाणाम् आकृष्टानि उभयतटान्तयोर्वानीराणि वेतसलताः यैः तथोक्तानां नादेयानां नदीसम्बन्धिनां नीराणां जलानां फेनो फेनसङ्कुलः भङ्गः नो वा नैव शशाम न निवृत्ते ॥२४॥

प्राप्येति। सती अनङ्गस्य कामस्य ईहा चेष्टा आवेश इति यावत् यस्याः तथोक्ता कामार्तेति यावत् अबला अभिसारिणी नारीति भावः सखद्योतायां खद्योतसङ्कुलायां विद्युता जितः अभिभूतः मरुत्सखस्य अग्नेः द्योतः प्रभा यस्यां तथाभूतायां निशि रजन्यां गेहात् निजगृहात् प्रियतमस्य कान्तस्य सदनं गृहं प्राप्य भयम् उत्ससर्ज तत्याज ॥२५॥

पर्वतेति। पर्वतानां कटके नितम्बे शेरते इति तथोक्तानां गिरिनितम्बशायिनामित्यर्थः नीपानां कदम्बानां रजोभिः परागैः कपिलाः पिङ्गलाः कुम्भाः कटाः गण्डाः केशाश्च येषां तथाभूतानां कृष्णनदीनगजानां वनजानां नदीजानां पर्वतजानाञ्चेत्यर्थः तथा नदीनस्य नदीपतेः समुद्रस्य गजानां जलहस्तिनामित्यर्थः महान् हर्षः जज्ञे ॥२६॥

विविधोपलराशिखरं पिदधे गोवर्द्धनं तृणैराशिखरम्।
कालोऽगन्धारावान् अकरोत्कुटजशाखिनाञ्च गन्धारावान्॥२७
कणिकाभिरपां सुखरा वृन्दावनमारुता ववुरपांसुखराः।
यमुना नवमुदकपटं भेजे व्रजलोकमाश्रिता मुदकपटम्॥२८
अतपनवसुदे वसु तौ व्रजस्य साभ्रे ततोऽह्नि वसुदेवसुतौ।
अमृतसमधुनीपवनं वृन्दावनमविशतां समधुनीपवनम्॥२९॥

विविधेति। धारावान् वर्षणशीलः कालः वर्षाकाल इत्यर्थः विविधैः उपलराशिभिः शिलासङ्घैः खरं कठिनं गोवर्द्धनम् अगं पर्वतम् आशिखरं शृङ्गपर्य्यन्तं तृणैः पिदधे आच्छादयामास। कुटजशाखिनां कुटजवृक्षाणाञ्च गन्धस्य आरावान् सम्यक् रवान् अकरोच्च। सर्व एव कुटजपुष्पगन्धोऽयं वासते इति वदन्तीति भावः॥२७॥

कणिकाभिरिति। अपां जलानां कणिकाभिः सुखं रान्ति ददतीति तथोक्ताः सुशीतला इति यावत् रा दाने इत्यस्मात् डप्रत्ययः। नास्ति पांशु रजः एव खरं तीक्ष्णं वस्तु येषु तथाभूताः वृन्दावनमारुताः ववुः वहन्ति स्म। यमुना कालिन्दी नवम् उदकपटं सलिलरूपं वसनं भेजे सिषेवे प्रापेत्यर्थः, मुत् आनन्दः अकपटं कापट्यावर्जितं सरलमिति यावत् व्रजलोकम् आभीरवृन्दम् आश्रिता॥२८॥

अतपनेति। ततः तदानीम् अतपनवसुदे तपनस्य सूर्य्यस्य वसु मयूखमित्यर्थः ददातीति तथोक्तं तपनवसुदं तन्न भवतीति अतपनवसुदं तस्मिन् साभ्रे मेघावृते अह्नि दिवसे व्रजस्य गोकुलस्य वसु धनं धनस्वरूपाविति यावत् तौ वसुदेवसुतौ कृष्णबलभद्रौ अमृतसमः धूनीपवनः नदीवातः यस्मिन् तत् समधु मधुपूर्णं नीपवनं कदम्बवनं यस्मिन् तथाभूतं वृन्दावनम् अविशतां प्रविविशतुः॥२९॥

शिखिसर्वस्वधरस्य हे प्रियतां जग्मतुर्हरेः सुधरस्य ।
भ्रमरकदम्बकरवहा वेणुः प्रावृट् तथा कदम्बकरवहा ॥३०॥
अंशादामोदस्य स्थानमभ्रंशि नीपदामोदस्य ।
श्रीर्ललितमथो व्रजतः कापि बभूवास्य मुष्टिकमथो व्रजतः॥३१॥
धृतकामधुरैः मधुरैः
भ्रमरेभ्यो मुदितवल्लवकुलैर्वकुलैः ।
धतकेशिशिरा: शिशिरा:
स्थलीर्युताः प्रायशोऽस्तसुरभीः सुरभीः ॥३२॥

शिखीति । शिखिनः मयूरस्य सर्वस्वं सर्वधनस्वरूपं पिच्छमिति यावत् तस्य धरतीति धरः तस्य, सुष्ठु अधरः यस्य तादृशस्य हरेः कृष्णस्य भ्रमरकदम्बकरवहा भ्रमरकदम्बकानां रवहा नादजयिनीति भावः भ्रमरगुञ्जनादपि मधुरेति भावः वेणुः तथा कदम्बानां नीपानां करं किरणं प्रभामिति यावत् वहति जनयतीति तथोक्ता प्रावृट् वर्षाकालः एते द्वे प्रियतां जग्मतुः प्रापतुः ॥३०॥

अंशादिति । अथो अनन्तरम् अभ्रंशि विच्युतमित्यर्थः कण्ठदेशात् स्खलितमित्यर्थः नीपदाम कदम्बपुष्पमाल्यम् उदस्य निरस्य त्यक्त्वेत्यर्थः आमोदस्य अंशात् लाभात् मनोहरं स्थानं निकुञ्जमिति भावः व्रजतः गोकुलात् व्रजतः गच्छतः अस्य मुष्टिकमथः मुष्टिकासुरनिसूदनस्य कृष्णस्य कापि अनिर्वचनीयेत्यर्थः श्रीः शोभा बभूव ॥३१॥

धृतेति । धृतं नाशितं केशिनामासुरस्य शिरः येन तथाभूताः अस्ता निरस्ता सुराणां देवानां भीर्भयं येन तादृशः स कृष्णः धृता कामस्य धूः भारः विरहिणामुद्दीपनकर्माधिकार इति भावः यैः तथोक्तैः भ्रमरेभ्यः गुञ्जद्भ्य इति शेषः मुदितम् आनन्दितं वल्लवकुलं गोपवृन्दं यैः तथाभूतैः वकुलैः युक्ताः अतएव सुरभीः सौरभशालिनीः शिशिराः शीतलाः स्थलीः वनभूमीः प्राप ॥३२॥

ता वृषभरणाभरणास्तेन युताः स्वयमिवाञ्जनभसा नभसा ।
रेजुः सुतरां सुतरां यमुनामभितः सवञ्जुललता ललता ॥३३॥
श्रेष्ठपदा रौहिण्याः सुतोऽप्यलङ्घ्यमहिमा पदारौहिण्याः ।
प्राप्य शरी रंतुङ्गां द्युतिञ्च स इवागतः शरीरं तुङ्गाम् ॥३४॥
दृष्ट्योद्भवलासितया लिम्पन्निव दिङ्मुखानि धवलासितया ।
बहुधाप वने छायां प्रावृषि मेघानुयातपवनेच्छायाम् ॥३५॥
अथ स वलक्षोभाणां पतिरिव कर्तारमरिवलक्षोभाणाम् ।
सुषलीदं तुरगहनं वीक्ष्य गिरिं प्राह कुटजदन्तुरगहनम् ॥३६॥

ता इति । वृषभाणां रणः वप्रक्रीडेति यावत् आभरणं यासां तथोक्ताः वृषभैः तटेषु कृतक्रीडा इति भावः, स्वयम् अञ्जनभसा अञ्जनकान्तिना ललता स्फुरता नभसेव आकाशेनेव तेन कृष्णेन युताः सुतरां सुखतरणीयां यमुनामभितः सवञ्जुललताः वेतसलतायुता इत्यर्थः ताः स्त्रियः सुतराम् अतिशयेन रेजुः शोभन्ते स्म ॥३३॥

श्रेष्ठेति । पदारौहिण्याः पादचारिण्याः रौहिण्याः सः अलङ्घ्यमहिमा सुतोऽपि बलभद्रोऽपि शरी शरधारी सन् श्रेष्ठपदा उत्कृष्टपदसञ्चारेण रन्तुं क्रीडितुं शरीरं प्राप्य तुङ्गां महतीं गां भूमिं द्युतिञ्च आगत इव प्राप्त इव ॥३४॥

दृष्ट्येति । उद्भावेन उत्सवेन मह, उद्भव उत्सव इत्यमरः । लासितया राजितया उल्लासपूर्णयेति यावत् धवलासितया श्वेतनीलया दृष्ट्या दिङ्मुखानि लिम्पन्निव सः मेघान् अनुयाता अनुगता पवनस्य इच्छा यस्यां तादृश्यां प्रावृषि वर्षासु वने बहुधा छायाम् आप प्राप्तवान् ॥३५॥

अथेति । अथानन्तरं भानां पतिरिव चन्द्र इव वलक्षः श्वेतकान्तिः सः, वलक्षो धवलोऽर्जुन इत्यमरः । सुषली बलदेवः कुटजैः दन्तुरं सङ्कुलमित्यर्थः गहनं वनं यस्य तथोक्तं गिरिं पर्वतं वीक्ष्य अरि-

विदधत्क्षमः क्षमः कुटजैः क्षरति प्रगीतगोपो गोपः ।
प्रक्षरदम्भोऽदभ्रः स्फुटितविधेयोऽसमतुलधातुः धातुः ॥२७॥
पश्य श्यामाश्यामा वनस्थली भाति वलवद्दृश्यादृश्या ।
प्रदराधारा धारा धुन्वन्ति मेघाश्च शिरसि हन्तेहन्ते ॥२८॥
पवनैरज साध्वस्तं बिभ्राणां नीपमात्मरजसा ध्वस्तम् ।
पश्यैकान्ततरलतां स्थलीमितां बर्हियोगकान्तरलताम् ॥२९॥

घनानां क्षोभकारिं भयदं तुरगहनम् अश्वरूपदैत्यघातिनं कृष्णम् दृष्टं प्राह ॥२६॥

विदधदिति । क्षमं नः अस्माकं यं क्षेमं विदधत् सुखं जनयन्निति यावत् कुटजैः क्षमः व्याप्तः प्रगीतः सङ्गीतपरः गोपः यत्र तादृशः, प्रक्षरत् ध्वनत् अम्भ मेघः यस्मिन् तथोक्तः अदभ्रः महान् असुलाः धातवः गैरिकादयः यत्र तथाभूतः धातुः विधातुः स्फुटितविधेयः गां पृथिवीं पाति बिभर्तीति गोपः भूधरः क्षरति स्रवति समन्तात् पतद्वारिभिर्भवतीति यावत् ॥२७॥

पश्येति । श्यामा नीला अश्यामा धवला च वलवत् यथा तथा दृश्या अदृश्या च वनस्थली भाति राजते । प्रदरो दरः भयं तस्य आधाराः धाराः जलानामिति शेषः धुन्वन्ति कम्पयन्ति प्राणिन इति शेषः, मेघाश्च शिरसि मस्तके ईहन्ते चेष्टन्ते प्रसरन्तीति यावत् । पश्य अवलोकय । हन्तेति हर्षसूचकं खेदसूचकं वाऽव्ययम् ॥२८॥

पवनैरिति । हे अज ! कृष्ण ! पवनैः साधु यथा तथा अस्तं विक्षिप्तम् आन्दोलितमिति यावत् आत्मनः रजसा परागेण ध्वस्तम् आकुञ्चितं नीपं कदम्बं बिभ्राणाम् एकान्ततरलता अपदस्था लता यस्याः तथोक्तां बर्हियोगेन मयूरसंसर्गेण कान्ततरा अतिरमणीया लता यस्यां तथोक्ताम् इतां स्थलीं वनभूमिं पश्य अवलोकय ॥२९॥

मारुतवेगादुद्भुवन्नवशशिखण्डानां
शुक्लापाङ्गविडम्बितनवशशिखण्डानाम् ।
सङ्गाः शिखिनां प्राप्ताः शं केकायन्ते
स्थलघनमिति मन्वानाः शङ्केकायन्ते ॥४०॥
पश्य शिला शैलेऽस्मिन्नुच्चावचसा नौ
यान्त्युन्मुखवर्हिणतामम्बुवचसा नौ ।
अमुना शमितरिपुस्त्रीशृङ्गारो हि त्वं
याचित इवाम्बुनादैः शृङ्गारोहित्वम् ॥४१॥
नदति जलदैर्निदाघे सारङ्गोपास्ते
बिभ्रति केतकमवनेः सारङ्गोपास्ते ।

मारुतेति । मारुतवेगात् धुवन्ति शोभमानानीत्यर्थः नवानि शशिखण्डानि चन्द्रकाणीत्यर्थः येषां तथोक्तानां, शुक्लैः अपाङ्गैः विडम्बितानि अनुकृतानि नवानि शशिखण्डानि चन्द्रशकलानि यैः तादृशानां शिखिनां मयूराणां सङ्गाः प्राप्ताः समागताः ते तव कायं शरीरं स्थलघनं भूमेघम् इति मन्वानाः शं शोभनं यथा तथा केकायन्ते केका केका इति शब्दं कुर्वन्तीति शङ्के मन्ये ॥४०॥

पश्येति । उच्चावचाः विविधाः सानवः प्रस्थाः यत्र तादृशे स्नुः प्रस्थः सानुरस्त्रियामित्यमरः । अस्मिन् शैले उच्चाः उन्नताः शिलाः नौ आवयोर्वचसा उन्मुखाः वर्हिणाः मयूराः यत्र तत्तां यान्ति गच्छन्ति । अमुना शैलेन अम्बुनादैः जलधरध्वनिस्तनैः शमितः क्षयं नीतः रिपुस्त्रीणां शत्रुनारीणां शृङ्गारः येन तथाभूतः शत्रुनाशात् तद्वनितानां सुतरां शृङ्गारराहित्यमिति भावः । त्वं शृङ्गारोहित्वं शृङ्गे आरोहणं याचित इव प्रार्थित इव त्रियन्तोऽव- धारये ॥४१॥

नदतीति । जलदे मेघे नदति गर्जति सति सारङ्गैर्मृग-

सम्प्रत्युद्यमकालो न वाहिनीपानां
त्वन्मुखसुरभीणां च श्रीर्नवा हि नीपानाम् ॥४२॥

इत्याह पीतवाससमायतनेत्रस्तं
कंसासुरात्पशुमतामायतनेऽत्रस्तम् ।
हसितानां विमलतया स हली लाजानां
छायां विकिरन्दशनैः सह लीलाजानाम् ॥४३॥

इति श्रीवृन्दावनं नाम यमककाव्यं
मानाङ्ककृतं समाप्तम् ।

---

विशेषैः उपास्से उपाश्रिते इत्यर्थः. निदाघे ग्रीष्मे ते गोपाः श्रवनेः सारं कौतकं बिभ्रति धारयन्ति । सम्प्रति वाहिनीपानां सेनापतीनाम् उद्यमकालः यात्राकालः न, तथा तव मुखस्येव सुरभिः येषां तादृशानां नीपानां कदम्बानां नवा श्रीः शोभा च वर्त्तते इति शेषः ॥४२॥

इत्येति । आयते दीर्घे नेत्रे यस्य तथाभूतः स बलदेवः पशुमतां गोपानाम् आयतने गोकुले इत्यर्थः कंसासुरात् अत्रस्तम् अभीतं तं पीतवाससं पीताम्बरं दशनैः दन्तैः सह लीलाजानां विलासजनितानां हसितानां विमलतया विशुद्धतया लाजानां छायां कान्तिं विकिरन् विस्तारयन् इति आह उवाच ॥४३॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
श्रीवृन्दावननामकयमककाव्य-
व्याख्या समाप्ता ।

---

# राजप्रशस्तिः ।

स्वस्ति श्रीमन्महाराजाधिराजेषु निवेदनम् ।
तारानाथद्विजस्येदमाशीराशिपुरःसरम् ॥१॥
कमला कमलालयालये लसतात्तेऽचपला निरन्तरम् ।
वदने वचनाधिपालिका समरे तेऽग्रसरास्तु कालिका ॥२॥
चित्तसद्मनि तवास्तु सन्ततं वासुदेवपदवाच्यधाम तत् ।
येन सर्वमिदमाततं ततं पालितं तदनु संहृतं क्रमात् ॥३॥
योगमार्गनिहितेन चेतसा विश्वरूपमनघं विभावय ।
तेन लब्धपुरुषार्थसार्थकं सार्थकं जननमस्तु भूप ! ते ॥४॥

स्वस्तीति । स्वस्ति शुभसूचकं श्रीमत्सु महाराजाधिराजेषु तारानाथद्विजस्य इदम् आशिषां राशिः समूहः पुरःसरो यस्य तादृशं निवेदनं वचनम् । अनुष्टुब्वृत्तम् ॥१॥

कमलेति । कमलालया पङ्कजवासिनी कमला लक्ष्मीः ते तव आलये गृहे निरन्तरम् अचपला अचञ्चला स्थिरेत्यर्थः सती लसतात् विराजतु, तथा वचनाधिपालिका वाग्देवी ते वदने निरन्तरं लसतादिति पूर्वेणान्वयः । कालिका च ते तव समरे संग्रामे अग्रसरा अग्रवर्त्तिनी अस्तु भवतु ॥२॥

चित्तेति । येन इदम् आततं विस्तृतं सर्वं जगत् ततं सृष्टं तदनु तदनन्तरं पालितं ततः क्रमात् संहृतं तत् वासुदेवपदस्य वाच्यम् अभिधेयं धाम तेजः ब्रह्मेति यावत् तव चित्तसद्मनि मनोरूपे गृहे सन्ततम् अविरतम् अस्तु तिष्ठतु । रथोद्धतावृत्तम् ॥३॥

योगेति । त्वं योगमार्गे समाधिनियमे निहितेन निविष्टेन चेतसा मनसा विश्वरूपम् अनघं ब्रह्मेति यावत् विभावय चिन्तय ।

सबीजा हृद्वृत्तिः क्रममनुगता बीजरहिता
परे तत्त्वे सम्यग् लयमुपगता जन्मशमनी ।
त्रयाणां तापानामतिशयसमूलक्षयकरी
प्रगाढ़ं ते भूयात् प्रकृतिपुरुषव्यक्तिजननी ॥५॥
सम्प्रज्ञातसमाधिधूतनिरये चित्ते क्रमादुद्गताऽ-
सम्प्रज्ञातसमाधिना नरपते ! भूयात् विवेकोदयः ।
अत्यन्तः पुरुषार्थलाभ इह ते भूयाच्च भूमीपते !
येनाशान्तभवेन तेन न भवे भूयात् पुनः सम्भवः ॥६॥

हे भूप ! तेन ब्रह्मचिन्तनेन ते तव लब्धः अधिगतः पुरुषार्थानां धर्मार्थकाममोक्षलक्षणानां सार्थः समूहः यस्मिन् तथाभूतम् अतएव सार्थकं सफलं जननम् अस्तु भवतु । रथोद्धताहत्तम् । रात् परैर्नरै-लगैरथोद्धतेति तल्लक्षणात् ॥४॥

सबीजेति । सबीजा बीजेन तत्त्वावधानेन सहिता तत्त्वानु-सन्धायिनीति यावत् क्रमं सातत्यम् अनुगता सततप्रवर्तितेति यावत् बीजरहिता कारणरहिता स्वाभाविकीति यावत् परे तत्त्वे परमात्मनि सम्यक् लयं समासक्तिम् उपगता प्राप्ता जन्म-शमनी पुनर्जन्मनिवारिणीत्यर्थः त्रयाणाम् आध्यात्मिकाधिदैविका-धिभौतिकानां तापानाम् अतिशयेन समूलक्षयं करोतीति तथोक्ता प्रकृतिपुरुषयोः व्यक्तिर्विभेदः तस्याः जननी बोधनी ते तव हृद्वृत्तिः मनोवृत्तिः प्रगाढ़म् अत्यर्थं भूयात् । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति लक्षणात् ॥५॥

संप्रज्ञातमिति । हे नरपते ! सम्यक् प्रकर्षेण ज्ञातेन अनुष्ठि-तेनेति यावत् समाधिना योगेन धूतः निरस्तः निरयः दुष्कृतं यस्मात् तथाभूते चित्ते तवेति शेषः क्रमात् पर्यायक्रमेण असं-प्रज्ञाते दुरधिगमे अज्ञातेति भावः समाधिना मनोनिवेशेन विवेकस्य

चित्तप्रसादनकरी परिकर्मरूपा
ज्योतिष्मती मधुमती च तथा विशोका ।
आनन्दया च सहिता सततं चकास्तु
भूपालवर्य्य ! सततं तव चित्तवृत्तिः ॥७॥

मैत्री साधुषु दुःखितेषु करुणोपेक्षा च पापात्मसु
वृत्तिः सा हृदयस्य भूप ! मुदिता सौख्यान्वितेष्वस्तु ते ।
एतासां परिशुद्धभाववशतः स्थैर्य्यान्वितं मानसं
सर्वानर्थनिवर्हणाय नृप ! ते शान्तिं परामृच्छतु ॥८॥

ज्ञानस्य उदयः भूयात् । हे भूमिपते ! इह अस्मिन् लोके ते तव अत्यन्तः महान् पुरुषार्थानां धर्मादीनां लाभः भूयात् येन अश्रान्तभवेन अनवरतजातेन तेन पुरुषार्थलाभेन ते तव भवे संसारे पुनः सम्भवः पुनर्जन्म न भूयात् न भवतु । शार्दूलविक्रीडितं वृत्तम् । सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥६॥

चित्तेति । हे भूपालवर्य्य ! राजाधिराज ! तव चित्तवृत्तिः मनोवृत्तिः सततं चित्तप्रसादनकरी लोकानां मनोरञ्जनी परिकर्मरूपा प्रसाधनस्वरूपिणी ज्योतिष्मती तेजस्विनी मधुमती माधुर्य्यगुणोपेता तथा विशोका शोकरहिता सततम् आनन्दया सन्तोषेण सहिता च सती चकास्तु विराजतु । वसन्ततिलकं वृत्तं, यथा वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥७॥

मैत्रीति । हे भूप ! ते तव सा प्रसिद्धा साधुषु मैत्री, दुःखितेषु करुणा, पापात्मसु असाधुषु उपेक्षा, सौख्यान्वितेषु सुखिषु मुदिता हर्षवती हृदयस्य वृत्तिः अस्तु भवतु । हे नृप ! एतासां मैत्रीप्रभृतीनां परिशुद्धभाववशतः विशुद्धाभिप्रायत्वेन स्थैर्य्यान्वितं सुस्थिरम् अचञ्चलमित्यर्थः ते तव मानसं सर्वेषाम् अनर्थानां पापानां निवर्ह-

योगोक्तलक्षणयमादिभिरष्टसंख्यै-
र्योगानुशीलनमनुक्षणमातनु त्वम् ।
तुष्टीः सदा नवविधा नृपते ! लभस्व
लस्यन्तु योगजनितास्तव सिद्धयोऽष्टौ ॥९॥

क्लेशजन्मपरिहीण ईश्वरो
वासनारहित एष भूपते ! ।
कर्मपाकपरिमुक्त आदिम-
श्चेतसि प्रणिहितः सदास्तु ते ॥१०॥

सारूप्यं विषयेषु सन्ततमनुसृत्य तं विहायान्तरं
योगं वृत्तिनिरोधलक्षणमथो चित्तस्य भूपाश्रुहि ।

ख्याय निर्वाणाय परां शान्तिं सन्तोषम् इच्छतु प्राप्नोतु । शार्दूल-विक्रीडितं वृत्तम् ॥८॥

योगेति । हे नृपते ! त्वम् अष्टसंख्यैः अष्टविधैः योगः जीव-ब्रह्मणोरैक्यचिन्तनं तस्मिन् उक्तं लक्षणं येषां तथोक्ताः ये यमादयः यमः वाह्येन्द्रियसंयमः स आदिर्येषां तथोक्ताः तैः अनुक्षणं सततं योगा-नुशीलनम् आतनु कुरु । हे नृपते ! त्वं सदा नवविधाः शास्त्र-निरूपिता इति भावः तुष्टीः सन्तोषान् लभस्व, तथा तव योग-जनिताः योगाभ्याससाधिताः अष्टौ सिद्धयः, अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायितेत्यु-क्तलक्षणाः लस्यन्तु स्फुरन्तु । वसन्ततिलकं वृत्तम् ॥९॥

क्लेशेति । हे भूपते ! क्लेशेन जन्मना च परिहीणः अक्लेशः अजन्मेत्यर्थः वासनारहितः संस्काररहितः कर्मणां पाकेन परि-मुक्तः विरहितः आदिमः एषः ईश्वरः ते तव चेतसि सदा प्रणिहितः सन्निविष्टः अस्तु । रथोद्धतावृत्तम् ॥१०॥

सारूप्यमिति । हे भूप ! त्वं विषयेषु स्रक्चन्दनवनितादिषु

येन स्यात् परनिर्वृतिर्न च पुनर्जन्मादिकं भूपते !
जायेतापि भवार्णवे न च गतिः संसारमूलक्षयात् ॥११॥
शान्तो दान्तेन्द्रियः सन्नुपरतिसहितो दुःखसौख्ये सहिष्णु-
र्विश्वासी शास्त्रवाक्ये गुरुवचसि तथा, श्रद्धया संयुतश्च ।
आत्मन्येवात्मवीक्षानियतनिरतिभृत् सर्वयोगाङ्गयुक्तो
भूया भूपाल ! भूयो भवभवनसमुच्छेदबाधोदयार्थम् ॥१२॥
आपाततो ज्ञातवेदवेदाङ्गार्थोऽपकल्मषः ।
नित्यनैमित्तिकप्रायश्चित्तापास्तपरोऽसि यत् ॥१३॥

बाह्यवस्तु सन्ततम् अनुस्यूतम् अनुविद्धं संलग्नमिति यावत् आन्तरं साकूप्यम् अन्तःकरणवृत्तिमिति यावत् विहाय त्यक्त्वा अथ तत्त्यागा-नन्तरमित्यर्थः वृत्तिनिरोधलक्षण यागम् उपायम् आश्रित्य लभस्व । येन परा निर्वृतिः परमसन्तोषः स्यात्, तथा संसारस्य मूलक्षयात् पुनर्जन्मादिकं न च, भवार्णवेऽपि गतिः न च जायेत । शार्दूल-विक्रीडितं वृत्तम् ॥११॥

शान्त इति । हे भूपाल ! त्वं भूयः पुनः भवभवनस्य संसार-जन्मनः समुच्छेदे यो बाधः तस्य उदयार्थं शान्तः दान्तेन्द्रियः जितेन्द्रियः सन् उपरतिसहितः विरतिसहितः दुःखसौख्ये सहिष्णुः सुखदुःखसहनशीलः शास्त्रवाक्ये विश्वासी तथा गुरूणां वचसि श्रद्धया संयुतः आत्मन्येव स्वस्वरूपे एव या आत्मनः परमात्मनः वीक्षा साक्षात्कारः तया नियतं निरतिभृत् सन्तोषवान् सर्वैः योगाङ्गैः यमनियमादिभिरष्टभिः युक्तः भूयाः भव । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति तल्लक्षणात् ॥१२॥

आपातत इति । यत् यतः त्वम् आपाततः साम्प्रतं ज्ञातः विदितः वेदानां सामादीनां वेदाङ्गानां शिक्षादीनाञ्च अर्थः तात्पर्यं येन तथाभूतः, तथा नित्यानि अवश्यकर्तव्यानि नैमित्ति-

नित्यानित्यविवेकिता तव सदा मोक्षे च तीव्रस्पृहा
वैराग्यं विषये तवास्ति सततं शान्त्यादि षट्कं तथा ।
तेन ब्रह्मविचारणे नरपते ! मन्येऽधिकारी भवान्
तस्मात् सद्गुरुसेवनेन सततं तत्रैव यत्नं क्रियाः ॥१४॥
युग्मम् ।

वेदार्थानुभवेन यज्ञविधिना दानैस्तपश्चर्यया
प्रायश्चित्तविधानतो विविदिषा जातेति मन्ये तव ।
यस्या ब्रह्मविचारणाय यतसे वित्तादिमुक्तैषणः
भूयात् ते नृप ! वेदवाक्यजनिता ब्रह्मात्मसाक्षात्कृतिः ॥१५॥

कानि निमित्तवशात् उपस्थितानि यानि प्रायश्चित्तानि पापशमन-कर्माणि तेषाम् उपास्तिषु उपासनासु अनुष्ठानेष्वित्यर्थः परः तत्-परः, अतः अपकल्मषः निष्पापः असि । अनुष्टुब्वृत्तम् ॥१३॥

नित्येति । हे नरपते ! तव नित्यानित्यविवेकिता नित्यस्य परमात्मनः अनित्यस्य जगतः विवेकिता विशिष्टज्ञानं सदा सततं मोक्षे तीव्रा उत्कटा स्पृहा इच्छा च अस्तीति शेषः, तथा तव सततं विषये बाह्यवस्तुनि भोग्यवस्तुनीत्यर्थः वैराग्यं वीतस्पृहत्वं तथा शान्त्यादिषट्कं योगशास्त्रोक्तलक्षणम् अस्तीति शेषः । तेन हेतुना भवान् ब्रह्मविचारणे तत्त्वानुशीलने अधिकारी इति मन्ये, तस्मात् सतां गुरूणां सेवनेन परिचर्यया सततं तत्रैव ब्रह्मविचारण एव यत्नं क्रियाः कुरु । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

वेदार्थानुभवेनेति । हे नृप ! तव वेदार्थस्य अनुभवेन बोधेन यज्ञविधिना यज्ञानुष्ठानेन दानैः तपसां चान्द्रायणादीनां चर्यया अनुष्ठानेन प्रायश्चित्तानां पापशमनकर्मणां विधानतः विधानेन विविदिषा ज्ञानेच्छा जाता इति मन्ये, यस्याः विविदिषायाः हेतोः वित्तादिषु धनादिषु मुक्ता त्यक्ता एषणा स्पृहा येन तथाभूतः सन्

यया शक्त्या सम्यक् प्रसृतमपि चैतन्यममलं
गुहास्थं सद्रत्नं तिमिरनिकरेणावृतमिव।
जहि त्वं विक्षेपाह्वयपरमशक्त्या पुनरमुं
ततस्ते चैतन्यं हृदयसदने संस्फुरतु तत् ॥१६॥
दोषानशेषानपहाय सम्यग्बोधेन जीवन्नपि मुक्त एव।
प्रारब्धकर्मक्षयतः परस्ताद्विदेहकैवल्यमवाप्नुहि त्वम् ॥१७॥
याथार्थ्यबोधेन निवृत्तमिथ्याज्ञानस्य दोषादिविवर्जितस्य।

ब्रह्मविचारणाय तत्त्वानुशीलनाय यतसे यत्नवान् असि, अतः ते तव वेदवाक्येन वेदार्थानुशीलनेन जनिता ब्रह्मात्मसाक्षात्कृतिः ब्रह्मणः परमात्मनः आत्मनि साक्षात्कारः भूयात्। शार्दूलविक्रीडितं वृत्तम् ॥१५॥

ययेति। यया शक्त्या अविद्ययेति यावत् सम्यक् प्रसृतं स्फुरितमपि अमलं गुहास्थं हृदयस्थं चैतन्यम् आत्मतत्त्वं तिमिरेण अन्धकारेण आवृतं सद्रत्नमिव आवृतं लोकैरज्ञातमिति भावः पुनः किन्तु त्वं विक्षेपाह्वया विक्षेपनाम्नी आवरणभेदिनीति यावत् या परमा शक्तिः तत्त्वज्ञानमिति यावत् तया अमूं शक्तिम् अविद्यामित्यर्थः जहि नाशय, ततः अविद्याध्वंसनानन्तरं तत् चैतन्यं ते तव हृदयसदने मनोमन्दिरे संस्फुरतु सन्दीप्यताम्। शिखरिणीवृत्तम् ॥१६॥

दोषानिति। अशेषान् समग्रान् दोषान् अपहाय त्यक्त्वा सम्यक्बोधेन सम्पूर्णज्ञानेन जीवन्नपि जनः मुक्त एव शान्तिं गत एव। त्वं प्रारब्धस्य पूर्वकृतस्य कर्मणः शुभाशुभरूपस्य क्षयतः क्षयात् परस्तात् अनन्तरं विदेहकैवल्यं भौतिकदेहवर्जितं मोक्षम् अवाप्नुहि लभस्व। उपजातिवृत्तम् ॥१७॥

याथार्थ्येति। याथार्थ्यबोधेन तत्त्वज्ञानेन निवृत्तं मिथ्या-

अजन्मनस्ते क्रमशोऽप्रवृत्तेरात्यन्तिकी दुःखनिवृत्तिरास्ताम् ॥१८

शान्ते स्वान्ते निशान्ते तव वसतुतरां सर्वलोकैकसाक्षी

भूयोभूयोऽभिभूया रिपुकुलनिवहं सर्वधामैकधामन् ! ।

प्रत्यूहव्यूहराशिस्तव विलयमितो युद्धयात्रासु भूयाद्

भूपे भूपेऽनुरूपे भवतु च नितरां तेऽनुकम्पा सदैव ॥१९॥

सर्वप्रत्ययसङ्गता निगदिता सत्साधनैरन्विता

लिङ्गालिङ्गयुता विभक्तिवचनैर्नित्यं समुद्भासिनी ।

स्फोटात्मा प्रकृतिस्त्वदीयहृदये नित्यं शरीजृम्भतां

नित्या ब्रह्ममयी विवर्त्तजगतामर्थात्मनामाश्रयः ॥२०॥

ज्ञानम् अविद्येति यावत् यस्य तथाभूतस्य दोषादिविवर्जितस्य अप्रवृत्तेः वीतरागस्य अतएव क्रमशः अजन्मनः पुनर्जन्मरहितस्य ते तव आत्यन्तिकी दुःखनिवृत्तिः आस्तां भवतु । उपजातिवृत्तम् ॥१८॥

शान्ते इति । सर्वलोकानाम् एकः अद्वितीयः साक्षी परमात्मा तव शान्ते स्वान्ते मनसि निशान्ते गृहे, निशान्तं गृहशान्तयो-रित्यमरः । वसतुतरां सततं वसत्वित्यर्थः । हे सर्वधामैकधामन् ! सर्वतेजसाम् एकनिलय ! भूयोभूयः पुनः पुनः रिपुकुलनिवहं शत्रुकुलसङ्घम् अभिभूयाः पराजयस्व । तव युद्धयात्रासु प्रत्यूहव्यूहानां विघ्नसमूहानां राशिः विलयमितः नाशं गतः भूयात् । अनुरूपे तवाज्ञानुसारिणीति भावः भूपे भूपे राजनि राजनि ते तव सदा एव अनुकम्पा नितराम् अत्यर्थं भवतु च, स्रग्धरावृत्तम् ॥१९॥

सर्वेति । सर्वेषां प्रत्ययेन ज्ञानेन विश्वासेनेत्यर्थः सर्वैः प्रत्ययैः प्रकृतेः परस्तात् प्रयुज्यमानैः तव्यादिभिश्च सङ्गता संयुता सद्भिः साधुभिः कारणैः सङ्गादिभिः सूत्रानुबोधितनिष्पादनप्रकारैश्च अन्विता युक्ता लिङ्गेन हेतुना अलिङ्गेन अभावेन च पक्षे लिङ्गेन पुंस्त्वादिना अलिङ्गेन अव्ययत्वनिबन्धनेनेति यावत् युता विभक्तिवचनैः विभाग-

प्रजाः प्रजापाल ! पितेव पाया घोरादपायाज्जगदेकमान्य ! ।
समस्तविज्ञानविवर्द्धनार्थं लोकानशेषानिह शिक्षय त्वम् ॥२१॥
धर्मेषु चित्तं रमतां निरन्तरं कुकर्मवृत्तेश्च निवर्त्ततां तव ।
प्रजासु कल्याणकरी हृदन्तरे वृत्तिस्त्वदीया सततं विराजताम् ॥२२॥
माधुर्य्यादिगुणैर्जुषां सुवचसां रीत्यादिसंशोभिनां
सर्वालङ्कृतिशालिनां कलयसे सम्यक् रसास्वादनम् ।

व्यञ्जकवाक्यैः विभक्तिभिः सुप्तिङ्लक्षणाभिः वचनैरेकत्वादिभिश्च नित्यं सततं समुल्लासिनी सम्यक् विद्योतिनी स्फुटति प्रकाशते अर्थः येन स स्फोटः पूर्वापूर्ववर्णानुभवसंस्कृतचरमवर्णाव्यङ्ग्यार्थवान् शब्दः आत्मा यस्याः तथोक्ता नित्या ब्रह्ममयी विवर्त्तजगतां जगत्-प्रपञ्चस्य अर्थात्मनाम् अर्थस्वरूपाणाम् आश्रयः निगदिता जगत्-कारणत्वेन कथिता प्रकृतिः सत्त्वरजस्तमोगुणमयी ऐशी शक्तिः त्वदीयहृदये नित्यं सततं जरीजृम्भतां पुनः पुनरतिशयेन प्रकाशताम् । शार्दूलविक्रीडितं वृत्तम् ॥२०॥

प्रजा इति । हे प्रजापाल ! जगताम् एकमान्य ! त्वं पितेव घोरात् अपायात् आपदः प्रजाः पायाः रक्ष, इह जगति समस्त-विज्ञानविवर्द्धनार्थम् अशेषान् सर्वान् लोकान् शिक्षय । उपजाति-वृत्तम् ॥२१॥

धर्मेष्विति । तव चित्तं निरन्तरं धर्मेषु रमतां रतं भवतु, कु-कर्मणां वृत्तेराचरणाच्च निवर्त्ततां निवृत्तं भवतु, त्वदीया प्रजासु कल्याणकरी शुभकरी वृत्तिः हृदन्तरे मनोमध्ये सततं विराजताम् । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥२२॥

माधुर्य्यादीति । त्वं माधुर्य्यादिभिः माधुर्य्यं चित्तस्य द्रव-हेतुभूतः आह्लादः । तदुक्तं दर्पणे । चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते इति । आदिपदेन ओजःप्रसादादीनां ग्रहणम् । गुणैः

सत्काव्यार्थविभावनैकनिपुणः प्राज्ञोऽसि तेनाप्यहं
कीर्त्तिस्यूतगुणादिवर्णनविधौ जातस्तवोत्कण्ठितः ॥२३॥

यावद्यस्य मतिर्विधावति परं तावद्धि तेनोच्यते
निःसीमे भवतो गुणार्णव इह प्रान्तं कथं प्राप्नुयाम् ।
यावन्तस्तु गुणा मम श्रुतिगतास्तावन्त एवोदिताः
क्षन्तव्यं क्षितिपाल ! चापलमिदं सोढुः क्षमैवोचिता ॥२४॥

शब्दव्यङ्ग्यरसधर्मविशेषैः । उक्तञ्च दर्पणे । रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा । गुणा माधुर्यमोजोऽथ प्रसाद इति ते त्रिधेति । गुणा युक्तानां रीत्यादिभिः सम्यक् शोभन्त इति तथोक्तानां, रीतयश्च दर्पणेनोक्ताः । यथा, पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधेति । सर्वाभिरलङ्कृतिभिरनुप्रासोपमादिभिः । अलङ्कारलक्षणञ्चोक्तं तेनैव । शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः । रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवदिति । शोभन्ते शोभन्ते इति तथाभूतानां सुवर्णानां गद्यपद्यमयानामिति यावत् सम्यक् रसास्वादनं कलयसे करोषि कर्त्तुं शक्नोषीति यावत्, अतः सतां काव्यानाम् अर्थविभावने तात्पर्यग्रहे एकः अद्वितीयः निपुणः दक्षः प्राज्ञः विशिष्टप्रज्ञावान् असि, तेन हेतुना अहं तव कीर्त्तिभिः यशोभिः स्यूताः अनुविद्धाः ये गुणादयः दयादाक्षिण्यादयः तेषां वर्णनविधौ कीर्त्तनव्यापारे उत्कण्ठितः उत्सुकः जातः अस्मि । शार्दूलविक्रीडितं वृत्तम् ॥२३॥

यावदिति । यस्य मतिः बुद्धिः यावत् विधावति अभिगच्छति, तेन परं केवलं तावद्धि तावदेव उच्यते वक्तुं शक्यते इति यावत् । अतः निःसीमे सीमारहिते भवतः इह गुणार्णवे गुणसिन्धौ कथं प्रान्तं पारं प्राप्नुयां लभेय ? न कथं पारं गन्तुं शक्नुयामित्यर्थः अत्यन्तासम्भवादिति भावः । यावन्त एव गुणाः त्वदीया इति शेषः मम श्रुतिगताः कर्णगोचरं प्राप्ताः तावन्त एव उदिताः उक्ताः,

अहो विधातुः करुणा प्रजासु ययाक्षराणीह समुत्ससर्ज।
येभ्योऽक्षरेभ्यो हृदयस्य भावः प्रकाशतेऽन्यस्य विबोधनार्थम्॥२५॥

भावं स्वात्मगुहाशयं न परथा वेद्यं परैर्व्यञ्जयन्
वर्णस्तोममहानिधिर्विधिकृतो लोकोपकाराय यत्।
तेनैव व्यवहारिणो वयमहो वर्णेषु सर्वे वशा
वर्णाधिस्त्वमतश्च वर्णतुलया राजन्! पुरो वर्ण्यसे॥२६॥

तस्मात् हे क्षितिपाल! इदं चापलं प्रागल्भ्यं ममेति शेषः क्षन्तव्यं सोढव्यं त्वयेति शेषः, उचितस्त्वैतद्भवत इत्याह सोढुरिति सोढुः सहनशीलस्य क्षमिण इत्यर्थः क्षमा उचितैव। सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति। शार्दूलविक्रीडितं वृत्तम्॥२४॥

अहो इति। विधातुः प्रजासु करुणा अनुकम्पा अहो आश्चर्य्यम्। यया करुणया इह संसारे अक्षराणि वर्णान् पञ्चाशत-मिति यावत् समुत्ससर्ज सृष्टवान् विधातेति शेषः। उक्तञ्च। षाण्मासिके तु समये भ्रान्तिः संजायते नृणाम्। धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरेति। येभ्यः अक्षरेभ्यः हृदयस्य मनसः भावः अन्यस्य विबोधनार्थं विज्ञापनार्थं प्रकाशते। उपजाति-वृत्तम्॥२५॥

भावमिति। स्वस्य आत्मनः गुहाशयं हृदयस्थं परथा अन्येन प्रकारेण न वेद्यं न विज्ञेयं भावम् अभिप्रायं परैः अन्यैः व्यञ्ज-यन् प्रकटयन् लोकानाम् उपकाराय वर्णस्तोम एव वर्णराशिरेव महानिधिः विधिना विधात्रा कृत इति यत् तेनैव महानिधिना एव वयं व्यवहारिणः आचारवन्तः तिष्ठाम इति शेषः अहो आश्चर्य्यं सर्वे जनाः वर्णेषु अक्षरेषु अक्षराण्यानीति यावत् वशाः

वर्ण्यन्ते विषया यैस्ते लोके वर्णा इतीरिताः ।
ज्ञातेषु तेषु वर्णेषु सार्वज्ञ्यात् लब्धवर्णता ॥२७॥

आरात्यकं दुःखमितीह लोके विष्णुर्यथाकारपदाभिधेयः ।
लोकस्य दुःखग्रहणात् त्वमेव राजंस्तथाकारपदेन वाच्यः ॥२८॥

कं सुखं हि कुरुते प्रजापतिस्तेन तस्य विदिता ककारता ।
सर्वलोकसुखकारता यतस्त्वय्यतस्तव ककारता मता ॥२९॥

अधीनाः । तेषु वर्णेषु ब्राह्मणक्षत्रियवैश्यशूद्रात्मकेषु मध्ये आद्यः मुख्यः श्रेष्ठ इत्यर्थः हे राजन् ! अतश्च अस्मात् कारणात् वर्णतुल्यसा अक्षरसाम्येन पुरः अग्रतः अतःपरमित्यर्थः वर्ण्यसे कीर्त्त्यसे । शार्दूलविक्रीडितं वृत्तम् ॥२६॥

वर्ण्यन्त इति । यैः विषयाः पदार्थाः वर्ण्यन्ते कीर्त्त्यन्ते बोध्यन्ते इति यावत् ते लोके वर्णाः अक्षराणीति ईरिताः कथिताः । तेषु वर्णेषु ज्ञातेषु सार्वज्ञ्यात् सर्वविषयज्ञानसम्भारात् लब्धवर्णता विचक्षणता पाण्डित्यमिति यावत् जायते इति शेषः । लब्धवर्णो विचक्षण इत्यमरः । अनुष्टुप् वृत्तम् ॥२७॥

आरात्यकमिति । अकं सुखहीनं दुःखम् आराति आदत्ते इति इह लोके विष्णुः यथा अकारपदेन अभिधेयः वाच्यः अकारशब्देन विष्णुरुक्त इत्यर्थः तथा त्वम् लोकस्य दुःखग्रहणात् एव निश्चये प्रजानां कार्य्यदर्शने हि राज्ञां दुःखं भवतीति भावः अकारपदेन वाच्यः प्रतिपाद्यः । इन्द्रवज्रावृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥२८॥

कमिति । प्रजापतिः कं सुखं कुरुते जनयति हि तेन हेतुना तस्य प्रजापतेः ब्रह्मणः ककारता कपदाभिधेयता विदिता लोकै-रिति शेषः कः ब्रह्मा इति उच्यते इति यावत् यतः त्वयि सर्वेषां लोकानां सुखकारता सुखदायित्वम् अस्तीति शेषः अतः

यतोऽसि वर्णादिरनाद्यवर्णो
वर्गोत्तमश्चादिमवर्गरूपः ।
ततो हि लोके मनुजेन्द्र ! चित्रं
सर्वे विरोधास्त्वयि नाशमाप्ताः ॥२०॥

प्रणूयसे येन समस्तलोकैस्तेनैव लोके प्रणवोऽसि राजन् ! ।
धर्मार्थकामत्रयतत्परत्वात् त्रयीव मूर्त्तिर्भवतश्चकास्ति ॥२१॥

अस्मात् कारणात् तव ककारता ककारशब्दप्रतिपाद्यता मता ककार-शब्देन त्वमुच्यसे इति यावत् । इन्द्रवज्रावृत्तम् ॥१९॥

यत इति । हे मनुजेन्द्र ! नृपते ! यतः कारणात् त्वं वर्णादिः वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणाम् आदिः श्रेष्ठः इत्यर्थः अथ च अनाद्यवर्णः न तु आद्यवर्णः ब्राह्मण इत्यर्थः वर्गेषु समूहेषु मध्ये उत्तमः यद्वा वर्गेषु यशःसु गुणेषु वा उत्तमः आदिमवर्ग-रूपः आदिमं श्रेष्ठं वर्गः गुणः रूपञ्च यस्य तथाभूतः असि ततः कारणात् लोके सर्वे विरोधाः त्वयि नाशं विलयम् आप्ताः गताः । यद्वा त्वं वर्णादिरथच अनाद्यवर्ण इति वर्गोत्तमः आदिम-वर्गरूप इति च शब्दमात्रविरोधोऽपि नास्ति ततः कथम् अन्यत्रार्थतो विरोधः सम्भवेदिति भावः चित्रमाश्चर्यमेतदिति शेषः । उप-जातिवृत्तम् ॥२०॥

प्रणूयसे इति । येन हेतुना समस्तैः लोकैः प्रकर्षेण नूयसे स्तूयसे, हे राजन् ! तेनैव लोके जगति प्रणवः स्तवनीयः ओङ्कारश्च असि । भवतः धर्मार्थकामानां त्रयतत्परत्वात् त्रयीव त्रिवेदीव मूर्त्तिः चकास्ति शोभते यथा त्रिवेदी धर्मार्थकामप्रतिपादकतया शोभते तथा तव मूर्त्तिरपि त्रयतत्परतया शोभते इति भावः । उपजातिवृत्तम् ॥२१॥

शासनात् सर्वलोकानां शास्त्ररूपोऽसि भूपते ! ।
सर्वस्थितेर्धारणाच्च धर्म इत्यभिधीयसे ॥२२॥
सर्वलोके राजमानः प्रकृतीश्चापि रञ्जयन् ।
सङ्गतार्थं राजशब्दं बिभ्रत् लोकेषु विश्रुतः ॥२३॥
यशःस्तोमे सोमे तव समुदिते भूमिवलये
तमोवृन्दं स्थानं क्वचिदपि यदा नाप नृपते ! ।
तदा भ्रामं भ्रामं वियति कृतलक्ष्यं गतमद-
स्तमोरूपेणैव स्थितमिति मुधा ज्योतिषकथा ॥२४॥
सत्कीर्त्तिपूर्त्तिनिवहेन धरातले ते
वर्णान्तरापहरणात् धवलीकृतेऽस्मिन् ।

शासनादिति । हे भूपते ! त्वं सर्वलोकानां शासनात् शास्त्रं रूपं यस्य तथाभूतः असि, सर्वेषां स्थितेः मर्य्यादायाः धारणाच्च धर्म इति अभिधीयसे कथ्यसे । अनुष्टुब्वृत्तम् ॥२२॥

सर्वलोके इति । सर्वस्मिन् लोके जगति राजमानः दीप्यमानः प्रकृतीः प्रजाः रञ्जयंश्च लोकेषु सङ्गतार्थम् अन्वर्थं राजशब्दं बिभ्रत् विश्रुतः प्रख्यातः असि । अनुष्टुब्वृत्तम् ॥२३॥

यश इति । हे नृपते ! तव यशसां स्तोमे राशौ सोमे चन्द्रे भूमिवलये भूमण्डले समुदिते सति तमोवृन्दं ध्वान्तराशिः यदा क्वचिदपि स्थानं न आप न लेभे, तदा तमोवृन्दं भ्रामं भ्रामं पुनः पुनः भ्रमित्वेत्यर्थः वियति आकाशे कृतलक्ष्यं गतम् । अदः वियत् आकाशं तमोरूपेणैव स्थितमिति ज्योतिषाणां ज्योतिर्विदां कथा मुधा मिथ्या । शिखरिणीवृत्तम् ॥२४॥

सत्कीर्त्तीति । हे नृप ! ते तव सतीनां कीर्त्तिपूर्त्तीनां निवहेन समूहेन वर्णान्तराणां नीलपीतादीनाम् अपहरणात् धवलीकृते श्वेतीकृते अस्मिन् धरातले वर्णेषु ब्राह्मणक्षत्रियवैश्यशूद्रेषु मध्ये

वर्णेषु भेदरहिता इह सर्वलोकाः
चित्रं त्वदीयविषये नृप ! वर्णभेदः ॥२५॥

त्वदीयकीर्त्त्या सितया नृपाल !
सर्वेषु वर्णेषु निवारितेषु ।
चित्रं त्वदीये विषये समन्तात्
सर्वेऽपि लोकाः किल लब्धवर्णाः ॥२६॥

कुन्देन्दुसुन्दररुचा तव कीर्त्तिपूर्त्या
ध्वस्तं गुहास्थमपि यत् तम एतदेत्य ।
व्योमापि तद्भयवशात् किल कीर्त्तिबन्धुं
चन्द्रं समाश्रितमदो न विधौ कलङ्कः ॥२७॥

सर्वे लोकाः भेदरहिताः समभावेन ऐकमत्येन स्थिता इति यावत् किन्तु चित्रम् आश्चर्यम् इह त्वदीयविषये त्वत्सकाशे इति यावत् वर्णभेदः वर्णानां ब्राह्मणादीनां भेदः विशेषः गौरवलाघव-बोधिनेति शेषः ब्राह्मणाः सर्वेषु माननीयाः ततः क्षत्रियास्ततो वैश्यास्ततः शूद्रा इत्येवं यथायथं भवता समादरः क्रियते इति भावः । वसन्ततिलकं वृत्तम् ॥२५॥

त्वदीयेति । हे नृपाल ! सितया श्वेतया तव कीर्त्त्या सर्वेषु वर्णेषु नीललोहितादिषु अथच ब्राह्मणादिषु इति विरोधः निवारितेषु तिरोहितेषु सत्सु त्वदीये विषये राज्ये समन्तात् सर्वेऽपि वर्णाः ब्राह्मणादयः अथच नीललोहितादय इति विरोधः लब्धवर्णाः विचक्षणाः पण्डिता इत्यर्थः अथच प्राप्तनीललोहितादिकान्तय इति विरोधः चित्रं किल आश्चर्यमेतत् । उपजाति-वृत्तम् ॥२६॥

कुन्देति । कुन्दवत् इन्दुवच्च सुन्दरी कान्तिर्यस्याः तथाभूतया तव कीर्त्तिपूर्त्या यशःस्तोमेन गुहास्थमपि गर्त्तस्थितमपि यत्

भूमण्डलादपहृता यशसेन्दुना या
तस्यापकारकरणाय कृतोद्यमा ते ।
तद्बन्धुचन्द्रमनघं ग्रसतीव रोषात्
राहुच्छलेन किल भूप ! तमस्ततिः सा ॥१८॥

विश्वरूपपरिचिन्तयानिशं विश्वरूपधरतामुपेयिवान् ।
यो हि यत्र मन आदधे चिरं तेन तस्य किल रूपमाप्यते॥१९॥

विश्वात्मकोऽपि यतसे कमलोदयार्थं
लोकेषु धर्मजननात् तमसो निरासात् ।

तमः ध्वस्तं निरस्तम् एतत् तमः व्योम आकाशम् एत्यापि आगत्यापि तव भयवशात् तव कीर्त्तिबन्धुं चन्द्रं समाश्रितं बन्धोरनुरोधेन यदि मां रक्षतीति धियेति भावः असौ विधौ चन्द्रे कलङ्कः न । वसन्ततिलकं वृत्तम् ॥१७॥

भूमण्डलादिति । हे भूप ! तव यशसा इन्दुना चन्द्रेण या तमसां ततिः समूहः भूमण्डलात् अपहृता दूरीकृता, सा ते तव तस्य यशसः अपकारकरणाय कृतोद्यमा उद्यमवती सती राहुच्छलेन अनघं निर्मलं तस्य यशसः बन्धुं चन्द्रं रोषात् ग्रसतीव किल । वसन्ततिलकं वृत्तम् ॥१८॥

विश्वेति । त्वम् अनिशं निरन्तरं विश्वरूपस्य परमात्मनः परिचिन्तया विश्वरूपधरतां पृथिवीधारकत्वम् ईश्वररूपधरत्वञ्च उपेयिवान् प्राप्तवान् असि । हि यतः यः जनः यत्र यस्मिन् विषये मनः चिरम् आदधे आहितवान् तेन तस्य रूपम् आप्यते लभ्यते किलेति प्रसिद्धौ । इन्द्रवज्रावृत्तम् ॥१९॥

विश्वात्मक इति । विश्वात्मकः विश्वरूपोऽपि लोकेषु जगत्सु धर्मजननात् धर्मसंस्थापनात् तमसः अन्धकारस्य निरासात् कमलायाः लक्ष्म्याः उदयार्थं वृद्ध्यर्थं यतसे चेष्टसे । तेजसां समूहस्य

तेजःसहस्रनिलयो जगतां पतिश्च
भास्वांश्च नो खरकरः प्रथितः पृथिव्याम् ॥४०॥
कलयन् सकलाः कलाः सदा
रचयन् कौमुदमुद्विजृम्भणम् ।
द्विजराजोऽसि कलङ्कभागितां
न च दोषाकरताञ्च नाश्रितः ॥४१॥
भूमिनन्दनतां बिभ्रत् रक्ताङ्गत्वञ्च धारयन् ।
मङ्गलोऽपि महीपाल ! वक्रत्वं न समाश्रितः ॥४२॥

निलयः स्थानं महाप्रताप इति यावत् जगतां पतिः भास्वांश्च दीप्यमानश्च किन्तु पृथिव्यां खरकरः तीक्ष्णकिरणः अथच लोकानां सुखदराजांशग्राहीत्यर्थः प्रथितः प्रसिद्धः असि। वसन्ततिलकं वृत्तम्। व्यतिरेकालङ्कारः ॥४०॥

कलयन्निति। सदा सकलाः समग्राः कलाः विद्या इति यावत् अवयवविशेषांश्च कलयन् धारयन् कौ पृथिव्यां मोदन्ते इति कौमुदाः लोका इति यावत् तेषां मुदः आनन्दस्य विजृम्भणं प्रकटनं कुमुदानामियं कौमुदी सा चासौ मुच्चेति कौमुदमुत् तस्याः विजृम्भणम् उद्दीपनं रचयन् कुर्वन् द्विजराजः चन्द्रः अथच द्विजेषु ब्राह्मणक्षत्रियवैश्येषु मध्ये राजते इति तथोक्तः असि भवसि, किन्तु कलङ्कभागितां न दोषाकरताञ्च न आश्रितः। चन्द्रो हि कलङ्की दोषाकरः निशाकर इति भावः, त्वन्तु निष्कलङ्कः निर्दोषश्चेति व्यतिरेकालङ्कारः। तदुक्तं दर्पणे। आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति ॥४१॥

भूमीति। हे महीपाल ! त्वं भूमेः पृथिव्याः नन्दनताम् आनन्दजनकत्वं बिभ्रत् दधानः रक्तानि अनुरक्तानि अङ्गानि अमात्यादीनि प्रकृतयः यस्य स रक्ताङ्गः तस्य भावः तत्, स्वाम्यमात्यसुहृद्-

द्विजवरगणराजं नन्दयन् सौम्यमूर्त्तिः
प्रथितबुधसमाख्यो रोहिणीनन्दनश्च ।
नरपतितिलकस्त्वं राजपुत्रत्वमाप्तः
खरतरकरयोगं नाश्रितस्त्वं कदाचित् ॥४३॥
गिराम्पतिर्जिष्णुमतः कचान्वित-
स्तारापतिस्त्वित्रशिखण्डिभूषितः ।

कोपराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतय इत्युक्तेः । भारयम् मङ्गलः शुभकरः अथच मङ्गलग्रहोऽपि वक्रत्वं कौटिल्यं वक्राकारत्वञ्च न आश्रितः । मङ्गलग्रहो हि भूमिसुतः रक्तवर्णः वक्राकारश्चेति भावः । अत्रापि व्यतिरेकः । अनुष्टुब्वृत्तम् ॥४२॥

द्विजेति । त्वं द्विजवरैश्च सह गणराजः गणेशः द्विजवरगणराजः तं नाथूचन्द्रं गणपतिमित्यर्थः पक्षे द्विजवरगणराजं चन्द्रं पितरमिति भावः नन्दयन् हर्षयन् सौम्यमूर्त्तिः शान्ताकृतिः पक्षे सोमस्य इयं सौम्या मूर्त्तिर्यस्य तथोक्तः आत्मा वै जायते पुत्र इति श्रुतेः पुत्रस्यात्ममूर्त्तित्वप्रतिपादनादिति भावः प्रथिता ख्याता बुधेषु विद्वत्सु समाख्या सम्यक् नाम पक्षे बुध इति समाख्या यस्य तथोक्तः रोहिणीनां धेनूनां नन्दनः गवां प्रतिपालक इति भावः पक्षे रोहिण्याः तदाख्याया मातुर्नन्दनः आनन्दजननः नरपतीनां राज्ञां तिलकः ललाटभूषणभूत इत्यर्थः राजपुत्रत्वं नृपतितनयत्वं पक्षे राजचन्द्रस्य पुत्रत्वम् आप्तः, किन्तु कदाचिदपि त्वं खरतरकरयोगं तीक्ष्णतरराजभागग्राहित्वमित्यर्थः पक्षे खरतरकरस्य सूर्यस्य योगं न आश्रितः न प्राप्तः । बुधग्रहो हि कदाचित् सूर्यसङ्गमाप्नोतीति भावः । व्यतिरेकालङ्कारः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥४३॥

गिरामिति । त्वं गिरां वाचां पतिः सरस्वतीपतिरित्यर्थः विद्वानिति भावः पक्षे बृहस्पतिः । जिष्णु जयसाधनं मतम् अभि-

गुरुर्नियन्ताश्रमवृत्तिशिक्षणात्
परं न चार्वाकमतप्रवर्त्तकः ॥ ४४ ॥
कविश्च काव्यप्रणयात् सदा त्वं
नीत्यादिशास्त्रेषु च पारदृश्वा।
सदोदयस्ते भुवि तीक्ष्णतेजः-
सम्पर्कता नास्ति मनाक् कदाचित् ॥४५॥

प्रायो विचेष्टितमिति भावः यस्य तथाभूतः पक्षे जिष्णुना इन्द्रेण मतः सम्मानितः जिष्णुर्लेखर्षभः शक्र इत्यमरः। कचैः केशैः अन्वितः युक्तः सुकेशः इति भावः पक्षे कचेन तन्नाम्ना निजपुत्रेण अन्वितः। तारा मन्त्रविद्याविशेषः तां प्रति रक्षति उपास्ते इति भावः तथोक्तः पक्षे तारानाम्नो भार्य्या तस्याः पतिः। चित्रैः मनोहरैः शिखण्डिभिः मयूरैः भूषितः अलङ्कृतः समन्तात् पोषित-मयूराणां सत्त्वरणादिति भावः पक्षे चित्रशिखण्डिना अङ्गिरसा खापितेति भावः भूषितः शोभितः मरुर्षिपुत्रत्वेनेति भावः। गुरु-र्महान् पक्षे आचार्य्यः आश्रमाणां ब्रह्मचारिप्रभृतीनां ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्रीत्यमरः। वृत्तिः आचारः तस्याः शिक्षणात् प्रवर्त्तनात् उपदेशादिति च नियन्ता शास्ता पक्षे शास्त्रकर्त्ता, परं किन्तु चार्वाकाणां बौद्धमतावलम्बिनां मतस्य प्रवर्त्तकः प्रचारकः न असीति शेषः। बृहस्पतिर्हि चार्वाकमत-प्रणेता त्वन्तु न तथा केवलं वैदिकधर्मप्रवर्त्तक इति व्यतिरेका-लङ्कारः ॥४४॥

कविश्चेति। त्वं काव्यप्रणयनात् काव्यरचनात् पक्षे काव्यस्य अपु-त्रस्य प्रणयनात् उत्पादनात् कविः पक्षे शुक्रः। सदा नीत्यादि-शास्त्रेषु च पारदृश्वा विचक्षणः उभयत्र समानम्। ते तव भुवि पृथिव्यां सदा उदयः उन्नतिः। किन्तु कदाचित् मनाक् ईषत् अपि

प्राणिहिंसाभयेनेव पद्भ्यां मन्दं चरन् भुवि ।
शनैश्चरोऽसि मित्रस्य नन्दनात् क्रूरता न ते ॥४६॥
छायया भूमिमाश्रित्य चन्द्रार्कौ तेजसा ग्रसन् ।
राहुत्वं प्राप्तवान् राजन्! न चागुत्वमवाप्तवान् ॥४७॥
वैरिव्यूहविनाशनाय जगतामुत्पातकेतुर्भवान्
क्रान्तौ खेचरगास्त्वदीयवशगास्तेनासि पातो मतः ।

तीक्ष्णतेजसः खरप्रतापस्य पक्षे सूर्य्यस्य सम्पर्कता नास्ति । अत्रापि व्यतिरेकः ॥४५॥

प्राणीति । त्वं भुवि पृथिव्याः प्राणिनां हिंसाभयेनेव पद्भ्यां मन्दं चरन् सौम्यभावेन विचरन् कार्य्यं सम्पादयन्निति यावत् पक्षे मन्दं तदाख्यां चरन् लभमानः शनैश्चरः शनैः मन्दं चरतीति तथोक्तः पक्षे शनिग्रहोऽसि किन्तु मित्रस्य बन्धुजनस्य नन्दनात् आनन्दजननात् पक्षे सूर्य्यस्य नन्दनात् आनन्दजननात् सूर्य्यतनयत्वा-दिति भावः ते तव क्रूरता निष्ठुरता न अस्तीति शेषः । शनिग्रहः अतिनिष्ठुरः त्वन्तु तथा नेति व्यतिरेकः ॥४६॥

छाययेति । हे राजन्! त्वं छायया दीप्त्या पक्षे अनातपेन भूमिम् आश्रित्य तेजसा चन्द्रार्कौ ग्रसन् पराभवन् राहुत्वम् आप्त-वान्, किन्तु नास्ति गौः किरणः प्रभाव इति यावत् यस्य सः अगुः निष्प्रताप इत्यर्थः पक्षे नास्ति गौः शिरो यस्य तथोक्तः निर्मस्तक इत्यर्थः तस्य भावः तत् न च अवाप्तवान् न लब्धवान् । व्यतिरेका-लङ्कारः ॥४७॥

वैरीति । भवान् वैरिणां शत्रूणां व्यूहः सज्जितं बलं, व्यूहस्तु बलविन्यास इत्यमरः । तस्य विनाशाय जगताम् उत्पातकेतुः धूमकेतुः । खेचरगाः देवानुयायिनः देवयाजकाः ब्राह्मणा इति यावत् पक्षे खेचरान् आकाशचारिणः नक्षत्राणीति यावत् गच्छन्तीति तथोक्ताः सूर्य्यादिग्रहा इत्यर्थः, क्रान्तौ रविसंक्रमदिने

चित्रास्ते शतशः शिखाः समुदिता बुद्धेश्च वीर्यस्य च
जाने नासुरयोनिरङ्ग तमिदं लोकेषु तद्विश्रुतम् ॥४८॥
विघ्नानां वारणाल्लोके गणराजत्वमागतः ।
तव नो रामवैरित्वं दाने न वारणास्यता ॥४९॥
भवान् शक्तिधरः साक्षात् सेनानीत्वमुपागतः ।
सुकुमारो महीपाल ! न च प्राप्तः कुमारताम् ॥५०॥

पक्षे खगोलमध्यवर्त्तिन्यां तिरश्चीनरेखायां त्वदीयधनगाः तव वर्ग गच्छन्ति संक्रान्तौ दानस्य प्राशस्त्यात् त्वत्प्रकाशात् बहूनि धनानि लभन्ते इति भावः, तेन हेतुना उ भोः पाता रक्षिता पालयितेति यावत् तस्य पातः तदाख्ययोगविशेषः मतः कथितः । ते तव बुद्धेः वीर्यस्य च चित्राः बहुविधाः शतशः शिखाः प्रतापा इति भावः पक्षे ज्वालाः समुदिताः सम्यक् उदयं प्राप्ताः । इदम् अद्भुतं तत् लोकेषु प्रसिद्धं स्वरूपं वस्त्विति भावः न असुरयोनिः असुरः राहुः योनिर्यस्य स तथोक्तः राहुतुल्यः केतुरित्यर्थः न इति जाने । तस्य बहुशः केतुधर्मशालित्वेऽपि तत्त्वं त्वयि नाप्नोति भावः । शार्दूलविक्रीडितं वृत्तम् ॥४८॥

विघ्नानामिति । त्वं लोके जगति विघ्नानां वारणात् दूरीकरणात् गणराजत्वं गणेशत्वम् आगतः प्राप्तः गणेशस्य विघ्नहरत्वं प्रसिद्धम् । किन्तु तव दाने रामेण परशुरामेण वैरित्वं शत्रुभावः नो कदाचित् गणपतिः पितृशिष्याय जामदग्न्याय पृथिवीं जित्वा कश्यपाय ददते विघ्नमकरोदिति पुराणवार्त्तानुसन्धेया । न च वारणास्यता गजाननत्वम् । त्वन्तु रामस्य वैरी न गजाननश्चेति व्यतिरेकालङ्कारः । अनुष्टुब्वृत्तम् ॥४९॥

भवानिति । हे महीपाल ! भवान् शक्तिधरः प्रभावमन्त्रोत्-साहशक्तिसम्पन्न इति यावत् पक्षे शक्तिनामास्त्रधारी अतः साक्षात् सेनानीत्वं सेनाधिपतित्वं पक्षे कार्त्तिकेयत्वं, सेनानीरग्निभूर्गुह इत्य-

विभूतिभूषितो भूप ! तारानाथकृतेक्षणः ।
गामाश्रित्य शिवो भूत्वा न प्राप्तः कामवैरिताम् ॥५१॥
विद्वन्मानसहंसवासनिरतो वाण्या च कण्ठे स्थितो
हस्ते साक्षकमण्डलुर्नरपते ! सूत्रं च बिभ्रद् गले ।
वेदानध्ययनादिभिर्बहुलयन्नुच्चैश्चतुर्भिर्मुखैः
त्वं ब्रह्मत्वमुपागतोऽपि जरसा नाक्रान्त इत्यद्भुतम् ॥५२॥

मरः । उपागतः प्राप्तः । सुकुमारः सुकोमलाङ्गः सुन्दरावयव इत्यर्थः किन्तु कुमारतां शिशुत्वं न च प्राप्तः । तव बालव्यवहारो नास्ति विचक्षणतापूर्वकमेव व्यवहरसीति भावः । अनुष्टुब्वृत्तम् । व्यतिरेकालङ्कारः ॥५०॥

विभूतीति । हे भूप ! त्वं विभूतिभिः सम्पद्भिः पक्षे भस्मभिः, भूतिर्भस्मनि सम्पदीत्यमरः । भूषितः अलङ्कृतः तारानाथे शङ्करे कृतम् ईक्षणं दर्शनम् अभिनिवेश इति भावः येन तथोक्तः शिवोपासक इति भावः पक्षे तारानाथेन चन्द्रेण कृतं भूषितम् ईक्षणं तृतीयं नेत्रं यस्य तथाभूतः, गां पृथिवीं पक्षे वृषभम् आश्रित्य शिवः शुभकरः लोकानामिति शेषः पक्षे तदाख्यः भूत्वा कामवैरितां काम्यन्ते इति कामाः विषयाः तेषां वैरितां शत्रुतां ध्वंसकारित्वमिति यावत् पक्षे मदनरिपुतां न प्राप्तः प्रत्युत कामानां वर्द्धक एव भवानिति भावः । अनुष्टुब्वृत्तम् । व्यतिरेकालङ्कारः ॥ ५१ ॥

विद्वदिति । हे नरपते ! त्वं विदुषां मानसं हंस इव तस्मिन् वासे निरतः सदा विदुषां मनःसु अधिष्ठित इत्यर्थः पक्षे विदुषां मानसमिव हंसः स्ववाहनभूत इति यावत् तस्मिन् वासे निरतः आसक्तः । वाण्या वाग्देव्या कण्ठे स्थितः कण्ठस्थविद्य इत्यर्थः पक्षे वाग्देव्या सरस्वत्या सपत्न्येति भावः कण्ठे स्थितः आलिङ्गित इत्यर्थः । हस्ते अक्षेण जपमालया कमण्डलुना च सहितः, गले सूत्रं यज्ञोपवीतं बिभ्रत् दधानः चतुर्भिर्मुखैः उपायैः अध्ययनादिभिः अधीति

नित्यं सत्वसमाश्रितो द्विजगतिर्लक्ष्मीपतिर्भूपते !
देवानां हितकृत्सतां गतिरहो वैकुण्ठधामाश्रितः ।
गोलोकैकविभूषणं च शरणं भक्तस्य कामप्रसू-
र्विष्णुस्त्वं बलिदासतां न च गतो जानेऽतिचित्रं महत् ॥ ५३ ॥

बोधाचरणप्रचारणैरित्यर्थः वेदान् उच्चैरतिगहन बहुलयन् विस्तारयन् पक्षे चतुर्भिर्मुखैः वदनैः अध्ययनादिभिः वेदान् उच्चैरत्यर्थं बहुलयन् विस्तारयन् ब्रह्मत्वम् उपागतः प्राप्तोऽसि, किन्तु जरसा वार्द्धक्येन न व्याक्रान्तः नाभिभूतः इति अद्भुतम् आश्चर्यम् । ब्रह्मा हि जराजीर्णस्त्वन्तु न तथेति व्यतिरेकः । शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

नित्यमिति । हे भूपते ! नित्यं सततं सत्त्वेन उत्साहेन पक्षे सत्त्वगुणेन समाश्रितः युक्तः, द्विजानां ब्राह्मणानां गतिः आश्रयः पक्षे द्विजेन पक्षिणा गरुडेनेत्यर्थः, दन्तविप्राण्डजा द्विजा इत्यमरः । गतिर्गमनं यस्य तथाभूतः गरुडवाहन इति यावत्, लक्ष्म्याः राजश्रियाः पक्षे कमलायाः पतिः, देवानां हितकृत यागानुष्ठानेन पक्षे असुरदलनेनेति भावः सतां साधूनां गतिः आश्रयः पक्षे परित्राता, अहो आश्चर्यं वैकुण्ठं निःशङ्कितं धाम आलयं दुर्गमिति यावत् आश्रितः पक्षे वैकुण्ठाख्यस्थानस्थितः, गोलोकानां पृथिवीस्थमानवानां पक्षे गोलोकस्य तदाख्यभुवनस्य एकम् अद्वितीयं विभूषणम् अलङ्कारभूतः तेषां रक्षणादिति भावः पक्षे गोलोकस्य भक्तस्य अनुरक्तजनस्य पक्षे भक्तिभाजः सेवकस्य शरणं रक्षिता, शरणं गृहरक्षित्रोरित्यमरः । कामप्रसूः लोकानाम् अभीष्टपूरकः उभयत्र समानम् । अतएव विष्णुरसि किन्तु बलिदासतां बलेरसुरराजस्य दासतां न च गतः न प्राप्तः । विष्णुस्त्वञ्च समानधर्मा किन्तु स कस्यचिद् दासत्वं गतः त्वन्तु न कस्यापीति भावः अतः महत् अतिचित्रम् अत्याश्चर्यम् एतत् इति जाने मन्ये । व्यतिरेकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

धर्मेण राजसे यस्मात् ततस्ते धर्मराजता ।
प्रजासु दण्डधरता सम्मता न तु कालता ॥५४॥

श्रीदः पुण्यजनेश्वरश्च नृपते ! भूतेशबन्धुस्तथा
जातोऽपि प्रथितः कुवेरपदभाक् नैवासि चित्रं हि तत् ।
पाशाढ्यो नृप ! वाहिनीपतिरथो पश्चाद्दिगीशोऽपि यत्
तच्चित्रं न च वारुणीमधिगतो नो वा जडेशो भवान् ॥५५

धर्मेणेति । त्वं यस्मात् धर्मेण राजसे राजकार्य्यं करोषि, ततः कारणात् ते तव धर्मराजता यमत्वं विद्धीति शेषः । प्रजासु दण्डधरता शास्तृत्वं सम्मता, किन्तु कालता कलनात् कालः तस्य भावः कालता संहारत्वमिति न अस्तीति शेषः । त्वं यमस्य समदर्शितया शास्तृत्वमनुकरोषि किन्तु तस्य निकृष्टकर्मलोकसंहारकत्वं न स्पृशसीति व्यतिरेकः । अनुष्टुब्वृत्तम् ॥५४॥

श्रीद इति । हे नृपते ! त्वं श्रियं सम्पदं ददाति लोकेभ्य इति श्रीदः पक्षे श्रीदः तदाख्यः पुण्यजनानां विशुद्धचरितानां साधूनामित्यर्थः ईश्वरः अधिपः अन्यपणोरिति यावत् पक्षे तदाख्यः श्रीदः पुण्यजनेश्वर इति कुवेरपर्य्यायेष्वमरः । तथा भूतेशः शिवः बन्धुः प्रियः यस्य तथोक्तः शिवसेवक इति यावत् पक्षे हरसखः । जातोऽपि प्रथितः विख्यातः कुवेरपदं कुत्सितशरीरपदवाच्यं भजते इति तथाभूतः, कुत्सायां कुितिशब्दोऽयं शरीरं वेरमुच्यते । कुवेरः कुशरीरत्वादिति पुराणम् । नैव असि नैव भवसि, तत् हि चित्रम् आश्चर्य्यं कुवेरगुणयुक्तोऽपि कुवेरो नासीति व्यतिरेकः । हे नृप ! त्वं पाशाढ्यः पाशक्रीडाशीलः पक्षे पाशास्त्रयुक्तः, वाहिनीपतिः सेनापतिः पक्षे नदीनाथः अथ किञ्च पश्चाद्दिगीशः पश्चिमाया दिशः ईशः अधिपतिः अपि भवान् वारुणीं सुरां पक्षे वरुणपालितां दिशं पश्चिमामित्यर्थः न च अधिगतः न प्राप्तः न सुरापायीति भावः, नो वा जडानां मूर्खाणाम् ईशः अन्यपणोरित्यर्थः पक्षे जलानाम् ईशः स्वामी जलाधि

जाने शुभ्रमतङ्गजाधिपतितां जीवे च ते गौरवं
स्वर्गैवासिसलोकतां नरपते! लोकाधिपत्यं तथा।
शास्त्रेषु प्रथितं सहस्रनयनत्वञ्चेति सूक्ष्मेक्षणात्
पौरस्त्येषु समादरो न च तवेत्येतद्धि चित्रं महत् ॥५६॥
मित्रोदयाय यतसे सततं पुरस्तात्
तत्रस्थलोकनिवहांस्त्वयि रागयुक्तान्।
मुक्तान्यदेशनिकरेषु वसुप्रदोऽभूः
पौरस्त्यवासिषु कथं न वसुप्रचारः ॥ ५७ ॥

धिपतिरित्यर्थः तत् चित्रम् आश्चर्यं भवतः वरुणधर्मित्वेऽपि वरुणपतेः निकृष्टधर्मवत्त्वं नास्तीति व्यतिरेकः। शार्दूलविक्रीडितं वृत्तम् ॥५५॥

जाने इति। हे नरपते! ते तव शुभ्रमातङ्गजानां शुदन्तहस्तिनां पक्षे शुभ्रमातङ्गस्य श्वेतगजस्य ऐरावतस्येत्यर्थः अधिपतितां तथा जीवे प्राणिवर्गे पक्षे बृहस्पतौ स्वस्य आचार्ये इति भावः गौरवं सम्मानं स्वर्गे वासिनां देवानां सलोकतां समानलोकभागित्वं स्वर्गवासाधिकारित्वमिति यावत् पक्षे स्वर्गे वासिनां सलोकतां सालोक्यं, लोकानां जनानां पक्षे त्रयाणां भुवनानां, लोकस्तु भुवने जने इत्यमरः। आधिपत्यं स्वामित्वं तथा सूक्ष्मेक्षणात् सूक्ष्मदर्शनात् सुविचारकरणादिति भावः शास्त्रेषु प्रथितं प्रसिद्धं सहस्रमिव नयनानि यस्य तथोक्तः तत्त्वं पक्षे सहस्रनेत्रत्वञ्च जाने। किन्तु तव पौरस्त्येषु पूर्वदिग्भवेषु प्राणिषु न च समादरः कौतुकमिति शेषः। इन्द्रस्य पूर्वदिगधिपतित्वात् तस्यामेव दिशि समादरः तव सर्वास्वेव दिक्ष्विति व्यतिरेकः। एतद्धि एतदेव महत् चित्रम् आश्चर्यम्। शार्दूलविक्रीडितं वृत्तम् ॥५६॥

मित्रोदयायेति। त्वं सततं पुरस्तात् अग्रतः पूर्वस्यां दिशि च मित्राणां सुहृदां पक्षे मित्रस्येव सूर्यस्येव उदयाय यतसे चेष्टसे, त्वयि रागयुक्तान् अनुरागिणः पक्षे आकिरणेनारुणितान् तत्रस्

गिरीशसेवनान्मूर्ध्ना वर्त्मत्रयविभूषणात् ।
गङ्गात्वमाश्रितो भूप ! निम्नगत्वं न चाश्रितः ॥५८॥

रामकृष्णासेवनेन गङ्गासङ्गमनेन च ।
मित्रप्रियत्वाद् यमुनाभावेऽपि तव शुक्लता ॥५९॥

सुशुचिर्न तु सर्वभक्षको
द्विजराजो न कलङ्कभूषितः ।

कोकनिवहान् त्वत्सम्मुखवर्त्तिनो लोकानित्यर्थः पक्षे पूर्वदिग्वर्त्तिनो लोकान् मुक्त्वा त्यक्त्वा अन्यदेशनिवहेषु अन्येषु देशसमूहेषु बहुपदः धनवर्षी पक्षे किरणदः अभूः, पौरस्त्यानपि पूर्वदिग्वासिषु कथं तव बहुप्रचारः धनवितरणं न पक्षे किरणदानं न । एतेन पूर्व-दिग्वासिभ्यः अवश्यं तव धनदानमुचितमिति व्यज्यते । वसन्त-तिलकं वृत्तम् ॥५७॥

गिरीशेति । हे भूप ! त्वं मूर्ध्ना शिरसा गिरीशस्य सेवनात् पक्षे मूर्ध्ना शिरसा गिरीशस्येति भावः अवच्छेदे तृतीया मूर्ध्नि गिरीशस्य सेवनादिति यावत् तथा वर्त्मनां त्रयम् उत्तममध्यमाधम-त्रिविधव्यवहाररूप आचार इति भावः त्रिपथं तस्य विभूषणात् अलङ्कर-णात् त्रिविधमार्गेण राजकार्यस्य शोभासम्पादनादिति भावः पक्षे गमनेन शोभाजननादित्यर्थः गङ्गात्वम् आश्रितः प्राप्तः न च न तु निम्नं गच्छतीति तथोक्ता तस्य भावः तत् नीचमार्गावलम्बित्व-मिति यावत् आश्रितः । गङ्गा निम्नगा त्वन्तु न तथेति व्यति-रेकः ॥५८॥

रामेति । रामकृष्णयोरासेवनेन गङ्गायाः सङ्गमनेन च मित्राणां सुहृदां पक्षे मित्रस्य सूर्यस्य प्रियत्वात् वल्लभत्वात् सद्व्यव-हारात् अन्यत्र आत्मजत्वादिति भावः तव यमुनाभावे यमुनात्वे अभावेऽपि शुक्लता निर्मलता अस्तीति शेषः । यमुनाजलं कृष्णं त्वन्तु निर्मलं इति व्यतिरेकः । अनुष्टुब् वृत्तम् ॥५९॥

धनदोऽपि कुबेरतां त्यजन्
अमलेशोऽपि न वा जनार्दनः ॥६०॥
कुशासनरतोऽपि त्वं कुशासनविवर्जितः ।
दानवारिसेवकोऽपि दानवारिविवर्जकः ॥६१॥
कलयसि कलिमलनाशं भजसि च जगदावासम् ।
चलयसि विनतत्रासं रचयसि नृप! सुरवासम् ॥६२॥

सुशुचिरिति । त्वं सुशुचिः सुपवित्रः पक्षे शोभनः अग्निः न तु सर्वभक्षकः, द्विजराजः द्विजेषु ब्राह्मणक्षत्रियवैश्येषु राजते इति तथोक्तः पक्षे चन्द्रः, द्विजराजः शशधर इत्यमरः । न कलङ्कयुतः न कलङ्कीत्यर्थः । धनदः धनदाता पक्षे धनपतिरपि कुबेरतां कुत्सितशरीरतां त्यजन्, अमलेशः श्रीपतिरपि जनान् अर्दतीति तथोक्तः जनपीड़कः न वा नैवेत्यर्थः । व्यतिरेकालङ्कारः ॥६०॥

कुशासनेति । त्वं कुशासनरतः कुशनिर्मितासनोपविष्टोऽपि कुशासनात् कुत्सितभावेन राज्यस्य शासनात् विवर्जितः विरहितः, दानवानाम् अरिः विष्णुः तस्य सेवकोऽपि दानवारिविवर्जकः तुभ्यमिदं ददानि तुभ्यमिदं ददानीत्येवं धनोत्सर्गवाक्ये जलत्यागकारीत्यर्थः । अत्र श्लेषानुप्राणितं यमकम् । उक्तञ्च दर्पणे । सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते । इति श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति । अनुष्टुब्वृत्तम् ॥६१॥

कलयसीति । हे नृप ! कलेः पापयुगस्य मलनाशं पापक्षयं कलयसि करोषि, जगदावासं जगन्निवासं विष्णुं भजसि आराधयसि च । विनतानां शरणागतानां त्रासं भयं चलयसि निराकरोषि, सुराणां देवानां वासं वासस्थानं मन्दिरमित्यर्थः रचयसि संस्थापयसि ॥६२॥

नानातीर्थसमाश्रयो द्विजकुलेनाराधितो भूयसा
शश्वत् सौरभशालिनां सुमनसामुल्लासहेतुस्तथा।
गम्भीरोऽलिदुरासदोऽहितजुषां पद्मैकभूमिर्भवान्
मन्ये कोऽपि जलाशयोऽसि महतां तापस्य शान्तये ॥६३॥

शङ्खचक्रपरिचिह्नितः करे
पादयोर्ध्वजसुखादिलाञ्छितः।
मालया वनजया च शोभितो
वैष्णवाङ्गमखिलं त्वमाश्रितः ॥६४॥

सर्वेषां तापनाशाय दक्षिणो मलयाचलः।

नानेति। भवान् नानातीर्थानां बहूनां साधूनां समाश्रयः गतिः पक्षे बहुजनावतरणमार्गाणां समाश्रयः विविधतीर्थशोभित इति भावः, भूयसा बहुना द्विजकुलेन विप्रवृन्देन पक्षे पक्षिसमूहेन आराधितः सेवितः शश्वत् सततं सौरभशालिनां सुविख्यातानामित्यर्थः पक्षे सुगन्धवतां सुमनसां मनस्विनां पक्षे पुष्पाणाम् उल्लासहेतुः हर्षहेतुः पक्षे विकासहेतुः गम्भीरः दुरवगाहप्रकृतिः पक्षे अतलस्पर्शः अहितजुषां दुर्जनानां दुरासदः अनभिभवनीयः पक्षे अहितजुषां रोगिणां दुरासदः अस्पर्शनीयः पद्मायाः लक्ष्म्याः पक्षे पद्मानाम् एकभूमिः अद्वितीय आश्रयः। तस्मात् महतां जनानां तापस्य दुःखस्य पक्षे उष्मणः शान्तये उपशमनाय कोऽपि जलाशयः असि इति मन्ये। शार्दूलविक्रीडितं वृत्तम् ॥६३॥

शङ्खेति। त्वं करे शङ्खचक्राभ्यां परिचिह्नितः, पादयोः ध्वजसुखादिना ध्वजवज्रादिना लाञ्छितः अलङ्कृतः, वनजया मालया वनपुष्पमालया शोभितश्च, अतः अखिलं समग्रं वैष्णवाङ्गं विष्णुचिह्नम् आश्रितः। तस्मात् त्वं विष्णुरसीति भावः ॥६४॥

सर्वेषामिति। त्वं सर्वेषां जनानां तापनाशाय दक्षिणः दक्षिण-

कथं न मयि दाक्षिण्यं कुर्य्यादाशंसनं मम ॥६५॥

त्वं दानवारिपरिसेवनमात्रकर्मा
नित्यादिकर्मसु तथा कृतदानधर्मा ।
लोकादिरक्षणविधौ कृतधर्मवर्मा
दानादिनाश्रितजने कृतदेवशर्मा ॥६६॥

उज्जृम्भते हि सरसां कमलोदयार्थं
भास्वान् दिवेति विदितं नृप ! लोकमध्ये ।
त्वं सर्वदा तु जगतां किल सर्वदाना-
दुज्जृम्भसे नरपते ! कमलोदयार्थम् ॥६७॥

दिक्पतौ सवलायकः, मयि कथं दाक्षिण्यम् औदार्य्यं न कुर्य्यात् अपि तु कुर्य्यादेवेत्यर्थः । इति मम आशंसनम् आशीरर्थः ॥६५॥

त्वमिति । त्वं दानवानाम् अरिर्विष्णुः तस्य परिसेवनं सर्वथा समाराधनमेव कर्म यस्य तथाभूतः विष्णुपासक इत्यर्थः नित्यादिकर्मसु यदकरणे प्रत्यवायः तन्नित्यं तत् आदि येषां तथोक्तेषु कर्मसु आदिपदेन काम्यनैमित्तिकानां ग्रहणम् । कृतः दानधर्मः येन तथाभूतः, लोकादीनां रक्षणविधौ पालनव्यापारे कृतः धृत इत्यर्थः अवलम्बित इति यावत् धर्मवर्त्म धर्ममार्गो येन तादृशः तथा आश्रितजने दानादिना कृतं देवानां शर्म सुखं येन तथाभूतः आश्रितव्यक्तिषु दानेन देवास्तुष्यन्तीति भावः । वसन्ततिलकं वृत्तम् ॥६६॥

उज्जृम्भत इति । हे नृप ! भास्वान् सूर्य्यः लोकमध्ये जगति दिवा दिवसे सरसां जलाशयानां कमलोदयार्थं पद्मविकासार्थम् उज्जृम्भते हि उदेत्येव इति विदितं ख्यातम् । हे नरपते ! त्वन्तु जगतां भूतवासिनां कमलोदयार्थं सम्पद्वृद्ध्यर्थं सर्वदानात् सर्वधनवितरणात् सर्वदा दिवसे रात्रौ चेत्यर्थः उज्जृम्भसे उदेषि । व्यतिरेकालङ्कारः । वसन्ततिलकं वृत्तम् ॥६७॥

उदयेनैव सविता जगद्धर्मप्रवर्त्तकः ।
अर्द्धोदयेऽसि नृपते ! सर्वधर्मप्रवर्त्तकः ॥६८॥

शश्वत् श्रुतोऽसि मनसा परिशीलितोऽसि
ध्यानेन मुद्रितदृशा च विलोकितोऽसि ।
तस्मात्तु ते परिचयो मयि वर्त्ततेऽद्य
त्वय्येव मे परिचयाय ममैष यत्नः ॥६९॥

तव गुणनिकरान्तं नैव गन्तुं समर्था
वयमिति विरताः स्म श्रान्तियोगाच्च राजन् ! ।
कलयसि गुणलेशं दोषजालं जहासि
गुणिगणगुणलेशादाशुतोषो भवान् यत् ॥७०॥

उदयेनेति । हे नृपते ! सविता सूर्यः उदयेनैव सम्यगिति शेषः जगतां धर्मस्य कार्य्यस्य प्रवर्त्तकः निष्पादकः । त्वन्तु अर्द्धोदये किञ्चिन्मात्रोदये अल्पकालमात्रराजकार्य्यपरिदर्शनेऽपीति भावः सर्वेषां धर्मप्रवर्त्तकः । तव शासने सर्वे एव स्वं स्वं धर्ममनुसृत्य चलन्तीति भावः । अनुष्टुब् वृत्तम् ॥६८॥

शश्वदिति । हे राजन् ! त्वं शश्वत् सततं श्रुतः असि तव नाम सर्वदैव श्रुतमिति भावः, मनसा परिशीलितः कीदृशोऽसौ नृप इति विचिन्तितः असि, ध्यानेन मुद्रितदृशा च निमीलितनयनेन च विलोकितः दृष्टः असि, तस्मात् ते तव परिचयः मयि वर्त्तते तिष्ठति, अद्य तु त्वयि मे मम एषः यत्नः प्रयासः अहं कीदृश इति ज्ञापनार्थं त्वामित्थं स्तौमीति भावः । वसन्ततिलकं वृत्तम् ॥६९॥

तवेति । हे राजन् ! वयं तव गुणनिकराणां गुणराशीनाम् अन्तं पारं गन्तुं नैव समर्थाः शक्ताः इति श्रान्तियोगात् परिश्रमाच्च हेतोः विरताः स्म निवर्त्तामहे तव गुणवर्णनादिति भावः । त्वं वत् यतः गुणिगणानां गुणलेशात् यत्किञ्चिद्गुणश्रवणात्

गुणानामाधारे गुणिजनगुणग्राहकवरे
दयासारे पारे वचनमनुवर्णैकनिलये ।
ममैषा विज्ञप्तिर्नयनपदवीमेत्य सहसा
सदा सानन्दं तं विरचयतु नित्यं रमयतु ॥७१॥

प्रशस्तिपत्रिका यत्नात् श्रीताराणाथशर्मणा ।
द्विजेन रचिता तुष्ट्यै नृपस्यास्तु चिरं शिवम् ॥७२॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिता
राजप्रशस्तिः समाप्ता ।

श्वाशु शोषं तुष्यतीति तथोक्तः अतः गुणलेशं कथयसि महान्ति दोषजालं दोषराशिश्च त्यजसि गुणिगणानामुक्तैरिति शेषः । मालिनी-वृत्तम् ॥७०॥

गुणानामिति । गुणानाम् आधारे आश्रये गुणिजनानां गुणग्राहकवरे गुणग्राहकश्रेष्ठे दयासारे कृपानिधौ अपारे दुरव-गाहस्वभावे वचनान्येव मनुवर्णाः मन्त्रवर्णाः तेषाम् एकनिलये अद्वितीयावासे एषा मम विज्ञप्तिः स्तुतिरिति यावत् नयनपदवीं दृष्टिपथं तस्येति शेषः एत्य सहसा तं राजानमिति शेषः सदा सानन्दं विरचयतु करोतु नित्यं रमयतु प्रीणयतु च । शिखरिणी-वृत्तम् ॥७१॥

प्रशस्तीति । श्रीतारानाथशर्मणा द्विजेन यत्नात् यस्य तुष्ट्यै इयं प्रशस्तिपत्रिका रचिता तस्य नृपस्य चिरं शिवं मङ्गलम् अस्तु भवतु ॥७२॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
राजप्रशस्तिव्याख्या समाप्ता ।

---

# समाप्तश्चायं ग्रन्थः ।